गाढासूयां मनसि निदधत्तद्वधोपायमिच्छन्।
क्रूरो मृत्युः स्वयमिव वहन् स्वेदबिन्दून स रोषात्
अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ॥ १० ॥

अन्वयः— सः असौ जाल्मः; कपटहृदयः, दैत्यपाशः, हताशः, स्फूर्जन्नवजलमुचः कालिमानं दधानः, स्वात्मयोगे निविष्टं अनघं मुनिपं किञ्चित् पश्यन्, मनसि गाढासूयां निदधत्, रोषात् स्वेदबिंदून् वहन् स्वयं क्रूरः मृत्युः इव अपघृणः वैरं स्मृत्वा मुनिं निकामं हन्तुकामः क्रोधात् कौतुकाधानहेतोः तस्य पुरः कथमपि स्थित्वा तद्वधोपायं इच्छन् अन्तर्बाष्पः राजराजस्य अनुचरः चिरं दध्यौ।

सोऽयमित्यादि। सः असौ सः एषः कमठचरः यक्षः। सः यः पूर्वभवे भगवति वैरं ववन्ध। सः असौ वर्तमानभवापेक्षया शम्बरासुरः। जाल्मः हेयोपादेयविवेचनसामर्थ्यविकलः अविमृश्यकारी क्रूरः वा। 'जाल्मः स्यात्पामरे क्रूरे जाल्मोऽसमीक्ष्यकारिणि' इति विश्वलोचने। कपटहृदयः। कपटयुक्तं हृदयं यस्य सः। यद्वा कपटं हृदयं यस्य सः। कपटं कपटयुक्तमित्यर्थः। 'ओऽभ्रादिभ्यः' इत्यः मत्वर्थीयः। दैत्यपाशः गर्हार्हो देवः। 'याप्ये पाशः' इति गर्हायां पाशः। हताशः निर्दयः। हता निर्घृणा आशा आकाङ्क्षा यस्य सः। स्फूर्जन्नवजलमुचः। जलं मुञ्चतीति जलमुक्। क्विप्। नवश्चासौ जलमुक् च नवजलमुक्। नवो मेघः इत्यर्थः स्फूर्जंश्चासौ नवजलमुक् च स्फूर्जन्नवजलमुक्। यसः। 'टुओस्फुर्जा वज्रनिर्घोषे' इत्यस्माद्धातोः शतृविधानाद्रूपं। तस्य। गर्जन्नवमेघस्येत्यर्थः। कालिमानं कृष्णत्वं कालस्य कृष्णवर्णस्य भावः कालिमा। 'पृथ्वादेर्वेमन्' इति भावे इमन्। तं कालिमानं। दधानः धत्ते इति दधानः। स्वात्मयोगे। स्वस्य आत्मनः आत्मा स्वभावः स्वात्मा। तस्य योगे ध्याने स्वात्मयोगे। 'स्वज्ञातावात्मनि स्वं तु त्रिष्वात्मीये धनेऽस्त्रियाम्' इति विश्वलोचने। 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः। 'योगः सन्नाहसन्धानसङ्गीतध्यानकर्मणि' इति विश्वलोचने। आत्मस्वरूपध्याने इत्यर्थः। निविष्टं निमग्नं। निविशति स्म निमज्जति स्म निविष्टः। तम्। अनघं। न विद्यते अघः पापं यस्य सः अनघः। तम्। मुनिपं मुनीश्वरं। किञ्चित् अल्पं। 'किञ्चिदीषन्मनागल्पे' इत्यमरः। पश्यन् भावयन्। मनसि मानसे। गाढासूयां गाढा चाऽसौ असूया च गाढासूया। तां। गाढा दृढा। तीव्रेत्यर्थः। 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च' इत्यमरः। असूया परगुणेषु दोषाविष्करणं। निदधत् स्थापयन्। रोषात् क्रोधात्। स्वेदबिन्दून् धर्मबिन्दून्।

वहन् धरन् । **स्वयं** आत्मा । **क्रूरः** निर्घृणः । **मृत्युः इव** यमः इव । **अपघृणः** निर्दयः । अपगता घृणा दया यस्मात् सः । 'कारुण्यं करुणा घृणा' इत्यमरः । **वैरं स्मृत्वा** पूर्वभवशात्रवं अनुध्याय । **मुनिं** पार्श्वजिनेश्वरं । **निकामं** अत्यर्थं । **हन्तुकामः** हन्तुं इच्छन् । हन्तुं कामः इच्छा यस्य सः । 'सम्तुमो मनःकामे' इति तुमो मकारस्योप् । **क्रोधात्** अमर्षात् । **कौतुकाधानहेतोः** हननेच्छापूर्त्यर्थं । कौतुकमभिलापः हन्तुमिच्छा । तस्य आधानहेतोः पूर्त्यर्थं । आधानस्य हेतुः आधानहेतुः । तस्मात् । हेतौ का । 'कौतुकं त्वभिलापेऽपि कुसुमे नर्महर्षयोः । परम्परासमायाते मङ्गले चातिशायिनि ।' इति विश्वलोचने । **तस्य पुरः** भगवतः पार्श्वजिनेन्द्रस्य पुरस्तात् । **कथमपि** महता प्रयत्नेन । 'ज्ञानहेतुविवक्षायामप्यादि कथमव्ययम् । कथमादि तथाप्यन्तं यत्नगौरवबाढयोः' इत्युज्ज्वलः । **स्थित्वा** आस्थाय । प्रज्वलितक्रोधाग्नित्वात् सञ्जातवेपथुः महता कष्टेन तस्य पुरः तस्थाविति भावः । **तद्वधोपायं** । तस्य भगवतः वधस्य हननस्य उपायः साधनं कर्म वा । तं । **इच्छन्** अभिलषन् । तद्धननं अभिलषन्नित्यर्थः । **अन्तर्बाष्पः** अन्तर्निरुद्धाश्रुः । विरहव्यथाकुलितस्वान्तत्वात् अस्रार्द्रनयनोऽपि अधुना समरकाले अश्रुमोचनमयुक्तमिति विचार्यान्तरेवाश्रूणि स्तम्भितवानिति भावः । **राजराजस्य** कुबेरस्य । राज्ञां यक्षाणां राजा प्रभुः राजराजः । 'राजा प्रभौ नृपे चन्द्रे यक्षे यक्षेशचन्द्रयोः' इति विश्वः । 'राजाहःसखिभ्यष्टच्' (पा० ) इति टच् । राजराजः कुबेरः । 'राजराजो धनाधिपः' इत्यमरः । **अनुचरः** सेवकः । स कमठचरो यक्षः । **चिरं** बहुकालं । **दध्यौ** ध्यायति स्म । 'ध्यै चिन्तायाम्' इति धातोर्लिट् । 'णमेरौशातः' ( शा० ) इति णशः औश् ।

That this inconsiderate rascal, with a fraudulent heart, attending upon Kubera, the wretched demon, cherishing evil desires, assuming darkness of a thundering new cloud, considering the sinless lord of sages who was deeply engrossed in meditating upon his own soul to be trivial, harbouring excessive jealousy in his heart, looking like cruel Death himself carrying drops of perspiration, a merciless one, extremely desirous of killing the sage after remembering (his former) enmity, having stood before him with great difficulty with a purpose to fulfil his desire, expecting to find out a means of his death through anger, with tears suppressed inside, meditated for a long time.

मेघैस्तावत्स्तनितमुखरैर्विद्युदुद्योतहासैः
चित्तक्षोभान्द्विरदसदृशैरस्य कुर्वे निकुर्वन् ।

पश्चाच्चैनं प्रचलितधृतिं ही हनिष्यामि चित्रं
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः ॥ ११ ॥

अन्वयः— ( यतः ) मेघालोके सुखिनः अपि चेतः अन्यथावृत्ति भवति ( ततः ) तावत् निकुर्वन् ( अहं ) स्तनितमुखरैः विद्युदुद्योतहासैः द्विरदसदृशैः मेघैः अस्य चित्तक्षोभान् कुर्वे, पश्चात् च प्रचलितधृतिं एनं हि चित्रं हनिष्यामि ।

**मेघैरित्यादि** । ( यतः यस्मात् कारणात् ) **मेघालोके** मेघस्य आलोके दर्शने ( जाते सति ) **सुखिनः अपि** कण्ठाश्लेषप्रणयिजनसङ्गतत्वात् सुखिनः अपि **चेतः** मनः । **अन्यथावृत्ति** । अन्यथा अन्यप्रकारा वृत्तिः प्रवृत्तिः यस्य तत् । 'प्रकारे था' इति था । सामान्यापेक्षया विशेषनिर्देशः प्रकारः । 'वृत्तिः प्रवृत्तौ वृत्तौ च कौशिक्यादिप्रवर्तने' इति विश्वलोचने । भवति जायते । ( ततः तस्मात् ) **तावत्** आदौ 'आर्ये इतस्तावदागम्यतां' इत्यत्र यथा । **निकुर्वन्** । निकारं परिभवं करिष्यन् । परिभवं कर्तुमुद्यत इत्यर्थः । अहं **स्तनितमुखरैः** स्तनितैः गर्जितैः मुखराः भयङ्करध्वनयः । स्तनितं गर्जितं । 'स्तनितं गर्जितं मेघनिर्घोषे' इति वचनात् । **मुखराः** वाचाटाः । गर्हितध्वनयः । मुखेन वाग्लक्ष्यते । निन्दितं मुखमस्त्यस्य मुखरः । 'मधुकृष्यादिभ्यः खलौ' इति रो मुखात् । स्तनितसञ्जनितभयङ्करध्वनिभिरित्यर्थः । **विद्युदुद्योतहासैः** । विद्युतां तडितां उद्योतस्य हासः प्रकाशः विद्यते यत्र । हासः विस्तारो वा । विद्युदुद्योतभासमानशरीरैरित्यर्थः । **द्विरदसदृशैः** करिशरीराकारधारिभिः । **मेघैः** जलदैः । **अस्य** भगवतः पार्श्वनाथस्य । **चित्तक्षोभान्** । चित्तस्य मनसः क्षोभान् प्रक्षोभान् **कुर्वे** करिष्ये । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति समीपभविष्यदर्थे वर्तमानप्रयोगः । **पश्चात्** अनन्तरं **च** । **प्रचलितधृतिं** । प्रचलिता प्रकम्पिता धृतिः धैर्यं स्थैर्यं वा यस्य सः । तम् । **एनं** मुनीश्वरं । हीति हर्षे । 'ही विस्मयविषादयोः । ही हर्षे दुःखहेतौ च' इति विश्वलोचने । अनेन भगवद्धिंसानन्दं स जुजुषे इति व्यज्यते । **चित्रं** । अद्भुतं यथा तथा । अद्भुतेन विधिनेत्यर्थः । **हनिष्यामि** घातयिष्यामि । अनेन निर्विकल्पसमाधिनिमग्नान्तःकरणं भगवन्तं पार्श्वजिनं हन्तुं स समर्थः नासीत् इति तं ध्यानात् प्रच्यावयितुं प्रयतते स्मेति व्यज्यते ।

As at the sight of clouds the hearts of the happy even get perverted, I, ready to destroy him, shall first create excitement in his heart ( or move his heart to strong emotions ) with elephant-like clouds, making a continuous roar by thundering and assuming the lustre of the flashes of lightnings, and then put him, whose composure of mind is destroyed

( or whose equilibrium of mind is disturbed ), to death in a wonderful manner.

ध्यायन्नेवं मुनिपमभणीन्निष्ठुरालापशौण्डो
भो भो भिक्षो भणतु स भवान् स्वान्तमन्तर्निरुन्धन् ।
क्षीणक्लेशे सिषिधुषि मतिं किं निधत्तेऽङ्गितत्त्वे ।
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ १२ ॥

अन्वयः— एवं ध्यायन् निष्ठुरालापशौण्डः मुनिपं अभणीत्— भो भो भिक्षो ! स्वान्तमन्तर्निरुन्धन् सः भवान् भणतु । किं क्षीणक्लेशे सिषिधुषि अङ्गितत्त्वे मतिं निधत्ते, किं पुनः दूरसंस्थे कण्ठाश्लेषप्रणयिनि जने ( मतिं निधत्ते ) ?

ध्यायन्नि यादि । एवं उक्तप्रकारेण ध्यायन् चिन्तयन् । निष्ठुरालापशौण्डः । निष्ठुरः निर्दयश्चासावालापो भाषणं च निष्ठुरालापः । यसः । निष्ठुरालापे शौण्डः प्रवीणः निष्ठुरालापशौण्डः । 'ईप्शौण्डादिभिः' इतीप्सः । मुनिपं मुनिराजं अभणीत् प्रोवाच । भो भो भिक्षो ! हे मुने ! स्वान्तं मनः अन्तः अन्तरात्मनि निरुन्धन् प्रत्यवस्थापयन् । सः प्रसिद्धः । ध्यानित्वेन प्रसिद्धः इत्यर्थः । भवान् । भणतु कथयतु । किं भवान् क्षीणक्लेशे । क्षीणाः विप्रमुक्ताः विनष्टाः क्लेशाः क्लेशकराणि कर्माणि यस्य सः । तस्मिन् । क्षीणाः विनाशं प्राप्ताः । 'तेऽण्ये' इति कृतदीत्वात् क्षेस्ततकारस्य नः । 'ष्रो नोणोऽभिन्ने' इति नस्य णः । क्षीणकर्मणीत्यर्थः । सिषिधुषि सिद्धावस्थां प्राप्ते । 'षिधु संराद्धौ' इत्यस्माद्धोः परस्य लिटः स्थाने 'लिटः क्वसुकानौ' इति क्वसुः । 'वसोर्वस्योश्' इति भस्य वसोर्वकारस्योश् । 'क्वस्यैकाज्घसः' इति धोरेकाच्त्वात् क्वसौ परे इडागमः । अङ्गितत्त्वे जीवद्रव्ये । अङ्गमस्यास्तीत्यङ्गी । स एव तत्त्वं द्रव्यं । तस्मिन् । मतिं मनः । निधत्ते ? प्रत्यवस्थापयति ? पुनः अथवा दूरसंस्थे दूरदेशवर्तिनि । दूरे संस्था स्थितिर्यस्य सः । तस्मिन् । 'संस्था नाशे व्यवस्थायां व्यक्तिसादृश्ययोः स्थितौ । संस्था क्रतौ समाप्तौ च चरे च निजराष्ट्रगे' इति विश्वलोचने । कण्ठाश्लेषप्रणयिनि जने । कण्ठाश्लेषं प्रणयति इत्येवंशीलं अस्य कण्ठाश्लेषप्रणयि । तस्मिन् । 'शीलेऽजातौ णिन्' इति शीलार्थे णिन् । अत्रोपसर्गेऽणिन् कुसुमानुकारिभिः उपजीविभिरित्यादिवत् । उपसर्गभिन्न एव सुपि णिनिरिति वृत्तिकारहरदत्तमाधवादयः । तच्च भाष्यविरोधि । किं ? मतिं निधत्ते इति शेषः । भगवद्गर्हणाभिप्रायेण कमठः पर्यनुयुनक्ति । नायं ध्यानैकतानः मुनिः शुद्धात्मरूपे एकस्मिन्नग्रे ध्यानविषये मनो

निरुणद्धि, अपि तु तद्व्याजेन कञ्चन कण्ठाश्लेषप्रणयिनं जनमेव ध्यायतीति कमठाभिप्रायः ।

He, thinking thus, expert in uttering cruel words, asked the lord of sages. 'Oh ascetic ! you, confining your mind within yourself, tell : Are you concentrating your mind upon the liberated soul who has destroyed his tormenting Karmans or are you concentrating it upon a person, staying abroad and desirous of embracing your neck ?'

इत्युक्त्वाऽदो मुहुरुपवहन् निश्चितात्मोपसर्गो
बद्धक्रोधः सरभसमसौ भीमजीमूतमायां ।
स्राक्स्राक्षीन्मुनिपमभितो नोमनागप्यसूरिः
प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी ॥ १३ ॥

अन्वयः— इति अदः उक्त्वा मुहुः उपवहन् असौ निश्चितात्मोपसर्गः बद्धक्रोधः दयिताजीवितालम्बनार्थी नोमनाक् अपि असूरिः असौ प्रत्यासन्ने नभसि मुनिपं अभितः सरभसं भीमजीमूतमायां स्राक् अस्राक्षीत् ।

इत्युक्त्वेत्यादि । इति उक्तप्रकारेण । 'इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः । इति प्रकरणेऽपि स्यात् समाप्तौ च निदर्शने' इति विश्वलोचने । अदः तत् । उक्त्वा प्रोच्य । मुहुः बहुवारान् । उपवहन् समीपं गच्छन्, युद्धार्थं सन्नद्धो भवन्, अभिभवनार्थं भगवतः समीपं पुनः पुनः गच्छन् वा । असौ कमठचरः यक्षः । निश्चितात्मोपसर्गः । आत्मनः आत्मना कृतः उपसर्गः उपप्लवः आत्मोपसर्गः। निश्चितः आत्मोपसर्गः येन सः । 'उपसर्गः स्मृतो रोगभेदे चोपप्लवेऽपि च' इति विश्वलोचने । बद्धक्रोधः । बद्धः क्रोधः कोपः येन सः । दयिताजीवितालम्बनार्थी । दयितस्य सञ्जातदयस्य अजीवितं मरणं, तस्य आलम्बनं उपायः दयिताजीवितालम्बनं । तत् अर्थयते इति दयिताजीवितालम्बनार्थी । सञ्जाता दया अस्येति दयितः । 'तदस्य सञ्जातं तारकादिभ्यः इतच्' इति तदस्य सञ्जातमित्यर्थे इतच् । पूर्वस्मिन् भवे स्वभ्रातृभार्यागामित्वात् क्रुद्धेन राज्ञा निर्घाटितस्याऽयं मरुभूतिचरः भगवान् दयते स्म । न जीवितं अजीवितं । मरणमित्यर्थः । दयमानमप्यमुं भगवन्तं अयं कमठचरो दैत्यः जिघांसुरिति तस्य कृतघ्नत्वं व्यज्यते । यद्वा दयितायाः स्वप्रियायाः जीवितस्य

( १ ) मनसि ( २ ) दयिताजीविताल्म्बनार्थाम्; दयिताजीविताल्म्बनार्थम् ।

आलम्बनमुपायः दयिताजीवितालम्बनं। तदर्थयते इति दयिताजीवितालम्बनार्थी। स्वस्माद्वियुक्तायाः दयितायाः सन्देशाभावे प्रियविप्रयोगजनितदुःखायाः मरणाद्बिभ्यत्नसौ मुनिपं युद्धे हत्वा तदात्मानं सन्देशं हारयित्वा तां जिजीविषतीत्यर्थः। नो मनाक् अत्यर्थं असूरिः अपण्डितः। मूर्खः इत्यर्थः। अपि गर्हायामत्र। 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः। प्रत्यासन्ने समीपमागते। नभसि श्रावणमासे। 'नभः खं श्रावणो नभाः' इत्यमरः। न भासनं मेघच्छन्नत्वात् अस्त्यस्य नभाः। 'समीपे निकटासन्नसन्निकृष्टसनीडवत्' इत्यमरः। मुनिपं अभितः मुनीश्वरं सर्वतः। 'पर्यभिसर्वोभयैस्तस्थैः' इति इप्। सरभसं पौर्वापर्याविचारेण क्रोधेन वा। रभसेन पौर्वापर्याविचारेण सह वर्तते यस्मिन् कर्माणि यथा तथा भीमजीमूतमायां। मायां इन्द्रजालं। जीमूतस्य माया जीमूतमाया। भीमा भयकृत् चासौ जीमूतमाया च। भीमजीमूतमाया। तां। जीवनस्य जलस्य मूतः बन्धः जीमूतः। मेघः इत्यर्थः पृषोदरादित्वात्साधुः। 'तोयं जीवनमाविषम्' इति 'जीमूतोऽभ्रं बलाहकः' इति च धनञ्जयः। स्राक् झटिति। 'स्राग्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुते' इत्यमरः। असाक्षीत्। सृजति स्म। 'सृज विसर्गे' इत्यस्माद्धोर्लुङ्।

Having said that in that way, he, who approached Him again (to attack him), who decided to trouble Him himself, who was angry (with Him), who was desirous of finding out a means of his destruction who had entertained sympathy for him (i. e. Kamatha, in his former birth), who was extremely foolish, created passionately an illusion of terrible clouds on all sides of the lord of sages at a time when the month of Shravana was about to set in.

विद्युन्मालास्फुरितरुचिरे मेघजाते नताशे
स्फूर्जद्वज्रे झटिति कमठो वृष्टिपातं ससर्ज।
कालेनाऽसौ किल जलभृतां योगिनं तं वितन्वन्
जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम्॥ १४॥

अन्वयः— विद्युन्मालास्फुरितरुचिरे स्फूर्जद्वज्रे मेघजाते नताशे सति जीमूतेन स्वकुशलमयीं प्रवृत्तिं हारयिष्यन् तं जलभृतां कालेन किल योगिनं वितन्वन् असौ कमठः झटिति वृष्टिपातं ससर्ज।

विद्युन्मालेत्यादि । विद्युन्मालास्फुरितरुचिरे । विद्युतां सौदामिनीनां माला परम्परा विद्युन्माला । 'आकालिकी क्षणरुचिर्विद्युत्तत्पातिरम्बुदः' इति धनञ्जयः । तस्याः स्फुरितानि स्फुरणानि । 'नञ्भावेक्तोऽभ्यादिभ्यः' इति क्तः । तैः रुचिरे दीप्तिमति । 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्' इत्यमरः । रुचिं कान्तिं राति इति रुचिरं । स्फूर्जद्वज्रे । स्फूर्जन् निर्घोषं कुर्वन् वज्रः यस्मिन् स्फूर्जद्वज्रं । तस्मिन् । 'वज्रोऽस्त्री हीरके पवौ' इत्यमरः । मेघजाते । मेघानां जातं समूहः मेघजातं । तस्मिन् । 'जातं जन्मौघजन्तुषु इति विश्वलोचने । नताशे । नताः व्याप्ताः आशाः दिशः येन । तस्मिन् सति । 'आशा तृष्णादिशोः' इति विश्वलोचने । जीमूतेन मेघेन । जीवनस्य मूतः बन्धः जीमूतो मेघः । पृषोदरादित्वात्सः । 'जीमूतोऽभ्रं बलाहकः' इति धनञ्जयः । मेघद्वारेणेत्यर्थः । स्वकुशलमयीं । स्वस्य आत्मनः कुशलं क्षेमं कल्याणं स्वकुशलं । 'कुशलं धर्मपर्याप्तिक्षेमेषु त्रिषु शिक्षिते' इति विश्वलोचने । स्वकुशलाद्धेतोरागता स्वकुशलमयी । तां । 'मयट्' इति हेतुवाचिनः आगते अर्थे मयट् । यद्वा स्वकुशलं प्रकृतं प्रचुरं अस्यामिति स्वकुशलमयी । तां । 'अस्मिन्' इति ईवर्थे प्राचुर्ये मयट् । टित्वात् ङी । 'तत्प्रकृतोक्तौ वा मयट् इति वा मयट् । प्रवृत्तिं प्रयत्नं व्यापारं वा । तं मुनिपस्य स्वर्गगामिनमात्मानं । हारयिष्यन् । हारयितुं त्याजयितुमिच्छन् । 'स्यतासी लृलुटोः' इति स्यस्त्यः । 'वलादेरिट्' इतीडागमः 'हृक्रोर्वा' इति कर्मसञ्ज्ञाया वैकल्पिकत्वात् पक्षे कर्तरि तृतीया । तं मुनिपं । जलभृतां मेघानां कालेन कृष्णवर्णेन । मेघेनेति शेषः 'यतश्च निर्धारणं' (पा० ) इति षष्ठी । योगिनं सम्बन्धिनं । 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' इत्यमरः । वितन्वन् कुर्वन् असौ कमठः सः कमठः । सः कमठचरो देवः इत्यर्थः । झटिति शीघ्रं । वृष्टिपातं ससर्ज सृजति स्म । किल अलीके । यद्वा स्वकुशलमयीं स्वक्षेमविषयिणीं प्रवृत्तिं सन्देशं तं मुनिपं हारयिष्यन् नाययिष्यन् । 'नीवह्योर्हरतेश्चैव' इति वचनात् द्विकर्मकोऽयं धातुः । तं तपस्विनं जलभृतां कालेन जीमूतेन योगिनं वितन्वन् असौ कमठः झटिति वृष्टिपातं ससर्ज । अत्र पूर्वोक्तोऽर्थः 'पश्चाच्चैनं प्रचालितधृतिं हीं हनिष्यामि चित्रं' इति वाक्याभिप्रायानुसारेण समीचीन एवेति प्रतिभाति । ध्यानावस्थायाः भगवन्तं प्रचाल्य तं जिघांसन् कमठः वृष्टिपातं ससर्जेति भावः ।

At the time when an assemblage of clouds, shining very brilliantly on account of the successive flashes of lightnings, having the thunderbolt bursting forth in them, had extended over all the quarters that Kamatha, wishing to make Him abandon the continued efforts bringing about a

That wretch, a demon, very fond of destruction, increasing his thunderings which were like those of a lion, frightening the sage having stood in His vicinity by his roarings, did not welcome Him with very affectionate words, becoming highly pleased with the sage who had been his brother in the former birth. Alas! fie upon the fool!

क्काऽयं योगी भुवनमहितो दुर्विलङ्घ्यस्वशक्तिः
क्काऽसौ क्षुद्रः कमठदनुजः, क्केभराजः क्क दंशः ।
क्काऽऽसद्ध्यानं चिरपरिचितध्येयमाकालिकोऽसौ
धूमज्योतिः सलिलमरुतां सन्निपातः क्क मेघः ॥ १७ ॥

अन्वयः— दुर्विलङ्घ्यस्वशक्तिः भुवनमहितः अयं योगी क्क असौ क्षुद्रः कमठदनुजः क्क, क्क इभराजः क्क दंशः, चिरपरिचितध्येयं आसद्ध्यानं क्क असौ धूमज्योतिः सलिलमरुतां सन्निपातः आकालिकः मेघः क्क ।

क्कायमित्यादि । दुर्विलङ्घ्यस्वशक्तिः । दुर्विलङ्घ्या कृच्छ्रेण विलङ्घ्या विलङ्घितुं शक्या स्वस्य आत्मनः शक्तिः सामर्थ्यं यस्य सः । वसः । 'स्त्रीपद्दुसि कृच्छ्राकृच्छ्रे खः' इति कृच्छ्रार्थे खः । अनिवार्यस्वात्मसामर्थ्यः इत्यर्थः । भुवनमहितः । भुवनेन लोकत्रयेण महितः पूजितः भुवनमहितः । त्रैलोक्यवन्दनीयचरणकमलयुगलः इत्यर्थः । अयं योगी अयं ध्याननिमग्नः मुनिराजः । क्क कुत्र । असौ सः क्षुद्रः अधमः । 'त्रिषु क्रूरेऽधमेऽल्पेपि क्षुद्रं' इत्यमरः । कमठदनुजः कमठचरः दैत्यः क्क कुत्र । इभराजः । इभानां गजानां राजा इभराजः । 'राजाहःसखेष्टः' इति टः । क्क कुत्र । दंशः वनमक्षिका । 'दंशः सन्नाहवनमक्षिकयोर्भुजगक्षते । दोषेऽपि खण्डने दंशो दंशो मर्मणि च स्मृतः ॥' इति विश्वलोचने । चिरपरिचितध्येयं । चिरं चिरकालं चिराद्वा परिचितं अभ्यासविषयतां नीतं ध्येयं यस्य येन वा । आसद्ध्यानं । आसमन्तात् शोभनं आसत् । आसत् च तद्ध्यानं च आसद्ध्यानं । धर्म्यशुक्लादिध्यानमित्यर्थः । क्क कुत्र । धूमज्योतिःसलिलमरुतां सन्निपातः । धूमश्च ज्योतिश्च सलिलं च मरुत् च धूमज्योतिःसलिलमरुतः । तेषां । सन्निपातः सङ्घातः । धूमज्योतिःसलिलमरुत्सङ्घातरूपः मेघः इत्यर्थः । आकालिकः आशुविनाशी । 'आकालिकी क्षणरुचिर्विद्युत्तत्पतिरम्बुदः' इत्यत्र धनञ्जयेन यद् विद्युत आकालिकीति नामान्तरं सङ्गृहीतं तद् आशुविनाशित्वापेक्षयैव । 'आकालिकं ठश्चाद्यन्ते' इति समानकालशब्दात् आद्यन्तोपाधिकात् ठञ् निपात्यः, ठश्च । समानकालस्य 'आकालः' इत्यादेशः । आद्यन्ते इत्यस्य आदिरेव अन्त्यः यस्य

गम्यते इत्यर्थः । तथा च वक्तारो भवन्ति । अद्य यस्मिन्काले भवान् आयातः श्वः सोऽपि तस्मिन्नेव काले समागमिष्यति । यदि वा यस्मिन्नेव काले क्षणादौ विद्युदादेर्जन्म यदि तस्मिन्नेव काले विनश्येत् नात्मलाभकालादूर्ध्वं तिष्ठेदित्यर्थः । आकालिका आकालिकी वा विद्युत् आजन्मकालमेव भवन्ती जन्मान्तरविनाशिनी ऊर्ध्वमननुवर्तमाना एवमुच्यते । एवं द्वेधा अपि आदिरेव अन्तः भवति । अथवा निपातनस्येष्टविषयत्वात् समानकालस्याऽऽकालादेशः । उक्तं चाऽत्र विषयेऽभयनन्दिभिर्जैनेन्द्रमहावृत्तौ "समानकालावाद्यन्तौ । अस्य आकालिकः स्तनयित्नुः ( मेघः ) । आकालिकी विद्युत् । यस्तु प्रादिलक्षणे से आकाल इष्टः 'आवृत्तकालः ईषत्कालः वा आकालः' इति तस्मात् ठञ्च टश्चेष्यते । आकालिकी आकालिका विद्युत्" [ जै. म. वृ. ३।४।१०३ ] । भट्टोजीदीक्षितैरपि कौमुद्यां 'समानकालावाद्यन्तौ यस्येत्याकालिकः । समानकालस्याकाल आदेशः । आशुविनाशीत्यर्थः ।' [ १७७७।५।१।११४ ] मेघः बलाहकः । क । अत्र द्वयोर्वैषम्यं विशदीकृतम् ।

Where this sage, worshipped by all the worlds, possessing soul-power exceedingly difficult to surpass, (and) where this wretched Kamatha, the devil ( or atrociously cruel like a devil ); where the lord of elephants ( and ) where the gnat; where the excellent meditation with the object of which He was familiarised since very long ( and ) where the transitory, a compound ( or combination ) of vapour, fire, water and wind ?

**काऽयं देवो विलसदणिमाद्यष्टभेदस्थितर्द्धिः**
**काल्पर्द्धित्वाद्गुरुसुरपशुः, काद्रिराट् कोपलौघः, ।**
**कास्योद्योगः क नु मुनिगुणो दुर्विभेदाः, क मूकः**
**सन्देशार्थाः क पटुकरणैः प्राणिभिः प्रापणीयाः ॥ १८ ॥**

अन्वयः— विलसदणिमाद्यष्टभेदस्थितर्द्धिः अयं देवः क अल्पर्द्धित्वात् गुरुसुरपशुः क ? क अद्रिराट् क उपलौघः ? अस्य उद्योगः क दुर्विभेदाः मुनिगुणाः नु क ? मूकः क पटुकरणैः प्राणिभिः प्रापणीयाः सन्देशार्थाः क ?

कायमित्यादि । विलसदणिमाद्यष्टभेदस्थितर्द्धिः । विलसन्ती आविर्भवन्ती चासौ अणिमाद्यष्टभेदा अणिमाद्यष्टप्रकारा च विलसदणिमाद्यष्टभेदा । सा चासौ स्थिता

good deal of welfare of His soul, falsely bringing about his connection with the darkest of clouds, suddenly poured out showers of rain.

एवंप्रायां निकृतिमधमः कर्तुमारब्ध भूयो
मायाशीलश्चिरपरिचिताद्वैरबन्धात् प्रकुप्यन् ।
सिद्धैस्तन्निष्क्रमणसमये योगिने भक्तिनम्रैः
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै ॥ १५ ॥

अन्वयः— तन्निष्क्रमणसमये भक्तिनम्रैः सिद्धैः प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै योगिने चिरपरिचितात् वैरबन्धात् प्रकुप्यन् सः मायाशीलः अधमः एवंप्रायां निकृतिं कर्तुं भूयः आरब्ध ।

एवंप्रायामित्यादि । तन्निष्क्रमणसमये । तस्य भगवतः निष्क्रमणसमये । यदा भगवान् संसारं परित्यज्य दीक्षायै निश्चक्राम तदेत्यर्थः । भक्तिनम्रैः । भक्त्या नम्रैः विनतैः । 'नमकम्पिस्म्यजसकमहिंसदीपो रः' इति शीलार्थे रः । गुणानुरागेण नमनशीलैरित्यर्थः । सिद्धैः देवविशेषैः । 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः । 'सिद्धस्तु नित्ये निष्पन्ने प्रसिद्धे देवयोनिषु' इति विश्वलोचने । प्रत्यग्रैः नवैः । सरसैरित्यर्थः । 'प्रत्यग्रोऽभिनवो नव्यः' इत्यमरः । कुटजकुसुमैः कुटजानां गिरिमल्लिकानां कुसुमैः पुष्पैः । 'कुटजो गिरिमल्लिका' इति हलायुधः । कल्पितार्घाय । कल्पितः अनुष्ठितः समर्पितः अर्घः उदकाद्यष्टविधद्रव्यमयः यस्मै । तस्मै। तस्मै योगिने योगनिमग्नाय मुनीन्द्राय । चिरपरिचितात् । चिरं अभ्यस्तात् वैरबन्धात् शात्रवानुबन्धात् प्रकुप्यन् प्रकर्षेण कुप्यन् । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः' इत्यप् । मायाशीलः माया कपटं शीलं स्वभावः यस्य सः । अधमः नीचः । 'अधमौ न्यूनकुत्सितौ' इत्यमरः । 'अधमः कुत्सिते न्यूने' इति विश्वलोचने । 'अन्तोऽवोऽधसो मः' इत्यधसः सकारस्य मकारः । 'अवोऽधसोः स खं चेति वक्तव्यम्' इति सस्य खे कृते । सति मस्त्यः । एवंप्रायां एवंप्रकारां उक्तप्रकारां । पूर्वोक्तश्लोकवर्णितप्रकारेणेत्यर्थः । निकृतिं परिभवं कर्तुं विधातुं आरब्ध आरब्धवान् । 'रभ राभस्ये' इत्यस्माद्धोर्लुङि-रूपम् ।

That fraudulent wretch, getting very angry on account of the enmity borne in mind by him for a long time with Him, the mendicant,

१ सम्प्रत्यग्रैः

to whom oblations consisting of fresh Kutaja flowers were offered by the Siddhas, bent down owing to devotion at the time of his giving up this worldly life for getting initiated into monkhood, began to reproach him again in a way as described before.

पर्जन्यानां ध्वनिमनु सकः स्फावयन् सिंहनादान्
आक्रोशैः स्वैर्मुनिपरिसरात् तर्जयन्नाशदैत्यः ।
हा धिङ्मूढं भगवति मुनौ पूर्वबन्धौ न चोच्चैः—
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ १६ ॥

अन्वयः— सकः नाशदैत्यः पर्जन्यानां ध्वनिं अनु सिंहनादान् स्फावयन् मुनिपरिसरात् स्वैः आक्रोशैः तर्जयन् पूर्वबन्धौ भगवति मुनौ उच्चैः प्रीतः सन् प्रीतिप्रमुखवचनं स्वागतं न व्याजहार ( इति ) मूढं हा धिक् ।

**पर्जन्ये**त्यादि । **सकः** । कुत्सितः सः सकः । 'कुत्सिताज्ञाताल्पे' इति कुत्सायां कन् । **नाशदैत्यः** । नाशप्रियः दैत्यः नाशदैत्यः । शाकपार्थिवादित्वात्सः । **पर्जन्यानां** गर्जतां मेघानां । 'पर्जन्यौ रसदब्देन्द्रौ' इत्यमरः । **ध्वनिमनु** ध्वनिना सह । गर्जितेन सहेत्यर्थः । 'भार्थेऽनुना' इति सहार्थस्यानुशब्दस्य कर्मप्रवचनीयस्य प्रयोगे ध्वनिमिति इप् । **सिंहनादान्** । सिंहस्य नादाः इव नादाः सिंहनादाः । तान् । 'देवपथादिभ्यः' इतीवार्थस्य कस्योस् । **स्फावयन्** वृद्धिं नयन् । 'स्फायी वृद्धौ' इति धातोः ण्यर्थे 'स्फायो वः' इति वादेशः । **मुनिपरिसरात्** । मुनेः परिसरः समीपप्रदेशः मुनिपरिसरः । तस्मात् । 'पर्यन्तभूः परिसरः' इत्यमरः । मुनिपरिसरे स्थित्वेत्यर्थः । 'प्यखे कर्माधारे' इति प्यखे का । **स्वैः** स्वकीयैः । **आक्रोशैः** शपनध्वनिभिः **तर्जयन्** भर्त्सयन् । **पूर्वबन्धौ** पूर्वभवकनीयोभ्रातरि । **भगवति मुनौ** माहात्म्यवति योगिनि । भगः माहात्म्यं अस्यास्तीति भगवान् । तस्मिन् । वैराग्यवति योगिनि वा । 'भगं तु ज्ञानयोगीच्छायशोमाहात्म्यमुक्तिषु । ऐश्वर्यवीर्यवैराग्यधर्मश्रीरत्नभानुषु' इति विश्वलोचने । **उच्चैःप्रीतः** । अत्यर्थं प्रीतः सन्तुष्टः उच्चैः प्रीतः । सन् । **प्रीतिप्रमुखवचनं** । प्रीतिः प्रमुखा यस्मिंस्तत् प्रीतिप्रमुखं । प्रीतिप्रमुखं वचनं यस्मिन् तत् प्रीतिप्रमुखवचनं । **स्वागतं न व्याजहार** । स्वागतवचनं नोचिवान् । व्याङ्पूर्वस्य हृञः लिट् । हेत्यनेन दुःखं व्यनक्ति । 'हा विषादेऽपि दुःखेऽपि शोके' इति विश्वलोचने । धिङ्मूर्खे । 'निर्भर्त्सनेऽपि निन्दायां धिक्' इति विश्वलोचने । 'हान्तरान्तरेणातिधिक्समयानिकषोपाधिश्च' इति इप् ।

स्थितिमती च। सा ऋद्धिर्यस्मिन्। तस्मिन्। यद्वा अणिमा आदिः प्रमुखः येषां भेदानां ते अणिमादयः। अष्टौ च ते भेदाश्च अष्टभेदाः। अणिमादयश्च ते अष्टभेदाश्च अणिमाद्यष्टभेदाः। ते स्थिताः यत्र अथवा तैः स्थिता स्थितिमती अणिमाद्यष्टभेदस्थिता। विलसन्ती चासौ अणिमाद्यष्टभेदस्थिता च विलसदणिमाद्यमेदस्थिता। 'पुंवद्यजातीयदेशीये' इति पुंवद्भावः। स्थितं स्थितिः। 'नञ्भावेक्तोऽभ्यादिभ्यः' इति क्तः। स्थितमस्या अस्तीति स्थिता। 'ओऽभ्रादिभ्यः' इति मत्वर्थीयोऽत्यः। विलसदणिमाद्यष्टभेदस्थिता ऋद्धिः यस्य सः। त्रसः। **अयं देवः**। अयं भगवान् पार्श्वजिनः। क्व कुत्र। **अल्पर्द्धित्वात्**। अल्पा अल्पप्रमाणा ऋद्धिः यस्य सः अल्पर्द्धिः। तस्य भावस्तस्मात्। तस्य भाव इत्यस्मिन्नर्थे त्वः। **गुरुसुरपशुः**। सुरः पशुरिव सुरपशुः। 'व्याघ्रादिभिरुपमेयोऽतद्योगे' इति पसः। गुरुश्चासौ सुरपशुश्च गुरुसुरपशुः। अत्र गुरुशब्देन तस्य पशुत्वस्याऽऽधिक्यं व्यज्यते। क्व कुत्र। क्व कुत्र। **अद्रिराट्**। अद्रीणां राट् राजा अद्रिराट्। मेरुरित्यर्थः। 'राजा राट् पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः' इत्यमरः। क्व कुत्र। **उपलौघः**। उपलानां दृशदां ओघः समुच्चयः उपलौघः। 'पाषाणप्रस्तरग्रावोपलाश्मानः शिलादृशत्,' 'स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः' इत्युभयत्राऽप्यमरः। **अस्य** कमठचरस्य दैत्यस्य। **उद्योगः** व्यापारः। क्रियेत्यर्थः। क्व कुत्र। **दुर्विभेदाः**। दुःखेन विभिद्यन्ते इति दुर्विभेदाः। 'स्वीपद्दुसि कृच्छ्राकृच्छ्रे खः' इति खः। अशक्यभेदना इत्यर्थः। **मुनिगुणाः**। मुनेः गुणाः मुनिगुणाः। क्व कुत्र। नु प्रश्ने। 'नु पृच्छायां विकल्पे च' इत्यमरः। **मूकः** अवाक्। अनेन भगवतो ध्याननिमग्नत्वात् तत्करणानां स्वकार्यकरणे अक्षमत्वं ध्वन्यते। क्व। **पटुकरणैः**। पटूनि स्वकार्यकरणक्षमाणि करणानि इन्द्रियाणि येषां तैः। **प्रापणीयाः** प्रापयितव्याः। हरणीयाः नेतुं शक्या इत्यर्थः। 'शकि लिङ् च' इति शक्यर्थे व्योऽत्र। **सन्देशार्थाः**। सन्दिश्यन्ते इति सन्देशाः। त एवार्थाः सन्देशार्थाः। क्व। 'सन्देशः प्रिययोर्वार्ता' इति धनञ्जयः।

Where this adorable soul whose supernatural power divided into eight parts like minuteness [ अणिमादि ] etc., is manifest (and) where that (god) turned into a violent brute on account of possessing super-human power only partially ? Where the lord of mountains (and) where the heap of stones ? Where the exertions of this (Kamatha and) where indeed the invincible virtues of the sage ? Where the silent (or mute and), where the messages capable of being carried by living beings possessing organs of sense capable of fulfilling their functions.

**सत्यप्येवं परिभवपथे योजयन् स्वं दुरात्मा**
**मत्यौद्धत्यात् स्वयमुपवहन् वारिवाहच्छलेन ।**
**मायायुद्धं मुनिपमुपमाक्षीणकों दुर्जयोऽयं**
**इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे ॥ १९ ॥**

अन्वयः— एवं सति दुरात्मा स्वं परिभवपथे योजयन् मत्यौद्धत्यात् स्वयं वारिवाहच्छलेन उपवहन् 'अयं उपमाक्षीणकः दुर्जयः' इति औत्सुक्यात् अपरिगणयन् गुह्यकः तं मुनिपं मायायुद्धं ययाचे ।

**सत्यप्येवमित्यादि** । **एवं सत्यपि दुरात्मा** नीचः । दुष्टः आत्मा यस्य सः दुरात्मा । **स्वं** आत्मानं । **परिभवपथे** । परिभवस्य पराभवस्य विनाशस्य वा पन्थाः मार्गः परिभवपथः । 'ऋक्पूरब्धूःपथामानक्षे' इत्यत् । **योजयन्** स्थापयन् । **मत्यौद्धत्यात्** । मतेः बुद्धेः मनसः वा औद्धत्यात् प्रक्षोभात् कठोरत्वाद्वा । उद्धतस्य भावः औद्धत्यं । 'राजपत्यन्तगुणोक्तिराजादिभ्यः कृत्ये च' इति भावे ष्यण् । **स्वयं** आत्मना । **वारिवाहच्छलेन** मेघव्याजेन । 'छलं तु स्खलितेऽपि स्यात् व्याजेऽपिच्छलमद्वयोः' इति विश्वलोचने । **उपवहन्** समीपं गच्छन् युद्धसन्नद्धो वा भवन् । **अयं** भगवान् । **उपमाक्षीणकः** । उपमा उपमानं क्षीणं नष्टं यस्य सः । अनुपमानः इत्यर्थः । 'वाहिताग्न्यादिषु' इति सः । **दुर्जयः** । दुःखेन कृच्छ्रेण जीयते इति दुर्जयः । अजय्यः इत्यर्थः । **इति** एवं । **औत्सुक्यात्** । युद्धे इष्टार्थे उद्युक्तत्वात् । 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । **अपरिगणयन्** अविचारयन् । **गुह्यकः** कमठचरः यक्षः । 'गुह्यको गोपिते यक्षे' इति विश्वलोचने । **तं मुनिपं** तं मुनीश्वरं । **मायायुद्धं ययाचे** । मायया विरचितं युद्धं ययाचे याचते स्म । 'टुयाचृ याचने' इत्यस्य द्विकर्मकत्वात् 'तं मुनिपं मायायुद्धं ययाचे' इत्यन्वयः । 'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना' इति द्विकर्मकत्वम् ॥

Though it was so, the Yaksha, the wretched soul, placing himself in the range of defeat, himself approaching Him under the disguise of a cloud through insolence of his mind, not taking into consideration 'This one, having no standard of comparison, is unconquerable,' through eagerness, implored the lord of sages for a fight which was contrived artificially or falsely.

जाता रम्या सपदि विरलैरिन्द्रगोपैस्तदा भूः
सेव्या केकिध्वनितमुखरा भूभृतां कुञ्जदेशाः ।
योगी तस्मिञ्जलदसमये प्रास्खलन्नात्मधैर्यात्
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ २० ॥

अन्वयः— तदा भूः विरलैः इन्द्रगोपैः सपदि रम्या जाता । भूभृतां केकिध्वनितमुखराः कुञ्जदेशाः सेव्याः ( जाताः ) । तस्मिन् जलदसमये आत्मधैर्यात् योगी न प्रास्खलत् । प्रकृतिकृपणा हि चेतनाचेतनेषु कामार्ताः ।

जातेत्यादि । तदा तस्मिन् समये । यदा स यक्षः भीमजीमूतमायामस्राक्षीत् तदेत्यर्थः । भूः पृथ्वी विरलैः पेलवैः । सुकुमारैरित्यर्थः । इन्द्रगोपैः रक्तवर्णैः कीटकविशेषैः प्रावृषि जायमानैः । सपदि झटिति रम्या रमणीया जाता बभूव । भूभृतां पर्वतानां । केकिध्वनितमुखराः । केकिनां मयूराणां ध्वनितैः ध्वनिभिः । 'नपुंसके भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च । केकाध्वनिभिरित्यर्थः । मुखराः वाचालिताः । केकाध्वनिभिर्वाचालाः कृता इत्यर्थः । कुञ्जदेशाः दरीप्रदेशाः लतानिकुञ्जबहुलाः पर्वतप्रदेशा वा । 'कुञ्जं तु न स्त्रियां । हनौ वत्से निकुञ्जेऽपि' इति विश्वलोचने । सेव्याः सेवितुं योग्याः । जाताः इति शेषः । अर्थवशात् वचनविपरिणामः । तस्मिन् जलदसमये मायानिर्मितमेघे काले । मायानिर्मितवर्षाकाले इत्यर्थः । आत्मधैर्यात् आत्मनः मनसः धीरत्वात् । 'आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु' इति विश्वलोचने । ध्यानविषयात्मन्यैकाग्र्यादित्यर्थः । योगी । योगः ध्यानं अस्यास्तीति योगी । ध्याननिमग्नस्तपस्वीत्यर्थः । न प्रास्खलत् आत्मध्यानान्न च्यवते स्म । प्रकृतिकृपणाः । प्रकृत्या निसर्गतः कृपणाः कुत्सिताः । दीनाः कातराः विगलितधैर्याः इत्यर्थः । 'कृपणः कुत्सिते कृमौ' इति विश्वलोचने । हि एव । यद्वा हि यतः 'हि हेताववधारणे' इत्यमरः । चेतनाचेतनेषु । चेतनाश्च अचेतनाश्च चेतनाचेतनाः । तेषु । विषयसप्तमीयम् । कामार्ताः कामं आर्ताः पीडिताः विकृताः वा भवन्ति । यद्वा कामः अभिलाषः अस्याऽस्तीति कामः । मनः इत्यर्थः । 'ओऽभ्रादिभ्यः' इत्यस्यो मत्वर्थीयः । कामः आर्तः येषां ते कामार्ताः । वाहिताग्न्यादित्वात् क्तान्तस्य परनिपातः । विकृतमनस्काः इत्यर्थः । ये स्वभावतो धीराः न तेषां मनः चेतनाचेतनविषयेषु विकृतिमापद्यते, स्वभावकातराणामेव तत्र मनोविकृतेः प्रादुर्भावसम्भवात् । भगवतः स्वभावतो धीरोदात्तत्वान् मनोविकृतेः सम्भवाभावादात्मध्यानात्प्रच्युत्यभावः इति भावः । 'योगिन्' इति 'प्रस्खलेः' इति च पाठौ 'टुयाचृ याचने' इत्यस्य द्विकर्मकस्य धोः कर्मद्वयस्य 'सत्यप्येवं' इत्यत्र

श्लोक एव सद्भावात् तस्योत्तरत्रान्वयासम्भवात् प्रकृतश्लोकोक्तवर्णनस्य कविप्रोक्तत्वात्-कमठचरयक्षप्रोक्तत्वासंभवाच्च प्रकृतश्लोकप्रयुक्तानां ' तदा ' इति ' तस्मिञ्जलदसमये ' इति चैषां पदानामनद्यतनभूतार्थप्रतिपादनपरत्वात् ' योगिन् ' इति ' प्रस्खलेः ' इति च पदयोरनद्यतनभूतार्थप्रतिपादनानर्हत्वाच्च परिवर्तितावित्यध्यवसेयं सुधीभिः ।

At that time on account of the delicate Indragopa worms the earth became beautiful at once; the caves of the mountains resounding with the cries of the peacocks became worthy of being resorted to (or being enjoyed). At that time, when there were clouds (in the sky), the sage, owing to the courageousness of his mind, did not deviate from his right course (i. e. meditation). Those only, who are naturally timid (low-spirited), have their minds disturbed (excited) with respect to the sentient and the non-sentient.

ऊर्ध्वज्ञुं तं मुनिमतिघनैः कालमेघैः प्रयुक्तो
धारासारो भुवि नमयितुं नाशकद्दुःसहोऽपि ।
जात्याश्वानामिव बहुगुणे भूभृतामुग्रनाम्नां
जातं वंशे भुवनविदिते पुष्कलावर्तकानां ॥ २१ ॥

अन्वय :— अतिघनैः कालमेघैः प्रयुक्तः धारासारः दुःसहः अपि पुष्कलावर्तकानां जात्याश्वानां भुवनविदिते बहुगुणे वंशे जातं ऊर्ध्वज्ञुं इव पुष्कलावर्तकानां उग्रनाम्नां भुवनविदिते बहुगुणे वंशे जातं त ऊर्ध्वज्ञुं मुनिं भुवि नमयितुं न अशकत् ।

ऊर्ध्वज्ञुमित्यादि । अतिघनैः अतिसान्द्रैः कालमेघैः कृष्णवर्णमेघैः । जलपूर्णत्वात् संजातकृष्णवर्णैरित्यर्थः । प्रयुक्तः विहितः धारासारः धाराणां जलधाराणां आसारः वेगवद्वर्षः । 'आसारो वेगवद्वर्षम्' इत्यमरः । दुःसहः अपि । दुःखेन कृच्छ्रेण सह्यते इति दुःसहः । अशक्यसहन इत्यर्थः । पुष्कलावर्तकानां । पुष्कलाः निर्दोषाः आवर्ताः लक्षणविशेषाः येषां ते पुष्कलावर्तकाः । तेषां । ' विशदे पुष्कलामलम् ' इति धनञ्जयः । जलावर्तसदृशाकारः केशविरचितः लक्षणविशेषः आवर्तः । जात्याश्वानां । जात्याः कुलीनाश्च ते अश्वाश्च जात्याश्वाः । ' जात्यं कुलीने श्रेष्ठेऽपि ' इति विश्वलोचने । तेषां । भुवनविदिते । भुवनेषु विदिते भुवनविदिते । लोकप्रसिद्धे इत्यर्थः । ' बुद्धं बुधितं विदितं मनितं प्रतिपन्नमवसितावगते ' इत्यमरः । ' मतिबुद्धिपूजार्थेभ्यः क्तः ' इत्यादिना क्तान्तस्य वर्तमानार्थत्वे ' क्तस्य चाधारसतोः ' इति भुवनशब्दस्य तान्तता-नियमात् समासः न स्यात् ' कर्तरि क्तेन ' इति प्रसो निषेधात् । बहुगुणे । बहवः

परिभवपदं एकधा न प्रापिपः । तेन इति पुनः विधिवशात् कृच्छ्रात् चिरात् लब्धे त्वयि दूरबन्धुः अहं वैरनिर्यातनायां अर्थित्वं गतः ।

**येनेत्यादि** । **येन** यस्मात् कारणात् **अमुष्मिन्** अस्मिन् **भवजलनिधौ** । भवः संसारः जलनिधिरिव भवजलनिधिः । 'व्याघ्रादिभिरुपमेयोऽतद्योगे' इति सः । यद्वा भवः एवजलनिधिः भवजलनिधिः । तत्र । जलनिधिः सागरः । संसारस्यानाद्यनन्तत्वाद्विपद्व्यालाकुलत्वाच्च सागरोपमत्वम् । **पर्यटन्** परिभ्रमन् । **त्वं स्त्र्यर्थे स्त्र्यर्थे** कामिन्यर्थे । आभीक्ष्ण्ये द्विः । **प्रमत्तं** उन्मत्तं **मां परिभवपदं** परिभवावस्थां **एकधा** एकेन प्रकारेण । 'स्येर्विधार्थे धा' इति प्रकारार्थे धा । **न प्रापिपः** न प्रापयसि स्म । अनेकधा प्रापयसि स्मेत्यर्थः । आपयतेर्लुङि मध्यमपुरुषैकवचनम् । **तेन** तेन कारणेन । **इति** इत्थं । अमुना प्रकारेणेत्यर्थः । **पुनः** भूयः । **विधिवशात्** दैववशात् । 'नियतिर्विधिः' इत्यमरः । **कृच्छ्रात्** महता कष्टेन **चिरात्** चिरकालेन **लब्धे** प्राप्ते **त्वयि** भवति मरुभूतिचरे भगवति पार्श्वनाथे । **दूरबन्धुः** । दूरः दूरंगतः बन्धुः । ते पूर्वभवभ्राता यद्वा दूरः बन्धुः सम्बन्धी यस्य सः । बसः । **अहं** कमठचरो यक्षः । **वैरनिर्यातनायां** वैरशुद्ध्यर्थे । 'वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा' इत्यमरः । **अर्थित्वं** याचकत्वं **गतः** प्राप्तः । अस्मीति शेषः ।

As you, moving in the ocean-like world, did not insult me in one way only who had gone mad after females, I, whose relative is abroad request you who are fortunately found after a long time with a great difficulty, for the sake of taking a bloody vengeance (upon you).

**तस्माद्वीरप्रथमगणनामाप्तुकामस्त्वकं चेत्**
**पूर्वप्रीत्या सुभट ! सफलां प्रार्थनां मे विधत्स्व ।**
**कालाद्याचे परमपुरुषं त्वाऽभियायाऽद्य युद्धं**
**याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ २४ ॥**

अन्वय :— तस्मात् ( हे ) सुभट ! त्वकं वीरप्रथमगणनां आप्तुकामः चेत् पूर्वप्रीत्या मे प्रार्थनां सफलां विधत्स्व । त्वां परमपुरुषं अद्य अभियाय कालात् वरं युद्धं याचे । अधिगुणे याच्ञा मोघा न, अधमे लब्धकामा न । यद्वा अधिगुणे मोघा याच्ञा वरं, अधमे लब्धकामा वरं न ।

तस्मादित्यादि । **तस्मात्** तेन कारणेन । **त्वकं** । अनुकम्पितः त्वं त्वकं ।

'अनुकम्पातन्नीत्योः' इत्यनुकम्पाविषयायां सामनीतौ गम्यमानायां कन्। **वीरप्रथमगणनां**। वीरेषु प्रथमः उत्कृष्टः इति गणना। तां। **आप्तुकामः**। आप्तुं कामः यस्य सः। 'समतुमो मनः कामे' इति तुमो मकारस्य खं। **चेत्** यदि। **पूर्वप्रीत्या**। पूर्वस्मिन् मरुभूतिभवे या तव मयि कमठचरे प्रीतिरासीत् तया। **मे** मम **प्रार्थनां** याचनां **विधत्स्व** कुरु। सफलां कुर्वित्यर्थः। जातरूपधारित्वादिनाऽनुकम्पनीयामवस्थां प्राप्ते त्वयि वीरप्रथमगणनामाप्तुकामत्वं न सम्भवत्येव। तथापि त्वं वीरप्रथमगणनामाप्तुकामोऽसि चेत् मे युद्धार्थो प्रार्थनां सफलां कुर्विति तात्पर्यम्। **त्वा** त्वां **परमपुरुषं** परमं पुरुषं। महात्मानमित्यर्थः। **अभियाय** ज्ञात्वा प्राप्य वा **अद्य** अधुना **कालात्** काले सन्धिं अवकाशं वा प्राप्य। 'ल्यखे कर्माधारे' इति ल्यखे का। **वरं** महत् उत्कृष्टं वा। **युद्धं** सङ्ग्रामं। **याचे** प्रार्थये। यतः **अधिगुणे** अधिकगुणे। गुणाधिके इत्यर्थः। **याच्ञा** प्रार्थना **मोघा** विफला **न** न भवति। **अधमे** नीचे **लब्धकामा** सफला **न** न भवति। त्वमधिगुणोऽसि चेत् त्वया मे प्रार्थनाऽवश्यं सफलीकर्तव्या। नो चेत् तां सफलां विधास्यसि तवाधमत्वं सेत्स्यत्येवेति भावः। यद्वा अधिगुणे मोघा याञ्चा वरं, अधमे लब्धकामा सा न वरं इति मनसि विधाय त्वां परमपुरुषं ज्ञात्वा त्वां युद्धं याचे। अतः परमपुरुषत्वात् त्वया मे प्रार्थना सफलीकर्तव्येति हृदयम्।

O you! a veteran soldier, if at all you, therefore, are desirous of your being looked upon as the first among the brave, through your former love for me grant my request. Finding this opportunity, I, taking you to be the highest soul, request you for a good fight. A request made to one possessing superior qualities never turns to ineffectiveness and made to the wretched one to effectiveness. (Or A request made to one possessing superior qualities is rather better, though turned to ineffectiveness, but it, though to effectiveness, is not better when it is made to the wretched one.)

**जेतुं शक्तो यदि च समरे मामभीक प्रहृत्य**
**स्वर्गस्त्रीणामभयसुभगं भावुकत्वं निरस्यन्।**
**पृथ्व्या भक्त्या चिरमिह वहन् राजयुद्ध्वेति रूढिं**
**सन्तप्तानां त्वमसि शरणं तत् पयोदप्रियायाः॥ २५॥**

अन्वयः— (हे) अभीक समरे (मां) प्रहृत्य सन्तप्तानां स्वर्गस्त्रीणां

गुणाः अश्वयोग्या यस्मिन् तस्मिन्। **वंशे** अन्वये **जातं** समुत्पन्नं। **ऊर्ध्वज्ञुं** 'ऊर्ध्व-जानुं। 'ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्' इत्यमरः। 'वोर्ध्वात्' इति ऊर्ध्वात् परस्य जानुनो वा ज्ञुः। ऊर्ध्वे जानुनी अस्य ऊर्ध्वज्ञुः। तम्। **इव पुष्कलावर्तकानां**। पुष्कलं निर्मलं। शुद्धात्मानमित्यर्थः। आवर्तयन्ति चिन्तयन्ति इति पुष्कलावर्तकाः। ते येषां सन्तीति पुष्कलावर्तकाः। 'ओऽभ्रादिभ्यः' इत्यः। तेषां। येषां कुले शुद्धात्म-ध्यानानां मुनीनां परम्परा आसीत् तेषां। **उग्रनाम्नां** उग्राभिधानानां **भुवनविदिते** लोकप्रसिद्धे **बहुगुणे** नानागुणे **वंशे** अन्वये **जातं** सम्भूतं तं **ऊर्ध्वज्ञुं** ऊर्ध्वजानुं **मुनिं** योगिनं **भुवि** भूमौ **नमयितुं** नम्रीकर्तुं। **न अशकत्** न शक्नोति स्म। तं ध्यानाद्भ्रं-शयितुं समर्थो नाऽभवदिति भावः। अशकदिति स्वादिगणगतस्य शक्नोतेर्लुङन्तस्यो त्तमपुरुषस्यैकवचनान्तं रूपं।

The showers of rain poured by the dark clouds, assembled very densly, could not make him, the long-shanked one born in the family of the Ugra Kshatriya clan, endowed with many good qualities, having a good number of persons that were very learned or had initiated into monkhood, and welknown in the whole world, bend down on the ground like the long-shanked horse, born in the race of excellent horses bearing auspicious marks, endowed with a large number of good qualities and welknown in the whole world.

**भूयः क्षोभं गमयितुमनाः स्वान्तवृत्तिं मुनीन्दो–**
**र्वाचाटत्वं प्रचिकटयिषुर्धीरमेवं जजृम्भे ।**
**भो भो वीर स्फुटमिति भवान् मय्यगादल्पमृत्युं**
**जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ॥ २२ ॥**

अन्वयः— मुनीन्दोः स्वान्तवृत्तिं भूयः क्षोभं गमयितुमनाः वाचाटत्वं प्रचिक-टयिषुः 'भो भो वीर! (यः) भवान् मयि अल्पमृत्युं अगात् (तं) त्वां मघोनः कामरूपं प्रकृतिपुरुषं स्फुटं जानामि' इति एवं धीरं जजृम्भे।

भूयःक्षोभमित्यादि। **मुनीन्दोः**। मुनिः इन्दुः इव मुनीन्दुः। तस्य। 'व्याघ्रादिभिरुपमेयोऽतद्योगे' इत्युपमितसमासः। अत्र मुनेरिन्दुतुल्यत्वं सुखशान्तिप्रद-त्वात्। **स्वान्तवृत्तिं**। स्वान्तस्य मनसः वृत्तिं प्रवृत्तिं। ध्यानैकतानतारूपामित्यर्थः। **क्षोभं** विकृतिं **गमयितुमनाः** प्रापयितुमिच्छन्। 'सम्तुमो मनःकामे' इति तुमो

मकारस्य खं । **वाचाटत्वं** । वाचाटस्य वाचालस्य भावः वाचाटत्वं । यो निस्सारं बहु जल्पति स गर्हायां द्योत्यायां वाचालो वाचाट इति वा निगद्यते । ' क्षिप्याला टौ ' इति गर्हायामाटः । **प्रचिकटयिषुः** प्रकटीकर्तुमिच्छन् । ' सन्भिक्षाशंस्विदिच्छादुः ' इति सन्नन्तादुः । **भो भो वीर** हे शूर यः **भवान्** त्वं **मयि** कमठचरे । **अल्पमृत्युं** । अल्पश्चासौ मृत्युश्च अल्पमृत्युः । तम् । **अगात्** गच्छति स्म । तं त्वां भवन्तं जातरूप-धारिणं । **मघोनः** इन्द्रतुल्यस्य । मघवा इव मघवा । अनेनारविन्दमहाराजस्य मघवत्तु-ल्यत्वं इन्द्रैश्वर्यत्वात् । ' देवपथादिभ्यः ' इतीवार्थस्य कस्योप् । यद्वा मघः सुखं अस्याऽस्तीति मघवान् । अथवा महः पूजा अस्यास्तीति मघवान् । स्वप्रजाभिः पूजित इत्यर्थः । हस्य घः । " ' श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मा-तरिश्वन्मघवन्निति ' [ उ. १६५ पा. ] । ' मह पूजायां ' । हस्य घः वुगागमश्च " इति भट्टोजीदीक्षितः । इन्द्रतुल्यैश्वर्यस्यारविन्दमहाराजस्येत्यर्थः । यद्वा लोकैरादृतस्यार-विन्दमहाराजस्येत्यर्थः । **कामरूपं** । कामस्य कामदेवस्य रूपमिव रूपं यस्य सः । यद्वा कामरूपमिव रूपं अस्य कामरूपः । तम् । ' इवुपमानपूर्वस्य द्युखं वक्तव्यं ' (जै. वा.) इति उपमानपूर्वस्य रूपशब्दस्य खं । **प्रकृतिपुरुषं** प्रधानपुरुषं । प्रधानामात्यमित्यर्थः । ' प्रकृतिस्तु सत्त्वरजस्तमसां साम्यमात्रके । स्वभावामात्यपौरेषु लिङ्गे योनौ तथाऽऽत्मनि ' इति विश्वलोचने । **स्फुटं** । प्रव्यक्तं यथा स्यात् तथा । ' स्फुटो व्यक्ते प्रफुल्ले च व्यात्तवत् त्रिष्वपि त्रिपु ' इति विश्वलोचने । **जानामि** प्रत्यभिजानामि । **इति** एवं । अमुना प्रकारेणेत्यर्थः । **धीरं** । धैर्येण यथा स्यात् तथा । **जजृम्भे** जृम्भते स्म । भणितुं मुखं व्यात्तवानित्यर्थः । ' जृभी गात्रविनामे ' इत्यस्माल्लिट् ।

He, desirous of displaying his talkativeness with the intention of exciting again the mind of the sage, opened his mouth to say courageously "O you, a brave one, I have evidently recognised you to be the minister, who had died an untimely death on account of me, and who was as beautiful as the god of love.

**येनाऽमुष्मिन्भवजलनिधौ पर्यटन् नैकधा मां**
**स्त्र्यर्थे स्त्र्यर्थे परिभवपदं प्रापिपस्त्वं प्रमत्तम् ।**
**कृच्छ्राल्लब्धे पुनरिति चिराद्वैरनिर्यातनायां**
**तेनाऽर्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहम् ॥ २३ ॥**

अन्वयः— येन अमुष्मिन् भवजलनिधौ पर्यटन् त्वं स्त्र्यर्थे स्त्र्यर्थे प्रमत्तं मां

अभयसुभगं भावुकत्वं निरस्यन्, पृथ्व्या भक्त्या 'राजयुद्ध्वा' इति रूढिं इह चिरं वहन् मां जेतुं यदि शक्तः तत् पयोदप्रियायाः त्वं शरणं असि ।

जेतुमित्यादि । हे अभीक कामुक निर्भय वा । 'अभीको निर्भयक्रूरकविकामिषु वाच्यवत्' इति विश्वलोचने । अत्र कामुकार्थस्याऽभीकशब्दस्य ग्रहणमेव युक्तं भाति 'क्षीणक्लेशे सिषिधुषि मतिं किं निधत्तेऽङ्गितत्त्वे । कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे।' इत्यत्र दुष्टाभिप्रायेण कमठचरेण यक्षेण भगवतो ध्यानैकतानस्य कामुकत्वस्य ध्वनितत्वात् । कामुकस्य समरव्यापाराभिलापत्वं न सम्भवति तथापि ते समरव्यापारेऽभिलाषोऽस्तीति चेदिति मनसिकृत्याह समेरेत्यादि । समरे रणे प्रहृत्य अस्त्रेण हत्वा सन्तप्तानां त्वद्विरहसञ्जातदुःखानां स्वर्गस्त्रीणां देवाङ्गनानां अभयसुभगं अभयात् त्वत्समागमविषये कुतोऽपि भयाभावात् सुभगं शोभनं भावुकत्वं सुखित्वं निरस्यन् परिहरन् । शुभभावार्जितपुण्यस्य जातरूपधारित्वात् अस्यादिप्रहरणविकलत्वात् युद्धभूमौ तव मरणस्याऽवश्यंभावित्वात् त्वत्समागमविषये भयकारणाभावात् समुत्पद्यमानं सुखं त्वया युद्धे मां घ्नता स्वरक्षणं च कुर्वता देवभूयत्वमप्राप्नुवता निराकृतं भवति । तथा च स्त्र्यभिलापुकस्य कामुकस्य ते स्त्रियः प्राप्त्यसम्भवात् दुःखमेव जायेतेति भावः । पृथ्व्या भक्त्या महता प्रेम्णा । 'राजयुद्ध्वा' । राजानं यक्षं योधितवान् इति राजयुद्ध्वा । यक्षयोधकः इत्यर्थः । 'राजसहे युधिकृञोः' इति क्वनिप् । 'राजा चन्द्रे नृपे शक्रे क्षत्रिये प्रभुयक्षयोः' इति विश्वलोचने । इति एवम्प्रकारां रूढिं प्रसिद्धिं इह अत्र भुवि चिरं चिरकालं वहन् धरन् यदि च मां जेतुं शक्तः समर्थः । असीति शेषः । तत् तर्हि पयोदप्रियायाः पयोदस्य भगवदुपसर्गसर्जने पयोधराकारधारिणो यक्षस्य मम प्रियायाः प्रेयस्याः त्वं भवान् शरणं रक्षिता असि भवति । 'शरणं गृहरक्षित्रोः' इत्यमरः । त्वत्प्रहरणप्रहारप्रहृतजीवितस्य मम मत्प्रियया सम्भवात् मद्विरहजनितमारणान्तिकदुःखस्य परिहृतेः त्वमेव तस्याः प्राणानां रक्षकः भविष्यसीति भावः ।

Oh libidinous one, attacking me in the battlefield, if you, dispelling the happiness, which, being free from all fears, is growing vigorously or flourishing, of the heavenly damsels, assuming the famous title 'Rajayuddhva' [ राजयुद्ध्वा ] for a long time with great delight, are able to defeat me, then you are the saviour of the beloved lady of mine who has assumed the form of a cloud.

याचे देवं मदसिहतिभिः प्राप्य मृत्युं निकारात्
मुक्तो वीरश्रियमनुभव स्वर्गलोकेऽप्सरोभिः ।

**नैवं दाक्ष्यं यदि तव ततः प्रेष्यतामेत्य तूर्ष्णी**
**सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ॥ २६ ॥**

अन्वयः— मदसिहतिभिः मृत्युं प्राप्य निकारात् मुक्तः (त्वं) स्वर्गलोके अप्सरोभिः वीरश्रियं अनुभव (इति) देवं याचे। यदि तव एवं दाक्ष्यं न ततः तूर्ष्णी प्रेष्यतां एत्य धनपतिक्रोधविश्लेषितस्य मे सन्देशं हर।

**याचे देव**मित्यादि। **मदसिहतिभिः**। मम असिः खड्गः, मदसिः। तस्य हतिभिः आघातैः। **मृत्युं प्राप्य** मरणं सम्प्राप्य **निकारात्** परिभवात् **मुक्तः** सञ्जातमोक्षः। 'निकारो विप्रकारः स्यात्' इत्यमरः। **स्वर्गलोके** देवलोके **अप्सरोभिः** देवाङ्गनाभिः सह। देवस्त्रियेत्यर्थः। 'स्त्रियां बहुष्वप्सरसः' इत्यमरः। **वीरश्रियं** वीरलक्ष्मीं **अनुभव** निर्विश। सङ्ग्रामे सञ्जातमृतेः स्वर्गप्राप्तिर्भवतीत्यन्ये तीर्थिकाः। यक्षस्यासञ्जातसम्यक्त्वादियमुक्तिः समीचीना। **यदि तव एवं** एवंविधं **दाक्ष्यं** सामर्थ्यं **न** नास्ति चेत् **ततः** तदा **तूर्ष्णी** जोषं **प्रेष्यतां** भुजिष्यत्वं। 'नियोज्यकिङ्करप्रेष्यपरिचारकाः' इत्यमरः। **एत्य** सम्प्राप्य। **धनपतिक्रोधविश्लेषितस्य**। धनपतिरिव धनपतिः। 'देवपथादिभ्यः, इतीवार्थस्य कस्योप्। कुबेरसदृशस्यारविन्दमहाराजस्य क्रोधेन कोपेन विश्लेषितस्य प्रेयस्याः दूरीकृतस्य **मे** मम यक्षस्य कमठचरस्य **सन्देशं** वार्तां **हर** नय। मत्प्रेयसीं प्रति प्रापयेत्यर्थः। यद्वा धनपतिः कुबेरः। तस्य क्रोधेन कोपेन विश्लेषितस्य विश्लेषं वियोगं प्रापितस्य मम यक्षस्य कमठचरस्य **सन्देशं** वार्तां **हर** नय। धनपतितुल्येनारविन्दमहाराजेन वसुन्धरागमनक्रोधितेन वसुन्धराया वियोजितस्य मम तस्याश्च विभिन्नदेशोद्भवाद्वियोगस्यान्यभवेऽपि पूर्ववदेव विद्यमानत्वादसञ्जातमीलनत्वात् मत्तो वियुक्तां तां मम प्रेयसीं प्रति सन्देशं नयेति भावः।

I request you that you, got clear away from humiliation by putting an end to your life by the strokes of my sword, should enjoy happiness derived from the highest position of a warrior along with the heavenly damsels in the heavenly world. If you have not got (if you are devoid of) such a capacity, then, having become my messengesr silently (i. e. without any grudge) convey a message of mine whose separation (from the beloved) is caused by the anger of the Kubera-like King (Aravinda.)

आद्यः कल्पस्तव न सुकरो दुर्घटत्वान्न चान्त्यः
श्लाघ्यो दैन्यान्मुनिमत ततो मध्यकल्पाश्रयस्ते
श्रेयांस्तस्मिन् सुखमनुभवेरप्सरोभिस्तदुच्चैः
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणाम् ॥ २७ ॥

यस्यां रात्रेरपि च विगमे दम्पतीनां विधत्ते ।
प्रीतिं प्रातस्तननिधुवनग्लानिमुच्चैर्हरन्ती ।
दृष्टा सास्रं सततविरहोत्कण्ठितैश्चक्रवाकैः
बाह्योद्यानस्थितहरशिरश्चन्द्रिका धौतहर्म्या ॥ २८ ॥

अन्वयः— दुर्घटत्वात् आद्यः कल्पः तव सुकरः न, दैन्यात् च अन्त्यः श्लाघ्यः न । ततः हे मुनिमत ! मध्यकल्पाश्रयः ते श्रेयान् । तस्मिन् अप्सरोभिः उच्चैः सुखं अनुभवेः । तत् यस्यां ( या ) रात्रेः विगमे अपि दम्पतीनां प्रातस्तननिधुवन॰ग्लानिं उच्चैः हरन्ती प्रीतिं विधत्ते सा धौतहर्म्या बाह्योद्यानस्थितहरशिरश्चन्द्रिका सततविरहोत्कण्ठितैः चक्रवाकैः सास्रं दृष्टा यक्षेश्वराणां अलका नाम वसतिः ते गन्तव्या ।

आद्यः कल्प इत्यादि । दुर्घटत्वात् । दुःखेन घटयते इति दुर्घटं । 'स्वीषद्दुसि कृच्छ्राकृच्छ्रे खः ' इति खः । तस्य भावः दुर्घटत्वं । तस्मात् । आद्यः प्रथमः कल्पः प्रकारः ' जेतुं शक्तः ' इत्यादिश्लोकेन वर्णितः । ' कल्पो ब्राह्मदिने न्याये प्रलये विधिशान्तयोः ' इति विश्वलोचने । तव ते सुकरः सुखेन क्रियते इति सुकरः । सुखसाध्यः इत्यर्थः । न न भवति । दैन्यात् दीनत्वात् हेतुभूतात् च अन्त्यः अन्ते भवः अन्त्यः । चरमः इत्यर्थः । ' नैवं दाक्ष्यं ' इत्यादि श्लोकार्धेन प्रतिपादितः । श्लाध्यः न श्लाघनीयः प्रशंसनीयः न भवति । ततः तस्मात् कारणात् । हे मुनिमत ! अनुमत ! मुनिभिः मतः अनुमतः । तस्य किः । ' मतोऽर्चितेऽप्यनुमते ' इति विश्वलोचने । ' मन ज्ञाने ' इत्यस्मद्धोः ' तः ' इति भूते तसंज्ञकः क्तस्त्यः । मनुते स्म मतः । ' ञीन्मत्यर्चार्थशीलपादिभ्यः क्तः ' इत्यादिना वर्तमानार्थत्वे ' क्तस्य चाधारसतोः ' इति तान्तत्वस्य नियमात् सस्याऽभावः, ' कर्तरिक्तेन ' इत्यनेन तस्य निषिद्धत्वात् । मध्यकल्पाश्रयः । मध्यश्चासौ कल्पश्च मध्यकल्पः । तस्य आश्रवः आश्रयणं । स्वीकरणमित्यर्थः । ते तव श्रेयान् अतिशोभनः । ' श्रेयान् श्रेष्ठः पुष्कलः स्यात् सत्तमश्चातिशोभनः ' इत्यमरः । तस्मिन् मध्यकल्पाश्रयणे कृते सति, स्वर्गे वा अप्सरोभिः दिव्याङ्गनाभिः उच्चैः अतिशयेन । अत्यर्थमित्यर्थः । सुखं अनुभवे

अनुभव । तत् तस्मात् कारणात् **यस्यां** अलकाख्यनगर्यां या रात्रेः निशायाः **विगमे** अवसाने **दम्पतीनां** जायापतीनां । 'दम्पती जम्पती जायापती भार्यापती च तौ' इत्यमरः । जाया च पतिश्च जम्पती' राजदन्तादित्वाज्जायाशब्दस्य जम्निपातः। **प्रातस्तननिधुवनग्लानिं**। प्रातर्भवं जातं वा प्रातस्तनं। 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' इति भवार्थे जातार्थे वा तनट्। प्रातस्तनं निधुवनं मैथुनं च प्रातस्तननिधुवनं मैथुनं च प्रातस्तननिधुवनं। 'मैथुनं निधुवनं रतम्' इत्यमरः। तस्य ग्लानिः आयासः। प्रातस्तननिधुवनग्लानिः। ताम्। 'ग्लाज्याहो निः' इति भावे निः। **उच्चैः** अत्यर्थं **हरन्ती** विनाशयन्ती **प्रीतिं** सुखं। 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः। **विधत्ते** जनयति। सा **धौतहर्म्या** धौतानि धवलीकृतानि हर्म्याणि प्रासादाः यया सा धौतहर्म्या। **बाह्योद्यानस्थितहरशिरश्चन्द्रिका** बाह्यं च तत् उद्यानं च बाह्योद्यानं। तत्र स्थितश्चासौ हरश्च। तस्य शिरसि शिरोभागे स्थिता चन्द्रिका बाह्योद्यानस्थितहरशिरश्चन्द्रिका। ।सेव चन्द्रिका चन्द्रोद्योतः। 'देवपथादिभ्यः' इतीवार्थस्य कस्योप्। चन्द्रिकायाः प्रशस्ततरत्वख्यापनार्थं बाह्योद्यानस्थितहरशिरश्चन्द्रिकया साम्यं वर्णितमिति विज्ञेयं। **सततविरहोत्कण्ठितैः** सततमविरतं विरहेण स्वजायायाः वियोगेन उत्कण्ठितैः सञ्जातोत्कण्ठैः। 'सततानारताश्रान्तसन्ततविरतानिशम्' इति 'उत्कण्ठोत्कलिके समे' इति चाऽमरः। उत्कण्ठा सञ्जाता येषां ते उत्कण्ठिताः। तैः। 'तदस्य सञ्जातं तारकादिभ्य इतच्' इतीतच्। **चक्रवाकैः** कोकैः। 'कोकश्चक्रश्चक्रवाकरथाङ्गाह्वयनामकः' इत्यमरः। **सास्रं** अश्रुपातेन सह यथा स्यात् तथा **दृष्टा** अवलोकिता सा **यक्षेश्वराणां**। यक्षाणामीश्वराः यक्षेश्वराः। तेषां। **अलकानाम** अलकाभिधाना **वसतिः** निवासस्थानम्। 'वसती रात्रिवेश्मनोः' इत्यमरः। **ते**, त्वया **गन्तव्या** यातव्या। त्वया तत्र गन्तव्यमित्यर्थः 'व्यस्य वा कर्तरि' इति कर्तरि व्यस्य प्रयोगात्।

Oh you, praised by sages! the first alternative being very difficult to give effect to is not easy to be achieved by you and the last one is not appreciable owing to humiliation. A recourse to the middle alternative is, therefore, better for you. Enjoy happiness there (in the heaven) along with the heavenly damsels. Alaka, the place of residence of the lords of the Yakshas, wherein the moonlight, very bright like the one emanating from the forehead of Hara staying in the external garden, looked at with tears by the Chakrawaka birds miserable owing to their being continuously separated (from their beloveds), brightening the palatial buildings

with your body illuminated by the rays emanating from the *ornaments studded with jewels.*

**स्यादाकूतं मम न पुरतः स्वस्थवीराग्रणीर्यः**
**तिष्ठेदेकं क्षणमिति न तं साम्प्रतं हन्तुमीशः।**
**नन्वेषोऽहं वद भटमतः कीर्तिलक्ष्मीप्रियो वा**
**कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां ॥ ३१ ॥**

अन्वय :— यः स्वस्थवीराग्रणीः मम पुरतः एकं क्षणं तिष्ठेत् तं साम्प्रतं हन्तुं ईशः न इति न (इति) आकूतं (ते) स्यात् (चेत्) एषः अहं ननु ! कः वा भटमतः कीर्तिलक्ष्मीप्रियः विरहविधुरां जायां त्वयि सन्नद्धे (सति) उपेक्षेत ?

स्यादाकूतमित्यादि। यः कश्चन पुरुषः **स्वस्थवीराग्रणीः**। स्वस्थः धैर्यवान्। वीरेषु शूरेषु अग्रणीः श्रेष्ठः वीराग्रणीः। 'ग्रामाग्रान्नीः' इति नस्य णः। स्वस्थश्चासौ वीराग्रणीश्च स्वस्थवीराग्रणीः। **मम** पार्श्वाभिधस्य मे **पुरतः** अग्रे। 'स्यात् पुरः पुरतोऽग्रतः' इत्यमरः। **तिष्ठेत्** वसेत् **तं** तं पुरुषं **साम्प्रतं** सम्प्रति। शीघ्रमीत्यर्थः। 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं' इत्यमरः। सम्प्रत्येव साम्प्रतं। स्वार्थेऽण्। **हन्तुं** विनाशयितुं। **ईशः** समर्थः। **न इति न**। समर्थोऽस्म्येवेत्यर्थः 'द्वौ नञौ प्रकृतार्थं गमयतः' इति न्यायात्। इति **ते** तव **आकूतं** अभिप्रायः। 'आकूतमाशयः' इति कोषः क्षीरस्वाम्युध्दृतः। 'स्वान्तमास्वनितं चित्तं चेतोऽन्तःकरणं मनः। हृदयं विशिखाकूतं' इति धनञ्जयः। **स्यात्** भवेत् चेत् **एषः अहं** एषोऽहं प्रत्यक्षतः तव पुरतः तिष्ठामि। यदि ते स्वस्थवीराग्रणीहननसामर्थ्यमस्ति मामेव जहि। वीरश्रेष्ठास्तु दूरे एव सन्तु। **कः वा भटमतः** भटैः मतः आदृतः, भटः इति मतः वा। **कीर्तिलक्ष्मीप्रियः**। कीर्तिश्च लक्ष्मीश्च कीर्तिलक्ष्म्यौ। ते प्रिये यस्य सः 'प्रियः' इति प्रियशब्दस्य पूर्वनिपातस्य वैकल्पिकत्वात् परनिपातः। कीर्तिलक्ष्म्योः प्रिय इति तत्पुरुषो वा। **विरहविधुरां**। विरहेण विप्रलम्भेण विधुरा दुःखिता। तां। 'विधुरं विकलेऽन्यवत्' इति विश्वलोचने। **जायां** कान्तां **त्वयि** भवति पार्श्वे मरुभूतिचरे **सन्नद्धे** सज्जीभूते सति। युद्धार्थं कृतपरिकरे सतीत्यर्थः। 'सन्नद्धो वर्मितः सज्जः' इत्यमरः। **उपेक्षेत** उपेक्षां विदध्यात्। मत्कृतापराधजनितेन क्रोधेन निष्कासितस्य मे अद्ययावत् कीर्तिलक्ष्मीभ्यां विरहो जातः। अद्य त्वयाऽमा युयुत्सुरहं यदि त्वां जेष्यामि मे कीर्तिलक्ष्म्योः पुनः प्रातिरवश्यं भविष्यतीति न त्वामुपेक्षे इति कमठाभिप्रायः। मम

पुरः तिष्ठन्तं स्वस्थवीराग्रणीं शीघ्रं घातयितुं समर्थोऽस्म्येवेति यदि ते पार्श्वस्थ मरुभूतिचरस्याभिप्रायः, एषोऽहं तव पुरतस्तिष्ठामि। अतः मामेव हन्तुं युद्धसन्नद्धो शीघ्रं भवेति कमठचरो यक्षो ध्यानैकतानं भगवन्तं युद्धे प्रेरयितुकामः उवाचेत्यभिप्रायः।

If you think you are strong enough to kill without delay the foremost of the resolute ( bold ) warriors who shall stand before you for a moment, here am I indeed ( before you ) ! What man, looked upon as a warrior ( or highly esteemed by warriors ) to whom Kirti and Laxmi are dear [ or who is the lover of Kirti ( fame ) and Laxmi ( success ) or who has Kirti and Laxmi as his beloveds ], can connive at his beloved who is distressed by separation when you are ready for giving a fight ?

**श्रुत्वाऽप्येवं बहुनिगदितं जोषमेवाऽयमास्ते**
**योगी योगान्न चलतितरां पश्य धीरत्वमस्य ।**
**स्त्रीम्मन्यो वा भयपरवशः सोऽयमास्ते धिगस्तु**
**न स्यादन्योऽप्ययमिव जनो यः पराधीनवृत्तिः ॥ ३२ ॥**

अन्वयः— एवं बहुनिगदितं श्रुत्वा अपि अयं योगी जोषमेव आस्ते; योगात् न चलतितरां; अस्य धीरत्वं पश्य। स्त्रीम्मन्यः वा अयं। धिगस्तु। यः अयं इव पराधीनवृत्तिः सः अन्यः जनः भयपरवशः न आस्ते ? [ यद्वा सः अयं भयपरवशः स्त्रीम्मन्यः वा आस्ते। धिगस्तु। यः अन्यः जनः पराधीनवृत्तिः अपि अयं इव न-स्यात् ]

श्रुत्वाऽप्येवमित्यादि। एवं पूर्वोक्तप्रकारेण **बहुनिगदितं** बहु विपुलं निगदितं भाषितं **श्रुत्वा अपि** श्रुतिपथं नीत्वा अपि **अयं योगी** अयं ध्याननिमग्नः मुनिः। 'तपस्वी संयमी योगीवर्णी साधुश्च पातु वः' इति धनञ्जयः। **जोषमेव** तूष्णीमेव **आस्ते** वर्तते। **योगात्** ध्यानात्। 'योगः सन्नाहसन्धानसङ्गतिध्यानकर्मणि। विष्कम्भादिषु सूत्रे काव्ये विश्वस्तघातिनि। चरे चाऽपूर्वलाभेऽपि भेषजोपाययुक्तिषु' इति विश्वलोचने। **न चलतितरां** किञ्चिन्मात्रमपि च्युतः न भवति। 'इयेन्मिङ्किंञादामद्रव्ये' इति ञान्तान् मिङन्तादाम्। अतिशयेन चलति चलतितरां। अतिशयेन न चलति न चलतितरां। **अस्य मुनेः धीरत्वं** धैर्यशालित्वं। 'धीरः स्यात् पुंसि पण्डिते। धैर्यशालिनि मन्दे च त्रिषु' इति विश्वलोचने। **स्त्रीम्मन्यः** आत्मानं स्त्रियं मन्यते इति स्त्रीम्मन्यः। स्त्री-

therein, giving delight to the couples even at the end of night by quelling greatly the langour brought into being by the matitunal sexual enjoyment, should, therefore, be visited by you.

**मत्तो मृत्युं समधिगतवान् यास्यसीष्टां गतिं तां**
**यस्मिन् काले विधुतसकलोपप्लवस्त्वं सुखेन ।**
**द्रष्टारोऽधोनियमितदृशो दिव्ययोषाः सतोषाः**
**त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः ॥ २९ ॥**

अन्वय :— मत्तः मृत्युं समधिगतवान् विधुतसकलोपप्लवः त्वं यस्मिन् काले तां इष्टां गतिं सुखेन यास्यसि ( तस्मिन् काले ) पवनपदवीं आरूढं त्वां उद्गृहीतालकान्ताः सतोषाः दिव्ययोषाः अधोनियमितदृशः ( सत्यः ) द्रष्टारः ।

**मत्तो मृत्युमित्यादि** । **मत्तः** मत्सकाशात् **मृत्युं** मरणं **समधिगतवान्** प्राप्तवान् **विधुतसकलोपप्लवः** । विधुतः विनाशितः सकलः निखिलः उपप्लवः उत्पातः येन सः । 'उत्पाते विप्लवे चैव सैंहिकेयेऽप्युपप्लवः' इति विश्वलोचने । **त्वं** भवान् **यस्मिन् काले** यदा **तां इष्टां** अभिलषितां आशंसितां । 'इष्टो ना यागसंस्कारयोगयोः क्रतुकर्मणि । क्लीबं प्रियतमे पूज्येऽप्याशंसितेऽपि च' इति विश्वलोचने । **गतिं** उत्तरभवं । स्वर्गमित्यर्थः । **सुखेन** आनन्देन **यास्यसि** गमिष्यसि । तस्मिन् काले **पवनपदवीं** पवनस्य समीरणस्य पदवी मार्गः । तां । 'पन्थानः पदवी सृतिः' इत्यमरः । आकाशमित्यर्थः । **आरूढं** प्राप्तं । **त्वां** भवन्तं । **उद्गृहीतालकान्ताः** उद्गृहीताः ऊर्ध्वं नीताः अलकानां चूर्णकुन्तलानां अन्ताः अग्राणि याभिः ताः । 'अलकाश्चूर्णकुन्तले' इति विश्वलोचने । **सतोषाः** तोषेण सहिताः । 'वा नीचः' इति सहस्य सः । **दिव्ययोषाः** । दिवि भवाः दिव्याः । दिव्याश्च ताः योषाश्च दिव्ययोषाः । देवाङ्गनाः । 'स्त्री नारी वनिता मुग्धा भामिनी भीरुरङ्गना । ललना कामिनी योषिद्योषा सीमन्तिनी वधूः' इति धनञ्जयः । **अधोनियमितदृशः** । अधः अधस्तनप्रदेशे नियमिते निश्चलीकृते दृशौ याभिस्ताः । सत्यः । **द्रष्टारः** प्रेक्षिष्यन्ते । दृशेर्लुट् । त्वल्लाभसमुत्सुकाः त्वां प्रेक्षिष्यन्ते इत्यर्थः ।

When you, dying a death brought about by me, with all the evils dispelled, will be going happily to that destined place longed for by you, the satisfied heavenly damsels with the ends of their hair held up, will, with their eyes ( or sight ) fixed down, have a look at you, climbed high up in the sky.

दिव्ये याने त्रिदिववनितालिङ्गितं व्योममार्गे
सन्माणिक्याभरणकिरणद्योतिताङ्गं तदानीम् ।
गां गच्छन्तं नवजलधराशङ्कयाऽधः स्थितास्त्वां
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ॥ ३० ॥

अन्वयः — तदानीं व्योममार्गे दिव्ये याने त्रिदिववनितालिङ्गितं सन्माणिक्याभरणकिरणद्योतिताङ्गं गां गच्छन्तं अधः स्थिताः पथिकवनिताः नवजलधराशङ्कया प्रत्ययात् आश्वसन्त्यः त्वां प्रेक्षिष्यन्ते ।

**दिव्ये याने** इत्यादि। **तदानीं** त्वद्गमनसमये **व्योममार्गे** आकाशमार्गे 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरं। नभोन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः। **त्रिदिववनितालिङ्गितं** त्रिदिवे स्वर्गे निवसन्त्यः वनिताः स्त्रियः त्रिदिववनिताः। ताभिः स्वर्गस्त्रीभिः आलिङ्गितं। उपगूढं त्रिदिववनितालिङ्गितं। देवाङ्गनोपगूढमित्यर्थः 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः। सुरलोको द्योदिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम्' इत्यमरः। **सन्माणिक्याभरणकिरणद्योतिताङ्गं**। सन्ति शोभनानि च तानि माणिक्यानि च सन्माणिक्यानि। तैः निर्मितानि आभरणानि भूषणानि सन्माणिक्याभरणानि। तेषां किरणैः रश्मिभिः द्योतितानि भास्वन्ति अङ्गानि गात्राणि यस्य तम्। 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हितेऽपि सन्' इति अलङ्कारस्त्वाभरणं' इति चाऽमरः। **गां** स्वर्गभुवं। 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इत्यमरः। **गच्छन्तं** यान्तं भवन्तं **अधः** भूमिप्रदेशे। **स्थिताः** स्थितिमत्यः। **पथिकवनिताः** पथिकानां पान्थानां वनिताः स्त्रियः। पन्थानं याति पथिकः। 'पथष्ठन्' इति पथिन्शब्दात् ठन्। 'पान्थः पथिक इत्यपि' इत्यमरः। 'स्त्री नारी वनिता मुग्धा' इति धनञ्जयः। **नवजलधराशङ्कया**। नवश्चासौ जलधरश्च नवजलधरः नवमेघः इत्यर्थः। तस्य आशङ्का सन्देहः। नवजलधराशङ्का। तया। **प्रत्ययात्** कान्तप्रत्यागमनविश्वासात् तदागमननिश्चयाद्वा। 'प्रत्ययः शपथे हेतौ ज्ञानविश्वासनिश्चये। सन्नाद्यधीनरन्ध्रेषु ख्याततत्वाचारयोरपि' इति विश्वलोचने। **आश्वसन्त्यः** आनन्दिन्यः **त्वां प्रेक्षिष्यन्ते** भवन्तमालोकयिष्यन्ते। 'इुगिदन्तञ्चोः' इति ङी।

At that time, the travellers' wives becoming glad owing to their being convinced of their husbands' return on account of their having entertained a doubt of a new cloud, will then see you seated in a celestial car in the sky with the damsels embracing you and

मन्यः इति पाठःभ्रान्तः । 'खश् स्वस्य' इत्यात्मनः सुपि वाचिमन्यतेः खश् । खित्त्वाच्च 'अमेकाचोऽम्वत्' इत्यम् । यद्वा भाष्यकारवचनानुरोधेन स्त्रीमन्यः इति पाठेनाऽत्र भाव्यं स्त्रियः प्रत्वात् मुममोरभावाच्च । **वा** इव । अयं मरुभूतिचरः पार्श्वः । **धिगस्तु** । 'निर्भर्त्सनेऽपि निन्दायां धिक्' इति विश्वलोचने । **यः अयमिव पराधीनवृत्तिः** यथाऽयं ध्याननिमग्नत्वात् ध्येयाधीनमनस्कारः तथा यः पराधीनवृत्तिः । परस्य अधीना वशा वृत्तिः वर्तनं यस्य सः । **सः अन्यः जनः** पार्श्वाद्भिन्नः पुरुषः **भयपरवशः** भयाधीनः **आस्ते** वर्तते । वर्तते किम् ? अपि तु न वर्तते इति भावः । काका योजनीयमेतत् । यद्वा **सः अयं** पार्श्वः **भयपरवशः** भयाधीनः **स्त्रीम्मन्यः वा** इव **आस्ते** वर्तते । **धिगस्तु** । यः अन्यः जनः पराधीनवृत्तिः अपि अयमिव न स्यात् । अनेन पराधीनवृत्तिनाऽपि भयपरवशेन न भाव्यं, पराधीनवृत्तेरपि प्राकृतस्य जनस्य भयपरवशत्वादर्शनात् । अस्य तूष्णीम्भावः स्त्रीभावनिबन्धनः इति कमठाभिप्रायः ।

Even on hearing the speech delivered (by me) at length this sage, observing silence only, does not fall out of meditation by an iota even. See his courageousness. This is like a womanish fellow. What a pity ! Is a man, other than him, who is not under influence (of anything or overpowered with something) like him, overcome with fear ? [ or – This one, overcome with fear, is like a womanish fellow. A man, other than him, though under influence completely, does not resemble this one. ]

**वित्तानिघ्नः स्मरपवशां वल्लभां काञ्चिदेकां**
**ध्यानव्याजात् स्मरति रमणीं कामुको नूनमेषः ।**
**अज्ञातं वा स्मरति सुदतीं या मया दूषिताऽऽसीत्**
**तां चाऽवश्यं दिवसगणनातत्परामेकपत्नीम् ॥ ३२ ॥**

अन्वयः— नूनं एषः वित्तानिघ्नः कामुकः ध्यानव्याजात् स्मरपरवशां काञ्चित् एकां वल्लभां रमणीं स्मरति । वा या सुदती मया दूषिता आसीत् तां दिवसगणनातत्परां एकपत्नीं अज्ञातं अवश्यं स्मरति ।

**वित्तानिघ्न** इत्यादि । **नूनं** निश्चयेन । 'नूनं तर्के तु विख्यातं नूनं स्यादर्थनिश्चये' इति विश्वलोचने । **एषः** अयं पार्श्वाभिधानः मरुभूतिचरः । **वित्तानिघ्नः** । वित्तेषु विभवेषु अनिघ्नः अनधीनः वित्तानिघ्नः । 'वित्तं तु विभवे ज्ञातख्यातलब्धविचारिते' इति विश्वलोचने । 'घञर्थे कविधानं स्थापाव्यधिहनियुध्यर्थं कर्तव्यम्

( जै. वा. ) इति कः । 'अधीनो निघ्न आयत्तः' इत्यमरः । यद्वा वित्तं विभवः आ-समन्तात् अतिशयेन निघ्नं दूरीभूतं यस्मात् सः । परिहृतवैभव इत्यर्थः । **कामुकः** । कामयते तच्छीलः कामुकः । 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' इत्युकञ् । कामीत्यर्थः । **ध्यानव्याजात्** ध्यानच्छद्मना । 'व्याजः साध्यापदेशयोः' इति विश्वलोचने । **स्मरपरवशां** कामवासनापरतन्त्रां **काञ्चित्** एकां विशिष्टां **वल्लभां** प्रियां **रमणीं** स्त्रियं **स्मरति** स्मृतिविषयतां नयति । 'स्मरर्थदयेशां कर्मणि' इति तायाः शेषे विधानात् अन्यत्रार्थं कर्मणीत्यापि नायुक्ता । **वा** अथवा **या सुदती** । शोभना सुजाता वा दन्ता अस्याः इति सुदती । 'स्त्रियां स्रौ' इति स्रौ स्त्रियां दन्तस्य दतृ । 'इयुगिदन्नञ्चोः' इति ङी स्त्रियां । **मया** कमठचरेण **दूषिता** भ्रंशिता **आसीत्** अभवत् तां वसुंधराभिधानां तदीयां पत्नीं । मरुभूतिचरस्य पार्श्वस्येत्यर्थः । **दिवसगणनातत्परां** । दिवसानां गणना परिसङ्ख्यानं दिवसगणना । दिनपरिगणनमित्यर्थः । तत्र तत्परा आसक्ता । तां । 'तत्परे प्रसितासक्तौ' इत्यमरः । शापावसानसमयः किमवधिः इति विचारासक्तेत्यर्थः । **एकपत्नीं** पतिव्रतां परपुरुषगामिनीं वा । एकपत्नीव एकपत्नी । तां । न परमार्थतः एकपत्नीं अपि तु एकपत्नीसादृश्यं विभावयन्तीमित्यर्थः । परपुरुषगामिन्याः कथमेकपत्नीत्वम् ? 'या मया दूषितासीत्' इति कमठचरशम्बरासुरोक्त्या 'एकपत्नीम्' इति तद्वचनमुपालम्भात्मकमवसेयम् । 'सपत्न्यादौ' इति नादेशः । एकः पतिः यस्याः सा एकपत्नी । पतिव्रतेत्यर्थः । 'सती पतिव्रता साध्वी पतिवत्येकपत्न्यपि । मनस्विनी भवत्यार्या –' इति धनञ्जयः । यद्वा एकः इतरः अन्यः स्वपत्युः पतिः यस्याः सा एकपत्नी । परपुरुषगामिनीत्यर्थः । 'एकस्तु स्यात्त्रिषु श्रेष्ठे केवलेतरयोरपि' इति विश्वलोचने । अत्र रूढार्थान्तराश्रयणं वसुन्धरायाः परपुरुषगामिनीत्वादिति विज्ञेयं । तस्याः कमठचरदूषितत्वेऽपि मरुभूतिचरापेक्षया पातिव्रत्यं सम्भवतीत्ययुक्तं मरुभूतिचरस्यापि तत्कुशीलसेवनविज्ञानाविरहात् । **अज्ञातं** परैः न ज्ञातं यथा स्यात् तथा । **अवश्यं** निश्चयेन । 'अवश्यं निश्चये द्वयं' इत्यमरः । **स्मरति** ध्यानविषयतां नयति । जातरूपधारिणोऽस्य परित्यक्तैश्वर्यत्वात् कस्याश्चिद्वल्लभायाः स्त्रिय एव स्मरणेन भाव्यं । सा च मद्दूषिता वसुन्धरैवेति कमठचरयक्षाभिप्रायः ।

This one, who is a libidinous one and who has renounced property completely, is engrossed, under the pretence of meditation, in surely remembering a certain beloved lady who is overcome with passion or he is remembering secretly that lady, spoiled by me formerly, possessing beautiful teeth, having a person other than

Him to whom she was married for her husband, engrossed in counting the days.

जानासि त्वं प्रथमवयसि स्वीकृतां तां नवोढां
त्यक्त्वा यास्यस्यवनिपतिना साकमेकाकिनीं यन् ।
प्रत्यावृत्तः कथमपि सतीं जीवितं धारयन्ती —
मव्यापन्नामविहतगतिर्द्रक्ष्यासि भ्रातृजायाम् ॥ ३४ ॥

अन्वयः — जानासि त्वं प्रथमवयसि स्वीकृतां नवोढां एकाकिनीं त्यक्त्वा अवनिपतिना साकं यन् यास्यसि अविहतगतिः प्रत्यावृत्तः कथमपि जीवितं धारयन्तीं (अत एव) अव्यापन्नां सतीं भ्रातृजायां द्रक्ष्यसि ?

जानासीत्यादि। जानासि स्मरसि किम्? **प्रथमवयसि** बाल्यावस्थायां। 'खगबाल्यादिनोर्वयः' इत्यमरः। **स्वीकृतां** प्रागस्वा इदानीं स्वा कृता स्वीकृता। तां। च्विः। **नवोढां** नवं ऊढा नवोढा। तां। ऊह्यते स्म ऊढा। **एकाकिनीं** असहायां। 'एकादाकिंश्चासहाये' इत्यसहायार्थे आकिन्। **त्यक्त्वा** विहाय **यन्** अभियाता। 'यत्' इति पाठं परित्यज्य 'यन्' इति परिवर्तितः पाठः स्वीकृतः, 'जानासि' 'यास्यसि' 'द्रक्ष्यसि' इति च पाठत्रयस्य सत्त्वात्, स्मर्थेऽयदि लृट्' इति स्मरणार्थ लृटः प्रयोगे 'यत्' इत्यस्य पाठस्य शब्दशास्त्र-विरोधित्वादत्र तस्यासम्भवात्। **अवनिपतिना** अरविन्दमहाराजेन **साकं** सह **यन्** गच्छन् 'साधं तु साकं सत्रा समं सह' इत्यमरः। यास्यसि अगच्छः। 'स्मर्थेऽयदि लट' इति स्मरणार्थे यद्वर्जिते वाचि भूतेऽनद्यतने वर्तमानाद्धोर्लृट्। **अविहतगतिः** अप्रतिबद्धयशः फलः। अविहता अप्रतिबद्धा गतिः अभियानफलं यस्य सः। **प्रत्यावृत्तः** प्रत्यागतः **कथमपि** महता कष्टेन **जीवितं** प्राणान् **धारयन्ती** प्रियप्रत्यागमनाभिलाषेण जीवन्तीमित्यर्थः। अतः एव **अव्यापन्नां** अमृतां प्रज्वलितवियोगदुःखदाहां वा **सतीं** शोभनशीलवतीं **भ्रातृजायां** उपयमनसंस्काराभावेऽपि भ्रातृपत्नीभावं गतत्वात् जायेव जाया। 'देवपथादिभ्यः' इतीवार्थस्य कस्योप्। भ्रातुः जायेव जाया भ्रातृजाया। तां। 'सतीं' इति विशेषणस्य वसुन्धरायाः बाल्ये परिणीतायाः अक्षतयोनित्वात् मरुभूतिपत्नीत्वेऽपि कमठचरेण यौनसम्बन्धस्य तस्याः सद्भावेऽपि तस्याः सतीत्वमनुपहत-मेवेति कमठचरयक्षाभिप्रायः। अत्र 'ऋतां विद्यायोनिसम्बन्धात्' इति ताया अनुप्-प्राप्तः, भ्रातृशब्दस्य ऋदन्तत्वादिति चेत्, न, भ्रात्रा पूर्वपदभूतेन जायायाः धर्म्यस्य

यौनसम्बन्धस्य अभावादनुपोऽसम्भवात् । भ्रातृशब्देनाऽत्र कमठचरो लक्ष्यते। कमठचरगामिन्यपि वसुन्धरा मरुभूतिचरभार्या कमठस्य धर्मपत्नी नासीत्। अतस्तापसेन कमठधर्मपत्नीत्वाभावः प्रकटीकृतः । द्रक्ष्यसि अपश्यः । स्वभार्यां स्वभ्रातृकमठचर-भार्याभूयं गतामपश्यः । भ्रातृगामिनीमपश्य इत्यर्थः ।

Do you remember that you, going along with the lord of the earth (i. e. the King Aravinda), went away abandoning her who was very recently married and accepted (by you) in her very childhood and that you, whose progress was not arrested, saw her, who arrested the escape of her (own) life from her body with a great difficulty and so who was not dead, turned into your brother's chaste wife?

**चित्रं तन्मे यदुपयमनानन्तरं विप्रयुक्ता**
**त्वत्तः साध्वी सुरतरसिका सा तदा जीवति स्म ।**
**मन्ये रक्षत्यसुनिरसनाद्धातुमापद्गतानां**
आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानाम् ॥ ३५ ॥

अन्वयः— उपयमनान्तरं त्वत्तः विप्रयुक्ता सा सुरतरसिका तदा साध्वी (सती) यत् जीवति स्म तत् मे चित्रं । आपद्गतानां अङ्गनानां हि कुसुमसदृशं धातुं असुनिरसनात् प्रायशः आशाबन्धः रक्षति (इति) मन्ये ।

**चित्रं** तदित्यादि । **उपयमनानन्तरं** विवाहोत्तरकाले । **त्वत्तः** भवत्तः । **विप्रयुक्ता** सञ्जातविप्रयोगा **सा** वसुन्धरा **सुरतरसिका**। रसः अभिलाषः अस्याः अस्तीति सुरतरसिका । 'अतः इनिठनौ' इति ठन् । सुरताभिलाषा सत्यपि **तदा** । विप्रयोगकाले **साध्वी** साध्वाचारा । अनाचरितदुराचारेत्यर्थः। **यत् जीवति स्म** अजीवत् **तत्** **मे** मम **चित्रं** विस्मयावहं । 'विस्मयोऽद्भुतमाश्चर्यं चित्रं' इत्यमरः । **आपद्गतानां** आपदं विपत्तिं गतानां प्राप्तानां, आपदा विपत्त्या गतानां ग्रस्तानां वा । आपन्नानामित्यर्थः । **अङ्गनानां** वनितानां । 'स्त्री नारी वनिता मुग्धा भामिनी भीरुरङ्गना' इति धनञ्जयः । **हि** अवधारणे । 'हि विशेषेऽवधारणे' इति विश्वलोचने । **कुसुमसदृशं** सुमनस्तुल्यं । कुसुमवदतिसुकुमारमित्यर्थः । **धातुं** आत्मानं मनः इत्यर्थः। **असुनिरसनात्** असूनां प्राणानां निरसनात् परिहरणात्। परित्यागादित्यर्थः। **प्रायशः** प्रायेण **आशाबन्धः** । वध्यते अनेन इति बन्धः। आशा एव बन्धः बन्धनरज्जुः

आशाबन्धः । कर्तृपदमेतत् । रक्षति प्रतिबध्नाति । इति मन्ये एवमहं जानामि । उपयमनान्तरकाले सुरताभिलाषाऽपि सा वसुन्धरा त्वद्विरहे अपि अनाचरितदुराचारा सती यदजीवत्तन्मे विस्मयावहं । उपयमनान्तरं मत्सम्बन्धात्पूर्वं च यः विरहकालः आसीत् तस्मिन् सा विरहदुःखिता कामसन्तप्ता सत्यपि मरणं न प्राप्तेति महदाश्चर्यं । तदैव-तयाऽऽचरितदुराचारया भाव्यमासीत् । तथापि सा सदाचारसम्पन्नैवासीत् । अनन्तरम-सह्यकामानलदाहा त्वद्विरहस्यानारतत्वात् दुराचारं सिषेवे इति कमठचरयक्षाभिप्रायः ।

It is a matter of great wonder to me that she, separated from you after marriage, had not, though strongly desirous of having enjoyment ( intercourse ), been illegally connected with any one other than you and yet had been alive. I think the bond of hope generally prohibits the mind, which is ( frail ) like a flower, of the ladies involved into distress from expelling their lives ( i. e. committing a suicide ).

**तच्चाश्चर्यं यदहमभजं त्वद्वियोगेऽपि कामान्**
**प्राणैरार्तः किमनुकुरुते जीवलोको हताशः ।**
**पुंसां धैर्यं; किमुत सुहृदां; किं पुनःसङ्गमाशा**
**सद्यः पाति प्रणयिहृदयं विप्रयोगे रुणद्धि ? ॥ ३६ ॥**

अन्वयः— यत् च अहं त्वद्वियोगे अपि कामान् अभजं तत् आश्चर्यं । प्राणैः आर्तः हताशः जीवलोकः पुंसां धैर्यं किं अनुकुरुते ? किमुत सुहृदां ? विप्रयोगे पुनः सङ्गमाशा पाति प्रणयिहृदयं सद्यः रुणद्धि किम् ?

तच्चाश्चर्यमित्यादि । यत् च अहं कमठचरः त्वद्वियोगे अपि भवतः वियोगे जाते सत्यपि कामान् इन्द्रियविषयान् । 'कामः स्मरेच्छयोः काम्ये' इति विश्वलोचने । अभजं सेवे स्म तत् आश्चर्यं तत् विस्मयावहं । प्राणैः मनोबलैः असुभिः वा आर्तः दुःखितः । विकृतमनोबलो दुःखितप्राणो वेत्यर्थः । हताशः हता विफलीभूता आशा अभिलाषः यस्य सः । 'आशा तृष्णादिशोः' इति विश्वलोचने । जीवलोकः संसारिजनः पुंसां सामान्यपुरुषाणां धैर्यं मनस्तोषं चातुर्यं धीरत्वं वा किं अनुकुरुते अनुसरति किम् ? अपि तु नेति भावः । आर्तस्य पुंसः मनस्तोषः चातुर्यं धीरत्वं वा विगलति । गलितविवेकश्च कार्याकार्यविवेकविकलो जायते । तादृशश्चाहं त्वद्वियोगदुःखार्तः सन् कार्याकार्यविवेकविकलत्वात् कामान् अभजं । मद-

भूतिविरहकाले कमठस्य कामसेवनं तदार्तत्वनिबन्धनमिति स्वदोषसमर्थनं करोत्यत्र कमठचरो यक्षः । **किमुत सुहृदां ।** यो जनः सामान्यपुरुषाणामपि सरणिमनुसर्तुमार्तत्वान्न समर्थः सः साधुमनस्काराणां महापुरुषाणां चातुर्यं शान्तमनस्कत्वं चानुकर्तुं कथं समर्थो भवेदित्यभिप्रायमाविष्करोति कमठचरो यक्षः । **विप्रयोगे** विरहे जाते सति **पुनःसङ्गमाशा ।** 'विप्रयुक्तेन मे पुनरपि समागमो भविष्यति' इत्यभिलाषः । **पाति ।** पातः पतनं विहितमार्गाच्च्यवनं अस्याऽस्तीति पाति । 'अतोऽनेकाचः' इति इन् । विशेषेण भ्रान्तं भवदित्यर्थः । **प्रणयिहृदयं ।** प्रणयः प्रेम अस्याऽस्तीति प्रणयि । अदन्तत्वादनेकाचः प्रणयशब्दस्य ततः इन् । प्रणयिनः हृदयं प्रणयिहृदयं । हृदयं मनः । **सद्यः** शीघ्रं । **रुणद्धि** प्रतिबध्नाति । प्रपतनात् त्रायते किम् ? अपि तु न त्रायते इत्यर्थः । भवत्सङ्गमाशा मद्धृदये समुत्पन्नाऽपि मदीयमनसोऽधःपातं प्रतिबध्दुं न शक्नोति स्मेति कमठचरः स्वदुराचारसमर्थनं कर्तुमत्र यतते ।

It is a matter of great wonder that I, though separated from you, enjoyed the objects of sense-organs. Can the world of living beings when it is disappointed and when its mental abilities are affected, adapt to the calmness of mind of the ordinary men? What to that of those who are affectionate? Can a hope for reunion withhold at once the heart of the affectionate which is on the point of being fallen off (i.e. sunk)?

**इत्युक्ताऽथो पुनरपि सुरः सामभेदौ व्यतानीत्**
**योऽन्तःस्नेहस्त्वयि चिरमभूत्पूर्वबन्धोस्तदा मे ।**
**धिक्कारस्तं तिरयतितरां त्वत्कृतोऽस्मान् स हन्तुं**
**मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम् ॥ ३७॥**

अन्वयः— इति उक्त्वा सुरः पुनः अपि सामभेदौ व्यतानीत् — अथो पूर्वबन्धोः मे अन्तः यः स्नेहः त्वयि तदा चिरं अभूत् तं त्वत्कृतः धिक्कारः तिरयतितरां । स (च) अनुकूलः पवनः यथा त्वां हन्तुं अस्मान् मन्दं मन्दं नुदति ।

इत्युक्त्वेत्यादि । **इति** उक्तप्रकारेण **उक्त्वा** प्रोच्य **सुरः** शम्बरासुरः **पुनरपि** भूयोऽपि **सामभेदौ** सामभेदवचने । स्यति वैरं सामयति वा साम । प्रियवचनादित्यर्थः । साम सान्त्वने । भेदनं भेदः । द्वैधीभावः इत्यर्थः । 'भेदो द्वैधविशेषयोः ।

विदारणे चोपजापे च ’ इति विश्वलोचने । व्यतानीत् वितनोति स्म । अथो वाक्यारम्भे । ‘ अथाऽथो च शुभे प्रश्ने साकल्यारम्भसंशये । अनन्तरे ’ इति विश्वलोचने । **पूर्वबन्धो** पूर्वभवभ्रातुः **मे** मम **अन्तः** मनसि **यः स्नेहः** यत् प्रेम **त्वयि भवति** **तदा** पूर्वभवकाले **चिरं** दीर्घकालं यावत् **अभूत्** भवति स्म **तं स्नेहं त्वत्कृतः** त्वया विहितः **धिक्कारः** तिरस्कारः । निकारः खलीकरणं वेत्यर्थः । **तिरयतितरां** अत्यन्तं तिरस्करोति । निह्नुते इत्यर्थः । ‘ इयेन्मिङ्किंङ्क्षादामद्रव्ये ’ इति मिङ ‘ तरप्तमपौ ङ्घः ’ इति ङ्घान्तादाम् । **सः** स्नेहश्च **अनुकूलः** अप्रतिकूलः अनुरूपः इत्यर्थः । **पवनः यथा** वायुरिव **त्वां** भवन्तं **हन्तुं** घातयितुं **अस्मान्** नः । मामित्यर्थः । **मन्दं मन्दं** । अति मन्दं । शनैःशनैरित्यर्थः । **नुदति** प्रेरयति । कृतधिक्कारे त्वयि शीघ्रं हन्तव्येऽपि प्राग्भवीयः स्नेहः प्रतिबध्नन्नपि त्वद्धननाय मां शनैःशनैः पवनवत् प्रेरयत्येवेति कमठचरयक्षाभिप्रायः ।

Having said so, the demigod opened negotiations with and employed means of success against Him : The reproach brought upon me by you dispells the feelings of love for you cherished for a long time by me, your brother in the former birth. It ( that reproach ) slowly goads me into kitting you like the favourable wind.

**तस्माद्योगं शिथिलय मुने देहि युद्धक्षणं मे**
**दानादन्यन्न खलु सुकृतं देहिनां श्लाघ्यमस्ति ।**
**शंसन्तीदं ननु वनगजा दानशीलास्तथाब्दा**
**वामश्चायं नदति मधुरं चातकस्ते सगन्धः ॥ ३८ ॥**

अन्वयः— तस्मात् ( हे ) मुने ! योगं शिथिलय; मे युद्धक्षणं देहि । दानात् अन्यत् देहिनां श्लाघ्यं सुकृतं नास्ति खलु । इदं ननु दानशीलाः वनगजाः तथा ( तादृशाः ) अब्दाः शंसन्ति । ( यः ) मधुरं नदति ( सः ) अयं ते वामः सगन्धः चातकः च ( इदं शंसति ) ।

**तस्माद्योग**मित्यादि । **तस्मात्** तस्मात् कारणात् । यस्मात् कारणात् त्वत्कृतः धिक्कारः त्वां हन्तुं मां प्रेरयति तस्मात् कारणादित्यर्थः । **हे मुने** भो साधो ! **योगं** स्वात्मरूपध्येयैकतानत्वं **शिथिलय** श्लथीकुरु । शिथिलं कुरु । परिहरेत्यर्थः । ‘ तत्करोति तदाचष्टे इति णिच् ’ इति णिजन्तस्य धोर्लोङि रूपम् । ‘ मृदो ध्वर्थे णिज्बहुलं ’

इति वा णिच् । ध्यानावस्थां विमुञ्चेत्यर्थः । मे मह्यं युद्धक्षणं समरानन्दं । 'अथ क्षण उद्धर्षो मह ऊद्धव उत्सवः' इत्यमरः । हि वितर । दानात् अन्यत दानाद्भिन्नं । 'स्वस्यातिसर्गो दानं' इति शास्त्रोक्तं दानलक्षणं । देहिनां श्लाघ्यं प्राणिभिः प्रशंसनीयं । 'व्यस्य वा कर्तरि' इति श्लाघ्यशब्दस्य व्यान्तत्वात् देहिनामिति तान्तस्य प्रयोगः । 'श्लाघृकत्थने' इत्यस्य धोर्व्यान्तं रूपं । सुकृतं पुण्यं कर्म । शोभनं कृतं कर्म सुकृतं । नास्ति न वर्तते । खलु एव । 'खलु स्याद्वाक्यभूषायां खलु वीप्सानिषेधयोः । निश्चिते सान्त्वने मौने जिज्ञासादौ खलु स्मृतम्' इति विश्वलोचने । इदं दानात् अन्यत् देहिनां श्लाघ्यं नास्तीतीदं । ननु एव । ननु प्रश्नेऽवधारणे । नन्वनुज्ञावितर्काऽऽयमन्त्रेष्वनुनये ननु' इति विश्वलोचने । दानशीलाः दानस्वभावाः । दानं मदजलं शीलयन्ति प्रादुर्भावयन्तीति दानशीलाः इति गजपक्षे । दानं जलप्रदानं शीलं स्वभावो येषां ते दानशीलाः इति मेघपक्षे । वनगजाः आरण्यकाः हस्तिनः । तथा अपि च । 'तथा सादृश्यनिर्देशनिश्चयेषु समुच्चये' इति विश्वलोचने । तथेति समुच्चयेऽत्र । अब्दाः मेघाः । आपः जलं ददतीति अब्दाः । शंसन्ति प्रथयन्ति । प्रकटीकुर्वन्तीत्यर्थः । यः मधुरं नदति यः मधुरं शब्दं करोति सः अयं ते वामः तत्र वामभागे स्थितः । 'वाम सव्ये हरे कामे घने वित्ते तु न द्वयोः' इति विश्वलोचने । 'वामस्तु रुचके रम्ये सव्ये वामस्थितेऽपि च' इति शब्दार्णवे । सगन्धः सामोदः । सानन्दः इत्यर्थः । 'गन्धो गन्धकसम्बन्धलेशेष्वामोदगर्वयोः' इति विश्वलोचने । 'सुगन्धिमुदि वामोदः' इति विश्वलोचने । चातकः पक्षिविशेषश्च । इदं शंसतीति शेषः ।

Oh sage! give up, therefore, your meditation; give me the pleasure of fighting. Nothing other than munificence is indeed pious and worthy of being highly praised by living beings. The sylvan elephants and the clouds, who are naturally in the habit of giving away, indeed, declare this. This delightful Chataka bird, singing a delightful song on your left side also declares this.

युद्धे शौण्डो यदि च भगवान् वीरशय्यां श्रितः स्याः
स्वर्गस्त्रीणामहमहमिकां संविधास्यंस्तदा त्वाम् ।
विद्याधर्यो नभसि वृणते पुण्यपाकाद्विनङ्क्ष्य-
द्गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः ॥ ३९ ॥

अन्वयः— यदि च युद्धे शौण्डः, स्वर्गस्त्रीणां अहमहमिकां संविधास्यन् भग-

उत्त्रस्ताः भयाकुलाः। **मन्दमन्दं** । मन्दप्रकारः मन्दमन्दः। मन्दमन्दाः यथा स्युस्तथा मन्दमन्दं । मन्दंप्रकारेणेत्यर्थः । 'प्रकारेण गुणोक्तेर्वा' इति गुणोक्तेः प्रकारेऽर्थे द्वैधीभावः यवच्च कार्यं । **प्रयान्तः** गच्छन्तः । **धवलितदिशः** धवलयति धवलं करोति । 'तत्करोति तदाचष्टे' इति णिच् । धवलयति स्म धवलिताः शुभ्रीकृताः । धवलिताः शुभ्रीकृताः दिशः काष्ठाः यैस्ते धवलितदिशः । 'वलक्षो धवलोऽर्जुनः' इति 'दिशस्तुककुभः काष्ठाः' इति चाऽमरः । **अमी** एते **मन्दसानाः** हंसविशेषाः । **गगनं अभितः** गगनं परितः । गगने सर्वासु दिक्ष्वित्यर्थः । 'पर्यभिसर्वोभयैस्तस्त्यैः' इत्यभितः इत्यस्य तस्त्यान्तत्वात् तद्योगे इप् । **स्वनन्तः** ध्वनिं कुर्वन्तः । **दृश्यन्ते** अवलोक्यन्ते । दृक्पथमवतरन्तीत्यर्थः । **पश्य** अवलोकय । कमठचरेणाऽकाले विक्रियदर्थ्योत्पादितानां मेघानां प्रावृषेण्यमेघतुल्यत्वात् सञ्जातप्रावृट्कालभ्रान्तयः हंसाः मानसमभिगन्तुमुन्मनायिताः इत्यर्थः । अनेन प्रावृषेण्यमेघतुल्याम्बुददर्शनजनितभ्रान्तिहंसानां मानसार्थमुन्मनायितानामुड्डीयाकाशे गत्वा ध्वनतां व्यावर्णनेन कालवर्णमेघैराक्रान्तत्वान्नभस्तलस्य तत्कालस्य वर्षाकालतुल्यत्वं ध्वनितमित्यवसेयम् ।

Behold those swans, eager for the Manasa-lake on hearing that thundering sound, delightful to the ears, of the clouds which are like those of the autumnal season, terror-striken, with their delight dispelled on account of the eager desire cherished by them, moving very slowly, whitening the quarters, are seen warbling in all directions of the sky.

**ते चाऽवश्यं नवजलधरैरुन्मनीभूय हंसा**
**मत्प्रामाण्यात्तव जिगमिषोर्धाम यक्षेश्वराणां ।**
**सङ्गच्छन्ते पथि जलमुचामापतन्तः समन्तात्**
आकैलासाद्विसकिसलयच्छेदपाथेयवन्तः ॥ ४३ ॥

**अन्वयः**— मत्प्रामाण्यात् यक्षेश्वराणां धाम जिगमिषोः तव आसमन्तात् जलमुचां पथि आपतन्तः विसकिसलयच्छेदपाथेयवन्तः ते च हंसाः नवजलधरैः उन्मनीभूय आकैलासात् सङ्गच्छन्ते ।

**ते चावश्य**मित्यादि। **मत्प्रामाण्यात्** प्रमाणस्य भावः प्रामाण्यं। प्रामाण्यं सत्यवादित्वमित्यर्थः 'प्रमाणमिकतेयत्ताहेतियन्तृप्रमातृषु। सत्यवादिनि नित्ये च मर्यादाहन्तृशास्त्रयोः' इति विश्वलोचने । मम प्रामाण्यं सत्यवादित्वं मत्प्रामाण्यं । तस्मात् । **यक्षेश्वराणां** । यक्षाणां गुह्यकानां ईश्वराः अधिपतयः यक्षेश्वराः । तेषां । अत्र आदरार्थे बहुवचनम् ।

तेन यक्षेश्वरस्य कुबेरस्येत्यर्थः । धाम निवासस्थानम् । 'धाम रश्मौ गृहे देहे प्रभावस्थानजन्मसु' इति विश्वलोचने । जिगमिषोः गन्तुमिच्छोः । 'तुमीच्छायां धोर्वाप्' इति सन् धोश्चोप् । तव ते आसमन्तात् सर्वासु दिक्षु । सर्वतः इत्यर्थः । जलमुचां मेघानां । जलं मुञ्चन्तीति जलमुचः । क्विप् । पथि मार्गे आपतन्तः उड्डीयमानाः । बिसकिसलयच्छेदपाथेयवन्तः । बिसानां मृणालानां किसलयानि अग्राणि पल्लवाः बिसकिसलयानि । 'मृणालं बिसं' इति 'पल्लवोऽस्त्री किसलयं' इति चाऽमरः । तेषां च्छेदाः शकलाः एव पाथेयं बिसकिसलयच्छेदपाथेयं । पथि साधु पाथेयं । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति ढञ् । तदस्त्येषामिति बिसकिसलयच्छेदपाथेयवन्तः । 'न कर्मधारयान्मत्वर्थीयः बहुब्रीहिश्चेत्तदर्थप्रतिपत्तिकरः' इत्यत्र 'बिसकिसलयच्छेदपाथेयाः' इत्यस्य बहुब्रीहेः कर्मधारयार्थप्रतिपत्तिकरस्य सद्भावात् मत्वर्थीयस्य वतोः प्रयोगः प्रामादिकः प्रतिभाति । मल्लिनाथस्तु बिसकिसलयच्छेदैः पाथेयवन्तः इत्यूचिवान् । ते च हंसाः मानससरोनिवासिनः शुभ्रापघनाः पक्षिविशेषाः । नवजलधरैः नवैः नव्यैरविगलितजलत्वाज्जलभारनम्रैः जलधरैः मेघैः उन्मनीभूय । अनुन्मनसः सम्पद्यमानाः भूत्वोन्मनीभूय । उत्कण्ठिताः भूत्वेत्यर्थः । आकैलासात् कैलासाभिधपर्वतपर्यन्तं । कैलासपर्वतं यावदित्यर्थः । 'आङ्मर्यादाभिविध्योः' इति मर्यादायामाङत्र । 'कांऽऽङाऽभिविधिमर्यादे' इत्याङा योगे मर्यादायां का । सङ्गच्छन्ते सङ्गताः भविष्यन्ति । 'गमो सम्प्रच्छिस्वच्छिश्रुविद्दृशः' इति दः । मरणानन्तरमलकामार्गेण स्वर्गभुवं यियासोस्ते हंसाः आकैलासात् सहायीभूताः मार्गे त्वामानन्दकन्दलितस्वान्तं विधास्यन्तीति भावः ।

Those swans, flying in the sky, the way of the clouds on all sides of you who would be desirous of going to the abode of the lord of the Yakshas on the ground of my truthfulness, possessing bits of the shoots of lotus-stalks as provendor for the journey, would, having become anxious on account of the new clouds, surely accompany you up to the Kailas mountain.

स्फीतोत्कण्ठाविगलितमदा मन्दमन्दायमाना
मूकीभूताः स्खलितगयोऽनुन्मुखास्सन्तताशाः ।
त्वामन्वेते पवनपदवीमाश्रयन्तोऽनुरूपाः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ४४ ॥

वान् वीरशय्यां श्रितः स्याः तदा पुण्यपाकात् विनङ्क्ष्यद्गर्भाधानक्षणपरिचयात् नभसि आबद्धमालाः विद्याधर्यः त्वां वृणते ।

**युद्धे शौण्ड** इत्यादि । **यदि च युद्धे** सङ्ग्रामे **शौण्डः** प्रवीणः । ज्योत्स्नादेः प्रयोगगम्यत्वात् शुण्डाशब्दात् 'ज्योत्स्नादिभ्योऽण्' इत्यण् । **स्वर्गस्त्रीणां** स्वर्गाङ्गनानां **अहमहमिकां** अहमधिकाऽहमधिकेति तुल्यसौन्दर्यादीनां स्पर्धां । 'मौल्यादिभ्यः' इति ठः । 'मयूरव्यंसकादयश्च' इति सः । 'अहमहमिका तु सा स्यात् परस्परं यो भवत्यहङ्कारः' इत्यमरः । **संविधास्यन्** कारयिष्यन । **भगवान्** ध्यानैकतानः महामुनिः श्रीपार्श्वजिनेन्द्रः **वीरशय्यां** वीराणां दीर्घशयनाधिकरणभूतां समरभूमिं । शीयते अस्यामिति शय्या । वीराणां शय्या दीर्घनिद्रानुभवनस्थानं वीरशय्या । तां । **श्रितः** आश्रितः । प्राप्तः इत्यर्थः । **स्याः** भवेः । समरभूमौ मृतानां वीराणां तत्रैवानवधि शयितत्वात् समरभूमेः वीरशय्येति चरितार्थं नामान्तरं । तेन युध्यमानः मरणं प्राप्तश्चेद्भवानित्यर्थः । युद्धे मृतस्य ते व्योममार्गेण गच्छतः विद्याधरस्त्रियः देवस्त्रियश्च भवन्तमाकाशप्रदेशे सेविष्यन्ते । ततश्च ते महत्सुखं भविष्यति । स्वर्गसुखार्थं तपस्यतस्ते युद्धभूमौ मरणे जाते सति अपि तत्तादृशमेव सुखमुत्पत्स्येत । ततः सञ्जातसमाधिभङ्गस्य समरभूमौ मृतस्य सुखं नोत्पत्स्यते इति मा मंस्थाः । अतः समाधिं परित्यज्य युयुत्सोरपि ते न काऽपि क्षतिरिति मनसिकृत्य युद्धसन्नद्धो भव त्वमिति कमठचरयक्षाभिप्रायः । 'जातुयद्यदायदौ लिङ्' इति लिङ् यदि शब्दस्यात्र प्रयोगात् । **तदा** वीरशय्याश्रयणकाले **पुण्यपाकात्** पुण्यकर्मणः पाकात् उदयात् **विनङ्क्ष्यद्गर्भाधानक्षणपरिचयात्** । विनङ्क्ष्यंश्चासौ गर्भश्च विनङ्क्ष्यद्गर्भः । तस्य आधानं स्थिरीभावः । तस्य क्षणः आनन्दः । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः तस्य आनन्दस्य परिचयः वृद्धिः । तस्मात् । गर्भधारणोत्तरकाले तस्य आधानानन्तरं पूर्वं पतनशीलस्याधुना त्वद्दर्शनकाले स्थिरीभवनात् समुत्पन्नस्य मोदस्य वृद्धेरित्यर्थः । 'नश अदर्शने' इत्यस्माद्धोः 'स्यतासी लृलुटोः' इति लृट्स्यत्वे 'नशिमस्जोर्झलि' इति नुमि च रूपम् । **आबद्धमालाः** । आबद्धाः विरचिताः मालाः पङ्क्तयः याभिस्ताः । विरचितपङ्क्तयः कण्ठविरचितपुष्पमालाः वेत्यर्थः । **विद्याधर्यः** विद्याधरस्त्रियः । **त्वां** भवन्तं **नभसि** व्योम्नि **वृणते** सेविष्यन्ते । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानसामीप्ये वर्तमानप्रयोगः ।

If at all you, setting a competition between the heavenly ladies (i. e. damsels) afoot, skilled in warare (or a vetaran warrior), will have recourse to the battle-field which forms a bed for warriors (i. e. a

battle-field where warriors die while fighting), then the Vidyadhara females, forming rows in the sky, on account of the enhancement of their joy derived from the sustainment of the embryo that used to fall off owing to the ripening of the Karman conditioned by their good deeds, will wait upon you.

**मूर्च्छासुप्तं त्रिदशनिहिताम्लानमन्दारमालं**
**तूर्यध्वानस्तनितमुखरं दिव्ययानाधिरूढं ।**
**द्यामुद्यन्तं सजलजलदाशङ्कयाऽऽबद्धमालाः**
**सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ४० ॥**

अन्वयः— मूर्च्छासुप्तं त्रिदशनिहिताम्लानमन्दारमालं दिव्ययानाधिरूढं नयनसुभगं तूर्यध्वानस्तनितमुखरं द्यामुद्यन्तं भवन्तं सजलजलदाशङ्कया आबद्धमालाः बलाकाः खे सेविष्यन्ते ।

मूर्च्छेत्यादि । **मूर्च्छासुप्तं** मूर्च्छया मत्प्रहारसञ्जनितमोहेन सुप्तं प्रशान्तचैतन्याविष्कारसाधनीभूतक्रियत्वात् सुप्तः इव सुप्तः तम् । **त्रिदशनिहिताम्लानमन्दारमालं** । त्रिदशैः देवैः निहिता गले निक्षिप्ता अम्लानानां प्रत्यग्राणां मन्दाराणां कल्पवृक्षकुसुमानां मालाः दामानि यस्मिन् सः । तम् । 'अमरा निर्जरा देवास्त्रिदशा विबुधेश्वराः' इत्यमरः । मन्दाराणां मन्दारकुसुमानां इत्यर्थः । 'पुष्पमूले बहुलम्' इति पुष्पत्ययस्योस् । 'मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च' इत्यमरः । **नयनसुभगं** । नयनयोः नेत्रयोः सुभगं आनन्दजनकत्वान्मनोहरं । **दिव्ययानाधिरूढं** । दिवि भवं जातं वा दिव्यं । 'द्युप्रागपागुदक्प्रतीचो यत्' इति जातभवयोरर्थयोः यः । दिव्यं च तद्यानं वाहनं च दिव्ययानं । तत् अधिरूढः दिव्ययानाधिरूढः । तम् । **तूर्यध्वानस्तनितमुखरं** । तूर्यं दुन्दुभितुल्यमानद्धं वाद्यं । तस्य ध्वानाः ध्वनयः एव स्तनितानि गर्जितानि तैः मुखरः वाचालितः गर्जितध्वनियुक्तः यथा स्यात् तथा । इसः । मरुभूतिचरस्य पार्श्वभगवतः युद्धे हतस्य सतः स्वर्गगमनकाले देवसन्ताडितदुन्दुभ्यानद्धवाद्यविशेषध्वानानां गर्जिततुल्यत्वात् तद्ध्वनिभिः सगर्जितं यथा स्यात् तथा । इसः । **द्यां** स्वर्गभुवं आकाशमार्गं वा **उद्यन्तं** उद्गच्छन्तं **भवन्तं** पार्श्वाभिधानं त्वां **सजलजलदाशङ्कया** जलेन सह सजलः । सजलश्चासौ जलदः मेघश्च तस्य आशङ्कया सन्देहेन । अयं जलदः सजलः भवेदिति संशयेन । **आबद्धमालाः** । आबद्धाः विरचिताः मालाः पङ्क्तयः याभिस्ताः । **बलाकाः** । बलाहकान् मेघान् कायन्तीति बलाकाः । बिसकण्ठिकाः इत्यर्थः । 'बलाका बिसकण्ठिका' इत्यमरः । **खे** आकाशे । **सेविष्यन्ते** भजिष्यन्ते ।

The female cranes, drawn up into lines ownig to their doubting you for a watery cloud when you, seated in a celestial car, would be flynig high up in the sky accompanied with the sounds of drums which would resemble your thundering, would be waiting upon you, enjoynig sound sleep caused by a swoon, wearing a garland of Mandar flowers and delightful to the eye.

योगिन् पश्यंस्त्वदतुलधृतेर्भङ्गहेतून् पयोदां-
स्तद्गम्भीरध्वनितमपि च श्रोतुमर्हस्यकाले ।
केकोद्ग्रीवाञ्शिखरिषु चिरं नर्तयेद्यन्मयूरान्
कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्याम् ॥ ४१ ॥

अन्वयः— अपि च योगिन् । त्वदतुलधृतेः भङ्गहेतून् पयोदान् पश्यन्; यत् केकोद्ग्रीवान् मयूरान् शिखरिषु चिरं नर्तयेत् च महीं उच्छीलीन्ध्रां अवन्ध्यां कर्तुं प्रभवति तत् गम्भीरध्वनितं अकाले श्रोतुमर्हसि ।

योगिनित्यादि । अपि च । किं च योगिन् भो ध्याननिमग्न तपस्विन् । त्वद-तुलधृतेः । अतुला निरुपमा चाऽसौ धृतिः शमश्च अतुलधृतिः । तव अतुलधृतिः त्वद-तुलधृतिः । तस्याः । भङ्गहेतून् । भङ्गस्य नाशस्य प्रक्षोभस्य हेतवः कारणानि । प्रक्षो-भजननकारणानि । पयोदान् मया विक्रियर्द्ध्योत्पादितान् मेघान् पश्यन् अवलोकयन् । यत् गम्भीरगर्जितं केकोद्ग्रीवान् । केकया मयूरध्वनिविशेषेण हेतुना उद्ग्रीवान् उन्न-मितकन्धरान् । उद्गता ग्रीवा कन्धरा येषां तान् । 'केका वाणी मयूरस्य' इति 'अथ ग्रीवायां शिरोधिः कन्धरेत्यपि' इति चाऽमरः । मेघालोके केकोद्भावनार्थमुन्नमितकन्धरा-नित्यर्थः । मयुरान् बर्हिणः चिरं चिरकालं नर्तयेत् नृत्यं कारयेत् । नाटयेदित्यर्थः । यत् च उच्छीलीन्ध्रां उद्गतकवकां । कवकं विड्डुत्करजं छत्राकारधारि मलिनवर्णं वनस्प-तिविशेषरूपं । 'शिलीन्ध्रस्तु पुमान्मीनभेदे वृक्षप्रभेदयोः । शिलीन्ध्रं कवचे रम्भा पुष्प-त्रिपुटयोरपि' इति विश्वलोचने । 'विड्जानि कवकानि च' इति कश्चित् । "तदुक्तं-निमित्तनिदाने 'कालाभ्रयोगादुदिताः शिलीन्ध्राः सम्पन्नसस्यां कथयन्ति धात्रीम्'" इति मेघदूतकाव्यटीकायां मल्लिनाथः । अवन्ध्यां सफलां । 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः । कर्तुं विधातुं प्रभवति सामर्थ्यसम्पन्नं भवति । तत् गम्भीर-ध्वनितं । गम्भीरं च तद्ध्वनितं च गम्भीरध्वनितं । अकाले प्रावट्कालादन्यस्मिन् काले श्रोतुं श्रवणाय अर्हसि योग्यो भवसि । मयाऽकाले विक्रियर्द्ध्योत्पादितानां मेघानां

गर्जितं श्रोतुं योग्यो भवसि । ते मेघाः मया भवन्तं ध्यानात् प्रच्यावयितुं उत्पादिताः, न प्रावृट्कालभवाः इति भगवन्तं गम्भीरगर्जितैः सजलैरकालभावितैः कृष्णवर्णैर्भीषणैर्मेघैः पीडयितुमिच्छोः कमठचरयक्षस्याऽभिप्रायोऽयम् ।

Moreover, oh sage! you, seeing the clouds causing disturbance of your unmatched tranquillity of your mind, deserve to hear out of season the terrible thundering that would make the peacocks dance with their necks raised upwards for crying for a long time on the mountains and that which has the capacity of making the earth, having mushrooms grown up and productive.

पश्योत्त्रस्ता धवलितदिशो मन्दमन्दं प्रयान्तः
दृश्यन्तेऽमी गगनमभितो मन्दसानाः स्वनन्तः ।
बद्धोत्कण्ठोद्विगलितमदाः प्रावृषेण्याम्बुदानां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ॥ ४२ ॥

अन्वयः—प्रावृषेण्याम्बुदानां श्रवणसुभगं तत् गर्जितं श्रुत्वा मानसोत्काः बद्धोत्कण्ठोद्विगलितमदाः उत्त्रस्ताः मन्दमन्दं प्रयान्तः धवलितदिशः अमी मन्दसानाः गगनं अभितः स्वनन्तः दृश्यन्ते पश्य ।

पश्येत्यादि । प्रावृषेण्याम्बुदानां । प्रावृषि भवाः प्रावृषेण्याः । 'प्रावृष एण्यः' इति एण्यत्यः । प्रावृट्कालभवाः इत्यर्थः । प्रावृषेण्याः इव प्रावृषेण्याः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । पूर्वश्लोकोक्तस्य 'अकाले' इति पाठस्य दर्शनात् कमठचरेण तेषामकाले एव भगवन्तं पीडयितुं विक्रियद्र्ध्युत्पादितत्वात् प्रावृषेण्यत्वासम्भवात् प्रावृषेण्यतुल्यत्वं तेषां व्युत्पत्त्या प्रदर्शितमित्यवसेयम् । प्रावृषेण्याः प्रावृट्कालभवाश्च ते अम्बुदा मेघाश्च प्रावृषेण्याम्बुदाः । तेषां । श्रवणसुभगं । श्रवणयोः आनन्दप्रदत्वात् सुभगं मनोहरं । श्रवणानन्दजननमित्यर्थः तत् अकालजनितमेघोद्भावितं गर्जितं स्तनितं । गर्जनध्वनिमित्यर्थः । श्रुत्वा श्रवणविषयतां नीत्वा । मानसोत्काः । मानसे मानसाभिधाने सरसि उत्काः उत्कण्ठिताः । 'स्यादुत्क उन्मना' इत्यमरः । कालिमाङ्कितसजलजलददर्शनजनितप्रावृट्कालभ्रान्त्या उत्तरादिक्स्थितं मानससरः गन्तुमुन्मनायिताः इत्यर्थः । बद्धोत्कण्ठोद्विगलितमदाः । बद्धया विरचितया उत्कण्ठया उन्मनायितेन । मानसं सरः गन्तुं सञ्जातयोत्कण्ठयेत्यर्थः । तया उद्विगलितः नष्टः मदः आनन्दः येषां ते । 'उत्कण्ठोत्कलिके समे' इत्यमरः । 'मदो मृगमदे मद्ये दानमुद्गर्वरेतसि' इति विश्वलोचने ।

अन्वयः— स्फीतोकण्ठाविगलितमदाः मन्दमन्दायमानाः मूकीभूताः स्खलितगतयः अनुन्मुखाः सन्तताशाः त्वां अनु पवनपदवीं आश्रयन्तः अनुरूपाः एते राजहंसाः नभसि भवतः सहायाः सम्पत्स्यन्ते।

स्फीतेत्यादि। **स्फीतोकण्ठाविगलितमदाः**। स्फीताः वृद्धिं प्राप्ताः श्च ताः उत्कण्ठाः उन्मनायितानिच स्फीतोत्कण्ठाः। ताभिः विगलिताः विलयं प्राप्ताः मदाः इन्द्रियदर्पाः मुदः येषां ते। हेतुगर्भमेतद्विशेषणं। तेषां स्फीतोत्कण्ठत्वाद्विगलितमदत्वात् मन्दमन्दायमानत्वं व्यञ्जयति। **मन्दमन्दायमानाः**। मन्दीभूतगतयः। मन्दप्रकारः मन्दमन्दः। 'प्रकारे गुणोक्तेर्वा' इति गुणोक्तेः प्रकारेऽर्थे द्वैधीभावः यवच्च कार्यम्। अमन्दमन्दः मन्दमन्दः भवति मन्दमन्दायते। 'डाज्लोहितादिभ्यः' इति क्यप् लोहितादेराकृतिगणत्वात्। 'क्यपो वा' इति दः। शानच्च। **मूकीभूताः**। अमूकाः वाचालाः अपि मूकाः भूताः सम्पन्नाः मूकीभूताः। मूकभूयं प्राप्ताः। 'अवाचि मूकः' इत्यमरः। 'मूकस्त्ववाङ्मतो दीने' इति विश्वलोचने। **स्खलितगतयः** स्खलिताः सस्खलनाः गतयः गमनानि येषां ते स्खलितगतयः। गमने सञ्जातस्खलनाः इत्यर्थः। **अनुन्मुखाः** न्यक्कृतमुखाः। उद्गतं मुखं येषां ते उन्मुखाः। न उन्मुखाः अनुन्मुखाः। अधोनियमितदृशः इत्यर्थः। **सन्तताशाः**। समन्तात् तताः व्याप्ताः आशाः दिशः यैः ते सन्तताशाः। व्याप्तदिङ्मण्डलाः इत्यर्थः। **त्वां अनु** त्वया सह। 'भार्येऽनुना' इति इप्। **पवनपदवीं**। पवनस्य प्रभञ्जनस्य पदवी गमनमार्गः। तां। व्योममार्गमिति भावः। **आश्रयन्तः**। प्राप्नुवन्तः। **अनुरूपः** त्वत्तुल्यरूपाः। भवन्तमनुकुर्वाणाः इत्यर्थः। 'पश्चात्साद्दृश्य-योरनु' इत्यमरः। 'अनु त्वनुक्रमे हीने पश्चादर्थसहार्थयोः। आयामेऽपि समीपार्थे सादृश्ये लक्षणादिषु' इति विश्वलोचने। यथा भवान् मोक्षसुखप्राप्त्यर्थे सञ्जातोकण्ठः सन् विगलितात्ममोहनस्वंभावक्रोधादिकषायः तथा ते राजहंसाः अपि वृद्धिंगतयोत्कण्ठया विलीनानन्दथवः। भगवत्पक्षे मदशब्दः क्रोधादीनामुपलक्षणमित्यवसेयम्। 'मदो मृगमदे मद्ये दानमुद्गर्वरेतसि' इति विश्वलोचने। यथा भवान् मोक्षार्थे घृतमुनिमतत्वात् मन्दमन्दायमानः संसारवर्धनीषु क्रियासु मन्दतमोद्यमः तथा एते राजहंसाः अपि मन्दमन्दायमानाः कामोन्मादत्वादलसगमनाः। यथा भवान् ध्याननिमग्नत्वात् मूकीभूतः विरतवचनव्यापारः उपलक्षणेन परिहृतेन्द्रियव्यापारः तथा ते हंसाः कामसन्तप्तत्वात् व्यक्तशब्दायिताः। यथा भवान् आसन्नतममोक्षत्वात्स्खलितगतिः [ स्खलिताः विनष्टाः गतयः नारकादिगतयः यस्य सः। ] विनष्टचतुर्गतिभ्रमणः, तथैते राजहंसाः

कामोन्मादादेव स्खलितगमनाः सीधुपानोन्मत्तगतयः। यथा भवान् ध्यानैकतानत्वात् अनुन्मुखः अनुन्नमितमुखकमलः तथैते राजहंसाः हृतवीर्यत्वादनुन्मुखाः अधोमुखाः। यथा भवान् त्यक्तपरिग्रहत्वात् सन्तताशः [ समन्तात् तता परिहृता आशा तृष्णा येन सः ] परिहृतविषयाशः तथा एते हंसाः अपि सन्तताशाः व्याप्तदिङ्मण्डलाः। यथा भवान् पवनपदवीं [ पवनी शुद्धा चाऽसौ पदवी मार्गश्च ] रत्नत्रयरूपा शुद्धमोक्षमार्गाश्रितः तथा एते राजहंसाः अपि पवनपदवीं आकाशमार्गमाश्रिताः। अत एव ते राजहंसाः अनुरूपाः त्वत्तुल्यधर्माणः इति भावः। **एते राजहंसाः** अमी हंसपक्षिविशेषाः। राजानः एव हंसाः योगिनः राजहंसाः। 'हंसः सूर्यमरालयोः। कृष्णेऽङ्गवाते निर्लोभनृपतौ परमात्मनि॥ योगिमन्त्रादिभेदे च मत्सरे तुरगान्तरे' इति विश्वलोचने। राजहंसाः इव राजहंसाः। 'देवपथादिभ्यः' इति इवार्थस्य कस्योप्। 'राजहंसास्तु चरणैर्लोहितैः सिताः। मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः' इत्यमरः। यथा परमयोगिनः भगवत्तुल्यत्वात् तदनुकूलाः तथा एते राजहंसाः अपि तथात्वादेव तदनुकूलाः इत्यर्थोऽप्यत्र ग्राह्यः। **नभसि** आकाशे **भवतः** तव **सहायाः** सयात्राः। 'सहायस्तु सयात्रे स्यात्' इति शब्दार्णवे। **सम्पत्स्यन्ते** भविष्यन्ति।

The royal swans, having their delight dispelled owing to the enhancement of their longings, having a very slow movement ( flying very slowly ), keeping silence, possessing staggering motion ( going unsteadily ), having their faces turned downwards, spreading all over the quarters, resembling you and resorting to the sky ( lit. having recourse to the way of wind ) along with you, would become your associates in the sky.

**भोक्तुं दिव्यश्रियमनुमतां यातुकामो द्युलोकं**
**कालक्षेपादुपरम रणे मङ्क्षु सन्नह्य भिक्षो।**
**येनाऽमुत्र स्पृहयसि दिवे यश्च संरक्षति त्वां**
**आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम्॥ ४५॥**

अन्वयः— हे भिक्षो! दिव्यश्रियं भोक्तुं द्युलोकं यातुकामः रणे मङ्क्षु सन्नह्य कालक्षेपात् उपरम। येन अमुत्र दिवे स्पृहयसि यश्च त्वां संरक्षति ( तं ) अमुं प्रियसखं तुङ्गं शैलं आलिङ्ग्य आपृच्छस्व।

भोक्तुमित्यादि। हे भिक्षो यते **अभिमतां** अभीष्टां **दिव्यश्रियं** स्वर्गभवां

श्रियं । दिवि भवा दिव्या । दिव्या च असौ श्रीश्च दिव्यश्रीः । ताम् । **भोक्तुं** अनुभवितुं **द्युलोकं** स्वर्गभुवं **यातुकामः** गन्तुमनाः । यातुं गन्तुं कामः अभिलाषः यस्य सः । 'सम्तुमो मनःकामे' इति तुमो मकारस्य खं । **रणे** युद्धार्थे । 'हेतौ सर्वाः प्रायः' इति हेतावीप् । **मङ्क्षु** शीघ्रं । 'मङ्क्षु शीघ्रे भृशार्थेऽपि मङ्क्षु तत्त्वेऽपि कुत्र-चित्' इति विश्वलोचने । **सन्नह्य** सज्जः भूत्वा । **कालक्षेपात्** कालयापनात् **उपरम** विरम । कालयापनं मा कार्षीरित्यर्थः । **येन** शैलेन हेतुभुतेन **अमुत्र** भवान्तरे । 'प्रेत्याऽमुत्र भवान्तरे' इत्यमरः । **दिवे** स्वर्गाय । 'सुरलोको द्योदिवौ द्वे' इत्यमरः । **स्पृहयसि** अभिलषसि । 'स्पृहेर्वेप्सितं' इत्यप् । **यश्च** यः शैलश्च **त्वां** **संरक्षति** निवासं दत्वा त्वां जनसम्मर्दजनितकोलाहलप्रादुर्भावितमनःक्षोभात् त्रायते । स्वशिरसि स्वगुहासु वा स्त्रीपशुषण्ढादिविकलासु स्थानं दत्वा त्वां ध्यानभ्रंशात् त्रायते इत्यर्थः । यत्तदोर्नित्यसम्बन्धात् 'तं' इति पदस्यात्राध्याहारः कार्यः । तं **अमुं** शैलं । **प्रियसखं** प्रियमित्रं । प्रियः सखा यस्य सः प्रियसखः । 'प्रियः' इति प्रियशब्दस्य पूर्वं प्रयोगः । 'राजाहः सखेष्टः' इति टः समासान्तः । **तुङ्गं** उन्नतं **शैलं** धराधरं **आलिङ्ग्य** उपगुह्य । आश्लिष्येत्यर्थः । **आपृच्छस्व** मां गमनार्थमनुजानीहि इति पृष्ट्वा सभाजनं कुरु । 'अथ द्वे आनन्दसभाजने' इत्यमरः । 'नुप्रच्छः' इति आङ्पूर्वकत्वात्प्रच्छेर्दः ।

Oh sage being desirous of going to the heavenly region to enjoy the prosperous life of heaven longed for by you, abstain from losing time by being ready for a fight very soon; bid farewell ( say good-bye ) to this lofty mountain, your dear friend, by embracing him, through whom you are longing for the heaven and who protects you.

**भूयश्चानुस्मर सिषिधुपः कार्यसिद्ध्यै प्रयत्य**
**प्रायेणेष्टा महति विधुरे देवतानुस्मृतिर्नः ।**
**सिद्धिक्षेत्रं शरणमथवा गच्छ तं रामशैलं**
वन्द्यैः पुंसां रघुपतिपदैराङ्कितं मेखलासु ॥ ४६ ॥

**स्नातो धौताम्बरनिवसनो दिव्यगन्धानुलिप्तः**
**स्रग्वी दन्तच्छदविरचितारक्तताम्बूलरागः ।**
**खड्गी युद्धे कृतपरिकरः क्षालिताङ्गःपरागः**
काले काले भवति भवतो यस्य संयोगमेत्य ॥ ४७ ॥

अन्वयः— भूयश्च कार्यसिद्ध्यै प्रयत्य सिषिधुषः अनुस्मर । नः महति विधुरे प्रायेण देवतानुस्मृतिः इष्टा । अथवा काले काले भवतः यस्य संयोगं एत्य युद्धे कृतपरिकरः खड्गी क्षालितागःपरागः स्नातः धौताम्बरनिवसनः दिव्यगन्धानुलिप्तः स्रग्वी दन्तच्छदविरचितारक्तताम्बूलरागः भवति तं पुंसां वन्द्यैः रघुपतिपदैः मेखलासु अङ्कितं सिद्धिक्षेत्रं तं रामशैलं शरणं गच्छ ।

भूयश्चेत्यादि युग्मम् । **भूयश्च** पुनश्च । **कार्यसिद्ध्यै** । कार्यस्य सिद्धिः साफल्यं कार्यसिद्धिः । तस्यै कार्यसिद्ध्यै । कार्यसिद्धिं कर्तुमित्यर्थः ‘ क्र्यर्थवाचोऽर्थात्कर्मणि ’ इति कर्मण्यप् । **प्रयत्य** प्रयत्नं विधाय । **सिषिधुषः** सिद्धान् तपस्विविशेषान् सम्प्राप्तमुक्तीन् वा । सिद्धावस्थां प्राप्तानित्यर्थः । ‘षिधु संराद्धौ ’ इत्यस्माद्धोः परस्य लिटः स्थाने ‘ लिटःक्वसुकानौ ’ इति क्वसुः । ‘ वसोर्वस्योश् ’ इति भस्य वसोर्वकारस्योश् । ‘ क्वस्यैकाज्घसः ’ इति धोरेकाच्त्वात् क्वसौपरे इडागमः । **अनुस्मर** अनुचिन्तनं कुरु । **नः** अस्माकम् । **महति विधुरे** महत्यां विपत्तौ प्राप्तायां सत्यां । ‘ विधुरं तु प्रविश्लेषे प्रत्यवायेऽपि तन्मतम् ’ इति विश्वलोचने । **प्रायेण** बाहुल्येन । **देवतानुस्मृतिः** । देवतानामनुस्मृतिः अनुस्मरणं देवतानुस्मृतिः । देवतास्मरणमित्यर्थः । **इष्टा** आर्यैरभिलषिता । कार्यसिद्ध्यै सिद्धादितपस्विविशेषमात्रस्मरणं पर्याप्तं । महत्यां विपत्तौ तु न तत्स्मरणं पर्याप्तं, अपि तु देवतानामेव स्मरणं महद्भिरिष्टं विहितं । विजयार्जनरूपकार्यसिद्ध्यर्थं सिद्धविशेषाणां तव स्मर्तव्यत्वेऽपि मया सह युयुत्सोस्ते महती विपत्तिर्दुष्परिहारा अवश्यं भवेदिति देवतास्मरणमपि त्वयाऽवश्यं कर्तव्यं, अन्यथा तव विनाशोऽवश्यं भवेदिति कमठचराभिप्रायः । **अथवा** यद्वा **काले काले भवतः** प्रतिकालं विद्यमानस्य । सर्वथा सतः इत्यर्थः । **यस्य** रामशैलस्य **संयोगं** सम्बन्धं **एत्य** प्राप्य । **क्षालितागःपरागः** । आगसः पापस्य परागः रजः कर्मस्कन्धाः आगःपरागाः । ‘ आगाः पापापराधयोः ’ इति ‘ परागः पुष्परजसि स्नानीयादौ रजस्यपि । विख्याताबुपरागेऽपि चन्दने पर्वतान्तरे ’ इति च विश्वलोचने । क्षालिताः क्षयं क्षयोपशमं उपशमं वा प्रापिताः आगःपरागाः येन सः क्षालितागःपरागः । **युद्धे** सङ्ग्रामार्थं । ‘ हेतौ सर्वाः प्रायः ’ इति हेतावीप् । **कृतपरिकरः** । कृतः बद्धः परिकरः येन सः । युद्धार्थं कृतसन्नाहः इत्यर्थः । **खड्गी** । खड्गः निस्त्रिंशः अस्य अस्तीति खड्गी । निस्त्रिंशभृदित्यर्थः । ‘ खड्गः खड्गिनि निस्त्रिंशे खड्गिशृङ्गे जिनान्तरे ’ इति विश्वलोचने । **स्नातः** कृतस्नानः **धौताम्बरनिवसनः** । धौतं च तत् अम्बरं कार्पासं च धौताम्बरं । ‘ अम्बरं रसकार्पासव्योमरागसुगन्धके

इति विश्वलोचने । धौतं कार्पासवस्त्रमित्यर्थः । तदेव निवसनं परिधानीयं यस्य सः । धौताम्बरपरिधानीयः इत्यर्थः यद्वा निवसति परिधत्ते इति निवसनं । कर्तरि युट् । धौताम्बरं निवसनः धौताम्बरनिवसनः । **दिव्यगन्धानुलिप्तः** । दिवि भवः दिव्यः । दिव्यश्चासौ गन्धश्च दिव्यगन्धः । तेन अनुलिप्तः अनुचर्चिताङ्गः दिव्यगन्धानुलिप्तः । **स्रग्वी** । स्रग् माला अस्य अस्तीति स्रग्वी । 'मायामयामेधास्रक्तपोऽसो विन्' इति मत्वर्थीयो विन् । **दन्तच्छदविरचितारक्तताम्बूलरागः** । दन्तच्छदयोः अधरोत्तरोष्ठयोः विरचितः निक्षिप्तः आरक्तः अतिरक्तवर्णः ईषद्रक्तवर्णः वा ताम्बूलस्य रागः यस्य सः । **भवति** सम्पद्यते । उपपादुकदेवभूयं प्राप्नोतीति भावः । तं शैलं रामाभिधं **पुंसां** पुरुषाणां **वन्द्यैः** वन्दनार्हैः । अर्च्यैरित्यर्थः । 'व्यस्य वा कर्तरि' इति ता । **रघुपतिपदैः** । रघुपतेः दाशरथेः रामस्य पदैः चरणैः **मेखलासु** पर्वतनितम्बेषु । 'काञ्च्यां शैलनितम्बे च खड्गबन्धे च मेखला । मेखला कटिदेशे च' इति विश्वलोचने । **अङ्कितं** चिह्नितं । सञ्जातदाशरथिचरणचिह्नमित्यर्थः । **सिद्धिक्षेत्रं**. सिद्धेः ध्यानस्य क्षेत्रं स्थानं । त्वद्ध्यानसिद्धिस्थानमित्यर्थः । 'सिद्धिर्निष्पत्तियोगयोः । सद्व्याख्याभेषजे सिद्धिः सिद्धिर्वृद्ध्याख्याभेषजे' इति विश्वलोचने । तं प्रसिद्धं **रामशैलं** रामगिरिं **शरणं** रक्षितारं गच्छ प्राप्नुहि ।

Moreover, bring deligently to your mind the liberated souls for the sake of fullilling your undertaking. Our remembrance of dieties at the time of great calamity is highly approved. Or approach the Rama mountain. the protector, a place of penance ( meditation ), marked on the summits ( or slopes) by the footprints of the lord of Raghus' worthy of being adored by men, coming in contact with which, the eternal one, a swordsman girding up his loins for drifting into a war, the dirt of his sinful Karman being washed off, gets himself transformed into one that has taken a bath, worn a garland and has his lips decorated with a red dye of tambul ( i. e. gets himself transformed into godhood ).

**पश्चात्तापाद्व्युपरतिमहो मय्यपि प्रीतिमेहि**
**भ्रातः प्रौढव्रणपुलको मां निगूह स्वेदोभ्यर्णम् ।**
**तत्ते स्निग्धे मयकि जनिता श्लाघनीया जनैः स्तात्**
**स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ ४८ ॥**

अन्वयः— अहो भ्रातः पश्चात्तापात् व्युपरतिं एहि, मयि अपि प्रीतिं [ एहि ];

प्रौढप्रणयपुलकः [ त्वं ] स्वदोर्भ्यां मां निगूह । तत् चिरविरहजं, उष्णं बाष्पं मुञ्चतः ते स्निग्धे मयकि जनिता स्नेहव्यक्तिः जनैः श्लाघनीया स्तात् ।

पश्चात्तापादित्यादि । अहो भो भ्रातः पूर्वभवबन्धो पश्चात्तापात् अनुशयात् व्युपरतिं विरामं एहि गच्छ । 'ध्रुवमपायेऽपादानं' इति ध्रुवपायदर्शनात् 'कापादाने' इत्यपादाने का । पश्चात्तापदग्धहृदयत्वं विमुञ्चेति भावः । मयि अपि त्वज्जायागामिनि त्वदपकारके गर्हिते मयि अपि । अपि गर्हायामत्र । 'अपि सम्भावना-शङ्काप्रश्नगर्हासमुच्चये । अपि युक्तपदार्थेषु कामकारक्रियास्वपि' इति विश्वलोचने । प्रीतिं प्रणयं एहि प्राप्नुहि । त्वदपकारके मयकि कमठचरे यक्षे वैरबन्धं प्रविमुच्य प्रणयी भवेति तात्पर्यम् । प्रौढप्रणयपुलकः । प्रणयकृतः पुलकः रोमाञ्चितं प्रणय-पुलकः । प्रौढः प्रकर्षेण वृद्धिंगतः प्रणयपुलकः यस्य सः । सञ्जातविपुलरोमाञ्चतनु-रित्यर्थः । 'प्रादूहोढोढ्येषैष्ये' इति प्रादैवृद्धे परतः । त्वं स्वदोर्भ्यां स्वबाहुभ्यां मां ज्येष्ठभ्रातरं मां निगूह आश्लेषय । तत् तस्माद्धेतोः । आलिङ्गनाद्धेतोरित्यर्थः । चिरविरहजं । चिरं विरहः चिरविरहः । तस्माज्जायते इति चिरविरहजं । दीर्घकाल-विप्रलम्भसम्भूतमित्यर्थः । उष्णं कोष्णं बाष्पं अश्रु । 'बाष्पमूष्माश्रु' इत्यमरः । मुञ्चतः नेत्रयोः पातयतः ते तव स्निग्धे स्नेहिनि । प्रेमपरे भ्रातरि मयीत्यर्थः । मयकि मयि । 'युष्मदस्मदोः सुपोऽभोसि' इत्यस्मदः सुबन्तस्य प्राक्टेरक् । जनिता उत्पादिता । कृतेत्यर्थः । स्नेहव्यक्तिः । स्नेहस्य प्रेम्णः व्यक्तिः प्रादुर्भावः । स्नेहा-विर्भावः इत्यर्थः । जनैः लोकैः । श्लाघनीया । श्लाघितुं योग्या श्लाघनीया श्लाघार्हा । प्रशस्येत्यर्थः । स्तात् भवतु । भगवन्तं ध्यानात् प्रच्यावयितुं साम प्रयुञ्जानस्य कमठचर-यक्षस्येयमुक्तिः ।

Oh brother ! abstain from repenting ( i. e. give up repentance ) and have affection towards me even; you with the hair of your body bristling embrace me with your arms so that the manifestation of affection, towards me by you, shedding hot tears on account of the separation of long duration for me, the affectionate one, may highly be praised by the people.

किं वा वैरीन्धनदहि मयि प्रौढमानस्त्वमेत—
त्त्वाभिप्रेयाः किमपरमहो नो विलम्बेन तिष्ठ ।
त्वामद्यैवान्तकमुखबिलं प्रापयामि त्वकं मे
मार्गं मत्तः शृणु कथयतस्त्वत्प्रयाणानुरूपं ॥ ४९ ॥

अन्वय :—वा प्रौढमानः मयि वैरीन्धनदहि एतत् न अभिप्रेयाः किं ? किं अपरं ? नो विलम्बेन तिष्ठ। त्वां अद्य एव अन्तकमुखविलं प्रापयामि। मे कथयतः त्वत्प्रयाणानुरूपं मार्गं मत्तः त्वकं शृणु।

किं वेत्यादि। वा अथवा। प्रौढमानः। प्रौढः वृद्धिंगतः मानः अभिमानः बलगर्वः यस्य सः। वृद्धिंगतगर्वः इत्यर्थः। 'प्रादूहोढोढ्येषैष्ये' इति प्रादूढे परतः ऐप्। त्वं भवान् मरुभूतिचरः पार्श्वनाथः मयि कमठचरे यक्षे मयि। वैरीन्धनदहि। वैरी एव इन्धनं दाह्यं वैरीन्धनं। तद्दहतीति वैरीन्धनधक्। क्विप्। तस्मिन्। वैरीन्धनदाहकं माम-नादृत्येत्यर्थः। 'ता चाऽनादरे' इत्यनादरे ईप्। एतत् पूर्वोक्तं किं न अभिप्रेयाः न अभिजानीयाः। नाभिप्रेयाश्चेन्न क्षमेऽहमित्यभिप्रायः। 'अश्रद्धामर्षे लिङ्' इत्यमर्षे लिङ्। किं अपरम् किमन्यत् ? किमन्यदत्र वक्तव्यमिति भावः। नो विलम्बेन तिष्ठ। अकालहीनं युद्धार्थं सन्नद्धो भव। कालयापनं मा कुर्वित्यर्थः। त्वां भवन्तं अद्यैव अस्मिन्नेव दिने। अन्तकमुखविलं। अन्तकस्य कृतान्तस्य मुखं विलमिव अन्तकमुखविलं। कृतान्तमुखविवरमित्यर्थः। प्रापयामि प्रेषयामि। गमयामीत्यर्थः। त्वयि कृतान्तमुखविवरं मया प्रापिते सति स्वर्गमभिमुखीभूय प्रस्थितस्य ते। त्वत्प्रयाणा-नुरूपं। त्वत् तव प्रयाणस्य अनुरूपं अनुकूलं मार्गं स्वर्गगमनपदवीं मे मम कथयतः प्रतिपादयतः मत्तः मत्सकाशात्। त्वकं। अनुकम्पितः त्वं त्वकं। 'युष्मदस्मदोः सुपोऽभोसि' इति युष्मदो वान्तात् प्राक्टेरक्। शृणु कर्णगोचरतां प्रापय। 'मार्गोऽन्वेषणे वाटे कस्तूरीविपर्योरपि' इति विश्वलोचने। यदि त्वं मदुक्तमुररीकर्तुं नेच्छसि त्वां स्वर्गातिथिभूयमिदानीमेव प्रापयामीति भेदनीतिं प्रयुङ्क्ते कमठचरः।

Or, would you, with your pride fully developed ( puffed up with pride ) not be willing to accept this, even though I have the capacity for reducing the fuel in the form of enemies to ashes, then I would not bear it. What else then ? Do not delay at all. ( Be ready very soon for a fight ). I shall just to-day drive you into the cavity of ( formed by ) the jaws of the god of death. Learn from me the path fit for your journey while I would be describing it.

**श्रेयोमार्गान्न हि जिनमताद्भ्रंशितस्यैक एव**
**मार्गोऽसह्यादसुखविषधेर्नारकात्तारको यः।**
**तं मुक्त्वा ते श्रुतिसुखपदं वच्मि यत्र प्रियायाः**
**सन्देशं मे तदनु जलद श्रोष्यसि श्रव्यबन्धम्॥ ५० ॥**

अन्वयः— जिनमतात् श्रेयोमार्गात् भ्रंशितस्य यः असह्यात् नारकात् असुखविषधेः तारकः ( सः ) मार्गः एकः एव न हि । तं मुक्त्वा ते श्रुतिसुखपदं ( मार्गं ) वच्मि, यत्र तदनु मे प्रियायाः श्रव्यबन्धं सन्देशं श्रोष्यसि ।

श्रेयोमार्गादित्यादि । हे जलद मेघ । नैगमनयपेक्षया द्रव्यनिक्षेपापेक्षया वा-ध्याननिमग्नस्य भगवतः मरणानन्तरं यक्षाभिप्रायेण जलदाकारधारित्वस्यावश्यम्भावित्वात् जलदत्वेनोत्प्रेक्षणम् । भविष्यन्मेघेत्यर्थः । **जिनमतात्** । जिनैः तीर्थकरैरर्हद्भिः मतात् अभिमतात् प्रस्तुताद्वा । **श्रेयोमार्गात्** । आत्मनः संसारबन्धनाद्विमोच्य मुक्तौ व्यवस्थापकत्वान्माङ्गल्यमयत्वाद्रत्नत्रयस्य श्रेयोमार्गत्वेनाभिधानम् । श्रेयसः सांसारिकदुःखाभावायाः अवस्थायाः मार्गः अन्वेषणसाधनं श्रेयोमार्गः । तस्मात् । सम्यग्दर्शनज्ञानचारित्रमयान्मोक्षमार्गादित्यर्थः । **भ्रंशितस्य** भ्रंशं प्रापितस्य । प्रच्यावितस्येत्यर्थः । **यः** मार्गः **असह्यात्** अपरिसोढव्यात् । **नारकात्** । नरके भवः नारकः । तस्मात् । **असुखविषधेः** । असुखं दुःखमेव विषं कालकूटं यत्र धीयते सः असुखविषधिः । दुःखविषसागरः इत्यर्थः । तस्मात् । दुःखस्य विषवद्विकारकत्वाद्विषतुल्यत्वम् । यद्वा दुःखस्यनारकीयस्याविषह्यत्वाद्दुस्तरत्वाद्दुस्तरजलधितुल्यत्वमत्रावसेयम् । **तारकः** । तारयतीति तारकः । उत्तरणोपायः इत्यर्थः । सः **मार्गः** पदवी अध्वा वा । **एकः एव न हि** अद्वितीयः एव न भवति खलु । श्रेयोमार्गः जिनोक्तमार्गादन्यः नैकविधः एव, अपि त्वनेकविधः एव, अपि त्वनेकविधः सोऽस्ति । **तं** जिनोपदिष्टं श्रेयोमार्गं **मुक्त्वा** विहाय । जिनोक्तमार्गोपदेशं न करोमि, अपि तु तद्भिन्नानामनेकेषामेकं मार्गमुपदिशामीति कमठचराभिप्रायः । **ते** भवतः । **श्रुतिसुखपदं** । श्रुत्योः श्रवणयोः सुखं श्रुतिसुखम् । तस्य पदं कारणभूतं । कर्णयोरानन्दजननमित्यर्थः । मार्गं **वच्मि** कथयामि । **यत्र** यस्मिन् मार्गे **तदनु** तदनन्तरं । मार्गे प्रस्थानानन्तरमित्यर्थः **मे** मम **प्रियायाः** प्रेयस्याः । **श्रव्यबन्धं** । श्रव्यः श्रोतव्यः श्रवणार्हः बन्धः शब्दविन्यासः यस्य सः । तम् । **सन्देशं** वाचिकं । **श्रोष्यसि** श्रुतिपथं नेष्यसि । जिनोक्तमोक्षमार्गमनुररीकुर्वतां जैनेतराणां श्रेयोमार्गाः बहवः । तेषामन्यतममसह्यनारकदुःखात्तारकं कञ्चन सुखप्रदं मार्गमुपदिशामि । स च ते श्रुतिसुखकरः स्यात् । जिनोक्तमार्गं परिहृत्य तेन मदुक्तेन मार्गेण गच्छतस्ते दुःखपरिहारः सुखप्राप्तिश्च भविष्यतीति त्वं जिनोक्तं मार्गं मुक्तेर्विमुच्य युद्धसन्नद्धो भव । युद्धे मृतस्याऽपि ते श्रेयःप्राप्तिर्भविष्यतीति कमठचरशम्बरासुराभिप्रायः ।

Oh you, a would be cloud, the path, saving from drowning in the unbearable ocean of hellish misery and leading to the final beautitude,

by that way very happily enjoying the very light waters of currents whenever you would be growing very much emaciated.

कामं यायाः पथि निगदिते कामगत्या विमानं
प्रीत्यारूढः प्रथितमहिमा वारिवाहीव बन्धो ।
दृष्टोद्योगो नभसि विहरन् खेचरीभिस्त्वमुच्चै—
रद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिः ॥ ५२ ॥

अन्वयः—बन्धो ! 'पवनः अद्रेः शृङ्गं उच्चैः हरति किंस्वित् ? इति उन्मुखीभिः खेचरीभिः दृष्टोद्योगः त्वं कामगत्या विमानं आरूढः प्रथितमहिमा वारिवाही इव नभसि विहरन् निगदिते पथि कामं यायाः ।

काममित्यादि । हे बन्धो भ्रातः । प्राग्भवापेक्षयोक्तिरियमित्यवसेयम् । पवनः वायुः अद्रेः पर्वतस्य शृङ्गं सानु उच्चैः उर्ध्वं हरति नयति । वाहयतीत्यर्थः । किंस्वित् किम् ? किंस्विदिति वितर्के । इति एवं शङ्काकुलाभिः अतः एव उन्मुखीभिः । उन्नतं मुखं उन्मुखं । तदस्त्यासामित्युन्मुख्यः । ताभिः । उन्नतमुखीभिरित्यर्थः । 'स्वाङ्गान्नीचोऽस्फोढः' इति ङी । खेचरीभिः विद्याधरमुग्धाङ्गनाभिः । खे चरतीति खेचरः । विद्याधरः विहायोगतिः । 'चरोऽट्' इत्याधारे वाचि चरेरट् टित्वाङ्घी च । विहायोगतिभिर्विद्याधरस्त्रीभिरित्यर्थः । दृष्टोद्योगः दृष्टः उद्योगः उर्ध्वगमनं यस्य सः । दृष्टोर्ध्वगीतीरत्यर्थः । त्वं भवान् । कामगत्या विमानं । कामः अस्य अस्तीति कामः । मनः इत्यर्थः । कामस्य मनसः गतिः वेगः कामगतिः 'ओऽश्रादिभ्यः' इत्यो मत्वर्थीयः । कामगतिः इव कामगतिः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योस् । कामगत्या कामगतिज्ञाप्यत्यर्थः । 'येनाङ्गविकारेत्थम्भावौ' इति इत्थम्भावे भा 'शिखया बटुमद्राक्षीच्छत्रेतच्छत्रेण भूपतिं । केशवं शङ्खचक्राभ्यां त्रिभिर्नेत्रैः पिनाकिनम् ।' इत्यत्र यथा । मनोजवमित्यर्थः । विमानं व्योमयानं । प्रीत्या प्रमोदेन आरूढः आरुह्य विमाने स्थितः । प्रथितमहिमा । प्रथितः प्रसिद्धिंप्राप्तः महिमा माहात्म्यं यस्य सः । 'पृथ्वादेर्वेमन्' इतीमंस्त्यः । वारिवाही इव । वारि जल वोढुं शीलमस्य वारिवाही । शीलार्थे णिन् । जलदः इवेत्यर्थः । नभसि आकाशे विहरन् विचरन् निगदिते पूर्वप्रतिपादिते पथि मार्गे कामं यथेच्छं । 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्' इत्यमरः । यायाः गच्छेः ।

Oh brother ! you, whose upward movement would be looked at by

the females of Vidyadharas with their faces turned upwards, thinking 'Is the wind carrying off the peak of a mountain very high up?', with your greatness displayed, moving in the sky like a cloud, should go, getting delightfully into an aerial car possessing as much unrestrained speed as you like, at your own will by the way described above.

**मय्यामुक्तस्फुरितकवचे नीलमेघायमाने**
**मन्ये युक्तं मदनुकृतये वारिवाहायितं ते ।**
**मेघीभूतो व्रज लघु ततः पातशङ्काकुलाभिः**
**दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ॥ ५४ ॥**

अन्वयः— आमुक्तस्फुरितकवचे मयि नीलमेघायमाने ( सति ) मदनुकृतये ते वारिवाहायितं युक्तं मन्ये । ततः मेघीभूतः पातशङ्काकुलाभिः मुग्धसिद्धाङ्गनाभिः चकितचकितं दृष्टोत्साहः लघु व्रज ।

मयीत्यादि । **आमुक्तस्फुरितकवचे** । स्फुरितः स्फुरिततेजस्कश्चासौ कवचः वारवाणश्च स्फुरितकवचः । 'कवचः वारवाणे स्यात् पटहे गर्दभाण्डके' इति विश्वलोचने आमुक्तः बद्धः धृतः वा स्फुरितकवचः येन स आमुक्तस्फुरितकवचः । तस्मिन् । 'आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्' इति 'उरश्छदः कङ्कटकोऽजगरकवचोऽस्त्रियाम्' इति चाऽमरः । **मयि** कमठचरे शम्बरासुरे मयि । **नीलमेघायमाने** । नीलः नीलवर्णः चाऽसौ मेघः नीलमेघः । नीलमेघः इव आचरतीति नीलमेघायमानः । तस्मिन् सति । 'डाज्लोहितादिभ्यः' इति क्यष् । 'वाक्यषः' इति दः । शानच् । **मदनुकृतये** । मम अनुकृतिः आकारानुकरणं मदनुकृतिः । तस्यै मदनुकृतये । मदाकृत्यनुकारार्थमित्यर्थः । ते मरुभूतिचरस्य पार्श्वनाथस्य भवतः । **वारिवाहायितं** । वारि जलं वहतीति वारिवाहः इव आचरतीति वारिवाहायते । कर्मणि क्तः । मेघाकृतिधारणमित्यर्थः । **युक्तं** योग्यं **मन्ये** सम्भावयामि । **ततः** ते वारिवाहायितत्वस्योचितत्वात् । **मेघीभूतः** । 'अमेघः मेघः सम्पद्यमानः भवतीति मेघीभवति । मेघीभवति स्म मेघीभूतः । 'कृभ्वस्तियोगेऽभूततद्भावे सम्पद्यकर्तरि च्विः' इति च्विः । **पातशङ्काकुलाभिः** । पातस्य पतनस्य शङ्का भयं पातशङ्का । तया आकुलाः व्यस्ताः व्यग्रचित्ताः । ताभिः । 'व्यस्ते त्वप्रगुणाकुलौ' इत्यमरः । **मुग्धसिद्धाङ्गनाभिः** । सिद्धानां देवयोनिविशेषाणां अङ्गनाः शोभनास्त्रियः सिद्धाङ्गनाः । 'स्त्री नारी वनिता मुग्धा भामिनी भीरुरङ्गना । ललना कामिनी योषिद्योषा सीमन्तिनी वधूः' इति धन

is not only one in respect of him who is deviated from the path prescribed or highly valued by the Jinas. Excludnig that one, I shall describe you one, pleasing to the ears, where on you would hear a message of my beloved couched up in words agreable to hear.

तत्राऽप्येकोऽनृजुरृजुरतः कोऽपि पन्थास्तयोर्यो
वक्रोऽपि त्वा नयति सुखतस्तं शृणु प्रोच्यमानम् ।
नानापुष्पद्रुमसुमनसां सौरभेणाततेषु
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र ॥ ५१ ॥

यस्मिन्रम्याः कृतकगिरयः सेव्यसानुप्रदेशाः
नानावीरुद्वितितिसुभगाः पुष्पशय्याचितान्ताः ।
तेन व्रज्या तव सुखकरी, तत्र यायाः सुखेन
क्षीणः क्षीणः परिलघुपयः स्रोतसां चोपभुज्य ॥ ५२ ॥

अन्वयः— तत्र अपि एकः पन्थाः अनृजुः । कः अपि अतः ऋजुः । तयोः वक्रः अपि यः त्वा सुखतः नयति । यस्मिन् सेव्यसानुप्रदेशाः नाना विरुद्वितितिसुभगाः पुष्पशय्याचितान्ताः रम्याः कृतकगिरयः, यत्र च खिन्नः खिन्नः नानापुष्पद्रुमसुमनसां सौरभेण आततेषु शिखरिषु पदं न्यस्य गन्तासि, तं प्रोच्यमानं शृणु । तेन तव व्रज्या सुखकरी ( स्यात् ) । तत्र क्षीणः क्षीणः ( त्वं ) स्रोतसां परिलघु पयः उपभुज्य सुखेन यायाः ।

तत्रापीत्यादि युग्मम् । तत्र अपि जिनोक्तमार्गाद्भिन्नानां मार्गाणामनेकत्वेऽपि एकः कश्चिदन्यतमः पन्थाः मार्गः । अनृजुः कुटिलः । ऋजुः सरलः । न ऋजुः अनृजुः । कः अपि कश्चन अन्यतमः मार्गः अपि अतः अस्मात् कुटिलान्मार्गात् ऋजुः सरलः । तयोः कुटिलाकुटिलयोर्मार्गयोरन्यतरः वक्रः अपि कुटिलः सन् अपि यः त्वा भवन्तं सुखतः सुखेन नयति अभीष्टस्थानं प्रापयिष्यति यस्मिन् यत्र मार्गे । सेव्यसानुप्रदेशाः । सेव्याः सेवितुं योग्याः । अर्हार्थे ण्यः । सानूनां शृङ्गाणां प्रदेशाः सानुप्रदेशाः । 'सानुः शृङ्गे बुधेऽरण्ये वात्यायां पल्लवे पथि' इति विश्वलोचने । सेव्याः सानुप्रदेशाः येषां ते सेव्यसानुप्रदेशाः । नानावीरुद्वितितिसुभगाः । नाना अनेकविधाः वीरुधः लताः नानावीरुधः । तासां विततयः पङ्क्तयः समूहाः वा । ताभिः सुभगाः

मनोहराः । 'लतायां विटपे वीरुध्' इति विश्वलोचने । **पुष्पशय्याचितान्ताः** । पुष्पाणां पुष्पैः वा विरचिता शय्याः शयनीयानि पुष्पशय्याः । ताभिः आचिताः छन्नाः अन्ताः प्रान्तप्रदेशाः येषां ते । 'आचितास्तु चिते छन्ने सङ्गृहीते चिलिङ्गकः । आचितः शकटोन्मेये पलानामयुतद्वये' इति 'अन्तो नाशे मनोहरे । स्वरूपेऽन्तं मतंक्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु' इति च विश्वलोचने । **रम्याः** मनोहराः **कृतकगिरयः** । क्रीडार्थं विनिर्मिताः अद्रयः । **यत्र च** यस्मिन् कुटिले मार्गे च । **खिन्नः खिन्नः** भृशं अत्यर्थं । परिश्रान्तः सन् । क्षीणसामर्थ्यः सन् इत्यर्थः । 'प्राग्भृशाभीक्ष्ण्याविच्छेदे' इति भृशार्थे द्विः । **नानापुष्पद्रुमसुमनसां** । नाना अनेकविधाश्च ते पुष्पद्रुमाः कुसुमवृक्षाः नानापुष्पद्रुमाः । तेषां सुमनसः पुष्पाणि । तासां । 'सुमनाः पुष्पमालत्योः स्त्रियां धीरे सुरे पुमान्' इति विश्वलोचने । **सौरभेण** सुगन्धेन । सुरभिः एव सौरभं । तेन सौरभेण । 'सुरभिश्चम्पके चैत्रे वसन्ते गन्धके कवौ । स्वर्णे जातीफले चाऽब्जे त्रिषु मद्यसुगन्धयोः । ख्याते च स्त्री तु शल्लक्यां सुरभी मातृभेदयोः' इति विश्वलोचने । **आततेषु** । आ समन्तात् ततेषु व्याप्तेषु । नानापुष्पद्रुमसुमनस्सौगन्ध्याक्रान्तेष्वित्यर्थः । **शिखरिषु** पर्वताधित्यकासु पर्वतप्रदेशेषु वा **पदं** चरणं **न्यस्य** स्थापयित्वा **गन्तासि** गमिष्यसि । 'स्यतासी लृलुटोः (लृलुटोः)' इति लुटि तास्यः । **तं** अनृजुं मार्गं **प्रोच्यमानं** कथयितुमुपक्रान्तं । **शृणु** श्रवणातिथितां प्रापय । **तेन** कुटिलेन तेन मार्गेण **तव** मरुभूतिचरपार्श्वस्य **व्रज्या** गमनं । 'व्रज्याऽटाट्या पर्यटनम्' इत्यमरः । 'व्रज्यजः क्यप्' इति भावे क्यप् । **सुखकरी** सौख्यजननी । स्यादिति शेषः । **तत्र** तस्मिन् कुटिलवर्त्मनि **क्षीणः क्षीणः** अत्यर्थं क्षीणः । जलवर्षणादत्यर्थं कृशतनुत्वं प्राप्तः । अत्राऽपि भृशार्थे द्विः । त्वं **स्रोतसां** प्रवाहाणां **परिलघु** गुरुत्वदोषविकलं **पयः** पानीयं **उपभुज्य** उपयुज्य । पीत्वेत्यर्थः । **सुखेन** श्रमहीनं **यायाः** गच्छेः । 'या प्रापणे' लिङ् प्रापणमिह गतिः ।

Of those even, one way is crooked and a certain one is straight. Of those two, learn from me about the one, which is being described, though crooked, which would lead you happily, on which there are beautiful artificial hills charming on account of the groves of various creepers, the regions of which are crammed with floral beds, the sloping regions of which are worthy of being enjoyed, and on which you would be going stepping on mountains pervaded with the fragrance of the flowers of various flowery trees whenever you would be very tired. Your journey by that way will bring delight to you. Make your journey

क्षयः । अङ्गानि कल्याणानि अस्याः सन्तीत्यङ्गना । ' लक्षणविपुणाङ्गना ' इत्यङ्गान्नः निपातितः । मुग्धाः मूढाश्च ताः सिद्धाङ्गनाश्चमुग्धसिद्धाङ्गनाः । ताभिः । ' सुन्दरे वाच्यवन्मुग्धो मुग्धो मूढेऽपि वाच्यवत् ' इति विश्वलोचने । चकितचकितं । चकितप्रकाराः चकितचकिताः यथा स्युस्तथा । ' प्रकारे गुणोक्तेर्ता ' इति द्वैधीभावः । भयाकुलिताः भूत्वेत्यर्थः । दृष्टोत्साहः । दृष्टः अवलोकितः उत्साहः उद्यमः उर्ध्वगमनं यस्य सः । ' उत्साहस्तूद्यमे सूत्रतन्तावपि पुमानयम् ' इति विश्वलोचने । त्वं लघु शीघ्रं व्रज गच्छ ।

I think your behaviour like that of a cloud ( i. e. assumption of the form of a cloud ) with a view to imitate me would be but quite proper on your part when I, clad in a brilliant mail ( armour ), would be behaving like a black cloud. You assuming the form of a cloud, looked at with great fear by the simple Siddha-women rendered unhappy by the doubt cherished by them of your downfall, should go your journey quickly.

तस्माद्विद्युत्प्रसवसमये प्राप्य सिद्धिं वधूनां
सद्यः कृत्वा समुचितमदो दिव्यजीमूतरूपम् ।
दिव्यान्भोगान् समनुभवितुं कामुकः कामचारे
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखःखम् ॥ ५५ ॥

अन्वयः— तस्मात् अदः समुचितं दिव्यजीमूतरूपं कृत्वा विद्युत्प्रसवसमये वधूनां सिद्धिं प्राप्य दिव्यान् भोगान् समनुभवितुं कामचारे कामुकः सरसनिचुलात् अस्मात् स्थानात् उदङ्मुखः ( सन् ) खं सद्यः उत्पत ।

तस्मादित्यादि । तस्मात् मुग्धसिद्धाङ्गनाभिः पातशङ्काकुलत्वेन दृष्टत्वात् अदः तत् प्रोक्तं समुचितं सुयोग्यं । ' उचितं तु समञ्जसे । अनुमत्यां मिताभ्यस्तज्ञातेषु त्रिषु च त्रिषु ' इति विश्वलोचने । दिव्यजीमूतरूपं । दिव्यं दिविभवमतः एव वल्गु सुन्दरं जीमूतस्य मेघस्य रूपमाकारस्तम् । जीवनस्य जलस्य मूतः बन्धः जीमूतः । पृषोदरादित्वात् साधुः । ' दिव्यं तु वल्गौ दिविभवेऽन्यवत् ' इति ' जीमूतो जलदे शक्रे घोषेऽपि वृद्धिजीविनि । देवताडेऽपि जीमूतो जीमूतः पर्वतेऽपि च ' इति च विश्वलोचने । कृत्वा विरच्य विद्युत्प्रसवसमये तडिदुत्पत्तिकाले वधूनां कान्तार्थिनीनां सङ्केतं यातुकामानां स्त्रीणां । ' वधूः स्नुषायां भार्यायां वधूर्योषिन्नवोढयोः । शठ्यां च सारि-

वायां च स्पृक्कायां च मता वधूः ' इति विश्वलोचने । सिद्धिं सङ्केताभिप्रापणकार्यसिद्धिं प्राप्य प्रापय्य । अन्तर्भावितण्यर्थत्वात्प्रापय्येत्यर्थः । सङ्केताभिप्रापणरूपं कार्यं निष्पत्तिं गमयित्वेत्यर्थः । 'सिद्धिर्निष्पत्तियोगयोः । सद्व्याख्याभेषजे सिद्धिः सिद्धिर्वृद्ध्याख्यभेषजे' इति विश्वलोचने । यद्वाऽभिलषितार्थनिष्पत्तिं विधायेत्यर्थः । दिव्यान् दिविभवान्नत एव मनोहरान् भोगान् सुखानि सुखोत्पादकान्पञ्चेन्द्रियविषयान्वा । 'पुंसि भोगः सुखेऽपि स्यादहेश्च फणकाययोः । निर्वेशे गणिकादीनां भोजने पालने वने' इति विश्वलोचने । यद्वा स्वर्गस्त्रीणां निर्वेशान् इति स्वर्ग्यस्त्रीभिः विषयसुखानीति वाऽभिप्रायः । समनुभवितुं अनुभूतिगोचरतां नेतुं । भोक्तुमित्यर्थः । कामचारे स्वैरविहारार्थं । 'हेतौ सर्वाः प्रायः' इति हेतावीप् । कामुकः अभिलाषुकः त्वं । सरसनिचुलात् । सरसाः प्रत्यग्राः आर्द्राः वा निचुलाः हिज्जलाः स्थलवेतसाः यस्मिंस्तस्मात् । 'निचुलस्तु निचोले स्यान्निचुलो हिज्जलद्रुमे' इति विश्वलोचने । 'वानीरे कविभेदे स्यान्निचुलः । स्थलवेतसे' इति शब्दार्णवे । अस्मात् स्थानात् यत्र भगवान् ध्यानैकतानः आसीत् तस्मात् स्थानात् । यद्वा यत्र भगवान् मुग्धसिद्धाङ्गनाभिः चकितचकितं दृष्टस्तस्मात्स्थानात् । उदङ्मुखः उदीचीनमुखः सन् खं आकाशं सद्यः सपदि । 'सद्यः सपदि तत्क्षणे' इत्यमरः । उत्पत उद्गच्छ । अलकाया उदीचीनत्वात् उदक्तात् प्रस्थानं कुर्वित्यभिप्रायः । यस्ततः मुग्धसिद्धाङ्गनाः भवत्पातशङ्काकुलाश्चकितचकितास्ततस्तस्मात्सरसनिचुलस्थानादलकामभियियासुरुदीचीनमुखीभूय शीघ्रतरमग्रे गच्छ येन तासां भयाकुलीकृतस्वान्तानां भवत्पातशङ्काजनितं भयं विद्रुतं स्यादिति कमठचरयक्षाभिप्रायः ।

You, desirous of moving ( or travelling ) at your own will to enjoy the most excellent heavenly pleasures, having assumed that proper and celestial form of a cloud and having fulfilled the desires of women at the time of manifesting the flashes of lightning, should, with your face turned northwards, fly up in the sky very quickly form that place overgrown with fresh Nichula grass for that reason ( i. e. for your being looked at with a fear of your down fall by thesimple beautififul women of the Siddhas. ) to go your journey.

दिग्भ्यो बिभ्यत्कथमिव पुमान्भीलुकस्तत्र गच्छे-
दुल्लङ्घ्याद्रीन्विषमसरितो दुर्गमांश्च प्रदेशान् ।
तन्मा रोदीर्व्रज सुनिपुणं व्योममार्गानुसारी
दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान् ॥ ५६ ॥

अन्वयः—दिग्भ्यः बिभ्यत् भीलुकः पुमान् अद्रीन् विषमसरितः दुर्गमान् च प्रदेशान् उल्लङ्घ्य तत्र कथमिव गच्छेत्? तत् मा रोदीः। व्योममार्गानुसारी (त्वं) पथि दिङ्नागानां स्थूलहस्तावलेपान् परिहरन् सुनिपुणं व्रज।

**दिग्भ्य** इत्यादि। **दिग्भ्यः** दिशाभ्यः **बिभ्यत्** भीतिं प्राप्नुवन् **भीलुकः** भीरुः। 'भीरुभीरुकभीलुकाः' इत्यमरः। 'भ्यः क्रुक्लुकौ' इति क्लुक्। **पुमान्** मनुष्यः **अद्रीन्** पर्वतान् **विषमसरितः**। विषमाः दुर्गाश्च ताः सरितः नद्यः विषमसरितः। **दुर्गमान्** च दुर्लङ्घ्यान्। दुःखेन गम्यन्ते इति दुर्गमाः। तान्। **प्रदेशान्** स्थानानि। दुराटाटवीस्थानानीत्यर्थः। उल्लङ्घ्य अतीत्य **तत्र** तस्मिन् कमठचरशम्बरासुरप्रदर्शितमार्गे **कथमिव गच्छेत्** कथं गन्तुं शक्नुयात्? 'शकि लिङ् च' इति शक्यर्थे लिङ्। कथमपि गन्तुं न शक्नुयादिति भावः। यस्य स्वभावभीरोः भयकारणाभावेऽपि दिग्भ्योऽपि भयं जायते तस्याद्र्यादिदुर्गदेशरूपभयकारणे विद्यमाने सति तेनानृजुना मार्गेण कथमपि गमनं न सम्भवतीत्यभिप्रायः। **तत्** तस्य भयकारणस्य विद्यमानत्वात् स्वस्य भीरुत्वात् तत्र गमनप्रसङ्गमनुलक्ष्य **मा रोदीः** रोदनं मा कुरु। तव गगनगामित्वात् भयकारणानां च भूप्रदेशस्थितत्वात् नास्त्यत्र विषये रोदनकारणमिति कमठचराभिप्रायः। **व्योममार्गानुसारी**। व्योमैव व्योम्नि वा मार्गः व्योममार्गः। तमनुसरतीति व्योममार्गानुसारी। आकाशमार्गेण गन्तुं क्षमः इत्यर्थः। त्वं **पथि** मार्गे **दिङ्नागानां** दिग्गजानां। **स्थूलहस्तावलेपान्**। स्थूलानां पीवराणां हस्तानां शुण्डादण्डानां अवलेपाः गर्वाः। तान्। 'अवलेपस्तु दोषे स्याद्गर्वे लेपे च सङ्गमे' इति 'द्वयोस्तु हस्तो नक्षत्रे हस्तः करिकरे करे। सप्रकोष्ठाततकरे हस्तः केशात्परश्चये' इति च विश्वलोचने। **परिहरन्** खर्वीकुर्वन्। दूरीकुर्वन्नित्यर्थः। **सुनिपुणं**। क्षेमं यथा स्यात्तथा **व्रज** गच्छ। यद्यपि भीरुत्वात्तेन मार्गेण गन्तुमक्षमो भवान् तथापि भवत आकाशगामित्वात्तस्य मार्गस्य तादृशत्वेऽपि न ते कथमपि कुतोऽपि भयं सम्भवेदिति भावः।

How can a timid one, afraid of the quarters (even), travel by that (way.) while travelling whereon he has to transgress mountains, cross impassable rivers and inaccessible regions? Do not lament for that reason. You possessing the capacity of moving through the sky, proceed on without any injury being done to you, quelling, on your way, the pride taken by the quarter-elephants in the bigness of their trunks.

प्रस्थाने ते विरचितमितस्तोरणं नूनमुच्चैः
काञ्चीदाम श्लथितमथवा स्वर्गलक्ष्म्याः किमेतत् ।
वर्णोपघ्नं धनुरुत समाविर्भवत्यत्युदग्रं
रत्नच्छायव्यतिकर इव प्रेक्ष्यमेतत्पुरस्तात् ॥ ५७ ॥

नूनं भूम्यान्तरितविसरं भोगिमूर्धन्यरत्न-
ज्योतिश्चक्रं वियति किमितो दृश्यते भूमिरन्ध्रात् ।
प्रायेणेदं दिनकरकराश्लिष्टमेघाश्रितं यद्-
वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ॥ ५८ ॥

अन्वयः—( यत् ) एतत् पुरस्तात् रत्नच्छायव्यतिकरः इव समाविर्भवति तत् ते प्रस्थाने उच्चैः विरचितं नूनं तोरणम् ? अथवा एतत् स्वर्गलक्ष्म्याः श्लथितं काञ्चीदाम किम् ? उत ( एतत् ) अत्युदग्रं वर्णोपघ्नं धनुः, नूनं ( यत् ) इतः भूमिरन्ध्रात् वियति दृश्यते ( तत् ) भूम्या अन्तारितविसरं भोगिमूर्धन्यरत्नज्योतिश्चक्रं किम् ? यत् इदं वल्मीकाग्रात् प्रभवति तत् प्रायेण दिनकरकराश्लिष्टमेघाश्रितं आखण्डलस्य धनुःखण्डम् ।

**प्रस्थाने** इत्यादि युग्मम् । यत् एतत् इदं **पुरस्तात्** अग्रे । 'पुरस्तात् प्रथमे प्राच्यामग्रतोर्थपुरार्थयोः' इति विश्वलोचने । **रत्नच्छायव्यतिकर इव** । रत्नानां मणीनां छायाः सत्कान्तयः रत्नच्छायं । 'छाया बहूनां' इति छायान्तपरत्वान्नप्त्वम् । एकरत्नच्छायायाः एकत्वाद्व्यतिकरस्याऽसम्भवात् पूर्वपदस्यबहुत्वम् । 'रत्नच्छायाव्यतिकरः' इति पाठे तु पूर्वपदोक्तरत्नार्थस्य बहुत्वेऽपि 'सेनासुराच्छायाशालानिशा वा' इति छायान्तस्य पसः पूर्वपदोक्तार्थबाहूल्येऽपि नप्त्वस्य वैकल्पिकत्वान्नप्त्वभावः । 'छाया स्यादातपाभावे सत्कान्त्युत्कोचकान्तिषु । प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने । रत्नच्छायानां व्यतिकरः व्यतिषङ्गः रत्नच्छायाव्यतिकरः । 'भवेद्व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः' इति विश्वलोचने । सः इव **प्रेक्ष्यं** प्रेक्षणार्हं । 'तृज्व्याश्चार्हे' इत्यर्हेऽर्थेव्यः । **ते** तव मेघरूपधारिणः मरुभूतिचरस्य । **प्रस्थाने** गमनकाले । **समाविर्भवति** प्रादुर्भवति । 'प्रस्थानं गमनं गमः' इत्यमरः । तदेतत् । **उच्चैः** उन्नतं यथा स्यात् तथा **विरचितं** आरचितं **नूनं** वितर्के । संशये इत्यर्थः । 'नूनं तर्केऽर्थनिश्चये' इत्यमरः । **तोरणं** द्वारभूषणं आम्रपत्रपुष्पादिविरचितं मङ्गलकार्ये गृहद्वाराग्रे निबध्यते तत् । रत्नच्छायव्यतिकर इव प्रेक्षणार्हमिदं पुरस्ताद् दृश्यमानं किं तोरणमुतान्यत्किञ्चित् इति

द्विष्ठत्वात्संशयस्य किञ्चित्साहश्यनिबन्धनत्वात्संशयोऽयम्। **अथवा** किंवा। द्वितीयां कोटिं संशयस्य व्याचष्टे। एतत् अग्रतो दृश्यमानमिदं **स्वर्गलक्ष्म्याः** दिव्यश्रियः। दिविभवायाः लक्ष्मीतुल्यविभ्रमायाः अङ्गनायाः इति वार्थः। **श्लथितं** शिथिलीभूतं **काञ्चीदाम** मेखलादाम। 'काञ्ची तु मेखलादाम्नि नीवृदन्तरगुञ्जयोः' इति विश्वलोचने। काञ्ची दाम मालेव काञ्चीदाम। किम् प्रश्ने। 'किं प्रश्नकुत्सयोः' इति विश्वलोचने। रत्नच्छायव्यतिकर इव प्रेक्षणीयस्य दर्शने जाते सति सञ्जतसंशयस्य जिज्ञासोरयं प्रश्नः। प्रेक्ष्यमाणस्य तस्य रत्नखचितकाञ्चीदाम्ना तुल्यत्वादसञ्जातनिर्णयस्य संदिहानस्य 'किमिदं काञ्चीदाम' इति प्रश्नः इत्यभिप्रायः। **उत** विकल्पे वितर्के वा। 'उत प्रश्ने वितर्केऽर्थेऽप्युतात्यर्थविकल्पयोः' इति विश्वलोचने। एतत् **अत्युदग्रं**। ऊर्ध्वमग्रमस्य उदग्रं। उच्छ्रितमित्यर्थः। अत्युदग्रमत्युच्छ्रितमित्यर्थः। 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः। **वर्णोपघ्नं**। वर्णैरुपहन्यते सामीप्येन गम्यते इति वर्णोपघ्नं। 'घनान्तर्घणोद्घनापघनोपघ्नसङ्घोद्घनिघं मूर्तिदेशात्याधानाङ्गासन्नगणशस्तनिमित्ते' इत्युपपूर्वाद्धन्तेराश्रयेऽभिधेयेकः निपात्यते घ्नश्च। नानाविधवर्णाश्रितमित्यर्थः। धनुः चापः। किम्? **नूनं** वितर्के। **इतः** अस्मात् **भूमिरन्ध्रात्**। भूमेः भुवः रन्ध्रं बिलं भूमिरन्ध्रं। तस्मात्। **वियति** आकाशे दृश्यते दृक्पथमवतरति तत् तस्मात् **भूम्या** मेदिन्या। **अन्तरितविसरं**। अन्तरितः व्यवहितः विसरः प्रसरः यस्य तत्। विसरः प्रसरः पुंसि विसरो निकुरम्बके' इति विश्वलोचने। **भोगिमूर्धन्यरत्नज्योतिश्चक्रं**। भोगः फणः अस्य अस्तीति भोगी। फणाभृत्। 'पुंसि भोगः सुखेऽपि स्यादहेश्च फणकाययोः' इति 'भोगी भोगान्विते सर्पे ग्रामण्यां राज्ञि नापिते' इति च विश्वलोचने। भोगिनः फणाभृदिन्द्रस्य मूर्धन्यानि मूर्ध्नि भवानि च तानि रत्नानि मणयः भोगिमूर्धन्यरत्नानि। 'देहाङ्गात्' इति भवार्थे यः। तेषां ज्योतिषां तेजसां चक्रं इव चक्रं। वलयमित्यर्थः। 'ज्योतिस्ताराग्निभाज्वाला दृक्पुत्राध्वरात्मसु' इति वैजयन्ती। 'चक्रं सैन्ये रथाङ्गेऽपि आम्रजालेऽम्भसाम्भ्रमे। कुलालकृत्यनिष्पत्तिभाण्डे राष्ट्राग्निभेदयोः' इति विश्वलोचने। किम्? **यत् इदं** यदेतत् वल्मीकाग्रात्। वल्मीकस्य वामलूरस्य अग्रमूर्ध्वभागः वल्मीकाग्रं। तस्मात्। 'वल्मीको वामलूरे स्यान्मुनिरोगविशेषयोः' इति विश्वलोचने। 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकं' इत्यमरः। **प्रभवति** प्रादुर्भवति **तत् प्रायेण** बाहुल्येन। **दिनकरकराश्लिष्टमेघाश्रितं**। दिनकरस्य सूर्यस्य करैः किरणैः आश्लिष्टः आक्रान्तः दिनकरकराश्लिष्टः। स चाऽसौ मेघश्च। तमाश्रितं। **आखण्डलस्य** शचीपतेः। 'सङ्क्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः। आखण्डलः सहस्राक्षः ऋभुक्षाः' इत्यमरः। **धनुःखण्डम्**। धनुषः खण्डं धनुःखण्डं। "इन्द्रचापं किल वल्मीकान्तर्व्यवस्थितमहानागशिरोमणिकिरणसमूहा-

त्समुत्पद्यते । 'सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः साभ्रे । वियति धनुःसंस्थानाः ये दृश्यन्ते तदिन्द्रधनुः'॥" इति वराहमिहिरः । निश्चयान्तेयं सन्देहालङ्कृतिः । 'स्यातां विषयतद्वन्तौ सन्देहविषयौ कवेः । सादृश्यात्सन्मयतात्र सन्देहालङ्कृतिर्मता ॥ शुद्धा निश्चयगर्भा च निश्चयान्तेति सा त्रिधा । शुद्धा यथा च सन्देहमात्रपर्यवसायिनि ।' इत्यलङ्कारचिन्तामणौ ।

Is this, that is being manifested very high up in the sky in front of us and that is worthy of being enjoyed sight of like a commixture of the lustres of various jewels, a garland tied high up at the time of your departure ( or a canopy, a lofty construction erected at the time of your departure ) or is this the loosened girdle of the celestial Laxmi ( the heavenly beautiful lady or the beauty of heaven in-carnate ) or is this a multicoloured bow ? Is this, that is being seen emanating from this hole of the earth and rising high up in the sky, verily a prismatic circle formed by the lustre issuing from the head-jewel of a cobra de capello, the expansion of which is prevented by the earth ? That this which originates from the top of the ant-hill is,most probably, a piece of Indra's bow resorting to the clouds intermixed ( or intermingled ) with the rays of the sun.

खड्गस्यैकं कथमपि दृढं मे सहस्व प्रहारं
वक्षोभागे कुलिशकठिने प्रोच्छलद्रक्तधारम् ।
विद्युद्दण्डस्फुरितरुचिना वारिदस्येव भूयो
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते ॥ ५९ ॥

अन्वयः— कुलिशकठिने वक्षोभागे प्रोच्छलद्रक्तधारं मे खड्गस्य एकं दृढं प्रहारं कथं अपि सहस्व, येन ते श्यामं वपुः विद्युद्दण्डस्फुरितरुचिना वारिदस्य वपुः इव अतितरां कान्तिं भूयः आपत्स्यते ।

खड्गस्येत्यादि । कुलिशकठिने । कुलिशस्य वज्रस्य इव कठिने कर्कशे । दुर्भेद्ये इत्यर्थः । 'कुलिशं पवौ' इति विश्वलोचने । 'वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः' इत्यमरः । वक्षोभागे । वक्षः उरः एव भागः एकदेशः शरीरस्य । तस्मिन् । 'भागो रूपार्धकांशयोः । एकदेशे च भाग्ये च विपूर्वस्तु विभञ्जने' इति विश्वलोचने । प्रोच्छलद्रक्तधारम् । प्रोच्छलन्ती रक्तस्य रुधिरस्य धारा प्रवाहः येन यस्मात् वा हेतुभूतात् । मे मम खड्गस्य निस्त्रिंशस्य । 'खड्गः खड्गिनि निस्त्रिंशे खड्गिशृङ्गे

जिनान्तरे ' इति विश्वलोचने । एकं दृढं प्रहारं एकं स्थूलं आघातं । ' स्याद् दृढः स्थूलबलिनोः दृढं बाढप्रगाढयोः ' इति विश्वलोचने । कथमपि महता कष्टेन अपि सहस्व अनुभव । येन प्रोच्छलद्रक्तधारेण प्रहारेण ते मरुभूतिचरस्य पार्श्वस्य श्यामं कृष्णवर्णं । ' श्यामस्तु हरिते कृष्णे प्रयागस्य वटद्रुमे । पिके पयोधरे वृद्धदारकेऽपि पुमानयम् । श्यामवर्णे हरिद्वर्णे ' इति विश्वलोचने । वपुः शरीरं । विद्युद्दण्डस्फुरितरुचिना विद्युदेव दण्डः विद्युद्दण्डः । विद्युद्दण्डस्य दण्डाकारधारिण्याः विद्युतः स्फुरिता प्रज्वलिता या रुचिः तेजः । तेन । वारिदस्य मेघस्य वपुः इव अतितरां अधिकतरां कान्तिं शोभां भूयः बाहुल्येन आपत्स्यते प्राप्स्यति ।

*Endure anyhow one heavy stroke of my sword, making your blood gush out on your breast which is as hard as an adamant, by which your body would assume beauty exceedingly like that of a cloud possessing the lustre of the flashes of lighting.*

**शङ्कोरेकं प्रहृतमथवा धत्स्व शूराग्रणीर्मे**
**पिच्छोपाग्रप्रततिरुचिरं येन शोभाऽधिका ते ।**
**क्रीडाहेतोर्विरचिततनोरिन्द्रनीलत्विषः स्याद्-**
**बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ ६० ॥**

अन्वयः—अथवा शूराग्रणीः पिच्छोपाग्रप्रततिरुचिरं मे शङ्कोः एकं प्रहृतं धत्स्व, येन स्फुरितरुचिना बर्हेण क्रीडाहेतोः विरचिततनोः इन्द्रनीलत्विषः गोपवेषस्य विष्णोः इव ते अधिका शोभा स्यात् ।

शङ्कोरित्यादि । अथवा किंवा शूराग्रणीः वीरश्रेष्ठः । शूराणां अग्रणीः अग्रेसरः शूराग्रणीः । पिच्छोपाग्रप्रततिरुचिरं । रुचिं शोभां राति समन्ताद्दत्ते इति रुचिरं शोभावहं । ' रुचिरिच्छा रुचा रुक्ता शोभाभिष्वङ्गयोरपि ' इति विश्वलोचने । पिच्छस्य उपाग्रं अग्रोपान्तप्रदेशः पिच्छोपाग्रं । पिच्छोपाग्रस्येव प्रततिः विरचना पिच्छोपाग्रप्रततिः । तया रुचिरं शोभावहं । मयूरबर्हापाग्रे या विरचना तया तुल्या बाणाग्रस्योपान्ते या विरचना तया शोभावहमित्यर्थः । मे मम शङ्कोः बाणस्य । ' शङ्कुः कीले शिवे सङ्ख्यायादोऽस्त्रभिदि किल्बिषे ' इति विश्वलोचने । तच्चास्त्रं नाराच एव ' वा पुंसि शल्यं शङ्कुर्ना ' इत्यमरोक्तेः । एकं प्रहृतं एकं प्रहारं आघातं । ' नपुंसके भावे क्तोऽभ्यादिभ्यः ' इति भावे क्तः नप् च । धत्स्व धेहि । सहस्वेत्यर्थः । येन प्रहृतेन-

शरीरान्तः प्रविश्य स्थितेन नाराचेन **स्फुरितरुचिना** प्रकटितकान्तिना **बर्हेण** मायुरेण पिञ्छेन **क्रीडाहेतोः** क्रीडायाः कृते **विरचिततनोः** अलङ्कृतस्वशरीरस्य । विशेषेण रचिता अलङ्कृता तनुः शरीरं येन यस्य वा तस्य । **इन्द्रनीलत्विषः** हरिन्मणितुल्यकान्तेः हरितुल्यनीलकान्तेर्वा । इन्द्रस्येव नीला हरिद्वर्णा त्विट् कान्तिः यस्य सः । यद्वा इन्द्रनीलस्येव हरिन्मणेः इव त्विट् कान्तिः यस्य सः । **गोपवेषस्य** आभीरवेषस्य । वल्लववेषधारिणः इत्यर्थः । गोपस्य आभीरस्य वेषः इव वेषः यस्य सः । यद्वा गोपस्येव वेषः यस्य सः । 'इन्नुपमापूर्वस्य तुल्यं गतार्थत्वात्' इत्युपमानपूर्वपदस्य गतार्थत्वाद्ग्युभूतस्य वेषशब्दस्य खं । **विष्णोः इव** बलदेवभ्रातुः शार्ङ्गिण इव **ते भवतः अधिका शोभा स्यात्** अधिकं शोभमानो भविष्यसीत्यर्थः । 'प्रततिर्वृततौ ततौ' इति विश्वलोचने । त्वयि प्रहृतत्वात् त्वच्छरीरप्रविष्टं शङ्कुं मोत्पाटय । तेन त्वच्छरीरप्रविष्टेन नाराचेन गोपवेषस्य विष्णोरिव ते शोभा अधिका स्यादिति तात्पर्यम् ।

Or, oh! you, the foremost of warriors, should bear, thus only one charge of my arrow, assigning beauty owing to its construction like that of the hinder part of the eye of the peacock's feather, by means of which your beauty, like that of Vishnu, clad in clothes like those of a milkman, possessing a blue-dark complexion, having his body decorated for the sake of sports with shining feathers of a peacock, would be enhanced.

**आस्तां तावत्प्रहरणकथा स्वर्ययाऽर्ज्यं तवाऽयं**
**मार्गः स्वर्जो वियदभिपतेः प्रागमुष्मात्प्रदेशात् ।**
**जीमूतत्वं दधदनुगतः क्षेत्रिणां दृष्टिपातैः**
**त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः ॥ ६१ ॥**

अन्वयः—यया स्वः तव अर्ज्यं सा प्रहरणकथा तावत् आस्तां । अयं स्वर्जः मार्गः । 'कृषिफलं त्वयि आयत्तं' इति भ्रूविलासानभिज्ञैः क्षेत्रिणां दृष्टिपातैः अनुगतः जीमूतत्वं दधत् अमुष्मात् प्रदेशात् वियत् अभिपतेः ।

**आस्तामित्यादि । यया** प्रहरणकथया **स्वः** स्वर्गः । 'स्वर्गे परे च लोके स्वः' इत्यमरः । **तव अर्ज्यं** त्वया प्रापणीयं । 'व्यस्य वा कर्तरि' इति व्यान्तप्रयोगे कर्तरि ता । **सा प्रहरणकथा** सा युद्धवार्ता । प्रह्रियते अस्मिन् इति प्रहरणं । युद्धमित्यर्थः । 'करणाधारे चानट्' इत्याधारेऽनट् । यद्वा प्रह्रियतेऽनेनेति प्रहरणमायुधं । करणेऽनऽत्र ।

तेनायुधवार्तेत्यर्थः। पूर्वश्लोकोक्ता 'मे सहस्व प्रहारं' इत्येवंजातीयाऽऽयुधकथा। 'आयुधं तु प्रहरणं' इत्यमरः। **तावत् आस्तां** इदानीं परिहरतु भवान्। **अयं स्वर्जः मार्गः** यः भवन्तं स्वर्गं प्रापयिष्यति स मार्गः अयं। स्वर्जः स्वर्गे जायते इति स्वर्जः। **कृषिफलं**। कृषिः हलादिना भुवः कर्षणं। तस्याः फलं सस्योत्पत्त्यादिकं। **त्वयि भवति आयत्तं** अधीनं। 'अधीनो निघ्न आयत्तः' इत्यमरः। हलादिना क्षेत्रेषु कृष्टेष्वपि भवत्कृपामन्तरेण सस्योत्पत्त्यसम्भवात्कृषिफलं भवदधीनमेव। **इति** इति हेतोः। 'इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः' इति विश्वलोचने। **भ्रूविलासानभिज्ञैः**। भ्रुवोः भ्रुकुट्योः विलासाः सङ्कोचविकासादिक्रीडाः। तासां अनभिज्ञैः ज्ञानेन विकलैः। अज्ञातसङ्कोचविकाशैः। अनिमिषैरित्यर्थः। **क्षेत्रिणां** क्षेत्राजीवानां कृषीवलानां। **दृष्टिपातैः** नायनैर्व्यापारैः। **अनुगतः** अनुसृतः। **जीमूतत्वं** मेघत्वं। जीवनस्य मूतः बन्धः जीमूतः। पृषोदरादित्वात्साधुः। **दधत्** धारयन्। मेघाकारपरिणतिस्त्वं। **अमुष्मात् प्रदेशात्** एतस्मात् भुवो भागात्। **वियत् अभिपतेः** आकाशप्रदेशं प्रत्यभिमुखीभूय तत्र गच्छेः।

Let the talk of a fight by means of which heaven is to be attained be aside for a while. This is the way leading to the heaven. First of all, you, assuming the from of a cloud followed by the farmer's eyes ignorant of the sportive movements of the eyebrows with the idea that the fruit of the agricultural labour is dependent on you, should fly up to the sky from this place.

विद्युन्मालाकृतपरिकरो भास्वदिन्द्रायुधश्री—
रुद्यन्मन्द्रस्तनितसुभगः स्निग्धनीलाञ्जनाभः।
शीघ्रं यायाः कृतकजलद त्वत्पयोबिन्दुपात-
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः॥ ६२॥

अन्वयः— हे कृतकजलद! विद्युन्मालाकृतपरिकरः, भास्वदिन्द्रायुधश्रीः, उद्यन्मन्द्रस्तनितसुभगः, स्निग्धनीलाञ्जनाभः, त्वत्पयोबिन्दुपातप्रीतिस्निग्धैः जनपदवधूलोचनैः पीयमानः (त्वं) शीघ्रं यायाः।

**विद्युदित्यादि**। हे कृतकजलद भो कृत्रिममेघ। अनैसर्गिकमेघ। प्रकृतमेघस्य मरुभूतिचरपार्श्वजिनाविकारत्वेन कल्पितत्वात्कृतकत्वम्। जलदेतितज्ञाविधानं भाविनैगमनयापेक्षं द्रव्यनिक्षेपापेक्षं वा। **विद्युन्मालाकृतपरिकरः**। विद्युतां सौदामनीनां माला परम्परा विद्युन्माला। तया कृतः विहितः परिकरः व्यतिषङ्गः येन सः। विद्यु-

न्मालाश्लिष्टस्वेदहः इत्यर्थः । भास्वदिन्द्रायुधश्रीः भास्वरेन्द्रधनुस्सौन्दर्यः । भास्वतः दीप्यमानस्य इन्द्रायुधस्य इन्द्रधनुषः श्रीरिव श्रीः यस्य सः । 'इवुपमानपूर्वस्य द्युखं गतार्थत्वात्' इति द्युखं । उद्यन्मन्द्रस्तनितसुभगः प्रादुर्भवता गम्भीरगर्जितेन मनोहरः । उद्यत् प्रादुर्भवत् मन्द्रं गम्भीरं च तत्स्तनितं गर्जितं उद्यन्मन्द्रस्तनितं । तेन सुभगः मनोहरः । 'कलो मन्द्रस्तु गम्भीरे' इत्यमरः । स्तनितं स्तनः गर्जितध्वनिः । 'नब्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च । स्निग्धनीलाञ्जनाभः तैलार्द्रीकृतनीलरसाञ्जनवर्णः । स्निग्धं तैलार्द्रीकृतं च तन्नीलं कृष्णवर्णं अञ्जनं रसाञ्जनं स्निग्धनीलाञ्जनं । तस्य आभा इव आभा प्रभा यस्य सः । पूर्ववद्द्युखम् । त्वत्पयोबिन्दुपातप्रीतिस्निग्धैः भवज्जलपृषत्पतनसञ्जनितप्रीतिप्राप्तस्नेहैः तव पयः त्वत्पयः । त्वत्पयसः बिन्दवः पृषन्ति त्वत्पयोबिन्दवः । तेषां पातैः सञ्जनितया प्रीत्या स्निग्धाः आविर्भूतस्नेहाः । तैः । जनदपवधूलोचनैः देशीयस्त्रीनयनैः । जनानां पदं स्थानं जनपदः । पुंस्त्वं लोकात् । जनपदवास्तव्याः वध्वः जनपदवध्वः । तासां लोचनैः नयनैः । पीयमानः नितरां सादरं वीक्ष्यमाणः । त्वं शीघ्रं झटिति यायाः गच्छेः । जानपदवधूकृतातिथ्यत्वात्तत्र कालयापनं मा कार्षीरिति भावः ।

Oh artificial cloud! you, intermingled with the diffusion of the successive flashes of lightnings, possessing lustre of the shining Indra's bow, pleasant owing to the production of grave thunderings, possessing an appearance like that of collyrium wetted with oil, drunk by the eyes of the village women that would be full of affection felt through the pleasure enjoyed by them owing to the discharge of the drops of your water, should proceed on hurriedly.

> दृश्यान्देशाञ्जलद सकलान्प्रेक्ष्य सिंहावलोकात्-
> तत्रत्यानां जनपदभुवां तापमाहृत्य पश्चात् ।
> प्रीत्यासन्नं जनपदमिमं लङ्घयालं विलम्ब्य
> सद्यःसीरोत्कषणसुरभिक्षेत्रमारुह्य मालं ॥ ६२ ॥

अन्वयः— हे जलद ! सकलान् दृश्यान् देशान् सिंहावलोकात् प्रेक्ष्य तत्रत्यानां जनपदभुवां तापं आहृत्य पश्चात् सद्यः सीरोत्कषणसुरभिक्षेत्रं मालं आरुह्य इमं आसन्नं जनपदं प्रीत्या लङ्घय, विलम्ब्य अलम् ।

दृश्यानित्यादि । हे जलद ! मेघ सकलान् निखिलान् दृश्यान् दर्शनार्हान् ।

'तृज्याश्चार्हे' इत्यर्हार्थे व्यत्यः। देशान् विषयान् सिंहावलोकात् सिंहवत्पश्चादवलोक्य। सिंहस्येवावलोकः सिंहावलोकः। तस्मात्। यद्वा एत्य अवलोक्यते अस्मिन्नित्यवलोकः। अवलोकनस्थानमित्यर्थः। 'पुंसो घः प्रायः' इत्याधारे घः। सिंहस्य अवलोकः अवलोकस्थानं सिंहावलोकः। तस्मात्। अत्युन्नतस्थानादित्यर्थः। उन्नततमात्स्थानात् सकलान् प्रेक्ष्येत्यर्थः। प्रेक्ष्य अवलोक्य तत्रत्यानां तत्र भवानां तत्र जातानां वा। 'क्वामेहाविस्तसूयात्यच्' इति शेषार्थे त्यच्। जनपदभुवां। जनपदे देशे भवन्तीति जनपदभुवः। तेषां। जानपदानामित्यर्थः। तापं ऊष्माणं दुःखं वा आहृत्य परिहृत्य। विनिवार्येत्यर्थः। पश्चात् अनन्तरं सद्यःसीरोत्कषणसुरभिक्षेत्रं तत्क्षणे हलफालप्रकृष्टत्वात् त्वज्जलबिन्दुपातार्द्रीकृतत्वात् जनितसौगन्ध्यक्षेत्रं। सद्यः तत्क्षण एव सीरेण हलफालेन उत्कषणं कर्षणं सद्यःसीरोत्कषणं। तेन सुरभीणि जनितसौरभाणि क्षेत्राणि केदाराणि यत्र तत्। 'सीरस्तु लाङ्गले पुंसि सीरो दिनपतावपि' इति विश्वलोचने। 'क्षेत्रं शरीरे दारेषु केदारे सिद्धसंश्रये' इति विश्वलोचने। मालं उन्नतभूप्रदेशं। 'मालमुन्नतभूतलम्' इत्युत्पलमालायाम्। आरुह्य उत्प्लुत्य इमं आसन्नंजनपदं प्रत्यासन्नममुं देशं प्रीत्या प्रमोदेन लङ्घय अतिक्रामस्व। विलम्ब्य अलं विलम्बं मा कार्षीः। 'निषेधेऽलंखल्वोः क्त्वा' इति निषेधार्थेऽलमः प्रयोगे क्त्वा।

Oh cloud! casting your glance backwards like a lion at all the provinces worthy of being enjoyed sight of and having dispelled the troubles of those that live in the country regions forming the constituent parts of those provinces, and afterwards having ascended the elevated part of the ground the fields whereon being ploughed very recently would be emitting fragrance, you should pass over the region that is in the vicinity very delightfully; you should not delay at all.

यद्यौत्सुक्यं तव जनपदप्रेक्षणे दीर्घकालं
प्रत्यावृत्तस्वविषयरतेरस्ति भिक्षो कदाचित्।
तत्पेपीयस्व परिसरितं दक्षिणाशां भ्रमित्वा
किञ्चित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥ ६४ ॥

अन्वयः— भिक्षो, यदि दीर्घकालं प्रत्यावृत्तस्वविषयरतेः तव जनपदप्रेक्षणे कदाचित् औत्सुक्यं अस्ति तत् परिसरितं किञ्चित् भ्रमित्वा दक्षिणाशां पेपीयस्व। पश्चात् लघुगतिः भूयः उत्तरेण एव व्रज।

यदीत्यादि। भिक्षो मुने! यदि चेत् दीर्घकालं महत्कालं यावत्। 'कालाध्वनोरविच्छेदे' इति इप्। प्रत्यावृत्तस्वविषयरतेः विनष्टविषयाकाङ्क्षस्य। प्रत्यावृत्ता दूरीभूता विनष्टा स्वस्य विषयरतिः विषयाकाङ्क्षा विषयासाक्तिर्वा यस्य सः। तस्य। तव भवतः। जनपदप्रेक्षणे जनपदावलोकनार्थे। 'हेतौ सर्वाः प्रायः' इति हेतावीप्। जनपदानां नीवृतां (देशानां) प्रेक्षणं अवलोकनं जनपदप्रेक्षणं। तस्मिन्। कदाचित् कस्मिन्चित्काले औत्सुक्यं उन्मनायितत्वं (उत्कण्ठा वा) अस्ति भविष्यति। 'लोटि हेतौ' इति वर्त्स्यति लट्। तत् तर्हि परिसरितं सरितं नदीं वर्जयित्वा। अत्र परिशब्दो वर्जनार्थः। 'परि...दोषाख्यानेऽपि वर्जने' इति विश्वलोचने। तस्यात्र वर्जनार्थत्वं तु सस्य ह्रस्वत्वात् वर्जनार्थेनैव परिणा ह्रसस्य शब्दशास्त्रेण विहितत्वात्। 'पर्यपाङ्बहिरञ्चः' इति वर्जनार्थस्य परिशब्दस्य सुबन्तेन सः विहितः। एतत्सूत्र-व्याख्यायां यत् 'परित्रिगर्तं वृष्टो देवः। परि त्रिगर्तेभ्यः' इत्युदाहृतं तत्र 'परि त्रिगर्तेभ्यः' इत्यत्र 'त्रिगर्तेभ्यः' इत्यस्य कान्तत्वं 'वर्ज्येऽपपरिभ्यां' इत्यनेनैव सम्भवति, नान्यथा। अतोऽत्र ह्रसत्वात्परिशब्दः वर्जनार्थ एव ग्राह्यः। ततश्च 'परिसरितं' इत्यस्य 'सरितं वर्जयित्वा' इत्यर्थ एव समीचीनः, न 'सरितं सरितं परि' इति, अस्य शब्दशास्त्रविरोधित्वात्। किञ्चित् कियत् भ्रमित्वा परिभ्रम्य। अटित्वेत्यर्थः। दक्षिणाशां दाक्षिणां दिशं। 'आशा तृष्णादिशोः' इति विश्वलोचने। पेपीयस्व चक्षुषा पौनः पुन्येन पानं कुरुष्व। 'पीङ् पाने' इति धातोः यङि लोट्। पश्चात् अनन्तरं लघुगतिः शीघ्रगामी। 'लघु क्षिप्रमरं द्रुतं' इत्यमरः। भूयः पुनः उत्तरेण एव उत्तरदिशा एव। 'वैनोऽदूरेऽकायाः' इत्येनः। व्रज गच्छ।

Oh sage! if a strong desire ever arose in you, from whom the desire for enjoying the objects has disappeared since very long, for enjoying the sight of the country-side, then having wandered over a little beyond the river, you should deeply drink in (with your eyes) the regions situated in the southern direction and then, you, possessing high speed, should proceed on again by the way leading to the north (or running in the northen direction).

वक्ष्यत्युच्चैः पथगतिपरिश्रान्तितान्तं नितान्तं
तुङ्गोऽद्रिः स्वैर्बहुविलसितैर्निर्झरैरात्तकान्तिः।
प्रत्युद्यातो धुततटवनोपान्तदेशैर्मरुद्भिः
त्वामासारप्रशमितवनोपद्रवं साधु मूर्ध्ना ॥ ६५ ॥

अन्वयः— बहुविलसितैः स्वैः निर्झरैः आत्तकान्तिः, धुततटवनोपान्तदेशैः मरुद्भिः प्रत्युद्यातः नितान्तं तुङ्गः अद्रिः आसारप्रशमितवनोपद्रवं पथगतिपरिश्रान्तितान्तं त्वां मूर्ध्ना उच्चैः साधु वक्ष्यति ।

**वक्ष्यतीत्यादि।** **बहुविलसितैः** विविधशोभैः विविधकान्तिभिः विविधक्रीडनैः वा। बहु नानाविधं विलसितं विलासः शोभा कान्तिः क्रीडनं वा येषां ते। तैः। 'नब्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च। 'विलासो हावलीलयोः' इति विश्वलोचने। **स्वैः** स्वकीयैः। 'स्वो ज्ञातावात्मनि स्वं तु त्रिष्वात्मीये धनेऽस्त्रियाम्' इति विश्वलोचने। **निर्झरैः** जलप्रवाहैः। 'प्रवाहो निर्झरो झरः' इत्यमरः। **आत्तकान्तिः** आत्ता उररीकृता कान्तिः तेजः येन सः। उपात्ततेजस्कः इत्यर्थः। **धुततटवनोपान्तदेशैः** प्रकम्पिततटवनसमीपप्रदेशैः। धुताः प्रकम्पिताः तटवनस्योपान्तदेशाः समीपप्रदेशाः यैः। तैः। **मरुद्भिः** समीरणैः। मरुतः साधनीकृत्येत्यर्थः। यद्वा मरुद्भिः सहेत्यर्थः 'सहार्थे भा' इति भायाः सहार्थत्वात्। **प्रत्युद्यातः** सभाजयितुं प्रत्युद्गतः। **नितान्तं** अत्यन्तं। अतिशयेनेत्यर्थः। 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च' इत्यमरः। **तुङ्गः** उन्नतः **अद्रिः** कश्चन पर्वतः **आसारप्रशमितवनोपद्रवं** धारावृष्टिजलेन दूरीकृतदवाग्निसञ्जनितदुःखं। आसारः धारापातः। 'धारासम्पात आसारः' इत्यमरः। तेन प्रशमितः प्रशान्तिं नीतः वनानां अरण्यानां उपद्रवः दावाग्निकृतोपद्रवः येन सः। अनेन मेघस्य कृतोपकारत्वं ध्वनितं। **पथगतिपरिश्रान्तितान्तं** मार्गगमनजनितपरिश्रमदूनं। पथगतिः मार्गक्रमणं। तस्मात् जाता परिश्रान्तिः परिश्रमः तया तान्तः दूनः तम्। **त्वां** भवन्तं **मूर्ध्ना** शिरसा **उच्चैः** उन्नतं यथा स्यात् तथा **साधु** सम्यक्तया **वक्ष्यति** वोढा। वहेर्लृट्। उद्धरिष्यतीत्यर्थः।

The mountain, possessing extra-ordinary height, assuming lustre on account of its rivulets possessing abundant brilliance, welcoming you through winds that would be shaking the skirts of the groves grown on the slopes, would bear you well very high who would be fatigued very much by the journey, upon his head (i. e. top), owing to your having dispelled the distress of its forests by means of showers.

**त्वय्यासन्ने विरलविरलान् प्रावृषेण्योदबिन्दून्**
**वञ्चक्रोपं विसृजति तथाऽप्ययश्मवेश्मोदरेषु।**
**सिद्धद्वन्द्वं सुरतरसिकं प्रान्तपर्यस्तवीणं**
**वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ॥ ६६ ॥**

अन्वय :— तथा अपि आसन्ने त्वयि विरलविरलान् प्रावृषेण्योदबिन्दून् वस्त्रक्नोपं विसृजति सति आम्रकूटः सानुमान् अध्वश्रमपरिगतं प्रान्तपर्यस्तवीणं सुरतरसिकं सिद्धद्वन्द्वं अश्मवेश्मोदरेषु वक्ष्यति ।

त्वयीत्यादि । **तथा अपि** तथा हि । **आसन्ने** समीपतां गते **त्वयि** भवति **विरलविरलान्** विरलप्रकारान् । विरलप्रकाराः विरलविरलाः । तान् । विरलत्वेनेत्यर्थः । 'प्रकारे गुणोक्तेर्वा' इति प्रकारार्थे द्विः । **प्रावृषेण्योदबिन्दून्** वर्षाकालजलबिन्दुतुल्यपृषन्ति । प्रावृषि भवाः प्रावृषेण्याः । 'प्रावृष एण्यः' इति एण्यो भवार्थे । अस्य मेघस्याऽकालिकत्वात्तद्विन्दूनां प्रावृषेण्यत्वं न सम्भवति । तथापि तेषामकालभवमेघवृष्टोदबिन्दूनां प्रावृषेण्यबिन्दुतुल्यत्वमाचिख्यासुः महाकविः प्रावृषेण्यविशेषणेन विशिनष्टि । अतः प्रावृषेण्याः इव प्रावृषेण्याः इत्यर्थो ग्राह्यः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । उदकस्य बिन्दवः उदबिन्दवः । 'मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे' इति उदकस्योदादेशः द्युभूतबिन्दुद्रव्यस्य पूर्यत्वाभावेऽपि । प्रावृषेण्याश्च ते उदबिन्दवश्च प्रावृषेण्योदबिन्दवः । तान् । **वस्त्रक्नोपं** । वस्त्रं यावता क्नोपितं आर्द्रमात्रं भवति तावदेव नाधिकमित्यर्थः । 'चेलार्थे क्नोपेः' इति वर्षप्रमाणे क्नोपयतेरार्द्रीकरणार्थाण्णमुल् । **विसृजति सति** वर्षति सति । 'यद्भावाद्भावगतिः' इति ईप् । **आम्रकूटः** आम्रकूटाभिधानः । आम्राः आम्रवृक्षाः कूटे सानुप्रदेशे यस्य सः । 'कूटोऽस्त्री राशिपूर्द्वारदम्भमायानृतेष्वपि । तुच्छेऽद्रिशृङ्गे सीराङ्गे यन्त्रायोघननिश्चले' इति विश्वलोचने । **सानुमान्** पर्वतः । सानूनि कूटाः अस्य सन्तीति सानुमान् । 'सानुः शृङ्गे बुधेऽरण्ये वात्यायां पल्लवे पथि' इति विश्वलोचने । **अध्वश्रमपरिगतं** मार्गश्रमव्याप्तं । मार्गश्रमखिन्नमित्यर्थः । अध्वनः मार्गस्य श्रमः अध्वश्रमः । तेन परिगतं व्याप्तं अध्वश्रमपरिगतं । **प्रान्तपर्यस्तवीणं** समीपप्रदेशस्थापितवीणावाद्यं । प्रान्ते समीपप्रदेशे पर्यस्ता त्यक्ता वीणा येन तत् । **सुरतरसिकं** अनुभूयमानसुरतसुखं । रसः सुखं अस्य अस्तीति रसिकः । 'अत इनिठनौ' इति ठन् । सुरतस्य रसिकं सुरतरसिकं । निधुवनसुखप्रीतमित्यर्थः । **सिद्धद्वन्द्वं** देवविशेषयुगलम् । 'युग्मं द्वन्द्वं यमं द्वैतं' इति धनञ्जयः । अश्मवेश्मोदरेषु शिलानिखातसद्माकारस्थानमध्येषु । अश्मनां शिलानां वेश्मानि अश्मवेश्मानि । तेषां उदरेषु मध्यप्रदेशेषु । **वक्ष्यति** वोढा । वहेर्लृट् धारयिष्यति । तत्र सिद्धयुगलं गुहायां प्रविश्य सुरतरसमनुभवत्त्वदागमनं सूचयिष्यतीति भावः ।

Moreover, in the same way, the mountain Āmrakūṭa would bear a couple of Siddha Gods, fatigued by journey, keeping their lutes

aside and enjoying the pleasure derived from coition in the interior of the caves carved into the rocks, when you, approached in the vicinity, would be discharging drops of water, moistening clothes, like those in the rainy season.

त्वामुत्तुङ्गैः शिखरतरुभिः सङ्ग्रहीष्यत्यवश्यं
विश्रान्त्यर्थं प्रियमुपगतं सोऽचलस्तुङ्गवृत्तिः ।
प्राप्तं काले प्रणयिनमहो कर्तुमर्हत्यपाशं
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय ॥ ६७ ॥

अन्वयः— विश्रान्त्यर्थं उपगतं त्वां प्रियं सः तुङ्गवृत्तिः अचलः उत्तुङ्गैः शिखरतरुभिः अवश्यं सङ्ग्रहीष्यति । काले संश्रयाय प्राप्तं प्रणयिनं अहो ! क्षुद्रः अपि प्रथमसुकृतापेक्षया अपाशं कर्तुं न अर्हति ।

त्वामित्यादि । **विश्रान्त्यर्थं** विश्रमाय **उपगतं** प्राप्तं **त्वां** भवन्तं **प्रियं** मित्रं **सः तुङ्गवृत्तिः** उन्नतावस्थां प्राप्तः पक्षे उन्नतपुरुषतुल्यसमुदाचारः । तुङ्गा उन्नता वृत्तिः कायिकी स्थितिः यस्य सः । पक्षे तुङ्गानां महापुरुषाणां वृत्तिः समुदाचारः इव वृत्तिः यस्य सः । 'ईबुपमानपूर्वस्य द्युखंगतार्थत्यात् । **अचलः** आम्रकुटाभिधानः पूर्ववर्णितः भूधरः । **उत्तुङ्गैः** उन्नतैः **शिखरतरुभिः** अधित्यकाभूदेशप्ररूढवृक्षैः । शिखरे भूधरस्य उन्नततमप्रदेशे प्ररूढाः वृक्षाः । तैः । हेतावत्र भा । **अवश्यं** निश्चयेन **सङ्ग्रहीष्यति** सभाजनं करिष्यति । आतिथ्यं विधास्यतीत्यर्थः । **काले** समुचितसमये **संश्रयाय** । संश्रयणार्थं **प्राप्तं** आगतं प्रणयिनं मित्रं । **अहो** विचारे । 'अहो प्रश्ने विचारे स्यात्' इति विश्वलोचने । विचार्यतामिति भावः । **क्षुद्रः अपि** स्वल्पः अपि। अनुत्तुङ्गवृत्तिरपीति भावः । 'क्षुद्र स्वल्पाधमक्रूरकृपणेष्वभिधेयवत्' इति विश्वलोचने । **प्रथमसुकृतापेक्षया** पूर्वकृतोपकारापेक्षया । **अपाशं** निराशं या अपगता विनष्टा आशा अभिलाषो यस्य सः । तं । विनष्टाकाङ्क्षमित्यर्थः । **कर्तुं** विधातुं । **न अर्हति** न योग्यो भवति । पूर्वकृतोपकारं संस्मृत्याश्रयाभिलाषेण सम्प्राप्तं मित्रं विनष्टाकांक्षं कर्तुं नार्हति क्षुद्रोऽपि जनः । आश्रयप्रदानेन तदभिलाषं मित्रं सफलीभूताभिलाषं करोति । किं पुनस्तुङ्गवृत्तेर्वक्तव्यम् ? स तु तथाऽवश्यमेव करोति । अयमाम्रकूटः स्वभावतस्तुङ्गवृत्तित्वाद्भवन्तमवश्यं सभाजयिष्यतीती भावः ।

That lofty mountain would certainly receive you, his dear friend, through the tall trees grown upon his summits, when you would be

approaching him for taking rest. Taking into consideration previous favours, an insignificant person even does not deserve to disappoint an affectionate friend approached for the sake of refuge at a proper time.

मन्ये मैत्रीं गुरुभिरचलैर्वारिदानामहार्यां
यं प्रत्येते विदधति धृतिं, तस्य ते बन्धुकृत्यं ।
कुर्यादद्रिर्भृशमसुहृदोऽप्युत्तमस्निग्धवृत्तिः
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ ६८ ॥

अन्वयः— वारिदानां गुरुभिः अचलैः मैत्रीं अहार्यां मन्ये । यं प्रति एते धृतिं विदधति, तस्य ते असुहृदः अपि उत्तमस्निग्धवृत्तिः अद्रिः भृशं बन्धुकृत्यं कुर्यात् । यः पुनः तथा उच्चैः (सः) मित्रे भवति प्राप्ते विमुखः किम् ?

मन्य इत्यादि । **वारिदानां** मेघानां **गुरुभिः** महद्भिः उन्नतकायैश्च **अचलैः** नगैः । पर्वतैरित्यर्थः । **मैत्रीं** मित्रत्वं **अहार्यां** अशक्यपरिहारां । हर्तुं विनाशयितुं शक्यते इति हार्या । 'शकि लिङ् च' इति शक्यर्थे ण्यः । न हार्या अहार्या । ताम् । **मन्ये** जानामि । **यं** भवन्तं **प्रति** **एते** अचला **धृतिं** सन्तोषं **विदधति** हृदये कुर्वन्ति, **तस्य** तादृशस्य **ते** तव **असुहृदः** **अपि** मित्रभावमप्राप्तस्य सतः अपि । **उत्तमस्निग्धवृत्तिः** महापुरुषवत् स्नेहार्द्रवृत्तिः । उत्तमानामिव स्निग्धा स्नेहार्द्रा वृत्तिः वर्तनं यस्य सः । **अद्रिः** आम्रकूटाचलः **भृशं** अत्यर्थं **बन्धुकृत्यं** बन्धुना करणीयं सभाजनादिकं **कुर्यात्** करिष्यतीति सम्भावये । 'क्षिप्राशंसोक्तौ लृट्लिङ् ।' इत्याशंसायां लिङ् । **यः** आम्रकूटाचलः **पुनः** । अनेनाद्रिसामान्यादाम्रकूटस्य विशिष्टत्वं ध्वन्यते । **तथा** त्वामित्यादिपूर्वश्लोकोक्तप्रकारेण **उच्चैः** उन्नतः । तुङ्गवृत्तिः स्वयमुत्तमो वा । सः आम्रकूटाचलः **मित्रे** सुहृदि **भवति** त्वयि **प्राप्ते** संश्रयणार्थमाश्रिते सति । त्वयि संश्रयाणार्थं तमाम्रकूटमाश्रिते सतीत्यर्थः । **विमुखः** पराङ्मुखः **किम्** किमर्थं । 'स्यात्' इति शेषः । भवादृशि सुहृदि प्राप्तेऽसुहृदोऽपि बन्धुकृत्यं कुर्वन्नाम्रकूटाचलः ते बन्धुकृत्यमवश्यं करिष्यतीति भावः ।

I think that the friendship of the clouds with the magnanimous mountains is such that it cannot be shaken off. To you, with whom they (mountains) are satisfied, the mountain, affectionate like the excellent, would have rendered service, even though you would not have been

his friend. Why would he, who is magnanimous as described above, have his face turned away at the arrival of you, his friend ?

**सेव्यः सोऽद्रिः खचरवनिताध्यासितोदग्रशृङ्गः**
**त्वां विश्रान्त्यै त्वरयति पुरा रम्यसानुप्रदेशः ।**
**सिद्धोपास्यः कुसुमितलतावीरुधां सन्निवेश्यः**
**छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रैः ॥ ६९ ॥**

अन्वयः— खचरवनिताध्यासितोदग्रशृङ्गः, रम्यसानुप्रदेशः, सिद्धोपास्यः, कुसुमितलतावीरुधां सन्निवेश्यः, परिणतफलद्योतिभिः काननाम्रैः छन्नोपान्तः सेव्यः सः अद्रिः पुरा त्वां विश्रान्त्यै त्वरयति ।

सेव्य इत्यादि । **खचरवनिताध्यासितोदग्रशृङ्गः** विद्याधराङ्गनोषिततुङ्गशृङ्गः । उदग्राणि उद्गताग्रभागानि अत एवोन्नतानि च तानि शृङ्गाणि सानूनि उदग्रशृङ्गाणि । खे चरन्तीति खचराः । 'चरोऽट्' इत्यट् । विहायोगतयः विद्याधराः । तेषां वनिताः स्त्रियः ताभिः अध्यासितान्युषितानि उदग्रशृङ्गाणि यस्य सः । **रम्यसानुप्रदेशः** सुभगशिखराग्रभागः । रम्याः सुभगाः सानूनां प्रस्थानां प्रदेशाः अग्रभागाः यस्य सः । **सिद्धोपास्यः** देवविशेषसमाश्रयणीयः मोक्षमार्गरतश्रमण–मुनिजनजनसंसेव्यः वा । सिद्धाः देवविशेषाः आसन्नमुक्तिश्रमणमुनिजना वा । तैः उपास्यः आश्रयणार्हः । उपासितुं योग्याः उपास्याः । 'तृज्व्याश्चोर्हे' इत्यर्हार्थे व्यः । **कुसुमितलतावीरुधां** उत्फुल्लपुष्पाणां लतावीरुधां । कुसुमिताः सञ्जातपुष्पाः । 'तदस्य सञ्जातं तारकादिभ्य इतः' इतीतस्त्यः । लताः वल्ल्यश्च वीरुधः गुल्माश्च लतावीरुधः । कुसुमिताश्च ताः लतावीरुधश्च कुसुमितलतावीरुधः । तासां । यद्वा लतानां वीरुधः विटपाः शाखाः लतावीरुधः । 'लतायां विटपे वीरुत्' इति विश्वलोचने । **सन्निवेश्यः** संश्रयणार्हः । सन्निवेशः इति पाठेनात्रभाव्यमिति प्रतिभाति । तस्य च 'समाश्रयः' इत्यर्थः सङ्ग्राह्यः । **परिणतफलद्योतिभिः** परिणतैः पक्वैः फलैः द्योतन्ते प्रकाशन्ते इति परिणफलद्योतिनः । तैः । **काननाम्रैः** कानने वने संरूढैः आम्रैः आम्रवृक्षैः । 'अरण्यं काननं वनं' इति धनञ्जयः। **छन्नोपान्तः** संवृतसमीपप्रदेशः । छन्नः संवृतः उपान्तः पार्श्वं यस्य सः छन्नोपान्तः । **सेव्यः** संश्रयणार्हः । **सः अद्रिः** आम्रकूटाचलः । **पुरा** निकटभाविनि । 'पुरा भाविपुराणयोः। प्रबन्धे निकटेऽतीते' इति विश्वलोचने । **त्वां** भवन्तं **विश्रान्त्यै** विश्रमार्थं **त्वरयति** त्वरां कारयिष्यति । 'पुरायावतोर्लट्' इति पुराशब्दप्रयोगात् निकटभाविनि लट् ।

That mountain, worthy of being resorted to, the lofty peaks of which are occupied by the ladies of those who roam in the sky ( i. e. sky-wanderers ), the regions of the summits of which are beautiful, which are worthy of being resorted to by the particular heavenly gods (or by the sages who would attain liberation certainly in the future), a deserving place for the growth of creepers and shrubs furnished with flowers ( or an excellent abode of flowery creepers and shrubs ), the skirts of which are covered over with the wild mango-trees glistening with ripe fruits, would impel you to hasten up for taking rest in the near future.

कृष्णाहिः किं वलयिततनुर्मध्यमस्याधिशेते
किं वा नीलोत्पलविरचितं शेखरं भूभृतः स्यात् ।
इत्याशङ्कां जनयति पुरा मुग्धविद्याधरीणां
त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे ॥ ७० ॥

अन्वयः— स्निग्धवेणीसवर्णे त्वयि शिखरं आरूढे (सति) अचलः ' वलयिततनुः कृष्णाहिः अस्य मध्यं अधिशेते किम् ? वा भूभृतः नीलोत्पलविरचितं शेखरं स्यात् किम् ? ' इति आशङ्कां मुग्धविद्याधरीणां पुरा जनयति ।

कृष्णाहिरित्यादि । स्निग्धवेणीसवर्णे तैलाभ्यक्तकबरीसदृशवर्णे । स्निग्धा तैलार्द्रीकृता चासौ वेणी कबरी च स्निग्धवेणी । ' पुंवद्यजातीयदेशीये' इति यत्वात्पुंवद्भावः । तया समानः तुल्यः वर्णः यस्य सः । तस्मिन् । ' समानस्य धर्मादिषु ' इति समानस्य सादेशः । त्वयि भवति शिखरं आम्रकूटभूधरसानुं आरूढे सति शिखरभागं प्राप्ते सति । ' यद्भावाद्भावगतिः ' इति ईप् । अचलः आम्रकूटपर्वतः । वलयिततनुः मण्डलाकारपरिणामितस्वकायः। वलयिता मण्डलाकारेण परिणामिता तनुः शरीरं येन यस्य वा । कृष्णाहिः कृष्णवर्णः सर्पः । कृष्णश्चासावहिश्च । अस्य आम्रकूटाचलस्य मध्यं मध्यभागं अधिशेते तिष्ठति किम् ? ' अधिशीङ्स्थासां कर्म ' इत्यधिपूर्वशीङः आधारस्य कर्मत्वं । वा अथवा भूभृतः आम्रकूटाचलस्य नीलोत्पलविरचितं नीलवर्णकमलनिबद्धं । नीलं नीलवर्णं च तत् उत्पलं कुवलयं च नीलोत्पलं । नीलोत्पलैः विरचितं निबद्धं नीलोत्पलविरचितं । शेखरं माल्यं । ' शिखास्वापीडशेखराः ' इत्यमरः । स्यात् किम् भवेत् किम् ? इति एवंविधां आशङ्कां संशयं मुग्धविद्याधरीणां मूढविद्याधरयोषितां । मुग्धाः मूढाश्च ताः विद्याधर्यश्च मुग्धविद्याधर्यः । तासां ।

पुरा भवदारोहणानन्तरं निकटभविष्यति जनयति जनयिष्यति । 'पुरायावतोर्लट्' इति निकटभविष्यति लट् ।

The mountain would excite a doubt 'Is this, occupying the middle part of this ( mountain ), a black serpant with his body turned into a circular from ( i. e. encircling the middle part of this mountain with his coiled body ) or is this a garland made of blue lotuses, of the mountain ( i. e. has this mountain worn a garland of blue lotuses ) ?' in the hearts of the simple ladies of Vidyādharas just after when you, having resemblance in colour with an oiled braid of hair, would have ascended the summit ( of the mountain, Āmrakūta )

अध्यासीनः क्षणमिव भवानस्य शैलस्य कुञ्जं
लक्ष्मीं रम्यां मुहुरुपहरन्निन्द्रनीलोपलस्य ।
खेनोन्मुक्तो भुवमिव गतः श्लक्ष्णनिर्मोकखण्डो
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थाम् ॥ ७१ ॥

अन्वयः— इन्द्रनीलोपलस्य रम्यां लक्ष्मीं मुहुः उपहरन् अस्य शैलस्य कुञ्जं क्षणं इव अध्यासीनः भवान् खेन उन्मुक्तः भुवं गतः श्लक्ष्णनिर्मोकखण्डः इव अमरमिथुनप्रेक्षणीयां अवस्थां नूनं यास्यति ।

अध्यासीन इत्यादि । इन्द्रनीलोपलस्य हरिन्मणेः । इन्द्रः इव नीलः इन्द्रनीलः । इन्द्रनीलः एव उपलः इन्द्रनीलोपलः । तस्य । रम्यां रमणीयां । लक्ष्मीं कान्ति । 'लक्ष्मीः श्रीरिव सम्पत्तौ पद्माशोभाप्रियङ्गुषु' इति विश्वलोचने । उपहरन् उपवहन् । उपहरतीति उपहरन् । शतृ । अस्य शैलस्य आम्रकूटाभिधानपर्वतस्य । कुञ्जं दरीं निकुञ्जं वा । 'कुञ्जं तु न स्त्रियां । हनौ वत्से निकुञ्जेऽपि' इति विश्वलोचने । क्षणं इव अल्पकालं अध्यासीन अधितिष्ठिन् । 'कर्मैवाधेः शीङ्स्थासः' इत्यधिपूर्वस्य शीङः आधारस्य कर्मत्वं । तथा 'कर्मणीप्' इति कर्मणः इप् । भवान् मेघाकारपरिणतः भवान् पार्श्वः । खेन स्वर्गेण । 'खमाकाशे दिवि सुखे बुद्धौ संवेदने पुरे । शून्यवदिन्द्रियक्षेत्रे कुशाहलफले क्वचित्' इति विश्वलोचने । उन्मुक्तः परित्यक्तः । भुवं भूमिं गतः प्राप्तः श्लक्ष्णनिर्मोकखण्डः इव सूक्ष्मः आकाशखण्डः इव । निर्मोकस्य व्योम्नः खण्डः शकलं निर्मोकखण्डः । 'निर्मोको व्योम्नि सन्नाहे मोचने सर्पकञ्चुके' इति विश्वलोचने । श्लक्ष्णः सूक्ष्मश्चासौ निर्मोकखण्डश्च श्लक्ष्णनिर्मोकखण्डः । 'सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु'

इत्यमरः । अमरमिथुनप्रेक्षणीयां देवयुगलैरवलोकनीयां । अमराणां देवानां मिथुनानि युग्मानि अमरमिथुनानि । तैः प्रेक्षणीयां अवलोकनार्हां । 'तृज्व्याश्चार्हे' इति ण्योऽर्हार्थे । अवस्थां दशां नूनं अवश्यं । 'नूनं स्यादर्थनिश्चये' इति विश्वलोचने । यास्यति प्राप्स्यति ।

You, assuming the charming beauty of a saphire again and again, settling upon the cavern of that mountain (Āmrakūṭa) for a while, would certainly attain to a state worthy of being looked at by the heavenly couples like a thin delicate piece of the sky reached to this earth being abandoned by the heaven.

त्वय्यानीलत्विषि गिरिरसौ शेखरत्वं दधाने
शोभामेष्यत्यमरमिथुनश्लाघनीयां तदानीम् ।
नानापुष्पद्रुमशबलितोपत्यकः सोतिमात्रं
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥ ७२ ॥

अन्वयः—मध्ये श्यामः नानापुष्पद्रुमशबलितोपत्यकः शेषविस्तारपाण्डुः आनीलत्विषि त्वयि शेखरत्वं दधाने भुवः स्तनः इव सः असौ गिरिः तदानीं अमरमिथुनश्लाघनीयां शोभां अतिमात्रं एष्यति ।

त्वयीत्यादि । मध्ये मध्यभागे श्यामः कृष्णवर्णः नानापुष्पद्रुमशबलितोपत्यकः नानाविधपुष्पवृक्षचित्रितपर्यन्तप्रदेशः । नाना नानाविधाः पुष्पद्रुमाः नानापुष्पद्रुमाः । तैः शबलिता शबला चित्रवर्णा कृता उपत्यका पर्यन्तप्रदेशः यस्य सः । शबलयति शबलवर्णं करोति स्म शबलिता । 'तत्करोति तदाचष्टे' इति णिच् ततश्च क्तः । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यप्यमरः । शेषविस्तारपाण्डुः अवशिष्टभूव्यासे पाण्डुवर्णः । शेषः मध्यप्रदेशादन्यो ऽवशिष्टः यः विस्तारः भुवो व्यासः तत्र पाण्डुः हरितवर्णः । 'विस्तारो विस्तृतावपि' इति विश्वलोचने । 'पाण्डुः कुन्तीपतौ सिते' इत्यपि विश्वलोचने । आनीलत्विषि समन्तान्नीलवर्णे त्वयि । आ समन्तान्नीला नीलवर्णा त्विट् कान्तिः यस्य सः आनीलत्विट् । तस्मिन् । त्वयि मेघाकारपरिणामितस्वदेहे भवति पार्श्वे शेखरत्वं माल्यत्वं दधाने वहमाने । तत्पर्वतभूषणमालारूपतां वहमाने त्वयीत्यर्थः । भुवः वसुन्धरायाः स्तनः इव पयोधरसदृशः असौ गिरिः असौ आम्रकूटाचलः । तदानीं यदा भवान् आम्रकूटा-

चलमांस्यरूपतां वोढा तस्मिन् काले अमरमिथुनश्लाघनीयां देवयुगलप्रशंसार्हां। अमराणां देवानां मिथुनैः युगलैः श्लाघनीयां श्लाघयितुं प्रशंसितुं योग्यां। अर्हार्थे व्यः। शोभा सौन्दर्यं अतिमात्रं निर्भरं। 'अतिमात्रोद्गाढनिर्भरम्' इत्यमरः। एष्यति प्राप्स्यति।

This mountain, dark at the centre, variagated in the lower part by the various flowery trees ( grown there.) and whitish in the remaining expansion of the surface, looking like the breast of the earth when, you, possessing deep blue splendour, would be assuming the form of a garland, would at that time, assume extreme beauty worthy of being very highly praised by the couples of heavenly gods.

रम्यश्रोणीर्विकटदशनाः प्रोथिनीर्दीर्घघोणाः
पीनोत्तुङ्गस्तनतटभरान्मन्दमन्दं प्रयान्तीः।
ग्रावक्षुण्णप्रशिथिलनखा वाजिवक्त्राः प्रपश्येः
तस्मिन् स्थित्वा वनचरवधूभुक्तकुञ्जे मुहूर्तम् ॥ ७२ ॥

अन्वयः— वनचरवधूभुक्तकुञ्जे तस्मिन् मुहूर्तं स्थित्वा रम्यश्रोणीः विकटदशनाः प्रोथिनीः दीर्घघोणाः पीनोत्तुङ्गस्तनतटभरात् मन्दमन्दं प्रयान्तीः ग्रावक्षुण्णप्रशिथिलनखाः वाजिवक्त्राः प्रपश्येः।

रम्येत्यादि। वनचरवधूभुक्तकुञ्जे आरण्यकवधूपभुक्तकुञ्जे। वने चरन्तीति वनचराः आरण्यकाः। 'चरेऽट्' इत्यट्। तेषां वधूभिः भुक्तानि कुञ्जानि लतामण्डपाः यत्र। 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे' इत्यमरः। तस्मिन् आम्रकूटपर्वते मुहूर्तं क्षणमात्रं स्थित्वा अधिष्ठानं कृत्वा। विश्रम्येत्यर्थः। रम्यश्रोणीः मनोहरकटिपश्चाद्भागाः। रम्याः रमणीयाः श्रोणयः कटिपश्चाद्भागाः यासां ताः। 'कटिर्नितम्बः श्रोणिश्च जघनम्' इति धनञ्जयः। विकटदशनाः विशालरदनाः सुदत्यो वा। विकटाः विशालाः अश्वरदनतुल्याः अश्वमुखीत्वात् दशनाः रदनाः यासां ताः। यद्वा विशालाः सुन्दराः इति। 'विकटो विकराले स्याद्विशाले सुन्दरे वरे' इति विश्वलोचने। प्रोथिनीः अश्वघोणाकारनासिकाः वृत्तनासान्तप्रदेशाः वा। प्रोथः अश्वघोणा। प्रोथाः आसां सन्तीति प्रोथिनीः। 'वृत्तः नासान्तप्रदेशः प्रोथः' इत्यमरकोशटीकायां क्षीरस्वामी। दीर्घघोणाः लम्बनासिकाः। दीर्घाः घोणाः नासिकाप्रदेशाः यासां ताः दीर्घघोणाः। ललाटपर्यन्तादिनासाग्रान्तः नासिकाप्रदेशः घोणा। पीनोत्तुङ्गस्तनतटभरात्

मांसलोन्नतकुचतटभारात् । पीनाः मांसलाश्च ते उत्तुङ्गाः उदग्राश्च पीनोत्तुङ्गाः । स्तनानां मांसलत्वेऽपि तुङ्गत्वं सम्भवत्येवेति न नियमः, वृद्धास्तनानां मांसलत्वेऽप्यनुन्नतत्वदर्शनात् । अतः स्तनकाठिन्यसूचनार्थं उत्तुङ्गविशेषणमित्यवसेयम् । पीनोत्तुङ्गानां स्तनतटानां भरः भारः । तस्मात् । मन्दमन्दं मन्दप्रकारं । मंदगत्येत्यर्थः ' ' प्रकारे गुणोक्तेर्वा ' इति द्विः । प्रयान्तीः गच्छन्तीः । मन्दगमना इत्यर्थः । ग्रावक्षुण्णप्रशिथिलनखाः उपलक्षोदप्रश्लथनखराः । ग्रावभिरुपलैः क्षुण्णाः सञ्जातक्षोदाः अत एव प्रशिथिलाः प्रश्लथाः नखाः पादाङ्गुल्यग्रजाः यासां ताः । वाजिवक्त्राः अश्वमुख्यः । किन्नर्यः इत्यर्थः । प्रपश्येः प्रेक्षिष्यसे ।

Staying for a short time on it, the bowers of creepers whereon are made use of by the wives of the forest-wanderers, you would see the women of the Kinnaras ( the women having their faces like that of a horse ), possessing beautiful buttocks, having large ( long ) teeth, possessing long and acquiline noses, moving slowly on account of the heaviness of their fleshy and elevated breasts, and having their nails loosened on account of their being bruised by stones.

तस्माद्द्रेः कथमपि भवान्मुक्तकुञ्जः प्रयायात्
रम्यस्थानं त्यजति न मनो दुर्विधानं प्रतीहि ।
कालक्षेपं विसृज गरिमालम्बनं याहि सद्यः
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ॥ ७४ ॥

अन्वयः—— मुक्तकुञ्जः भवान् तस्मात् अद्रेः कथं अपि प्रयायात् । दुर्विधानं मनः रम्यस्थानं त्यजति ( इति ) प्रतीहि । तोयोत्सर्गद्रुततरगतिः तत्परं वर्त्म तीर्णः गरिमालम्बनं कालक्षेपं विसृज । सद्यः याहि ।

तस्मादित्यादि । मुक्तकुञ्जः मुक्ताः प्रस्थानार्थं परिहृताः कुञ्जाः आम्रकूटपर्वतनिकुञ्जाः येन सः । भवान् मेघाकारपरिणतः पार्श्वस्त्वम् । तस्मात् अद्रेः यं भवान् संश्रयार्थं प्राप्तः तस्मात् आम्रकूटाभिधानात् भूधरात् । कथमपि येन केनाप्युपायेन प्रयायात् प्रगच्छेत् । यतः दुर्विधानं दुराराध्यं दुर्विजय्यं । दुःखेन कृच्छ्रेण विधीयते वशीक्रियते इति दुर्विधानं । 'स्वीषद्दुसि कृच्छ्राकृच्छ्रयोः खः' इति कृच्छ्रार्थे खः । मनः मानसं । रम्यस्थानं रमणीयभूप्रदेशं न त्यजति न विमुञ्चति इति प्रतीहि जानीहि । तोयोत्सर्गद्रुततरगतिः जलोत्सर्गजनिताणिम्ना शीघ्रतरगमनः । तोयस्य

उत्सर्गेण वेगेण द्रुततरा शीघ्रतरा गतिः गमनं यस्य सः । **तत्परं** आम्रकूटादुत्तरं । तस्मादाम्रकूटात् परं उत्तरं । **वर्त्म** मार्गं । **तीर्णः** तरीतुमारब्धवान् । आद्यकर्मणि क्तः कर्तरि च । **गरिमालम्बनं** गौरवनिबन्धनं । गरिमा गुरोर्भावः । 'पृथ्वादेर्वेमन्' इतीमनि 'टेः' इति टेः खं 'बहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां वंहिगर्ववर्षित्रपद्राघवृन्दाः' इति गरादेशश्च । गरिमा आलम्बनं निमित्तकारणं यस्य तम् । **कालक्षेपं** कालयापनं । कालस्य क्षेपः यापनं कालक्षेपः । तं । **विसृज** परिहर । **सद्यः** शीघ्रं । **याहि** गच्छ ।

Having left the caverns or bowers, you should anyhow go away from that mountain. Be assured that the mind, difficult to be prevailed upon, does not leave a beautiful sight. You, with your motion rendered more speedy, beginning to traverse the path beyond it ( i. e. the mountain ) should give up delay caused by your heaviness ( and ) start immediately.

**गत्वोदीचीं भुव इव पृथुं हारयष्टिं विभक्तां**
**वन्येभानां रदनहतिभिर्भिन्नपर्यन्तवप्राम् ।**
**वीनां वृन्दैर्मधुरविरुतैरात्ततीरोपसेवां**
**रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णाम् ॥ ७५ ॥**

अन्वयः— उदीचीं गत्वा वन्येभानां रदनहतिभिः भिन्नपर्यन्तवप्रां, वीनां मधुरविरुतैः वृन्दैः आत्ततीरोपसेवां, उपलविषमे विन्ध्यपादे विशीर्णां रेवां भुवः विभक्तां पृथुं हारयष्टिं इव द्रक्ष्यसि ।

गत्वेत्यादि । उदीचीं उत्तरां दिशं । 'उत्तरा दिक् उदीची स्यात्' इत्यमरः । **गत्वा** प्राप्य । **वन्येभानां** आरण्यकानां गजानां । वने जाताः वन्याः । वन्याश्च ते इभाः गजाश्च वन्येभाः । 'इभः स्तम्बेरमः पद्मी' इत्यमरः । **रदनहतिभिः** दन्तप्रहारैः । रदनानां दन्तानां हतिभिः प्रहारैः । **भिन्नपर्यन्तवप्रां** विदारिताग्रतीरां । भिन्नपर्यन्तौ वप्रौ तीरौ यस्याः सा । 'वप्रस्तातेऽस्त्रियां तीरे तु क्षेत्रचयरेणुषु' इति विश्वलोचने । यद्वा भिन्नाः विदारिताः पर्यन्तवप्राः पर्यन्तस्थितरेणुचयाः यस्याः सा । ताम् । **वीनां** पक्षिणां **मधुरविरुतैः** । मधुराणि विरुतानि ध्वनयः येषां तैः । श्रुतिमनोहरारावैः । मधुरं आरुवद्भिरित्यर्थः । **आत्ततीरोपसेवां** । आत्ता स्वीकृता तीरयोः (ईप्) उपसेवा निवासः यस्याः सा । मधुरारावैः विहगवृन्दैः तीरभूमौ कृतवसतिकामित्यर्थः । **उपलविषमे** पाषाणस्थपुटिते । उपलैः पाषाणैः विषमः स्थपुटितः निम्नोन्नतः उपलविषमः ।

तस्मिन् । **विन्ध्यपादे** विन्ध्याद्रिप्रत्यन्तपर्वते । 'पादोऽस्त्री चरणे मूले तुरीयांशेऽपि दीधितौ । शैलप्रत्यन्तशैले ना' इति विश्वलोचने । **विशीर्णां** विशेषेण विदीर्णां **रेवां** नर्मदाभिख्यां नदीं **भुवः** भूदेव्याः **विभक्तां** विशिष्टविरचनां **पृथुं** महतीं **हारयष्टिं इव** हार इव **द्रक्ष्यसि** नेत्रविषयतां नेष्यसि । विहायसा विहरतो मनसि भूहारयष्टिकल्पनां जनयन्तीं नर्मदां भवान् द्रक्ष्यतीति भावः ।

Having gone in the northern direction, you would see Revā (i. e. Narmadā), having the edges of banks rent asunder by the strokes of the tusks of the forest-elephants (or having the adjoining mounds of earth cut asunder by the strokes of the tusks of the forest-elephants), having her banks worshipped or occupied by the crowds giving out delightful notes, split up at the foot of the Vindhyas rendered uneven by stones, as a well-arranged big necklace worn by the earth.

**तां तस्याद्रेरुपतटवनं विप्रकीर्णप्रवाहां**
**तीरोपान्तस्खलनविषमोद्वृत्तफेनां समीनां ।**
**पश्य प्रीत्या गिरितटगजक्षोभभिन्नोर्मिमालां**
**भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ ७६ ॥**

अन्वयः— तस्य अद्रेः उपतटवनं विप्रकीर्णप्रवाहां, तीरोपान्तस्खलनविषमोद्वृत्तफेनां, समीनां, गिरितटगजक्षोभभिन्नोर्मिमालां भक्तिच्छेदैः गजस्य अङ्गे विरचितां भूतिं इव ( लक्ष्यमाणां ) तां प्रीत्या पश्य ।

**तामित्यादि** । **तस्य अद्रेः** । विन्ध्याचलस्य । **उपतटवनं** तटवनसमीपे तटवने वा । तटवनस्य समीपे उपतटवनं । 'झिः सुव्यृद्ध्यृद्ध्यर्थाभावातीत्यसम्प्रतिशब्दख्यातिपश्चाद्यथायुगपत्सम्पत्साकल्यान्ते' इति समीपार्थे सुवर्थे वा हसः। **विप्रकीर्णप्रवाहां** अतिविशालप्रवाहां । **तीरोपान्तस्खलनविषमोद्वृत्तफेनां** । तीरयोः उपान्ते स्खलनेन वृक्षोपलादिप्रतिबन्धजनितगतिस्खलनेन विषमं यथा तथा उद्वृत्तो प्रवाहोपरितनभागं प्राप्तः फेनः डिण्डीरः यस्याः सा ताम् । **समीनां** सहमीनां । अनेन विशेषणेन तटवनसमीप एव नर्मदायाः गम्भीरत्वं ध्वन्यते, अन्यथा प्रवाहवेगेन तत्र मत्स्यानामसम्भवानिवासत्वात् । **गिरितटगजक्षोभभिन्नोर्मिमालां** । गिरितटश्च गजाश्च गिरितटगजाः । गजशब्दस्याल्पाच्त्वेपि अल्पाच्पूर्वनिपातशास्त्रस्यानित्यत्वात्परानिपातः । यद्वा गिरितटभवाः गजाः गिरितटगजाः । तेषां क्षोभैः भिन्ना विरचिता वीचीनां कल्लोलानां माला परम्परा यस्यां

सा। तैर्भिन्ना विनष्टा वीचिमाला यस्यां सेति व्याख्याने गिरितटभवगजानां क्षोभैरिति विग्रह एवोररीकर्तव्यः गिरितटसञ्जनितक्षोभैर्वीचिमालाभङ्गस्यासम्भवात् गजकृतक्षोभैरेव तत्सम्भवात्। **भक्तिच्छेदैः** वर्णविनिर्मितचित्राकृतिविभागैः। भक्तीनां वर्णविरचितमनोहराकृतीनां छेदाः विभागाः। तैः। **गजस्य अङ्गे** गजशरीरे **विरचितां** विनिर्मितां **भूतिं इव** मातङ्गशृङ्गारमिव **तां** नर्मदां **प्रीत्या** सन्तोषेण **पश्य** प्रेक्षस्व। शीघ्रं द्रक्ष्यसि। 'लिङ् चोर्ध्वमौहूर्तिके' इति औध्र्वमौहूर्तिकार्थे 'अधीष्टे' इति सम्भावनायां वा लोट्। 'भूतिर्मातङ्गशृङ्गारे भस्मसम्पत्तिजन्मसु' इति विश्वलोचने।

I hope, you would see delightfully the river, Narmadā, having her flow scattered or increased abundantly in the vicinity of the forests grown on the slopes of that mountain, having her foam increased vehemently owing to the dashing of her flow against the skirts of her banks, abounding in fish, having series of waves brought into being by the agitation of the elephants dwelling on the slopes of the mountain (Vindhya) (or having her water stirred into series of waves by the elephants and on account of the slopes of the mountain), and looking like decoration on the body of an elephant, formad in variously coloured stripes.

**दत्तं वन्यैरिव कलभकैः पुष्करेणोत्क्षिपद्भिः**
**प्रायोग्यं ते मुनिमत चिरं वासनावासितस्य।**
**ग्रावक्षुण्णोच्चलितमथवा त्वं हरेर्वार्यवार्यं**
**तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टिः॥ ७७॥**

अन्वयः—भो मुनिमत! तिक्तैः वनगजमदैः वासितं पुष्करेण उत्क्षिपद्भिः वन्यैः कलभकैः दत्तं इव (वारि) चिरं वासनावासितस्य ते प्रायोग्यं। अथवा ग्रावक्षुण्णोच्चलितं अवार्यं तस्याः वारि वान्तवृष्टिः त्वं हरेः।

दत्तमित्यादि। भो **मुनिमत**। मुनिरिति मतः अभिमतः मुनिभिर्मतः वा मुनिमतः। तस्य सम्बोधनं। **तिक्तैः** सुगन्धिभिः सुरभिभिः। 'तिक्तो रससुगन्धयोः' इति विश्वलोचने। **वनगजमदैः**। वने भवाः गजाः हस्तिनः वनगजाः। तेषां मदैः दानवारिभिः वासितं सञ्जनितसौगन्ध्यं। सुरभीकृतमित्यर्थः। 'वासितं विहगारवे। दाने त्रिष्वेव वसनवेष्टिते सुरभीकृते' इति विश्वलोचने। **पुष्करेण** शुण्डाग्रेण। 'पुष्करं व्योम्नि पानीये हस्तिहस्ताग्रपद्मयोः। रोगोरगौषधिद्वीपतीर्थभेदेऽपि सारसे। काण्डे खड्गफले वाद्य-

भाण्डवक्त्रे च पुष्करम्' इति विश्वलोचने। उत्क्षिपद्भिः ऊर्ध्वं क्षिपद्भिः **वन्यैः** वनेभवैः **कलभकैः** करिशावकैः। कलभाः एव कलभकाः। स्वार्थे कः। 'कलभः करिशावकः' इत्यमरः। **दत्तं इव** वितीर्णं इव। नर्मदाजलस्य स्वयंग्रहणे देशभङ्गरूपाचौर्यमहाव्रतातिचारभवं तेऽस्ति चेत्, न तत् त्वया स्वयं ग्राह्यं। तत्तु ऊर्ध्वे प्रक्षिपद्भिः करिशावकैर्दत्तमिवेति तद्ग्रहणे न कोऽपि दोषः। पुनश्च करितत्कलभकान्तःसञ्चारसञ्जनितक्षोभत्वात् हस्तिहस्तिपोतहस्तसन्ताडितत्वाच्च प्रासुकत्वाच्च प्रयोगयोग्यमस्ति। अतोऽपि तद्ग्रहणे नास्ति कोऽपि दोषः। तस्य तादृशस्य प्रासुकत्वेऽपि पुष्करान्तर्गतमलमलिनीकृतत्वादशुद्धत्वान्न तद्ग्राह्यं यतीनामिति चेत्, ग्रावक्षुण्णोच्चलितमत एव प्रासुकत्वान्नदीप्रदत्तत्वाच्चावार्यमपरिहरणीयं जलं त्वया ग्राह्यमेवेत्यग्रे वक्ष्यत्यत्रैव। **चिरं** चिरकालं यावत्। **वासनावासितस्य** परित्यक्तेच्छस्य उद्बुद्धेच्छस्य वा। वासना आ समन्तात् वासिता दूरीकृता येन सः। वाहिताग्न्यादित्वात्सः। यद्वा वासनया अभिलाषेण वासितस्य कृतसंस्कारस्य। जलार्थं सञ्जाताभिलाषस्येत्यर्थः। यद्वा आवासिता संस्कृता उद्बुद्धा वा वासना इच्छा यस्य सः। वाहिताग्न्यादित्वात्सः। **ते** तव मुनेः **प्रायोग्यं** प्रयोगार्हं। उपयोगयोग्यमित्यर्थः। प्रयोगे साधु प्रयोग्यं। प्रयोग्यमेव प्रायोग्यं। 'तत्र साधुः' इति यः स्वार्थिकोऽण् च। अथवा तदपि न ग्राह्यमिति चेत्, **ग्रावक्षुण्णोच्चलितं तस्याः वारि अवार्यं**। तवेति शेषः। ग्राव्णि ग्राव्णा वा क्षुण्णं विमर्दितं अत एवोच्चलितं आकाशप्रदेशे उत्क्रान्तं ग्रावक्षुण्णोच्चलितं। ग्राव्णा पाषाणेन क्षुण्णत्वात् प्रासुकं उच्चलितत्वाच्च नद्या स्वयं दीयमानमिति प्रासुकत्वाद्दत्तादानदोषरहितत्वाच्च **तस्याः** नर्मदानद्याः **वारि** जलं **अवार्यं** दोषादुष्टत्वात्त्वया अपरिहरणीयं, अपि तु तव ग्राह्यमेव तत्। अत एव **वान्तवृष्टिः** कृतवर्षः **त्वं** भवान् **हरेः** गृहाण। त्वं गृहिष्यसीति संभावये। 'अधीष्टे' इति सम्भावनायां लोट्।

Oh! a recognised sage, the water ( of the Narmadā ) scented by the fragrant ichor of wild young elephants and offered as if by the wild elephants throwing it up with their trunks, deserves to be utilised by you who are free from desires since a very long time. If you do not agree upon what I say, you, having poured forth showers, should accept that water of that river which is not at all worthy of being rejected owing to its being dashed against her rocks and so thrown up thereby.

तत्स्वादीयः सुरभि शिशिरं प्रार्थनीयं मुनीनां
निर्जन्तुत्वादुपलनिपतन्निर्झराम्भःप्रकाशम्।

तस्याः क्षुण्णं वनकरिकराघट्टनैरप्यजस्रं
जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ॥ ७८ ॥

अन्वय :—वनकरिकराघट्टनैः अजस्रं क्षुण्णं अपि जम्बूकुञ्जप्रतिहतरयं उपलनिपतन्निर्झराम्भःप्रकाशं निर्जन्तुत्वात् मुनीनां प्रार्थनीयं तस्याः तत् स्वादीयः सुरभि शिशिरं तोयं आदाय गच्छेः ।

तदित्यादि । **वनकरिकराघट्टनैः** । वनकारिणां आरण्यकानां गजानां कराः शुण्डादण्डाः वनकरिकराः । तेषामाघट्टनैः प्रताडनैः । **अजस्रं** अनवरतं **क्षुण्णं** मर्दितं **अपि जम्बूकुञ्जप्रतिहतरयं**। जम्बूनां जम्बूवृक्षाणां कुञ्जैः निकुञ्जैः प्रतिहतः विघ्नितः प्रतिरुद्धः रयः वेगः यस्य तत् । **उपलनिपतन्निर्झराम्भःप्रकाशं**। उपले पाषाणे निपततीति उपलनिपतत् । निर्झरस्य प्रवाहस्य अम्भः पानीयं निर्झराम्भः । उपलनिपतत् च तन्निर्झराम्भश्च उपलनिपतन्निर्झराम्भः । तेनाम्भसा तुल्यम् । **निर्जन्तुत्वात्** जन्तुरहितत्वात् । प्रासुकत्वादित्यर्थः । **मुनीनां** मुनिजनैः **प्रार्थनीयं** प्रार्थनार्हं । 'व्यस्य वा कर्तरि' इति ता कर्तरि । 'तृव्याश्चार्हे' इत्यर्हार्थे व्यः । **तस्याः** नर्मदायाः **तत्** प्रसिद्धं **स्वादीयः** स्वादुतरं । मधुरतरमित्यर्थः । 'गुणाङ्गाद्वेष्ठेयसू' इतीयस् । **सुरभि** सौगन्ध्यबन्धुरं **शिशिरं** शीतलं **तोयं** जलं **आदाय** सङ्गृह्य **गच्छेः** यायाः ।

Taking that water of that river, incessantly beaten by the strokes of the trunks of elephants and having its force curbed ( restrained ) by the groves of Jambu trees, resembling the water of rivulets dashing against rocks, worthy of being craved for by the sages owing to its being void of insects, pleasing to the taste, fragant and cool, you should proceed on.

हृत्वा तस्या रसमपहृताशेषमार्गश्रमस्त्वं
व्योमव्रज्यां पुनरविहतप्रक्रमां सन्दधीथाः ।
प्राप्तस्थैर्यं सपदि जलवानप्यसौ यद्गरीयान्—
अन्तःसारं घन तुलयितुं नाऽनिलः शक्ष्यति त्वाम् ॥ ७९ ॥

अन्वय :—हे घन ! अपहृताशेषमार्गश्रमः त्वं तस्याः रसं हृत्वा अविहतप्रक्रमां व्योमव्रज्यां पुनः सन्दधीथाः, यत् जलवान् गरीयान् अपि असौ अनिलः अन्तःसारं प्राप्तस्थैर्यं त्वां सपदि तुलयितुं न शक्ष्यति ।

हृत्वेत्यादि। हे घन मेघ अपहृताशेषमार्गश्रमः दूरोत्सारितनिखिलाध्वखेदः। अपहृतः दूरोत्सारितः विनाशितः अशेषः निखिलः मार्गश्रमः अध्वक्लमः येन यस्य वा। **त्वं** भवान् **तस्याः** रेवापराभिधानायाः नर्मदायाः **रसं** जलं। 'रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे। पारदे धातुवीर्याम्बुरागे गन्धरसे तनौ' इति विश्वलोचने। **हृत्वा** आपीयोरीकृत्य वा **अविहतप्रक्रमां** अविहततत्परमार्गगमनां। अविहतः अप्रति-बद्धः प्रक्रमः तत्परवर्त्मनि शीघ्रगमनं यस्यां सा। **व्योमव्रज्यां** विहायोगतिं। व्योम्नि आकाशे व्रज्या गमनं व्योमव्रज्या। ताम्। **पुनः** भूयः। **सन्दधीथाः** सम्यग्धत्स्व। **यत्** यस्मात् **जलवान्** जलगर्भः। जलमस्यास्तीति जलवान्। अस्त्यर्थे मतुवर्थो वत्प्र-त्ययः। **गरीयान्** गुरुतरः। 'गुणाङ्गाद्विष्ठेयसू' इतयिसि 'टेः' इति टेः खं 'वहुलगुरु—' इति गरादेशश्च। **अपि असौ अनिलः** प्रभञ्जनः **अन्तसारं**। अन्तः सारः बलं यस्य सः। तं। बलवन्तमित्यर्थः। **प्राप्तस्थैर्यं**। प्राप्तं स्थैर्यं स्थिरत्वं येन सः। तं। **त्वां** भवन्तं **तुलयितुं** उद्धृत्यापनेतुं **न शक्ष्यति** समर्थः न भविष्यति।

Oh cloud! you, stabilized owing to your being substantial inside, with the fatigue of your journey dispelled thoroughly, should, having taken in her water, resume your journey in the sky with its progress unimpeded, so that the wind carrying water, though more powerful, might not be able to carry you away suddenly.

**मार्गे मार्गे पुनरपि जलान्याहरेस्त्वं धुनीनां**
**येन स्थेमा भवति भवतो वीर दूरं प्रयातः।**
**उत्सृज्यालं लघिमघटितां रिक्ततामेधि पूर्णो**
**रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय॥ ८०॥**

अन्वयः—वीर! मार्गे मार्गे त्वं पुनः अपि धुनीनां जलानि आहरेः, लघि-मघटितां रिक्ततां अलं उत्सृज्य पूर्णः एधि, येन दूरं प्रयातः भवतः स्थेमा भवति। सर्वः रिक्तः हि लघुः भवति, पूर्णता गौरवाय (भवति)।

**मार्ग** इत्यादि। **वीर** शूर। **मार्गे मार्गे** प्रतिमार्गं त्वं भवान् मेघाकार-परिणतिः पार्श्वः **पुनः अपि** भूयोऽपि **धुनीनां** नदीनां। 'तटिनी ह्रादिनी धुनी' इत्यमरः। **जलानि** सलिलानि **आहरेः** गृहाण। **लघिमघटितां** जनितलघिमानं। घटिता लघिमा यया सा। अणिमजननीमित्यर्थः। 'वाहिताग्न्यादिषु' इति सः। लघो-र्भावः लघिमा। 'पृथ्वादिभ्य इमनिज्वा' इतीमनि 'टेः' इति टिखम्। **रिक्ततां** सारवैकल्यं। **अलं**

पर्याप्तं। अतिशयेनेति यावत्। 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः। उत्सृज्य परिहृत्य। त्यक्त्वेत्यर्थः। पूर्णः आपूरितजलः एधि भव। 'अस् भुवि' इत्यस्य धोः लोटि रूपम्। येन आपूरितजलत्वादिना दूरं दविष्ठदेशं प्रयातः प्रवसतः स्थेमा स्थिरत्वं। भवति भविष्यति। 'पृथ्वादेर्वेमन्' इति स्थिरशब्दादिमनि 'प्रियस्थिरस्फिरायादेरः' इति स्थिरावयवस्यैकारादिवर्णसङ्घातस्य अत्वं। सर्वः रिक्तः सर्वः सारविकलः हि निश्चयेन। अवश्यमित्यर्थः। 'हि विशेषेऽवधारणे' इति विश्वलोचने। लघुः गौरवशून्यः पक्षे उद्ग्राह्यः भवति जायते। पूर्णता ससारत्वं गौरवाय महिम्ने पक्षे गुरुत्वजनितनिष्प्रकम्प्यत्वाय। भवति जायते इति शेषः। 'क्लृप्यर्थे-विकारे' इत्यप्। पूर्णता गौरवरूपविकारभावेन परिणमते। गौरवं पूर्णतायाः परिणाम इत्यर्थः। सर्वस्य पूर्णस्य गौरवं भवति रिक्तस्य च लाघवमिति मनसिकृत्य रिक्ततां परित्यज्य यदि गौरवं भजसे तदा गरीयानपि प्रभञ्जनः स्वीकृतमार्गात्प्रच्याव्यान्यत्र भ्रामयितुं न शक्ष्यतीति तात्पर्यम्।

Oh brave! you, travelling far off, should take in (receive, attract) the waters of various rivers again and again on every one of your ways, (and) having completely given up emptiness ensuring lightness, should become full, by which you would become steady. Everying empty verily becomes light (insignificant) and fulness ensures heaviness (significance, steadiness).

कार्याल्लिङ्गात् स्वयमधिगतात् कारणस्याऽनुमानं
रूढं येषां तदियमभिमा युक्तरूपेति मन्ये।
त्वत्सान्निध्यं यदनुमिमते योषितः प्रोषितानां
नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढैः ॥ ८१ ॥

अन्वयः— यत् प्रोषितानां योषितः अर्धरूढैः केसरैः हरितकपिशं नीपं दृष्ट्वा त्वत्सान्निध्यं अनुमिमते, तत् स्वयं अधिगतात् कार्यात् लिङ्गात् कारणस्य अनुमानं येषां रूढं तेषां इयं अभिमा युक्तरूपा इति मन्ये।

कार्यादित्यादि। यत् यस्मात् कारणात् प्रोषितानां देशान्तरगतानां। योषितः स्त्रियः। 'नानाकार्यवशाद्यस्याः दूरदेशं गतः पतिः। सा मनोभवदुःखार्ता भवेत् प्रोषितभर्तृका' इति प्रोषितालक्षणम्। 'स्त्रीनारीवनिता मुग्धा भामिनी भीरुरङ्गना।

ललना कामिनी योषिद्योषा सीमन्तिनी वधूः ।' इति धनञ्जयः । **अर्धरूढैः** ईषद्रूढैः । एकदेशोद्भूतैः । अंशरूढैरित्यर्थः । 'अर्धं समांशके क्लीवमर्धः खण्डे पुमानपि' इति विश्वलोचने । अर्धः रूढः यस्य सः । 'वाहिताग्न्यादिषु' इति क्तान्तस्य परनिपातः । **केसरैः** किञ्जल्कैः । 'केसरो बकुले सिंहच्छटायां नागकेसरे । पुन्नागेऽस्त्री तु किञ्जल्के स्यात्तु हिङ्गुनि केसरं' इति विश्वलोचने । **हरितकपिशं** श्यामलं । हरितं च तत् कपिशं च हरितकपिशं । 'वर्णो वर्णैः' इति वर्णवाचिनः वर्णवाचिना यसः । हरितं पालाशवर्णं । कपिशं कृष्णलोहितं । 'पालाशो हरितो हरित्, इति 'श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते' इति चाऽमरः । पत्राणां हरिद्वर्णत्वात् हरितत्वं तत्पुष्पाणां च श्यावत्वात् कपिशत्वं नीपस्येति हरितकपिशमिति विशेषणं तस्य । **नीपं** स्थलकदम्बकं । अत्र जातावेकवचनं । तेन नीपानित्यर्थः । नीपानित्यस्य नीपकुसुमानीत्यर्थः 'पुष्पमूलेषु बहुलम्' इति नियममनुसृत्योप् कृतः न साधुः नीपकुसुमानां कृष्णलोहितमात्रत्वात्तेषां हरिद्वर्णत्वाभावात् । 'नीपो बलिकदम्बे स्यान्नीलवञ्जुलबन्धने' इति विश्वलोचने । **दृष्ट्वा** संलक्ष्य **त्वत्सान्निध्यं** भवत्सामीप्यं **अनुमिमते** व्याप्त्या निश्चिन्वन्ति । वर्षाकालनीपपुष्पितत्वयोरविनाभावात् नीपपुष्पितत्वस्य वर्षाकालसान्निध्यादन्यथानुपपत्तेः वर्षाकालागमं ज्ञात्वा भवत्सान्निध्यं निश्चिन्वन्तीति तात्पर्यम् । **तत्** तस्मात्कारणात् **स्वयं** हेत्वन्तराश्रयणमन्तरेण । प्रत्यक्षेण हेतोः साध्येनाविनाभावं स्वयं निश्चित्येत्यर्थः । महानसे धूमधनञ्जययोरस्तित्वमवलोक्य धूमस्य धनञ्जयेनाविनाभावं निश्चित्य पर्वताग्रे धूमवलयदर्शनात् पूर्वं स्वयं निश्चितात्तत्र धनञ्जयसद्भावो यथाऽनुमीयते तथा स्वयं निश्चिताद्धेतोः कारणानुमानं क्रियते इति तात्पर्यं । **अधिगतात्** स्वयं प्रत्यक्षेण निश्चितात् **कार्यात्** कार्यरूपात् **लिङ्गात्** हेतोः । लीनं इन्द्रियागोचरमर्थं गमयतीति लिङ्गं । **कारणस्य** कार्योत्पत्तिहेतोः **अनुमानं** अनुमितिः । अत्र भावेऽनट् । भवतीति मतं येषां **रूढं** प्रसिद्धं **तेषां** न्यायशास्त्रनिपुणानां **इयं** एषा **अभिमा** अभिमतं । अभिप्राय इत्यर्थः । **युक्तरूपा** अत्यर्थं युक्ता समीचीना । 'प्रशस्ते रूपः' इति प्रशंसायां रूपः । **मन्ये** जानामि ।

As the wives of those that have gone abroad infer your approach on seeing the Nipa flowers, green and brown on account of the half-grown filaments I think that view of those that the inference of the cause is made on the ground of a probans in the form of its effect which is determined by ( the inferer ) himself ( i. e. without the help of some other probans ) quite correct ( lit. quite proper ).

**मध्येविन्ध्यं वनभुवमिया यत्र दृष्ट्वा शिलीन्ध्रान्**

अध्यारूढाननुवनममी पर्वतीया मनुष्याः ।
त्वामायातं कलयितुमलं त्वत्पयोबिन्दुपातैः
आविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ॥ ८२ ॥

अन्वयः— यत्र अनुवनं अध्यारूढान् शिलीन्ध्रान् अनुकच्छं च त्वत्पयोबिन्दुपातैः आविर्भूतप्रथममुकुलाः कन्दलीः दृष्ट्वा अमी पर्वतीयाः मनुष्याः त्वां आयातं कलयितुं अलं ( तां ) मध्येविन्ध्यं वनभुवं इयाः ।

मध्येविन्ध्यमित्यादि । यत्र विन्ध्याचलावेष्टितायां वनभुवि अनुवनं वने । ' झिः सुब् – ' इति सुबर्थे ह्रसः । अध्यारूढान् समुत्पन्नान् । शिलीन्ध्रान् । कवकान् । ' शिलीन्ध्रं कवके रम्भापुष्पत्रिपुटयोरपि ' इति विश्वलोचने । अनुकच्छं च अनूपे । जलप्रायप्रदेशे इत्यर्थः । ' कच्छः शैलादिसीमनि । नौकाङ्ग तुन्नकेऽनूपे परिधानाञ्चलान्तरे ' इति विश्वलोचने । ' जलप्रायमनूपः स्यात्पुंसि कच्छस्तथाविधः ' इत्यमरः । ' झिः सुब् – ' इति सुबर्थ एव ह्रसः । त्वत्पयोबिन्दुपातैः त्वत्पाथः-पृषत्पातैः । तव पयः त्वत्पयः । तस्य बिन्दूनां पृषतां कणानां पातः पतनं । तैः । आविर्भूतप्रथममुकुलाः प्रकटीभूतप्रथमोत्पन्नकुड्मलाः । आविर्भूताः प्रकटीभूताः प्रथमाः प्रथमं प्रादुर्भूताः मुकुलाः यासां ताः । कन्दलीः भूकदलीः । ' द्रोणपर्णी स्निग्धगन्धा कन्दली भूकदल्यपि ' इति शब्दार्णवे । दृष्ट्वा अवलोक्य अमी ते पर्वतीयाः पर्वते जाताः । ' पर्वतान्मर्त्ये ' इति मर्त्यार्थे पर्वताच्छः । मनुष्याः मानवाः । त्वां भवन्तं आयातं सम्प्राप्तं कलयितुं अनुमातुं । कलधातोः कविकामधेनुत्वादनुमातुमित्ययमर्थः कलयितुमित्यस्य । अलं समर्थाः भवन्ति । तां तादृशीं मध्येविन्ध्यं विन्ध्यस्य मध्ये स्थितां । विन्ध्यस्य मध्ये मध्येविन्ध्यं । ' पारेमध्येऽन्तस्तया ' इति सः । वनभुवं वनभूमिं इयाः यायाः ।

You should visit the forest region situated in the interior of the Vindhyas where the mountaineers are able to infer your approach on seeing mushrooms grown in the forests and the plantain trees, with their first buds manifested by the discharge of drops of your water, grown in the marshes.

त्वामासन्नं सपदि पथिका ज्ञातुमर्हन्त्यकाले
श्रुत्वा केकाध्वनिमनुवनं केकिनामुन्मदानाम् ।

वर्हक्षेपं नटितमपि च प्रेक्ष्य तेषां सलीलं
दग्धारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः ॥ ८३ ॥

अन्वय :— अनुवनं उन्मदानां केकिनां केकाध्वनिं श्रुत्वा अपि च तेषां सलीलं वर्हक्षेपं नटितं प्रेक्ष्य दग्धारण्येषु च उर्व्याः अधिकसुरभिं गन्धं आघ्राय त्वां अकाले आसन्नं सपदि ज्ञातुं पथिकाः अर्हन्ति ।

त्वामित्यादि । अनुवनं वनेषु । 'झिः सुप् –' इत्यादिना विभक्त्यर्थे हसः । उन्मदानां उन्मत्तानां आनन्दकन्दलितस्वान्तानां वा । उद्गतः मदः गर्वः हर्षः वा येषां । तेषां । केकिनां मयूराणां । केका ध्वनिविशेषः अस्त्येषामिति केकिनः । केकाध्वनिं मायूरं ध्वनिं । केका एव ध्वनिः केकाध्वनिः । तं । 'केका वाणी मयूरस्य' इत्यमरः श्रुत्वा श्रुतिविषयतां नीत्वा । अपि च । तेषां च मयूराणां च वर्हक्षेपं पिच्छोत्क्षेपं वर्हाणि उत्क्षेपं वर्होत्क्षेपं । 'स्वाङ्गेऽध्रुवे' इत्यध्रुवे इवन्ते वाचि घोर्णम् । यस्मिन्विनष्टे सति प्राणिनां मरणं न भवति तदध्रुवं स्वाङ्गं । वर्हेषु विनष्टेषु सत्सु मयूराणां मरणं न भवतीति तेऽध्रुवस्वाङ्गभूताः । तेषु वाक्ष्वत्र घोर्णम् । नटितं नर्तनं । नृत्यमित्यर्थः । प्रेक्ष्य अवलोक्य । दग्धारण्येषु च । दग्धेषु दावाग्निभ्रष्टेषु च तेषु अरण्येषु च । उर्व्याः पृथिव्याः । अधिकसुरभिं समधिकसौगन्ध्यं । गन्धं परिमलं । आघ्राय नासिकयोपादाय त्वां भवन्तं अकाले वर्षाकालादन्यस्मिन्काले आसन्नं सन्निधौ प्राप्तं । सपदि झटिति ज्ञातुं आकलयितुं पथिकाः पान्थाः । पन्थानं याति पथिकः । 'पथष्टट्' इति यात्यर्थे ठट् । अर्हन्ति योग्याः भविष्यन्ति ।

The travellers would become capable of knowing immediately your unseasonable approch on hearing in the forests the cries of the delighted peacocks, on seeing their charming dances with their plumages expanded, and on smelling the more fragrant odour of the earth in the burnt-up forests.

पुष्पामोदैरविरलममी सम्पतन्तो वनान्ते
वद्धौत्सुक्यात् सरसविदलत्कन्दलैश्चानुकुञ्जम् ।
दग्धारण्यस्थलपरिमलैश्चानुकृष्टा यथास्वं
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ ८४ ॥

अन्वयः— वद्धौत्सुक्यात् पुष्पामोदैः (अनुकृष्टाः) वनान्ते अविरलं सम्पतन्तः

भूयश्चेत्यादि । भूयश्च पुनश्च नवजलधराधौतसानुप्रदेशे नव्यजलदप्रक्षालिताशिखरभूभागे । नवाः अप्रत्नाः । नवाश्च ते जलधराः मेघाश्च नवजलधराः । तैः आधौताः समन्तात् प्रक्षालिताः सानोः शिखरस्य प्रदेशाः भूभागाः यस्य सः । तस्मिन् । नृत्यत्केकिध्वनिमुखरिते नटन्मयूरकेकारावाचालिते । नृत्यन्तः नटन्तश्च ते केकिनः मयूराश्च नृत्यत्केकिनः । तेषां ध्वनिभिः केकारावैः मुखरितः वाचालितः । तस्मिन् । मुखरं वाचालं करोति मुखरयति । 'तत्करोति तदाचष्टे' इति णिच् । मुखरयति स्म मुखरितः । सञ्जातमौखर्यः इत्यर्थः । स्वागतं प्रावूर्णकसभाजनं तन्वति इव विदधति इव । तनोति विदधातीति तन्वन् । तस्मिन् । शिरसा च मूर्ध्ना च पाद्यं पादार्थमुदकं । 'पाद्यार्घ्ये' इति निपातः । निर्झराम्भः प्रवाहपानीयं । झरोदकमित्यर्थः । उच्चैः उन्नतं यथा स्यात्तथा । वहति धारयति सति । ककुभसुरभौ अर्जुनकुसुमसुगन्धे । ककुभानां ककुभकुसुमानां सुरभिः सुगन्धः यत्र सः ककुभसुरभिः । 'पुष्पमूले वहुलम्' इति पुष्पत्यस्य 'प्राण्योषधिवृक्षेभ्योऽवयवे च' इति अवयवार्थे प्रयुक्तस्याऽणः 'मयड्वाऽभक्ष्याच्छादने' इति तदर्थे एव विहितस्य मयटो वोप् । 'रुद्रद्रुः ककुभोऽर्जुनः' इत्यमरः । तस्मिन् । पर्वते पर्वते प्रतिपर्वतं । वीप्सायां द्विः । ते भवतः कालक्षेपं कालयापनं अभिशङ्के सन्दिहे । सन्देहविषयतां नयामि ॥

Moreover, I doubt that you would make delay on every mountain, fragrant on account of the Kakubha flowers, having the regions of its peaks washed off by fresh clouds, resounding with the cries of the dancing peacocks, offering you as if welcome, bearing very high up on its top waters of springs for your feet.

निःसङ्गोऽपि व्रजितुमनलं तत्र तत्र क्षितिध्रे
लब्धातिथ्यः प्रिय इव भवानुह्यमानः शिरोभिः ।
अभ्युद्यातैस्त्वदुपगमनादुन्मनीभूय भूयः
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः ॥ ८७ ॥

अन्वयः— भूयः तत्र तत्र क्षितिध्रे लब्धातिथ्यः, त्वदुपगमनात् उन्मनीभूय केकाः स्वागतीकृत्य अभ्युद्यातैः सजलनयनैः शुक्लापाङ्गैः प्रियः इव शिरोभिः उह्यमानः भवान् निःसङ्गः [ सन् ] अपि व्रजितुं अनलम् ।

निःसङ्गोऽपीत्यादि । भूयः पुनः तत्र तत्र क्षितिध्रे सर्वत्र पर्वतेषु । प्रतिपर्वतमित्यर्थः । क्षितिं भुवं धरतीति क्षितिध्रः पर्वतः । तस्मिन् । लब्धातिथ्यः

प्राप्तातिथेयः । लब्धं प्राप्तं आतिथ्यं आतिथेयं येन सः । अतिथ्यर्थमातिथ्यं । 'ण्योऽतिथेः-' इति ण्यः । 'अतिथिर्ना गृहागते' इति 'क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि' इति चाऽमरः । 'आवेशिकं विपश्चिद्भिरातिथ्यमभिधीयते' इति कात्यः । 'आतिथ्यं स्यादतिथ्यर्थ आतिथ्यमतिथिं विदुः' इति शाश्वतः । **त्वदुपगमनात्** तव समीपगमनात् **उन्मनीभूय** सोत्कण्ठाः भूत्वा । अनुन्मनसः उन्मनसः भूत्वोन्मनीभूय । 'कृभ्वस्तियोगेऽतत्त्वे सम्पत्तरि च्विः' इति च्विः । च्वौ परे च 'मनोरुश्चक्षुश्चेतोरहोरजसः खं' इति मनसोऽन्त्यस्य सकारस्य खम् । 'हलः ईक्' इति ईक् च । **केकाः** मायूरान्ध्वनीन् 'केका वाणी मयूरस्य' इत्यभिधानात् । **स्वागतीकृत्य** केकासु स्वागतवचनमारोप्य । अस्वागतं स्वागतं कृत्वा स्वागतीकृत्य । स्वागतवचनतामुपनीय । **अभ्युद्यातैः** त्वत्सभाजनार्थमुद्गतैः । **सजलनयनैः** साश्रुनेत्रैः । जलेन सहितानि सजलानि । सजलानि नयनानि येषां तैः शुक्लापाङ्गैः मयूरैः । 'मयूरो बर्हिणो बर्ही शुक्लापाङ्गः शिखावलः' इति यादवः । **प्रियः इव** मित्रमिव **शिरोभिः** मूर्धभिः **उह्यमानः** ध्रियमाणः । उह्यते इति उह्यमानः । **भवान्** त्वं । **निःसङ्गः अपि** परित्यक्तबाह्याभ्यन्तरपरिग्रहः अपि **व्रजितुं** गन्तुं **अनलं** असमर्थः । सर्वत्र पर्वतेषु लब्धातिथेयत्वात् कालयापनं विधास्यसीति भावः ।

Moreover, you, given a hospitable reception, borne on their heads like a dear friend by peacocks ascending the tops (of mountains) through eagerness (for you) at the time of your arrival and welcoming you, though devoid of attachments, would become unable to proceed on.

तस्योत्कण्ठाविरुतिमुखरस्योत्पतिष्णोः कथञ्चित्  
प्रत्यासन्नत्वदुपगमनस्याऽन्तरार्द्रस्वभावे ।  
स्नेहव्यक्तिं त्वयि घनयतः केकिवृन्दस्य मन्ये  
प्रत्युद्यातः कथमपि भवान्गन्तुमाशु व्यवस्येत् ॥ ८८ ॥

अन्वयः— उत्कण्ठाविरुतिमुखरस्य कथञ्चित् उत्पतिष्णोः प्रत्यासन्नत्वदुपगमनस्य तस्य केकिवृन्दस्य आर्द्रस्वभावे त्वयि स्नेहव्यक्तिं घनयतः प्रत्युद्यातः (सतः) अपि भवान् आशु गन्तुं व्यवस्येत् (इति) मन्ये ।

तस्येत्यादि । **उत्कण्ठाविरुतिमुखरस्य** उन्मनायितजनितकेकाध्वनिवाचालि-

अमी सारङ्गाः, ( वद्धौत्सुक्यात् ) सरसविदलत्कन्दलैः ( अनुकृष्टाः ) अनुकुञ्जं ( अविरलं सम्पतन्तः अमी सारङ्गाः ), ( वद्धौत्सुक्यात् ) दग्धारण्यस्थलपरिमलैः ( अनुकृष्टाः दग्धारण्यस्थलेषु अविरलं सम्पतन्तः अमी सारङ्गाः ) जललवमुचः ते मार्गं यथास्वं सूचयिष्यन्ति ।

पुष्पेत्यादि । वद्धौत्सुक्यात् सञ्जातोत्कण्ठ्यात् । वद्धं सञ्जातं च तत् औत्सुक्यं औत्कण्ठ्यं च वद्धौत्सुक्यं । तस्मात् हेतोः । पुष्पामोदैः कुसुमगन्धैः । पुष्पाणामामोदाः । तैः । अनुकृष्टाः आकृष्टाः । वनान्ते वनमध्यप्रदेशे । अविरलं निरन्तरं सपतन्तः उड्डीय गच्छन्तः । अमी ते । सारङ्गाः भ्रमराः । सरसविदलत्कन्दलैः । विदलन्तः प्रादुर्भवन्तश्च ते कन्दलाः नवाङ्कुराः विदलत्कन्दलाः। सरसाश्च ते विदलत्कन्दलाश्च । तैः । अनुकृष्टाः। अनुकुञ्जं कुञ्जेषु । 'ञिः सुव्–' इति विभक्त्यर्थे हसः । अविरलं सम्पतन्तः अमी सारङ्गाः कुरङ्गाः । दग्धारण्यस्थलपरिमलैः दावदग्धवनस्थलपरिमलैः । दग्धानि दावदग्धानि अरण्यस्थलानि दग्धारण्यस्थलानि । तेषां परिमलैः । अनुकृष्टाः अविरलं सम्पतन्तः अमी सारङ्गाः चातकाः । जललवमुचः सलिलकणवर्षुकस्य । जललवान् मुञ्चतीति जललवमुक् । क्विप् । ते तव मार्गं अध्वानं यथास्वं यथोचितं सूचयिष्यन्ति पिशुनयिष्यन्ति । वनान्ते सम्पतन्तो भृङ्गाः, कुञ्जेषु सम्पतन्तः कुरङ्गाः, दग्धारण्येषु सम्पतन्तश्च चातकाः मेघजललवाकृष्टाः तत्र तत्र स्थानेषु ते गतिं पिशुनयिष्यन्तीति भावः ।

Those bees, with their eagerness roused to action, flying in collections into the interior of forests on account of their being attracted by the fragrance of flowers, those antelopes, (with their eagerness roused to action), rushing into the bowers on account of their being attracted by the fresh sprouts shooting out, those Chātaka birds, (with their eagerness roused to action), running towards the burnt-up forests owing to their being attracted by the fragrant odours of the burnt up forests, would be ascertaining (lit. indicating) in accordance with their capacities, the path of you discharging drops of water.

गम्भीरत्वं यदिदमधुना लक्ष्यते ध्यानहेतोः
सङ्क्षोभाणां विरचनशतैरप्यधृष्यं मदीयैः ।
तद्दृष्ट्वाऽहं तव घनतया मान्द्यमेवाऽतिधैर्याद्
उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः ॥ ८५ ॥

अन्वयः— सखे ! ध्यानहेतोः यत् इदं गम्भीरत्वं अधुना लक्ष्यते तत् मदीयैः सङ्क्षोभाणां विरचनशतैः अपि अधृष्यं दृष्ट्वा मत्प्रियार्थे घनतया अतिधैर्यात् द्रुतं अपि यियासोः तव मान्द्यं एव अहं उत्पश्यामि ।

गम्भीरत्वमित्यादि । सखे हे मित्र ध्यानहेतोः ध्यानस्य निर्विकल्पसमाधेः हेतोः । ध्यानसिद्ध्यर्थमित्यर्थः । यत् इदं गम्भीरत्वं प्रशान्तमनस्कत्वं । नानाविधोपसर्गैरुपद्रुतेऽपि मया भवति भवतो यदिदमक्षुब्धस्वान्तत्वं अधुना इदानींतने काले लक्ष्यते अवलोक्यते तत् गम्भीरत्वं मदीयैः मामकीनैः । मम अयमिति छः । सङ्क्षोभाणां सञ्चालनोपायानां विरचनशतैः अपि प्रयोजनशतैः अपि । विरचनानां विधानानां प्रयोजनानां शतानि । तैः अधृष्यं अधर्षणीयं । अनभिभवनीयमित्यर्थः । दृष्ट्वा विलोक्य मत्प्रियार्थं मदीयायाः प्रेयस्याः कृते घनतया धृतमेघाकृतित्वेन अतिधैर्यात् आश्रितविपुलसाहसत्वात् द्रुतं अपि शीघ्रमपि यियासोः यातुमिच्छोः । यातुमिच्छति यियासति । 'तुमीच्छायां धोर्वाम्' इतीच्छायां कृतस्य तुम उप् संश्च । सन्नन्ताचास्मात् 'सन्भिक्षाशंस्विन्दिच्छादुः' इत्युः । तस्य । तव भवतः मान्द्यं मन्दत्वं । जड़त्वमित्यर्थः । एव । अवधारणार्थोयमेवकारः । एतेन मान्द्यादन्यस्य भावस्य परिहारो भवति । अहं कमठचरः शम्बरासुरः उत्पश्यामि तर्कयामि । मन्ये इत्यर्थः ॥

Having seen this balance of your mind effected for your meditation, which is being noticed at present, to be quite impenetrable by hundreds of strategemes devised by me to effect its disturbance, I look up to it as merely the dulness of you who, under the disguise of a cloud, are desirous of going speedily with a very great courage for the sake of my beloved.

भूयश्चाहं नवजलधराधौतसानुप्रदेशे
नृत्यत्केकिध्वनिमुखरिते स्वागतं तन्वतीव ।
पाद्यं चोच्चैर्वहति शिरसा निर्झराम्भोऽभिशङ्के
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ॥ ८६ ॥

अन्वयः— भूयः च नवजलधराधौतसानुप्रदेशे नृत्यत्केकिध्वनिमुखरिते स्वागतं तन्वीत इव, शिरसा च पाद्यं निर्झराम्भः उच्चैः वहति, ककुभसुरभौ पर्वते पर्वते ते कालक्षेपं अभिशङ्के ।

तस्य । उत्कण्ठया उन्मनायितेन जनिताः विरुतयः केकारावाः उत्कण्ठाविरुतयः । ताभिः मुखरस्य वाचालितस्य । **कथञ्चित्** कथं कथमपि **उत्पतिष्णोः** सलीलमुत्पततः । साधूत्पततीत्युत्पतिष्णुः । 'भूभ्राज्यलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृधुसहचर इष्णुः' इति साध्वर्थे इष्णुः । **प्रत्यासन्नत्वदुपगमनस्य** समीपभवत्प्राप्तेः । तव उपगमनं त्वदुपगमनं । प्रत्यासन्नं सुतरां समीपं त्वदुपगमनं यस्य सः । **तस्य** तत्पर्वतस्थितस्य । **केकिवृन्दस्य** मयूरसङ्घातस्य । **आर्द्रस्वभावे** मार्दवाविलान्तःकरणे । आर्द्रः मार्दवाविलः स्वभावः स्वरूपं यस्य सः । तस्मिन् । **त्वयि** भवति । **स्नेहव्यक्तिं** प्रेमाविर्भावं **घनयतः** घनीकुर्वतः । घनं करोति घनयति । 'तत्करोति तदाचष्टे' इति णिच् । यद्वा 'मृदो स्वर्थे णिज्बहुलं' इति णिच् । घनं सान्द्रमित्यर्थः । 'घनं स्यात्कांस्यतालादिवाद्ये मध्यमताण्डवे । घनस्तु मेघे मुस्तायां विस्तारे लोहमुद्गरे । काठिन्ये चाथ कठिने सान्द्रेऽपि च घनस्त्रिषु' इति विश्वलोचने । **प्रत्युद्यातः सतः अपि** प्रत्युद्गच्छतः सतः अपि । समाजनार्थमभिमुखमापतन्तमप्यनादृत्येत्यर्थः । 'ता चाऽनादरे' इत्यनादरे ता । **भवान्** त्वं **आशु** झटिति **गन्तुं** गमनाय **व्यवस्येत्** निश्चिनुयात् इति **कथं** केन प्रकारेण कस्माद्वा कारणात् **मन्ये** जाने ।

How can I think that you, though welcomed, would determine to proceed on immediately conniving at the host of peacocks, noisy on account of the cries given out through eagerness, anyhow flying up well, having your approach well-nigh, intensifying the manifestation of affection for you who possess a soft heart ?

**विन्ध्योपान्तात्तव गतवतो नाऽतिदूरे दशार्णाः**
**रम्यारामा नयनविषये सम्पतिष्यन्ति सद्यः ।**
**त्वत्सान्निध्यात् कलुषितपयःपूर्णशालेयवप्राः ।**
पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नैः ॥ ८९ ॥

अन्वयः— सूचिभिन्नैः केतकैः पाण्डुच्छायोपवनवृतयः त्वत्सान्निध्यात् कलुषितपयःपूर्णशालेयवप्राः रम्यारामाः दशार्णाः विन्ध्योपान्तात् अतिदूरे न गतवतः तव नयनविषये सद्यः सम्पतिष्यन्ति ।

विन्ध्येत्यादि । **सूचिभिन्नैः** अग्रभागे विकसितैः । भिन्नाः विदलिताः विकसिताः सूचयः अग्राणि येषां ते । तैः । 'वाहिताग्न्यादिषु' इति सः । यद्वा सूचिषु मुकुलाग्रेषु भिन्नाः विदलिताः सूचिभिन्नाः । तैः । 'केतकीकुसुमाग्रेषु सूचिः

स्यात्' इति शब्दार्णवे । **केतकैः** केतकीकुसुमैः । 'पुष्पमूले बहुलम्' इति केतकीगुल्मावयवभूतकुसुमार्थप्रत्यायकस्य 'मयड्वाऽभक्ष्याच्छादने' इति मयटः उस् । **पाण्डुच्छायोपवनवृतयः** शुभ्रवर्णोपवनमत्तवारणाः । पाण्डुः शुभ्रवर्णा छाया कान्तिः येषां ते पाण्डुच्छायाः । उपवनानां ग्रामारामाणां वृतयः मत्तवारणानि उपवनवृतयः । पाण्डुच्छायाः शुभ्रवर्णाः उपवनवृतयः मत्तवारणानि येषां ते पाण्डुच्छायोपवनवृतयः । 'प्राकारो वरणः सालः प्राचीनं प्रान्ततो वृतिः' इत्यमरः । **त्वत्सान्निध्यात्** भवत्प्रत्यासत्तेः । तव सान्निध्यं प्रत्यासत्तिः त्वत्सान्निध्यं । तस्माद्धेतुभूतात् । **कलुषितपयःपूर्णशालेयवप्राः** जम्बालाविलसलिलप्रपूरितशाल्युत्पत्तिक्षेत्राः । कलुषं जम्बालाविलत्वान्मलिनं कृतं कलुषितं । 'मृदो ध्वर्थे णिज्बहुलं' इति णिच् । कलुषयति कलुषं करोति स्म कलुषितं । णिजन्तात्क्तः । कलुषितं च तत् पयः पानीयं च कलुषितपयः । तेन पूर्णाः प्रपूरिताः शालेयाः वप्राः क्षेत्राणि यत्र । 'वप्रस्तातेऽस्त्रियां तीरे तु क्षेत्रचयरेणुषु' इति विश्वलोचने । शालेयाः शालीनां क्षेत्राणि । 'व्रीहिशालेर्ढञ्' इति क्षेत्रार्थे ढञ् । शाल्युत्पत्तिभूमयः इत्यर्थः । 'कलुषोऽनच्छ आविलः' इति, 'क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितं' इति चाऽमरः । शाल्युद्भवोचिताः इत्यर्थोऽत्र सङ्ग्राह्यः । **रम्यारामाः** रमणीयोद्यानभूमयः । रम्याः रमणीयाः आरामाः उद्यानानि यत्र । **दशार्णाः** दशार्णाभिधानः जनपदः **विन्ध्योपान्तात्** विन्ध्याख्याचलासन्नप्रदेशात् । विन्ध्यस्योपान्तः आसन्नः प्रदेशः विन्ध्योपान्तः । तस्मात् । अतिदूरे दविष्ठदेशे न **गतवतः** अप्राप्तस्य । अत्र वर्तमाने क्तवतुः । तव मेघाकारपरिणतस्य भवतः । **नयनविषये** नेत्रगोचरे । नयनयोर्नेत्रयोर्विषयो गोचरः नयनविषयः। तस्मिन् । **सद्यः** सपदि । **सम्पत्स्यन्ति** सम्प्राप्स्यन्ति ।

The Dasharna country, having the fences of its gardens possessing a whitish lustre on account of the flowers of Ketaka plants burst open at the points of the buds, having the fields of rice filled up with water turbid on account of your proximity, having beautiful gardens, would at once fall in the range of your eyesight when you would not have travelled far off from the vicinity of the Vindhyas.

**तेषामाविष्कृतजललवे त्वय्युपासन्नवृत्तौ**
**सीमोद्देशा नयनसुभगाः सामिसंरूढसस्याः ।**
**सञ्जायेरन्नवपरिकरा मूकपुंस्कोकिलाश्च**
**नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ॥ ९० ॥**

अन्वयः— उपासन्नवृत्तौ त्वयि आविष्कृतजललवे तेषां सीमोद्देशाः सामिसंरूढसस्याः मूकपुंस्कोकिलाः गृहबलिभुजां नीडारम्भैः आकुलग्रामचैत्याः च नयनसुभगाः नवपरिकराः सञ्जायेरन् ।

तेषामित्यादि । **उपासन्नवृत्तौ** अत्यासन्नभूप्रदेशं प्राप्ते । उपासन्ना प्रत्यासन्ना वृत्तिः वर्तनं यस्य सः । तस्मिन् । **त्वयि** भवति । **आविष्कृतजललवे** वृष्टसलिलकणे । जलस्य सलिलस्य लवाः कणाः जललवाः । आविष्कृताः प्रादुर्भाविताः जललवाः सलिललवाः येन सः । तस्मिन् सति । 'यद्भावाद्भावगतिः' इति ईप् । **तेषां** दशार्णानां **सीमोद्देशाः** दशार्णसीमान्तप्रदेशाः । सीम्नां मर्यादानां उद्देशाः प्रदेशाः सीमोद्देशाः । 'मर्यादायां स्त्रियां सीमाक्षेत्रे घाटे स्थितावपि' इति विश्वलोचने । **सामिसंरूढसस्याः** ईषदुत्पन्नसस्याङ्कुराः । सामि ईषत् संरूढानि समुत्पन्नानि सस्यानि स्तम्बकरीणि तृणानि यत्र । 'सामि निन्दार्धयोः' इति विश्वलोचने । **मूकपुंस्कोकिलाः** अवाग्वन्दिविहङ्गमाः । पुमांसश्च ते कोकिलाः वन्दिविहङ्गमाश्च पुंस्कोकिलाः । मूकाः अवाचः पुंस्कोकिलाः यत्र ते मूकपुंस्कोकिलाः । 'मूकस्त्ववाङ्मतो दीने' इति विश्वलोचने । त्वदागमे चूताङ्कुरोत्पत्तिनिमित्तवसन्तकालापगमभ्रान्त्या कोकिलाः चूताङ्कुरास्वादकषायकण्ठाः सन्तोऽपि मधुरारावं परित्यज्य मूकीभावं गमिष्यन्तीति भावः । अनेनायं चूताङ्कुरोत्पत्त्यनुकूलवसन्तर्तुसमयः इति गम्यते । **गृहबलिभुजां** काकादिग्रामपक्षिणां । गृहबलिं गृहकृतायाः पूजायाः उपहारं भुञ्जन्तीति गृहबलिभुजः काकादयो ग्रामपक्षिणः । तेषां । 'बलिश्चामरदण्डेऽपि करपूजोपहारयोः' इति विश्वलोचने । **नीडारम्भैः** कुलायविरचनार्थं क्रियमाणैरुद्यमैः । नीडार्थं आरम्भाः उद्यमाः नीडारम्भाः । तैः । 'नीडं स्थाने कुलायेऽस्त्री समीपे तु सपूर्वकः' इति 'आरम्भ उद्यमे दर्पे त्वरायां च वधेऽपि च' इति च विश्वलोचने । **आकुलग्रामचैत्याः** सङ्कीर्णग्रामोद्देश्यपादपाः । ग्रामेषु चैत्यानि उद्देश्यपादपाः। ग्रामेषु चैत्यानि उद्देश्यपादपाः उन्नतभूप्रदेशोत्पन्नाः पादपाः ग्रामचैत्यानि । आकुलानि ग्रामचैत्यानि यत्र आकुलग्रामचैत्याः । 'चैत्यमुद्देश्यपादपे' इति विश्वलोचने । **नयनसुभगाः** नेत्राकर्षिणः । नयनयोः सुभगाः मनोहाराः । स्वसौन्दर्याकृष्टजननयनाः इत्यर्थः । **नवपरिकराः** नवपरिवाराः नव्यारम्भाः वा । नवः नूतनः परिकरः येषां ते नवपरिकराः । यद्वा नवाः परिकराः आरम्भाः येषु ते नवपरिकराः । 'परिकरः पर्यङ्कपरिवारयोः' इत्यमरः । अत्रैव टीकायां 'समूहारम्भयोः गात्रिकाबंधे च (परिकरः)' इति क्षीरस्वामिनोक्तं । वसन्तकालेऽपि प्रावृट्कालोचितारम्भसम्भारदर्शनात् सः कालः नवारम्भः । दशार्णसीमोद्देशेषु नवारम्भसम्भारदर्शनात्तेऽपि

नवारम्भाः । अतः ‘ नवपरिकराः ’ इत्यस्य ‘ नवारम्भाः ’ इत्येव एवार्थः समीचीनः । सञ्जायेरन् सम्भविष्यन्ति ।

The border lands of that country, endowed with a charm attracting the eyes, having corns cropped up, cuckoos silenced, having trees occupying high positions in their villages overcome with the efforts of birds, eating domestic oblations ( i. e. crows, sparrows etc. ), for building their nests, would have their surroundings changed into new ones when you, on your approach in the vicinity, would have discharged drops of water.

**भूयस्तेषामुपवनभुवस्तुङ्गशाखाग्रघृष्ट—**
**व्योमोत्सङ्गैर्निजतरुवरैरात्तशोभाः फलाढ्याः ।**
**सम्पद्येरन्विविधविहगैराकुला नीडकृद्भिः**
**त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः ॥ ९१ ॥**

अन्वयः—भूयः त्वयि आसन्ने परिणतफलश्यामजम्बूवनान्ताः, तुङ्गशाखाग्रघृष्टव्योमोत्सङ्गैः निजतरुवरैः आत्तशोभाः, फलाढ्याः तेषां उपवनभुवः नीडकृद्भिः विविधविहगैः आकुलाः सम्पद्येरन् ।

भूय इत्यादि । **भूयः** पुनः **त्वयि** भवति **आसन्ने** समीपं प्राप्ते सति । ‘ यद्भावाद्भावगतिः ’ इति ईप् । **परिणतफलश्यामजम्बूवनान्ताः** । परिणतानि पक्कानि च तानि फलानि च परिणतफलानि । तैः श्यामानि कृष्णवर्णानि हरिद्वर्णानि च तानि जम्बूवनानि च । तै अन्ताः रम्याः । यद्वा परिणतफलैः श्यामानि जम्बूवनानि यत्र ते परिणतफलश्यामजम्बूवनाः । परिणतफलश्यामजम्बूवनाः अन्ताः प्रान्ताः प्रत्यासन्नप्रदेशाः यासां ताः । ‘ अन्तो नाशे मनोहरे । स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु ’ इति विश्वलोचने । **तुङ्गशाखाग्रघृष्टव्योमोत्सङ्गैः** उन्नततरविटपाग्रसङ्घृष्टाकाशपृष्ठप्रदेशैः । तुङ्गैः समुत्तुङ्गैः समुन्नतैः शाखानां विटपानामग्रैः अन्त्यावयवैः घृष्टः सम्मृष्टः व्योम्नः आकाशस्य उत्सङ्गः तलं पृष्ठप्रदेशः यैः ते । तैः । **निजतरुवरैः** उद्यानोद्भवैः तरुवरैः वृक्षश्रेष्ठैः । स्वकीयैः महद्भिस्तरुभिरित्यर्थः : **आत्तशोभाः** प्राप्तसौन्दर्याः । आत्ता उररीकृता शोभा याभिस्ताः आत्तशोभाः । **फलाढ्याः** फलैर्ग्रहितरुसमृद्धाः, विपुलफलाः वा । **तेषां** दशार्णानां **उपवनभुवः** उद्यानभूमयः **नीडकृद्भिः** कुलायकृद्भिः । नीडं कुलायं करोति विरचयतीति नीडकृत् ।

क्विप्। 'नीडं स्थाने कुलायेऽस्त्री समीपे तु सपूर्वकः' इति विश्वलोचने। **विविधविहगैः** नानाविधैः विहायोगतिभिः पक्षिभिः। 'गमे खच्खड्डाः' इति डः। **आकुलाः** सङ्कीर्णाः। व्याप्ताः इति यावत्। **सम्पद्येरन्** सम्पत्स्यन्ते। भविष्यन्तीत्यर्थः।

Moreover, on your arrival the regions of their gardens possessing on their borders Jambu groves dark with ripe fruits, endowed with beauty on account of the excellent trees rubbing against the surface of the sky with the ends of their tall branches, rich in fruits, would be overcrowded with various birds engaged in building up their nests.

**इत्यभ्यर्णे भवति विलसद्विद्युदुद्दामहासे**
**मुक्तासारप्रकटितरवे केकिनामुन्मदानाम्।**
**नृत्यारम्भं घटयति मुहुर्नूनमुद्भूतपङ्काः**
**सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः॥ ९२॥**

अन्वयः— इति विसलद्विद्युदुद्दामहासे मुक्तासारप्रकटितरवे उन्मदानां केकिनां नृत्यारम्भं मुहुः घटयति भवति अभ्यर्णे (सति) उद्भूतपङ्काः दशार्णाः नूनं कतिपयदिनस्थायिहंसाः सम्पत्स्यन्ते।

इत्यभ्यर्णे इत्यादि। इति एवंप्रकारेण। **विलसद्विद्युदुद्दामहासे**। विलसन्ती प्रादुर्भावितचाकचक्या चासौ विद्युत् सौदामनी च विलसद्विद्युत्। सैव उद्दामः विकटः हासः हास्यं प्रकाशः वा यस्य सः। तस्मिन्। हसनं हासः। 'हस्स्वन्क्वण्यो वा' इति वैकल्पिकेऽचि पक्षे 'भावे' इति घञ्। **मुक्तासारप्रकटितरवे**। मुक्तः व्युत्सृष्टश्चासौ आसारः वेगवती वृष्टिश्च मुक्तासारः। तत्र प्रकटितः प्रादुर्भावितः रवः गर्जिध्वनिः येन सः। प्रकटयति स्म प्रकटितः। 'मृदो ध्वर्थे णिज्बहुलं' इति णिजन्तात्क्तः। 'आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले' इति विश्वलोचने। **उन्मदानां** आविर्भूतामन्दानन्दानां। उद्गतः आविर्भूतः मदः अमन्दानन्दः येषां ते। तेषां। **केकिनां** मयूराणां। मेघनादानुलासिनामित्यर्थः। **नृत्यारम्भं** नर्तनोद्यमं। 'आरम्भः उद्यमे दर्पे त्वरायां च वधेऽपि च' इति विश्वलोचने। 'स्यादभ्यादानमुद्धात आरम्भः' इत्यमरः। **मुहुः** असकृत्। **घटयति** जनयति। घटयति जनयतीति घटयन्। तस्मिन्। 'सल्लटः' इति सम्प्रति काले शतृत्वः। **भवति** त्वयि। **अभ्यर्णे सति** अन्तिके समीपप्रदेशे सति। 'उपकण्ठाऽन्तिकाभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययं' इत्यमरः। 'यद्भावाद्भावगतिः'

इति ईप्। उद्भूतपङ्काः प्रादुर्भूतकर्दमाः। कर्दमिताः इत्यर्थः। दशार्णाः तदाख्यः जनपदः। नूनं निश्चयेन। 'नूनं स्यादर्थनिश्चये' इति विश्वलोचने। कतिपयदिनस्थायिहंसाः। का सङ्ख्या मानमेषां कति। 'किमश्च स्येडतिश्च' इति डतिर्माने वर्तमानात्किमः। ततः अयच्पुगागमश्च। कतिपयेषु एव दिनेषु स्थायिनः कतिपयदिनस्थायिनः। कतिपयदिनस्थायिनः हंसाः येषु ते कतिपयदिनस्थायिहंसाः सम्पत्स्यन्ते भविष्यन्ति। कतिपयशब्दः स्तोकार्थः। अत्र ननु से 'दिनकतिपयं' इति कतिपयशब्देनोत्तरपदेन भाव्यं, न पूर्वपदेन 'पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रववतृश्रोत्रियाध्यापकधूर्तैर्जातिः' इत्यारम्भस्य विशेषणपरनिपातार्थत्वादिति चेत्, न, अस्य शास्त्रस्य प्रायिकत्वाद्विशेषणस्य पूर्वनिपातस्याऽपि सम्भवात् जातेश्च परनिपातस्य। एवमेवाह मल्लिनाथोऽपि मेघदूतकाव्यटीकायाम्।

Thus the Dasharna country, made muddy on the arrival of you, possessing excessive brilliance due to the lightning emitting flashes, sending forth roars while pouring showers of rain, setting the peacocks that would be highly pleased to dance again and again, verily would have the swans staying (there) for a few days.

**गत्वा पश्येः पवनविचलत्केतुहस्तैरभीक्ष्णं**
**दूरादुच्चैर्भवनशिखरैराह्वयन्तीमिव त्वाम्।**
**सालोदग्रां श्रियमिव भुवो रूपिणीं नाभिभूतां**
**तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीम्॥ ९३॥**

अन्वयः— पवनविचलत्केतुहस्तैः भवनशिखरैः त्वां दूरात् अभीक्ष्णं उच्चैः आह्वयन्तीं इव, भुवः रूपिणीं इव सालोदग्रां श्रियं, नाभिभूतां, दिक्षु प्रथितविदिशालक्षणां तेषां (दशार्णानां) राजधानीं गत्वा पश्येः।

गत्वेत्यादि। पवनविचलत्केतुहस्तैः समीरणसञ्चरत्केतुकरैः। केतवः ध्वजाः एव हस्ताः कराः केतुहस्ताः। पवनेन समीरणेन विचलन्तः सञ्चरन्तः पवनविचलन्तः। पवनविचलन्तः केतुहस्ताः येषां ते। तैः। भवनशिखरैः सौधवलभिभिः भवनानां सौधानां प्रासादानां शिखराणि वलभयः शृङ्गाणि उन्नततरप्रदेशाः वा। तैः। त्वां भवन्तं दूरात् दूरदेशात् अभीक्ष्णं सततं उच्चैः अत्यर्थं आह्वयन्तीं इव आकारयन्तीमिव भुवः पृथिव्याः रूपिणीं इव। प्रशस्तं रूपं आकृतिरस्याः अस्तीति रूपिणी।

ताम्। शरीराकारधारिणीं। मत्वर्थीयः इन्। मत्वर्थश्चात्र प्रशंसा संसर्गो वा। सालोदग्रां सालेन प्राकारेण उदग्रामौन्नत्यं प्राप्तां श्रियं शोभां लक्ष्मीं वा। नाभिभूतां शरीरस्थनाभिकमलमिव दशार्णमध्यभागस्थायिनीं दिक्षु सर्वासु दिशासु प्रथितविदिशालक्षणां। प्रथितं प्रसिद्धिं प्राप्तं विदिशेति लक्षणं अभिधानं यस्याः सा। तां। 'लक्षणं नाम्नि चिह्ने च रामभ्रातरि लक्ष्मणः' इति विश्वलोचने। तेषां दशार्णानां राजधानीं। धीयते अस्यां इति धानी। निवासस्थानमित्यर्थः। 'करणाधारे चानट्' इत्याधारे अनट्। राज्ञःधानी राजधानी। अत्र तायाः कृद्योगलक्षणत्वात्सः। उक्तं वार्तिककृता कात्यायनेन 'कृद्योगलक्षणा षष्ठी समस्यते' इति। प्रधाननगरीमित्यर्थः। 'प्रधाननगरी राज्ञां राजधानीति कथ्यते' इति शब्दार्णवे। गत्वा प्राप्य पश्येः अवलोकयेः।

Having approached you should see the capital of that country which is as good as a navel (i. e. situated at the centre of it), with its appellation Vidisha well-khown in all the quarters over, the beauty as if of the earth incarnate magnified owing to its rampart (or to the Sala trees), inviting you as if very much again and again from a long distance through the topmost parts of the mansions with the hands in the from of flags set in motion by the wind (or with the hand-like flags set in motion).

सौधोत्सङ्गे क्षणमुपनिपत्तृष्ण तूष्णीं निषण्णो
जालोद्गीर्णैः सुरभिततनुर्धूपधूमैर्मनोज्ञैः।
वारस्त्रीणां निधुवनरतिं प्रेक्षमाणस्त्वमेनां
गत्वा सद्यः फलमपि महत्कामुकत्वस्य लब्धा ॥ ९४ ॥

अन्वयः— उपनिपत्तृष्ण त्वं एनां गत्वा सौधोत्सङ्गे क्षणं तूष्णीं निषण्णः जालोद्गीर्णैः मनोज्ञैः धूपधूमैः सुरभिततनुः वारस्त्रीणां निधुवनरतिं प्रेक्षमाणः कामुकत्वस्य महत् अपि फलं सद्यः लब्धा।

सौधेत्यादि। उपनिषत्तृष्ण समुत्पन्नाभिलाष। उपनिषीदति इत्युपनिषत्। क्विप्। उपनिपत् तृष्णा अभिलाषः यस्मिन् असौ उपनिपत्तृष्णः। तस्य किः। त्वं भवान् एनां विदिशाभिधानां राजधानीं गत्वा सम्प्राप्य सौधोत्सङ्गे हर्म्योपरितनतले। सौधानां हर्म्याणां प्रासादानां वा उत्सङ्गे वलभिप्रदेशे सौधोत्सङ्गे। क्षणं

अल्पकालं यावत् । 'कालाध्वनोरविच्छेदे' इति इप् । तूष्णीं मौनमाश्रित्य सुखेन वा **निषण्णः** विश्रमार्थमुपविष्टः **जालोद्गीर्णैः** गवाक्षनिष्ठ्यूतैः । जालात् गवाक्षात् जालेन वा उद्गीर्णैः विनिःसृतैः । उद्गीर्णशब्दप्रयोगोऽत्र काव्ये ग्राम्यः इति चेत्, न, गौण्या वृत्त्या तस्य व्यपाश्रयात् मुख्यवृत्त्या तद्व्यपाश्रयस्य ग्राम्यत्वाय कल्पनात्। तदुक्तं दण्डिना 'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयं । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ।' इति । **मनोज्ञैः** मनोहरैः **धूपधूमैः** कूपीटयोनिप्रक्षिप्तवासयोगजनितधूमैः । **सुरभिततनुः** सञ्जनितसौगन्ध्यशरीरः । सुरभिता सुरभि सुगन्धि कृता । 'मृदो ध्वर्थे णिज्बहुलं' इति करोत्यर्थे मृदः णिच् । यद्वा सुरभिः सुगन्धः सञ्जातः अस्याः सुरभिता । 'तदस्य सञ्जातं तारकादिभ्यः इतच्' इति इतच् । **वारस्त्रीणां** वाराङ्गनानां । वेषाजीवानां वेश्यानां । वारस्य लोकनिकायस्य स्त्री वारस्त्री । यद्वा 'वारे राजदेवादिसेवाक्रमे स्त्री वारस्त्री' इति क्षीरस्वामी । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः। **निधुवनरतिं** सुरतक्रीडां सुरतसुखं वा । निधुवने मैथुने सुरते रतिः आसक्तिः सुखं वा निधुवनरतिः । तां । रतिरित्यस्य क्रीडेत्याभिधेयम् । 'मैथुनं निधुवनं रतं' इत्यमरः । **प्रेक्षमाणः** अवलोकयन् । **कामुकत्वस्य** विलासित्वस्य रतिलाम्पट्यस्य वा । 'विलासी कामुकः कामी स्त्रीपरो रतिलम्पटः' इति शब्दार्णवे । 'लषपतपद्स्थाभूवृषहनकमगमशॄभ्य उकञ्' इत्युकञ् । । कामयते इति कामुकः । कामुकस्य भावः कामुकत्वम् । **महत्** **अपि** गुर्वपि **फलं** धूपधूमवासितत्वादिकं **सद्यः** झटिति **लब्धा** लप्स्यसे । प्राप्स्यसीत्यर्थः ।

Oh, afflicted with a strong desire ! on reaching this ( capital ), you, sitting silently for a moment on the uppermost part of a mansion ( or of the palace ), having your body perfumed by delightful smokes of incence ( rising up in volumes ) through lattices, inspecting the strong desires cherished by the harlots for cohabitation, would immediately reap the fruits, though very rich, of lustfulness.

विश्रान्तिस्ते सुभग विपुला तत्र यातस्य मन्ये
कह्लाराङ्कं सुरभि शिशिरं स्वच्छमुत्फुल्लपद्मम् ।
वाताकीर्णैः कुवलयदलैर्वासितं दीर्घिकाम्भः
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यत्र ॥ ९५ ॥

अन्वयः— (हे) सुभग ! यत्र कह्लाराङ्कं सुरभि शिशिरं स्वच्छं उत्फुल्लपद्मं

वाताकीर्णैः कुवलयदलैः वासितं स्वादु दीर्घिकाम्भः तीरोपान्तस्तनितसुभगं पास्यसि तत्र यातस्य ते विपुला विश्रान्तिः ( इति ) मन्ये ।

विश्रान्तिरित्यादि । हे **सुभग** सौभाग्यभूषित । शोभनं भगं यशः महात्म्यं वा यस्य सः । किः । 'भगं तु ज्ञानयोनीच्छायशोमाहात्म्यमुक्तिषु । ऐश्वर्यवीर्यवैराग्यधर्मश्रीरत्नभानुषु' इति विश्वलोचने । **यत्र** यस्यां विशालानगर्याम् । **कह्लाराङ्कं** सौगन्धिकाचिह्नं । 'सौगन्धिकं तु कह्लारं हल्लकं रक्तसन्ध्यकम्' इत्यमरः । शुक्लवर्णमेतत् **सुरभि** सञ्जातसौरभं **शिशिरं** शीतलं **स्वच्छं** सुतरां निर्मलं । प्रसन्नमित्यर्थः । 'अच्छः स्वच्छेऽन्यलिङ्गः स्यात्' इति विश्वलोचने । **उत्फुल्लपद्मं** विकसितपद्मालङ्कृतं । उत्फुल्लानि विकसितानि पद्मानि यस्मिंस्तत् । 'ञिफला विशरणे' इत्यस्माद्धोः 'ति' इति तकारादौ परतोऽतः उत्वं ततकारस्य च 'समुदः' इति लो निपातितः । **वाताकीर्णैः** प्रभञ्जनेनेतस्ततो विकीर्णैः । वातेन आकीर्णानि वाताकीर्णानि । तैः । **कुवलयदलैः** कमलच्छदैः । कुवलयानां कमलाना दलानि छदाः । तैः । 'दलं पर्णं छदः पुमान्' इत्यमरः । **वासितं** सुरभितं **स्वादु** मधुरं **दीर्घिकाम्भः** क्रीडासरःसलिलं । 'वापी तु दीर्घिका' इत्यमरः । दीर्घेव दीर्घिका । खौ कन् । 'वार्वारि कं पयोऽम्भोऽम्बु' इति धनञ्जयः । **तीरोपान्तस्तनितसुभगं** । तीरस्य तटस्य उपान्तः समीपप्रदेशः तीरोपान्तः । तत्र स्तनितं अल्पगर्जित । तेन सुभगं मनोहरं यथा स्यात् तथा । 'ऊर्ध्वमुच्चलितकण्ठनासिकं हुङ्कृतं स्तनितमल्पघोषवत्' इति मल्लिनाथोद्धृतलक्षणात् स्तनितमित्यस्याल्पगर्जितमित्यर्थः । **पास्यसि** पानं करिष्यसि । पिबतेर्लृट् । **तत्र** तस्यामलकानगर्याम् । **यातस्य** गतवतः **ते** भवतः **विश्रान्तिः** विश्रमः **विपुला** महती । स्यादिति शेषः । **इति** एवं **मन्ये** जानामि ।

Oh fortunate one! you, I think, would be enjoying full rest on reaching there where you would be drinking in a manner charming owing to the thunderings near the banks, water, which is sweet, fragrant, tasteful, cool and perfumed by the petals of the blue water-lilies scattered over by the wind, of the oblong lakes, possessing white lotuses and having blown lotuses,

**पातव्यं ते रसिक सुरसं प्राणयात्रानिमित्तं**
**तस्यां लीलास्फुरितशफराघट्टनैरात्तपङ्कम् ।**
**रोधःप्रान्ते विहगकलभैर्बद्धडिण्डीरपिण्डं**
**सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ ९६ ॥**

अन्वयः—(भो) रसिक! सुरसं लीलास्फुरितशफराघट्टनैः आत्तपङ्कं, विहगकलभैः रोधःप्रान्ते बद्धडिण्डीरपिण्डं वेत्रवत्याः सभ्रूभङ्गं मुखं इव चलोर्मि पयः तस्यां प्राणयात्रानिमित्तं ते पातव्यम्।

**पातव्यमित्यादि।** भो **रसिक** सरस! रसः आनन्दः विषयाभिलाषः शब्दः स्तनितरूपः वा अस्य अस्तीति रसिकः। क्विः। 'अतः इनिठनौ' इति मत्वर्थे ठन्। तेन सानन्दः विषयाभिलाषवान् सस्तनितः वेत्यर्थः। **सुरसं**। शोभनः रसः आस्वादः रुचिः यस्य तत्। मधुरमित्यर्थः। **लीलास्फुरितशफराघट्टनैः**। लीलायै क्रीडां कर्तुं स्फुरिताः सञ्जातचाञ्चल्याः लीलास्फुरिताः। ते च ते शफराः मत्स्याश्च। 'शफरोऽनिमिषस्तिमिः' इति धनञ्जयः। तेषां आघट्टनैः सङ्घर्षैः **आत्तपङ्कं** जम्बालाविलम्। आत्तः गृहीतः पङ्कः जम्बालः येन तत्। आविलत्वनिमित्तभूतवेगवत्प्रवाहाभावेऽपि तज्जलमलिनत्वं भ्राम्यच्छफरीनिकरसङ्घर्षनिबन्धनमिति भावः। **विहगकलभैः** पक्षिशावैः **रोधःप्रान्ते** तीरसमीपप्रदेशे। 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इत्यमरः। **बद्धडिण्डीरपिण्डं**। बद्धाः विरचिताः डिण्डीराणां फेनानां पिण्डाः ग्रासाकारविरचनाः यत्र तत्। कूलङ्कषवाःप्रवाहाभावाड्डिण्डीरपिण्डविरचनासम्भवात् तत्र नदीतीरे शुभ्रपतत्रिशावक्रीडाकृतजलक्षोभसञ्जनितडिण्डीरपिण्डानां सरिद्रोधःप्रदेशप्रक्रीडत्पाण्डुवर्णपतत्रिशावानां पिण्डाकाराणां वा दर्शनात् तत्र डिण्डीरपिण्डसद्भावकल्पनमौचित्यमावहतीत्यध्यवसेयम्। **वेत्रवत्याः** तन्नामसरितः **सभ्रूभङ्गं** भ्रुकुटिभङ्गविरचनासहितं **मुखं इव** प्रेयस्याननमिव **चलोर्मि** चलत्कल्लोलमालं। चलाः चञ्चलाः ऊर्मयः वीचयः यत्र तत्। **पयः** पानीयं **तस्यां** वेत्रवतीनद्यां **प्राणयात्रानिमित्तं** प्राणानां रक्षणार्थम्। जलमन्तरेण जलदस्य प्राणयात्रायाः असम्भवात् प्राणयात्रानिमित्तमित्युक्तम्। ते तव। त्वयेत्यर्थः। कर्तरीयं ता। **पातव्यं** तत्पानं कर्तव्यम्। 'व्यस्य वा कर्तरि' इति ता कर्तरि।

Oh impassioned one! for the sake of your maintenance, you should drink the water there (in that river), possessing mobile ripples, of the Vetravati which would be resembling her face with the eyebrows knit, very tasteful, turbid owing to its being ruffled by the fish moving sportively, abounding in lumps of foam formed on the banks by the chickens of birds.

**पीत्वा तस्यां सलिलममलं जीविकांकृत्य किञ्चित्**
**नीत्वाऽहस्त्वं क्वचिदनुमते हर्म्यपृष्ठे निषण्णः।**

दृष्ट्वा दृश्यं विलसितमदो नागराणां दिनान्ते
नीचैराख्यं गिरिमधिवसेस्तत्र विश्रान्तिहेतोः ॥ ९७ ॥

अन्वयः—त्वं तस्यां अमलं सलिलं जीविकांकृत्य किञ्चित् पीत्वा क्वचित् अनुमते हर्म्यपृष्ठे निषण्णः अहः नीत्वा नागराणां अदः दृश्यं विलसितं दृष्ट्वा दिनान्ते विश्रान्तिहेतोः नीचैराख्यं गिरिं अधिवसेः ।

पीत्वेत्यादि । त्वं भवान् तस्यां वेत्रवतीनद्यां अमलं निर्मलं सलिलं जलं जीविकांकृत्य जीविकां जीवनसाधनमिव कृत्वा । 'जीविकोपनिषदिवे' इतीवार्थे कृञि तिसञ्ज्ञा। तिसञ्ज्ञत्वाच्चास्य 'ष्यस्तिवाक्से क्त्व' इति क्त्वास्यस्य ष्यः । किञ्चित् स्वल्पं पीत्वा आपीय। अत्र स्वल्पसलिलपानोपदेशः विपुलसलिलपानजनितजाड्येन मेघशीघ्रगतिप्रतिबन्धः मा भूदिति कृत इति ज्ञेयम् । क्वचित् कस्मिंश्चित् अनुमते भवत्सम्मते हर्म्यपृष्ठे धनिनिवासपृष्ठभागे । हर्म्यस्य धनिनिवासस्य पृष्ठे पृष्ठभागे निवासोपरितनप्रदेशे। 'हर्म्यादि धनिनां वासः' इत्यमरः । निषण्णः उपविष्टः अहः दिनं नीत्वा यापयित्वा नागराणां नगरे भवानां । नगरवासिनामित्यर्थः । अदः तत् दृश्यं दर्शनार्हं। 'तृज्व्याश्चार्हे' इत्यर्हार्थे व्यः। विलसितं विलासं । विभ्रममित्यर्थः। दृष्ट्वा अवलोक्य दिनान्ते दिवसावसानकाले । सायाह्ने इत्यर्थः । विश्रान्तिहेतोः श्रमापनयनार्थम् । योगिराजेन स्वोपज्ञटीकायां विश्रामहेतोरिति पाठः सङ्गृहीतः । विश्रान्तेः हेतोः विश्रान्तिहेतोः । 'हेतौ सर्वाः प्रायः' इति हेतौ ता । विश्रामेतिपाठस्यापाणिनीयत्वेऽपि 'विश्रमो वा' इति विपूर्वस्य श्रमेर्घञि विहितस्यैप्रतिषेधस्य वैकल्पिकत्वात्तस्य समीचीनत्वमवसेयं, चान्द्रादिभिरपि तस्य समर्थितत्वात्। नीचैराख्यं नीचैरभिधानं। नीचैरिति आख्या यस्य सः नीचैराख्यः। तं। गिरिं भूधरं अधिवसेः निवासं कुरु । 'वसोऽनूपाध्याङः' इति कर्मत्वविधानादाधारस्य 'कर्मणीप्' इति इप्।

Drinking the pure water a little therein (in that river) making it as if a means of subsistence, spending a day on the uppermost part of a certain mansion of your liking, perceiving the sports of the citizens worthy of being enjoyed sight of, you, at the end of the day, should make a halt on the mountain known as Nīchaiḥ in order to take rest.

त्वं सेवेथाः शिखरिणममुं तां निशां मुक्तशङ्को
विद्युद्दामस्फुरितरुचिमद्दीपिकाद्योतिताशः ।

सिद्धस्त्रीणां रतिपरिमलैर्वासिताधित्यकान्तं
त्वत्सम्पर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः ॥ ९८ ॥

अन्वयः— सिद्धस्त्रीणां रतिपरिमलैः वासिताधित्यकान्तं प्रौढपुष्पैः कदम्बैः त्वत्सम्पर्कात् पुलकितं इव अमुं शिखरिणं विद्युद्दामस्फुरितरुचिमद्दीपिकाद्योतिताशः मुक्तशङ्कः त्वं तां निशां सेवेथाः ।

**त्वा**मित्यादि । **सिद्धस्त्रीणां** देवविशेषयोषितां । सिद्धाः देवविशेषाः तेषां स्त्रियः सिद्धस्त्रियः । तासाम् । **रतिपरिमलैः** रतिक्रीडासञ्जातसुरभिमाल्यगन्धादिपरिमर्दनोत्थहृद्यगन्धैरतिदूरव्यापिभिः । रतेः परिमलाः विमर्दोत्थाः जनमनोहराः गन्धाः । तैः । 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः । 'भवेत्परिमलश्चित्तहारिगन्धविमर्दयोः । रतामर्दसमुन्मीलदङ्गरागादिसौरभे' इति विश्वलोचने । **वासिताधित्यकान्तं** सुरभितपर्वतोपरितनभागप्रान्तप्रदेशं । वासितः सुरभितः अधित्यकायाः पर्वतोपरितनभूमेः अन्तः प्रान्तप्रदेशः यस्य तम् । 'उपत्यकाधित्यके' इत्यधिरूढार्थेऽधेस्त्यकः स्त्रियामित्वाभावश्च । पर्वतमध्यारूढो देशः अधित्यकेत्यर्थः । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः 'स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु' इति 'वासितं विहगारवे । ज्ञाने त्रिष्वेव वसनवेष्टिते सुरभीकृते' इति च विश्वलोचने । **प्रौढपुष्पैः** प्रवृद्धपुष्पैः । 'प्रवृद्धं प्रौढमीरितम्' इत्यमरः । 'प्रादूहोढोढ्येषैष्ये' इति प्रादूढे परतः ऐप् । **कदम्बैः** नीपवृक्षैः । 'नीप-प्रियक-कदम्बास्तु हरिप्रियः' इत्यमरः । 'परः कदम्बः प्रावृषेण्यः कादम्बर्यो हलिप्रियः । नीपो धूलिकदम्बोऽन्यः सुवासो वृत्तपुष्पकः' इत्यपि कश्चिदाह । 'कदम्बं निकुरम्बे स्यान्नीपसिद्धार्थयोः पुमान्' इति विश्वलोचने । **त्वत्सम्पर्कात्** भवत्सम्बन्धात् । **पुलकितं इव** रोमाञ्चितमिव । पुलकः रोमाञ्चः सञ्जातः अस्य पुलकितः । तम् । 'तदस्य सञ्जातं तारकादिभ्यः इतः' इति इतः । **अमुं** तं **शिखरिणं** पर्वतं । शिखराणि सन्त्यस्येति शिखरी । मत्वर्थीयः इनिः । **विद्युद्दामस्फुरितरुचिमद्दीपिकाद्योतिताशः** । माल्यतुल्यचञ्चलास्फूर्जथुकान्तिमद्दीपिकाप्रकाशितदिङ्मण्डलः । दामेव विद्युत् विद्युद्दाम । तस्याः स्फुरितानि स्फूर्जथवः एव रुचिमत्यः कान्तिमत्यः प्रभास्वराः दीपिकाः । ताभिः द्योतिताः प्रकाशिताः आशाः दिशः येन सः । **मुक्तशङ्कः** परिहृतसंशयः परित्यक्तभयः वा । 'शङ्का त्रासे वितर्के च' इति विश्वलोचने । **त्वं** भवान् । **तां निशां** तां रात्रिं । 'कालध्वनोरविच्छेदे' इति इप् । **सेवेथाः** भजस्व । तत्र निवासं कुर्वित्यर्थः ।

You, with your doubt ( or fear ) dispelled, enlightening the quar-

ters with the brightly burning torches in the form of the flashes of lightning, should, throughout the whole of that night, resort to that mountain, the bordering regions of the table-lands of which would be pregnant with the sweet smell of the perfumes used at the time of copulation by the women of Siddha gods, having the hair in the form of Kadamba trees with flowers full-blown, of its body erect on account of its contact with you.

सोऽसावद्रिर्भवतु नितरां प्रीतये ते समग्र-
ग्रावोपाग्रैर्ग्रहगणमिवोपगृहीतुं खमुद्यन् ।
भोगोद्रेकं कथयति लतावेश्मकैः सोपहारैः
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणाम् ॥ ९९ ॥

अन्वयः— यः पण्यस्त्रीरतिपरिमलोद्गारिभिः सोपहारैः लतावेश्मकैः नागराणां भोगोद्रेकं कथयति सः समग्रग्रावोपाग्रैः ग्रहगणं उपगृहीतुं इव खं उद्यन् असौ अद्रिः ते नितरां प्रीतये भवतु ।

स इत्यादि । यः नीचैराख्यः गिरिः पण्यस्त्रीरतिपरिमलोद्गारिभिः । पण्यस्त्रीणां रूपाजीवानां गणिकानां रतौ रतिक्रीडायां यः परिमलः रतपरिमर्दसमुच्छलन्माल्याङ्गरागादिसौरभं तमुद्गिरन्ति आविर्भावयन्तीति तथोक्तानि तानि । तैः । पण्याः धनप्रदानेन क्रेयाः स्त्रियः पण्यस्त्रियः । 'गणिका लञ्जिता वेश्या रूपाजीवा विलासिनी । पण्यस्त्री दारिका दासी' इति धनञ्जयः । सोपहारैः उपहृतपुष्पादिसङ्कुलैः । 'वा नीचः' इति सहस्य सादेशः । उपह्रियते सभाजनार्थं दीयते इत्युपहारः । लतावेश्मकैः लताविनिर्मितवेश्माकारमण्डपैः । लताकुञ्जैरित्यर्थः । नागराणां नगरे भवानां । नगरनिवासिनामित्यर्थः । 'तत्र भवः' इत्यण् । भोगोद्रेकं भोगातिरेकं । कथयति निवेदयति । आविष्करोतीत्यर्थः । सः नीचैरभिधानः गिरिः । समग्रग्रावोपाग्रैः । समग्राणां ग्राव्णां उपलानां उपाग्रैः अग्रभागैः । स्वशिखराग्रभाग्दृषदग्रभागैरित्यर्थः । ग्रहगणं उडुगणं । ग्रहाणां समूहमित्यर्थः । उपगृहीतुं कवलयितुं वन्दिग्राहं गृहीतुं वा । इव । उत्प्रेक्षायामत्रेवशब्दः प्रयुक्तः । खं आकाशप्रदेशं उद्यन् उद्गच्छन् असौ सः । पूर्वमुपवर्णितोऽयं वा अद्रिः शैलः ते तव नितरां अत्यर्थं प्रीतये आनन्दाय भवतु भविष्यति । तत्प्राप्त्युत्तरक्षणे एव सोऽद्रिः प्रीतये भविष्यतीति भावः । 'लिङ् चोर्ध्वमौहूर्तिके' इत्यौर्ध्वमौहूर्तिकेऽर्थे लोट् ।

That mountain, manifesting the excess of the sexual enjoyment of the citizens through the bowers possessing presents of flowers and emitting sweet smell of the perfumes used at the time of sexual enjoyment by the courtezans, rising high up in the sky to seize ( or eclipse ) as if from below the collection of planets with the ends of all the rocks, would be bringing you pleasure entirely the very moment you reach there ( or the mountain ).

**प्रेमाऽमुष्मिंस्तव समुचितं विद्धि शैले शिलाग्रैः**
**व्योमोत्सङ्गं परिमृजति वा पुष्पशय्याचितान्तैः ।**
**स्रस्तस्रग्भिर्निधुवनविधौ क्रीडतां दम्पतीनां**
**उद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ १०० ॥**

अन्वयः— शिलाग्रैः व्योमोत्सङ्गं परिमृजति, क्रीडतां दम्पतीनां निधुवनविधौ स्रस्तस्रग्भिः पुष्पशय्याचितान्तैः शिलावेश्मभिः उद्दामानि यौवनानि प्रथयति वा अमुष्मिन् शैले तव समुचितं प्रेम विद्धि ।

**प्रेमे**त्यादि । **शिलाग्रैः** शिखराग्रभागभाग्ग्रावाग्रभागैः । शिलानां ग्राव्णां अग्राणि अग्रभागाः शिलाग्राणि । तैः । **व्योमोत्सङ्गं** आकाशतलं । व्योम्नः आकाशस्य उत्सङ्गः तलप्रदेशः व्योमोत्सङ्गः । तम् । **परिमृजति** स्पृशति । परिमृजति इति परिमृजन् । तस्मिन् । 'सल्टः' इति शतृत्यः । **क्रीडतां** क्रीडानिमग्नानां । क्रीडन्तीति क्रीडन्तः । तेषाम् । पूर्ववच्छतृत्यः । **दम्पतीनां** जायापत्योर्युगलानां । जाया च पतिश्च दम्पती । 'राजदन्तादौ' इति जायाशब्दस्य दम्भावो निपातितः । 'दम्पती जम्पती जायापती' इत्यमरः । **निधुवनविधौ** मैथुनोपसेवनविधौ । 'निधुवनं सुरते कम्पनेऽपि च' इति विश्वलोचने । 'विधिर्विधाने दैवे च' इत्यमरः । **स्रस्तस्रग्भिः** । स्रस्ताः विगलिताः स्रजः मूर्धमालाः येषु तानि स्रस्तस्रञ्जि । तैः । 'स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितं' इत्यमरः । 'माल्यं माला—स्रजौ मूर्ध्नि' इत्यमरः । सृज्यते इति स्रक् । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चः' इति क्व्यन्तो निपातः । 'क्वित्यस्य कुः' इति क्वित्यान्तस्य धोः कुः । **पुष्पशय्याचितान्तैः** पुष्पविरचितशयनीयव्याप्तमध्यदेशैः । पुष्पाणां शय्याः पुष्पशय्याः । ताभिः आचितः व्याप्तः छन्नः वा अन्तः मध्यदेशः येषां तानि । तैः । 'आचितस्तु चिते छन्ने सङ्गृहीते त्रिलिङ्गकः' इति विश्वलोचने । **शिलावेश्मभिः** पर्वतपाषाणनिखातगृहाकारनिवेशैः अकृतकगिरिगह्वरैः वा । **उद्दामानि**

अनिर्बन्धानि अमर्यादानि वा। निरङ्कुशानीत्यर्थः। **यौवनानि** तारुण्यानि **प्रथयति** आविष्कुर्वति। प्रथयति आविष्कुरुते इति प्रथयन्। तस्मिन् 'सल्लटः' इति शतृत्यः। **वा** तथा। अत्र समुच्चये। **अमुष्मिन् शैले** नीचैर्नगे तव **समुचितं** सामञ्जस्यघटितं। त्वदर्हमित्यर्थः। प्रशस्तम्। **प्रेम** स्नेहं विद्धि अनुभव। स ते समुचित-प्रेमाविष्कारावसर इति त्वया तस्मिन् प्रियसुहृदि प्रेमाविष्कर्तव्यमिति भावः।

You should know this mountain rubbing against the surface of the sky with the ends of its rocks and revealing to you the violent juvenility of the couples engaged in sports through the stone-abodes having their interior parts covered over with flowery beds, possessing garlands slipped off in the course of sexual enjoyment, cherishes a good will that is proper for you.

**रम्योत्सङ्गे शिखरनिपतन्निर्झरारावहृद्ये**
**पर्यारूढद्रुमपरिगतोपत्यके तत्र शैले।**
**विश्रान्तः सन्व्रज वननदीतीरजानां निषिञ्च-**
**न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ॥ १०१ ॥**

अन्वयः— रम्योत्सङ्गे शिखरनिपतन्निर्झरारावहृद्ये पर्यारूढद्रुमपरिगतोपत्यके तत्र शैले विश्रान्तः सन् वननदीतीरजानां उद्यानानां यूथिकाजालकानि नवजलकणैः निषिञ्चन् व्रज।

**रम्येत्यादि। रम्योत्सङ्गे** रम्यकूटाग्रदेशे। रम्यः रमणीयः उत्सङ्गः कूटाग्रदेश यस्य सः। तस्मिन्। रमणीयाधित्यके इत्यर्थः। **शिखरनिपतन्निर्झरारावहृद्ये** प्रस्थप्रपतत्पाथःप्रवाहसंरावरमणीये। शिखरात् सानुप्रदेशात् निपतन्ततः प्रपतन्तः शिखरनिपतन्तः। ते च ते निर्झराः पाथःप्रवाहाः। तेषामारावैः संरावैः प्रस्खलनजनितध्वनिभिः हृद्यः हृदयप्रियः। तस्मिन्। हृदयस्य प्रियः बन्धनं वा हृद्यः। 'जन्यवश्यधर्म्यधेनुष्यामूल्य-हृद्यगार्हपत्याः' इति यत्ये 'हृदयस्य हृल्लेखाण्यलासे' इति हृदयस्य हृदादेशः। **पर्यारूढद्रुमपरिगतोपत्यके** सर्वतः संरूढविटपिततिविततपर्यन्तभूमौ। परितः सर्वतः आरूढाः संरूढाः सुतरां वृद्धिङ्गताः पर्यारूढाः। ते च ते द्रुमा विटपिनः वृक्षाश्च। तैः परिगता सर्वतो व्याप्ता उपत्यका पर्यन्तभूर्यस्य सः। तस्मिन्। 'उपत्यकाधित्यके' इति पर्वतासन्नदेशार्थे निपातः। पर्वतमुपासन्नदेशः उपत्यका। पर्यन्तभूरित्यर्थः। **तत्र शैले** तस्मिन्नीचैराख्ये नगे **विश्रान्तः सन्** परिहृताध्वगतिपरि-

श्रमः सन् । **वननदीतीरजानां** वननदीत्याख्यायाः वने प्रवाहिन्याः वा सरितः तीरे कूले जातानां। वननद्याः तीरे प्ररूढानां । **उद्यानानां** उपवनानां **यूथिकाजालकानि** गणिकाकोरकनिकुरम्बाणि । यूथिकायाः मगधदेशोद्भवायाः गणिकापराभिधानायाः पुण्यगन्धायाः जालकानि कुड्मलानि । यूथिकालक्षणं यथा – 'यूथिका बालपुष्पा च पुण्यगन्धा गुणोज्वला । गणिका चारमोटा च शिखण्डी श्वेतयूथिका ।' इति । 'जालकः कोरके दम्भप्रभेदे जालिनीफले । गिरिसारे जलौकायां' इति च विश्वलोचने। **नवजलकणैः** नूतनैः जलबिन्दुभिः । 'कणोऽतिसूक्ष्मे धान्यांशे' इति विश्वलोचने । **निषिञ्चन्** आर्द्रीकुर्वन् **व्रज** गच्छ ।

Taking rest on that mountain, having its uppermost part beautiful, attractive owing to the roars of the rivulets falling down from its peaks, having its low-lands overcrowded with trees grown all over, you should proceed on sprinkling with fresh water-drops the clusters of buds of the jasmine creepers grown on the banks of the Vananadi ( or forest rivers ).

**अध्यारूढे तपति तपने पुष्पगुल्मावकीर्णां**
**तस्यास्तीरक्षितिमतिपतेर्नातिवेगाद्दयालुः ।**
**गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां**
**छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥ १०२ ॥**

अन्वयः— अध्यारूढे तपने तपति ( सति ) गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां पुष्पलावीमुखानां छायादानात् क्षणपरिचितः दयालुः ( त्वं ) तस्याः पुष्पगुल्मावकीर्णां तीरक्षितिं नातिवेगात् अतिपतेः ।

अधीत्यादि । **अध्यारूढे** व्योममण्डलमध्यमाश्रिते **तपने** सहस्रकिरणे **तपति** सति प्रखरतरकिरणोत्सर्गं कुर्वति सति । 'यद्भावाद्भावगतिः' इति ईप् । **गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां** कपोलतललीनस्वेदसलिलविलयनविधानजनितसङ्क्लेशाम्लानकर्णकमलानां । गण्डे कपोलतले स्वेदः तिग्मरुचिप्रखरकरनिकरजनितघर्मबिन्दवः गण्डस्वेदः । तस्यापनयने प्रमार्जने अपनयनेन प्रमार्जनेन वा या रुजा उपतापः तया आक्लान्तानि ईषन्म्लानानि कर्णोत्पलानि कर्णकमलानि यासां ताः तासाम्। रुजा रुक् पीडेत्यर्थः 'षिद्भिदादिभ्योऽङ्' इति भावेऽकर्तरि स्त्रियामङ् । आक्लान्तानीत्यत्राङीषदर्थे। कर्णोत्पलानि मुखसौन्दर्यविवृद्ध्यर्थं कर्णे धार्यमाणानि कमलानि। **पुष्प-**

**लावीमुखानाम्** । पुष्पाणि लुनन्तीति पुष्पलाव्यः । 'कर्मण्योऽण्' इत्यण् । स्त्रीत्वात् 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः' इति ङीप् च । तासां मुखानि । तेषां । **छायादानात्** छायायाः आतपाभावरूपायाः दानात् वितरणात् । "छाया स्यादातपाभावे सत्कान्त्युत्कोच-कान्तिषु । प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने । स्वेदोद-बिन्द्वाप्लुतमुखीनां तिग्मरुचिप्रखरकरनिकरप्रसरं स्वशरीरविस्तारेण प्रतिरुध्य छाया-प्रदानं मेघस्य सम्भवतीत्यभिप्रेत्याह कविश्छायादानादिति । **क्षणपरिचितः** क्षणमात्रं क्षणमात्रेण वा जातपरिचयः । **दयालुः** कृपालुः । कारुणिकः इत्यर्थः । 'निद्रातन्द्रा-श्रद्धाशीङ्दयस्पृहिगृहिपतेरालुः' इति मत्वर्थे आलुः । **त्वं** भवान् **तस्याः** वननद्याः । **पुष्पगुल्मावकीर्णां** । पुष्पोत्पादकैः लताप्रतानतृणादिसङ्घातैः अवकीर्णां विकीर्णां । 'गुल्मा रुक्-स्तम्ब-सेनाश्च' इत्यमरः । 'स्तम्बोऽत्र लताप्रतानतृणादिसमूहः' इति क्षीरस्वामी । पुष्पलतादिपिहितोदरामित्यर्थः । **तीरक्षितिं** तटभूमिं । **नातिवेगात्** मन्दमन्दं । नातिवेगादित्यलुक्सः । अनतिवेगात् अतिवेगं विहायेत्यर्थः । यद्वा अति-वेगात् न अभिपतेरित्यन्वयः । **अभिपतेः** गच्छेः । मन्दमन्दायमानः व्रजेत्यर्थः । अतिवेगेन गमनात् पुष्पलावीनां छायादानं न सम्भवेत् । तेन च त्वद्दयालुत्वं व्याहतं स्यादिति भावः ।

You, become familiar for a moment by affording shade with the faces of the woman plucking flowers, having their ear-lotuses faded on account of their being afflicted while getting rid of the perspiration on their cheeks, being compassionate, should go not very speedily accross the lands covered over with *flowery thickets.*

**वक्रोऽप्यध्वा जगति स मतो यत्र लाभोऽस्त्यपूर्वो**
**यातुं शक्यं ननु वनपथात् कासिकाग्राज्जुनान्तात् ।**
**वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां**
**सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ॥ १०३ ॥**

अन्वय :— यत्र अपूर्वः लाभः अस्ति सः अध्वा वक्रः अपि जगति मतः । उत्तराशां प्रस्थितस्य भवतः पन्थाः यदपि वक्रः ( तदपि ) काषिकाग्राज्जुनान्तात् वनपथात् ननु यातुं शक्यम् । ( ततः ) उज्जयिन्याः सौधोत्सङ्गप्रणयविमुखः मा स्म भूः ।

**वक्रः** इत्यादि । **यत्र** यत्र मार्गे **अपूर्वः** अप्राप्तपूर्वः **लाभः** अधिकं फलं । 'लाभोऽधिकं फलं' इत्यमरः । **अस्ति** वर्तते **सः अध्वा** सः पन्थाः **वक्रः** अपि

कुटिलः अनृजुः अपि **जगति** लोके **मतः** जनैः आदृतः भवति। **उत्तराशां** उदीचीं दिशं। उत्तरा उदीची चाथो आशा दिक् च तां। **प्रस्थितस्य** गन्तुमारब्धवतः। आद्यकर्मण्यत्र क्तः। **भवतः** तव **पन्थाः** मार्गः **यदपि** यद्यपि **वक्रः** आर्जवविकलः तदपि **कासिकाग्रार्जुनान्तात्** |कासानां काण्डेक्षूणां समूहः कासिकम्।'हस्तिकवच्यचित्ताच्च ठण्' इति समूहार्थे ठण्। 'कासः काण्डेक्षुरुद्दिष्टः' इति क्षीरस्वामी।तथान्यः 'इक्षुगन्धः स्यात् इक्षुरः कोकिलाक्षकः। कासः काण्डेक्षुरुद्दिष्टः काकेक्षुर्वायसेक्षुकः' इत्युद्धृतममरकोशटीकायां क्षीरस्वामिना। काण्डेक्षुश्च इक्षुवदृक्काण्डत्वात्। यद्वा काशःतृणविशेषः। 'काशते काशः कोकिलाक्षपर्यायः। इक्षुगन्धेत्येके' इति क्षीरस्वामी अमरकोशटीकायामेवान्यत्र। कासिकमग्रे यस्य सः कासिकाग्रः। अर्जुनाः ककुभवृक्षाः अन्ते यस्य सः अर्जुनान्तः। 'अर्जुनः पार्थककुभकार्तवीर्यशिखण्डिषु' इति विश्वलोचने। कासिकाग्रश्चासावर्जुनान्तश्च कासिकाग्रार्जुनान्तः तस्मात्। **वनपथात्** आरण्यकान्मार्गात्। 'ऋक्पूरब्धूःपथामानक्षे' इत्यत्सान्तः। वनपथमारुह्येत्यर्थः। 'ल्यब्लोपे कर्माधारे' इति का ल्यब्लोपे। ननु अनुनये। 'ननु प्रश्नावधारणे। नन्वनुज्ञावितर्कायमन्त्रेष्वनुनये ननु' इति विश्वलोचने। **यातुं** गन्तुं **शक्यम्**। ततः **उज्जयिन्याः**तदाख्यनगर्याः **सौधोत्सङ्गप्रणयविमुखः**। विपरीतं विरुद्धं वा मुखं यस्य सः विमुखः। सौधानां सुधाधवलितानां हर्म्याणां उत्सङ्गेषु उपरितनभागेषु यः प्रणयः परिचयः तस्य विमुखः पराङ्मुखः। 'प्रणयः स्यात्परिचये याच्ञायां सौहृदेऽपि च' इति यादवः। **मास्म भूः** न भवेत्यर्थः। 'स्मे लङ् च' इति स्मे माङि वाचि भवतेर्लुङ्। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति लुङि माङ्योगेऽडागमप्रतिषेधः।

The way, though circuitous, is highly approved in the world when it brings an unprecedented advantage. Even though the way would be circuitous for you, started in the northern direction, it is possible, indeed, to go by the way passing through a forest having sugar-cane-like grassfields (or forests of Kasha grass) in the beginning and Arjuna trees at the end. Have not, therefore, your face turned away from intimate familiarity with the uppermost parts of the mansions of Ujjayinī

जैत्रैर्बाणैः कुसुमधनुषो दूरपातैरमोघैः
मर्माविद्भिर्दृढपरिचितभ्रूधनुर्यष्टिमुक्तैः।

विद्युद्दामस्फुरितचकितैर्यत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितः स्याः ॥ १०४ ॥

अन्वयः——यत्र पौराङ्गनानां विद्युद्दामस्फुरितचकितैः लोलापाङ्गैः कुसुमधनुषः दृढपरिचितभ्रूधनुर्यष्टिमुक्तैः मर्माविद्भिः अमोघैः दूरपातैः जैत्रैः बाणैः यदि न रमसे ( तदा ) लोचनैः वञ्चितः स्याः ।

जैत्रैरित्यादि । **यत्र** उज्जयिनीनगर्यां **पौराङ्गनानां** नागरयोषितां । पुरे भवाः पौराः । 'तत्र भवः' इत्यण् । पौराणां नागराणां अङ्गनाः सुन्दरस्त्रियः पौराङ्गनाः । तासाम् । 'लक्ष्मणविपुणाङ्गनाः' इति निपातः । शोभनानि अङ्गानि यस्याः सा अङ्गना । **विद्युद्दामस्फुरितचकितैः** । विद्युत् दाम इव विद्युद्दाम । तस्याः स्फुरितानि स्फूर्जितानि तैः चकितैः प्रदीतैः । **लोलापाङ्गैः** लोलाश्चलाः सतृष्णाः वा अपाङ्गाः नेत्रान्ताः येषां ते तैः । यद्वा लोलाश्च चञ्चलाश्च ते अपाङ्गाः नेत्रान्तदेशाश्च लोलापाङ्गाः । तैः । 'अपाङ्गौ नेत्रयोरन्तौ' इति 'लोलश्चलसतृष्णयोः' इति चामरः । 'अपाङ्गस्त्वङ्गविकले नेत्रान्ते तिलके पुमान्' इति 'लोलः सतृष्णचलयोस्त्रिषु' इति च विश्वलोचने । **कुसुमधनुषः** पञ्चबाणस्य । कुसुमान्येव धनुः यस्य सः । तस्य । वसन्ततुर्प्रादुर्भूतनानाविधसुरभिसुमदर्शनसञ्जनितत्वात्रिभुवनाभिलापरूपकामस्य तज्जननसाधनानां आयुधत्वोपचारे तज्जनितकामस्य अपि कुसुमधनुरित्यादिलोकव्यवहारः औपचारिक एवेत्यवसेयम् । **दृढपरिचितभ्रूधनुर्यष्टिमुक्तैः** दृढं परिचिताः भ्रुवः भ्रुकुट्य एव धनुर्यष्टयः । ताभिः मुक्ता तस्या मुक्ता वा । तैः । कामाकुलललनाजनमुखविरचितविकटभ्रुकुटिधनुर्यष्टिकादर्शनात्कामोत्पत्तेर्यूनां भ्रुकुट्याः धनुर्यष्टित्वेन निर्देशः । **मर्माविद्भिः** । मर्माणि सन्धिस्थानानि । विध्यतीति विध् । क्विप् । मर्मणां विध् मर्माविध् । 'नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ वाग्गेः' इति क्विबन्ते परे वाचो मर्मशब्दस्य दीः ।**अमोघैः** सफलपातैः । पातमात्रेण स्वकार्यं कामोत्पादनरूपं विदधद्भिः । न मोघाः विफलाः अमोघाः । तैः । 'मोघं निरर्थकं' इत्यमरः । **दूरपातैः** । दूरे पातः येषां ते दूरपाताः । तैः । युवहृदयानामतिसूक्ष्मत्वादिन्द्रियागोचरत्वाद्दूरत्वं । दविष्ठदेशस्थितानामर्थानामिन्द्रियागोचरत्वादेव दूरत्वं व्यवस्थाप्यते । अतः दूरशब्देनात्रातिसूक्ष्मं युवहृदयं ग्राह्यम् । **जैत्रैः** जयनशीलैः।जेतैव जैत्रः । जेतृशब्दस्य तृन्नन्तत्वात् 'प्रज्ञादिभ्यः' इत्यण् । तेन जेतृभिरित्यर्थः । **बाणैः** शङ्कुभिः **यदि** चेत् **न रमसे** आनन्दकन्दलितस्वान्तः न भविष्यसि तदा **लोचनैः** नेत्राभ्यां । **वञ्चितः** विकलः **स्याः** असीति सम्भावये । सम्भावनायां लिङ् ।

If you would not be pleased with the eyes of the city-damsels with their outer corners tremulous ( unsteady ), dazzled by the flashes of lightnings, the victorious unfailing arrows of the god of love having a very wide range, piercing the vitals of bodies, discharged by means of bows in the form of their intimately familiar eye-brows, then I would deem that you are deprived of your eyes ( i. e. that you have no eye for appreciating the beauty of the outer corners of the eyes of the beautiful ladies of the city and so are incapable of taking delight in their eyes. )

**स्रोतः पश्यन् व्रज पथि लुठन्मीनलोलायताक्ष्याः**
**निर्विन्ध्यायाः किमपि किमपि व्यञ्जिताकूतवृत्तिः ।**
**वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः**
**संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ॥ १०५ ॥**

अन्वयः— पथि लुठन्मीनलोलायताक्ष्याः वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः दर्शितावर्तनाभेः स्खलितसुभगं संसर्पन्त्याः निर्विन्ध्याया किमपि किमपि व्यञ्जिताकूतवृत्तिः स्रोतः पश्यन् व्रज ।

**स्रोतः** इत्यादि । **पथि** उज्जयिनीमार्गे । **लुठन्मीनलोलायताक्ष्याः** । लुठन्तः उद्वर्तमानाः मीनाः मत्स्याः लुठन्मीनाः । ते एव लोले चञ्चले आयते दीर्घे अक्षिणी यस्याः सा लुठन्मीनलोलायताक्षी । तस्याः । 'स्वाङ्गाच्चोपसर्जनात्' इत्यत्रानुवृत्तेन वेत्यनेन व्यवस्थितविभाषया स्फोडोऽपि स्वाङ्गान्नीचः ङी वैकल्पिकः प्राप्तोऽत्र । **वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः** । वीचीनां क्षोभेण स्तनिताः कृतस्वनाः विहगाः हंसादिपक्षिणः वीचिक्षोभस्तनितविहगाः । तेषां श्रेणिः पङ्क्तिः । सैव काञ्चीगुणः यस्याः सा । तस्याः । काञ्चीगुणः रसना । 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा' इत्यमरः । **दर्शितावर्तनाभेः** । दर्शितः आविष्कृतः आवर्तः अम्भसां भ्रमः एव नाभिः यया सा । तस्याः । **स्खलितसुभगं** । स्खलितेन स्खलितगत्या सुभगं मनोहरं यथा स्यात्तथा । **संसर्पन्त्याः** गच्छन्त्याः **निर्विन्ध्यायाः** तदभिधनद्याः । विन्ध्यान्निर्गता निर्विन्ध्या । तस्याः । 'प्रात्यवपरिनिःप्रत्यादयः गतक्रान्तक्रुष्टग्लानक्रान्त-स्थितादिषु पञ्चम्या' इति प्रादिः सः । **किमपि किमपि** अव्यक्तवर्णं **व्यञ्जिताकूतवृत्तिः** प्रकटीकृतस्वाभिप्रायः । व्यञ्जिता आविष्कृता आकूतस्य अभिप्रायस्य

वृत्तिः येन सः । तात्स्थ्यात् मनसोऽपि आकूतत्वं । तेन प्रकटितमनोव्यापारः इत्यर्थः । **स्रोतः** प्रवाहं **पश्यन्** अवलोकयन् **व्रज** गच्छ ।

You, seeing the flow of the Nirvindhya, to which you would have evinced your emotions inexpressibly, which would be possessing rolling eyes in the form of wallowing fish, having a girdle-string in the form of birds chirping loudly on account of the agitation of the waves, manifesting her navel in the form of eddies, moving in a way charmful owing to her stumblings, should proceed on your journey.

**त्वय्यौत्सुक्यं स्फुटमिव विनाऽप्यक्षरैर्व्यञ्जयन्त्याः**
**किञ्चिल्लज्जावलितमिव सन्दर्शिताप्तागमायाः**
**निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य**
**स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ १०६ ॥**

अन्वयः— पथि सन्निपत्य अक्षरैः विना अपि स्फुटं इव त्वयि औत्सुक्यं व्यञ्जयन्त्याः किञ्चिल्लज्जावलितं इव सन्दर्शिताप्तागमायाः निर्विन्ध्यायाः रसाभ्यन्तरः भव, हि ( यतः ) स्त्रीणां प्रियेषु विभ्रमः आद्यं प्रणयवचनम् ।

**त्वयी**त्यादि । **पथि** उज्जयिन्याः मार्गे **सन्निपत्य** तां निर्विन्ध्यानदीं प्राप्य **अक्षरैः विना अपि** शब्दानुच्चारणपूर्वकं अपि **स्फुटं इव** प्रव्यक्तमिव **त्वयि** भवति । भवद्विषये इत्यर्थः । **औत्सुक्यं** उत्कण्ठां **व्यञ्जयन्त्याः** व्यक्तीकुर्वत्याः **किञ्चिल्लज्जावलितं** । किञ्चिदीषत् लज्जया व्रीडया अपत्रपया आवलितं स्वशरीरवक्रीभवनं यथा स्यात् तथा । निर्विन्ध्यानद्याः वक्रिमाणमपेक्ष्योत्प्रेक्षितमेतत् । **इव** इवशब्दोऽयमत्रोत्प्रेक्षायां प्रयुक्तः । **सन्दर्शिताप्तागमायाः**। सन्दर्शितः प्रकटीकृतः आप्तस्य बान्धवस्य आगमः आगमनं यया सा । तस्याः । त्वः । अत्र बान्धवाभिधेयाप्तशब्देन प्रियस्य ग्रहणं कर्तव्यम् । **निर्विन्ध्यायाः** निर्विन्ध्यासरितः **रसाभ्यन्तरः** आपीतसलिलः अनुभूतशृङ्गाररसजनितानुभावव्यभिचारिभावः'वा । रसः जलं शृङ्गारादिर्वा अभ्यन्तरे यस्य सः । **भव** तन्नदीरसं सम्यक्तयाऽनुभव । हि यतः **स्त्रीणां** अङ्गनानां **प्रियेषु** विषये **विभ्रमः** नाभिसन्दर्शनादिरूपः विलासः **आद्यं** आदौ भवं । **प्रणयवचनं** प्रार्थनावाक्यं प्रणयगर्भवाक्यं वा । 'प्रणयः प्रेमविश्रम्भप्रश्रयप्रसरेऽर्थने' इति विश्वलोचने । कामिनीनां लज्जालुत्वात् सञ्जातस्वाभिप्रायविवक्षाणामपि तदर्थगर्भवचनव्याहारे सामर्थ्याभावात्ताः स्वाभिप्रायं नाभिप्रदर्शनादिरूपैर्विलासैरेव व्यञ्जयन्तीति त्वया

निर्विन्ध्याकृतप्रार्थनमन्तरेणापि तद्रसोऽनुभवनीयः, तया नाभिसन्दर्शनादिना रसप्रदानार्थस्य स्वाभिप्रायस्य तदर्थगर्भवचनोच्चारणमन्तरेणाऽप्याविष्कृतत्वादित्यभिप्रायः ।

On your way, having approached, imbibe the water of the Nirvindhya ( also enjoy her love ), manifesting ( expressing ) as if clearly her eagerness for you without any articulate expression displaying the arrival of her relative ( i. e. you, her lover ) bashfully turning round a little, for love-gesture in regard to their lovers is the first expression of love of women.

हंसश्रेणीकलविरुतिभिस्त्वामिवोपाह्वयन्ती
धृष्टा मार्गे शिथिलवसनेवाङ्गना दृश्यते ते ।
वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छायातटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ॥ १०७ ॥

अन्वय :— तां अतीतस्य ते मार्गे वेणीभूतप्रतनुसलिला तटरुहतरुभ्रंशिभिः जीर्णपर्णैः पाण्डुच्छाया सिन्धुः धृष्टा शिथिलवसना अङ्गना इव हंसश्रेणीकलविरुतिभिः त्वां उपाह्वयन्ती इव दृश्यते ।

हंसेत्यादि । तां निर्विन्ध्याभिधानां नदीं **अतीतस्य** अतिक्रान्तस्य **ते** तव **मार्गे** अध्वनि **वेणीभूतप्रतनुसलिला** अवेणी वेणी भवति स्म वेणीभूतं । वेणी इव वेणी । ' देवपथादिभ्यः ' इतीवार्थस्य कस्योप् । नात्र वेणीशब्दस्य विशेष्यभूतसलिललिङ्गत्वं सम्भवति ' युक्तवद्गुसि लिङ्गसङ्ख्ये ' इति तल्लिङ्गस्य विधानात्, यथा चञ्चा पुरुषः । अतः अवेणीवेणीशब्दयोः सलिलविशेषणत्वेऽपि न तल्लिङ्गत्वं सम्भवति । तेन च ' अवेणी वेणी भवति स्म ' इत्येव वक्तव्यं, न ' अवेणि वेणीभूतं ' इति, शब्दशास्त्रविरोधात् । अतः ' अवेणि वेणीभूतं वेण्याकारं ' इति मल्लिनाथोक्तिश्चिन्त्या । ' कृभ्वस्तियोगेऽसतत्त्वे सम्पत्तरि च्विः ' इति च्विः । ' दीर्घच्व्यकुट्टे ' इति दीः । ' वेणी तु केशबन्धे जलस्रुतौ ' इति यादवः । इकारान्तवेणिशब्दाश्रयणे तु विसर्गलोपाभावः प्रसज्यते । अलुप्तेवार्थकप्रत्ययस्य वेणीशब्दस्य ग्रहणे तु तत्स्रोतसः केशविन्यासदृशाकारार्थानवाप्तिः । स्रोतोऽर्थग्रहणे तु च्विरूपप्रयोगासम्भवः । वेणीभूतं प्रतनु सलिलं यस्याः सा । तत्सलिलस्य प्रतनुत्वं प्राप्तस्य वेणीभूतत्वकल्पनमिति भावः । **तटरुहतरुभ्रंशिभिः** तटयोः रोहन्तीति तटरुहः ।

'ज्ञाकॄगॄप्रीगुढः कः' इति रुहेरिगुङ्त्वात्कः। यद्वा रोहतीति रुहः। पूर्ववत्कः। तटयोः रुहः येषां ते तटरुहाः। 'तटयो रुहा ये तरवः' इति मल्लिनाथोक्तिर्दुर्निर्वहा। तटरुहाश्च ते तरवश्च तटरुहतरवः। तेभ्यः भ्रश्यन्तीति तटरुहतरुभ्रंशीनि। तैः। जीर्णपर्णैः। जीर्णानि च तानि पर्णानि च जीर्णपर्णानि। तैः। शुष्कपर्णैः जीर्णत्वाच्छिथिलितबन्धत्वादधोगलितैः पाण्डुच्छायैः पर्णैरित्यर्थः। **पाण्डुच्छाया** पाण्डुवर्णा। पाण्डुः सिता च्छाया कान्तिः वर्णो वा यस्याः सा पाण्डुच्छाया। जीर्णपर्णप्रपतनप्रादुर्भूतपाण्डुरिम्णोऽपि तस्याः विरहावस्थासञ्जनितवैवर्ण्यमत्र ध्वनितमित्यवसेयं। **सिन्धुः** सिन्ध्वभिधाना नदी। 'सिन्धुरब्धौ नदे देशभेदे ना सरिति स्त्रियां' इति विश्वलोचने। 'तामतीतस्य' इत्यस्य स्थाने 'असावतीतस्य' इति पाठान्तरमुररीकृत्य असौ पूर्वोक्ता सिन्धुर्नदी निर्विन्ध्या इत्युक्त्वा सिन्धुनिर्विन्ध्ययोरैक्यं व्यवस्थापितवान् मल्लिनाथः। प्रकृतपाठानुसारेण तु तयोर्भेद एव संलक्ष्यते। कश्मीरवाहिनः सिन्धुनदस्य नात्र सम्भवः इति कृत्वा तेन पाठान्तरमाश्रित्य सिन्धुनिर्विन्ध्ययोरैक्यं व्यवस्थापितं,किन्तु तदज्ञानविलसितमेव निर्विन्ध्यागम्भीरयोर्मध्ये सिन्ध्वभिधानायाः स्वल्पसारितः विद्यमानत्वात्। अतः 'तामतीतस्य' इत्येष एव पाठः समीचीनत्वात्समाश्रयणीयः। **धृष्टा** अविनीता लोकविरुद्धवृत्तित्वाद्वियाता वा। **शिथिलवसना** श्लथवस्त्रा परित्यक्तपरिधानीया वा **अङ्गना इव** कामिनीव **हंसश्रेणीकलविरुतिभिः** हंसानां श्रेण्यः पङ्क्तयः हंसश्रेण्यः। तासां कलाः गम्भीराः विरुतयः आरावाः। ताभिः। अत्र हंसशब्दः हंसकं पादकटकं स्मारयति, 'हंसवत्कायति शब्दं करोतीति हंसकः' इति तन्निरुक्तेः। **त्वां** भवन्तं **उपाह्वयन्ती** इव समीपं शब्दयन्ती इव **दृश्यते** लक्ष्यते।

On the way of you who would have passed beyond her (Nirvindhya), the Sindhu, on account of her having very little water assuming the form of a braid-like stream and assuming lustre pale owing to the old dry leaves dropped down from the trees grown on her banks, would be seen as if inviting you through the charming chirpings of the rows of swans like a bold woman with her garment loosened.

**क्षामाऽऽपाण्डुः प्रतनुसलिला वेणिकां धारयन्ती**
**हंसस्वानैरिव विदधती प्रार्थनाचाटुमेषा।**
**सौभाग्यं ते सुभग! विरहावस्थया व्यञ्जयन्ती**
**कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः॥ १०८॥**

अन्वयः— हे सुभग ! क्षामा आपाण्डुः प्रतनुसलिला वेणिकां धारयन्ती हंसस्वानैः प्रार्थनाचाटु विदधती इव विरहावस्थया ते सौभाग्यं व्यञ्जयन्ती एषा येन विधिना कार्श्यं त्यजति सः त्वया एव उपपाद्यः ।

क्षामेत्यादि । हे **सुभग** पुण्यभाक् ! **क्षामा** कृशशरीरा **आपाण्डुः** ईषत्पाण्डुवर्णा । ' पाण्डुः कुन्तीपतौ सिते ' इति विश्वलोचने । **प्रतनुसलिला** । प्रकर्षेण तनु अल्पं सलिलं यस्याः सा । स्वल्पजलेत्यर्थः । **वेणिकां** । अल्पा वेणी केशबन्धः वेणिका । ' वेणी तु केशबन्धे जलस्रुतौ ' इति यादवः । ' कुत्सिताज्ञाताल्पे ' इति अल्पार्थे कन् । वेणिका इव वेणिका जलस्रुतिः वेणिका । तां । यद्वा वेणिरिव वेणिका । तां । ' इवे ख्रुप्रतिकृत्योः कः ' इति सादृश्यार्थे कः । **धारयन्ती** । **हंसस्वानैः** मरालध्वनिभिः **प्रार्थनाचाटुं** प्रार्थनायां सुरतार्थं क्रियमाणायां याच्ञायां चाटुः प्रियवचनं प्रार्थनाचाटुः । तं । **विदधती इव** । विदधातीति विदधती । शतृत्यः स्त्रियां ङी च । **विरहावस्थया** विरहस्य वल्लकस्य अवस्था दशा । तया । ' वियोगो मदनावस्था विरहो वल्लकं विदुः ' इति धनञ्जयः । **ते** तव **सौभाग्यं** पुण्यवत्वं माहात्म्यं वा । ' भगं तु ज्ञानयोनीच्छायशोमाहात्म्यमुक्तिषु । ऐश्वर्यवीर्यवैराग्यधर्मश्रीरत्नभानुषु ' इति विश्वलोचने । तथा च ' ऐश्वर्यस्य समग्रस्य धैर्यस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा ' इत्यप्याहुः । ' ह्रस्विन्धुभगे द्वयोः ' इति भगे परतः पूर्वोत्तरयोर्द्वयोः पदयोरेप् । **व्यञ्जयन्ती** आविष्कुर्वती । व्यञ्जयतीति व्यञ्जयन्ती । शतृत्यः नुम् स्त्रियां ङी च । पुण्योदयमन्तरेण पुमांसमङ्गनाः न कामयन्ते । यतः सिन्धुरियं त्वां कामयते ततस्त्वं पुण्यभागिति भावः । अनेनास्याः सिन्धोः कामिनीत्वं ध्वन्यते । **एषा** सिन्धुनदी **येन विधिना** येन व्यापारेण । ' विधिर्विधाने दैवेऽपि ' इत्यमरः । **कार्श्यं** कृशतनुत्वं **त्यजति** परिहरति **सः** विधिः व्यापारः **त्वया एव** भवता एव **उपपाद्यः** विधेयः । कर्तव्यः इत्यर्थः । यथा प्रेयान् निधुवनविधिना स्वप्रेयसीं सन्तर्प्य तत्कार्श्यपरिहारनिमित्ततामेति तथा त्वं वर्षुक एनां वर्षाजलप्रदानेन सन्तर्प्य त्यक्ततनुकार्श्यां विदध्याः इति भावः । अत्र पूर्वत्र च श्लोके वेणीशब्दप्रयोगेण सिन्धुनद्याः प्रोषितभर्तृकत्वं ध्वनितमित्यवसेयं ।

Oh fortunate one ! by you alone should be adopted the remedy by which this one, emaciated, pale, possesing a braid-like stream on account of the scantiness of her water, making as if a sweet speech with a view to solicit you through the chirpings of swans, suggesting

your good fortune by her state of separation ( from you ), would give up her emaciation.

सत्यप्येवं पथि बहुविधे संविधानानुषङ्गे
मुख्यस्वार्थप्रतिहतिभयादाशु गत्वाऽध्वशेषम् ।
प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामुपसर पुरीं श्रीविशालां विशालाम् ॥ १०९ ॥

अन्वयः— पथि एवं बहुविधे संविधानानुषङ्गे सति अपि मुख्यस्वार्थप्रतिहतिभयात् अध्वशेषं आशु गत्वा उदयनकथाकोविदग्रामवृद्धान् अवन्तीन् प्राप्य श्रीविशालां विशालां पूर्वोद्दिष्टां पुरीं उपसर ।

सतीत्यादि । **पथि** अवन्तीमार्गे **एवं** उक्तप्रकारेण **बहुविधे** नानाप्रकारके **संविधानानुषङ्गे** विधेयविधानप्रसक्तौ । संविधानानां विधेयकर्मणां अनुषङ्गः प्रसक्तिः तस्मिन् । **सति अपि** । 'यद्भावाद्भावगतिः' इति ईप् । प्राप्ते सत्यपीत्यर्थः । **मुख्यस्वार्थप्रतिहतिभयात्** प्रधानभूतस्वप्रयोजनविघातभीतेः । हेतौ का । स्वस्य स्वकीयस्य अर्थः प्रयोजनं स्वार्थः । 'अर्थः प्रयोजने चित्ते हेत्वभिप्रायवस्तुषु । शब्दाभिधेये विषये स्यान्निवृत्तिप्रकारयोः ' इति विश्वलोचने । मुख्यः प्रधानभूतश्चासौ स्वार्थश्च मुख्यस्वार्थः । तस्य प्रतिहतिः विघातः । तस्याः भयं । तस्मात् । विघातस्य भयहेतुत्वात् का । **अध्वशेषं** अवशिष्टं पन्थानं । अध्वनः शेषः अध्वशेषः । तम् । **आशु** शीघ्रं **गत्वा** अतिक्रम्य । **उदयनकथाकोविदग्रामवृद्धान्** । ऊर्ध्वगामिमुक्तजीवेतिहासकुशलग्रामवृद्धान् । उत् ऊर्ध्वं अयनं गमनं येषां ते उदयनाः मोक्षशिलां प्रति प्रस्थिताः तत्रत्याः जनाः । मुक्ताः इत्यर्थः । अत्रोदयनशब्दस्य कालव्यतिक्रमप्रसङ्गात् उदयनराजार्थग्रहणमयुक्तं पार्श्वोदयनयोः समसमयसम्भवित्वाभावादुदयनराजस्य वीरसमयसम्भवित्वाच्च । अतः प्रोक्त एवार्थः अत्र ग्राह्यः । उदयनानां तत्रत्यानां प्राक्तनकालभाविनां मुक्तानां याः कथाः ऐतिह्यानि तासां कोविदाः तज्ज्ञानकुशलाः उदयनकथाकोविदाः । विदन्तीति विदाः । 'ज्ञाकॄगृप्रीगुङः कः ' इति विदेरिगुङ्त्वात्कः । ओकसो वेद्यस्य स्थानस्य विदाः कोविदाः । ओकसः । ओवर्णनाशात् ' पृषोदरादयः' इति साधुः । उक्तं च–' वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धूनां तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तं ' ॥ अत्रोदाहरणानि यथा–' भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् गूढोत्मा वर्णविकृतेः वर्णनाशात्पृषोदरम् '॥ उदयनकथाकोविदाः ग्रामवृद्धाः

येषु तान् । **अवन्तीन्** अवन्तीनामजनपदान् प्राप्य **श्रीविशालां** सम्पदः निवासभूमिं । श्रियः सम्पदः विशिष्टाः विविधाः शालाः निवासस्थानानि श्रीविशालाः । ताः सन्त्यस्याः श्रीविशाला । ' ओऽभ्रादिभ्यः ' इत्यः । तां । 'शाला वेश्मनि वेश्मैकप्रदेशे स्कन्धशाखयोः ' इति विश्वलोचने । **विशालां** विशालापराभिधानामुज्जयिनीं । ' विशालोज्जयिनी समे ' इत्युत्पलः । **पूर्वोद्दिष्टां** पूर्वोक्तां । पूर्वं उद्दिष्टां निवेदितनामधेयां। ' सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ' इति ' वक्रोऽप्यध्वा ' इति च ( १।१०३ ) श्लोकयोः निवेदितनामधेयामित्यर्थः । **पुरीं** नगरीं **उपसर** गच्छ ।

Though, on your way, there would be, thus, a possibility of having various emergent occupations, you, having completed immediately the remaining journey through fear of your main purpose being defeated, ( and ) having reached the Avanti country possessing in the villages old people well-versed with the stories regarding persons that had attained liberation, should proceed on to the big city called Vishala abounding in wealth ( or glory ), already referred to above.

**व्यावर्ण्यालं भुवनमहितां तां पुरीमुत्तमर्द्धिं**
**लक्ष्म्याः शश्वन्निवसनभुवं सम्पदामेकसूतिम् ।**
**स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां**
**शेषैः पुण्यैः हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥ ११० ॥**

अन्वय :— तां भुवनमहितां, उत्तमर्द्धिं, लक्ष्म्याः शश्वन्निवसनभुवं, सम्पदां एकसूतिं, सुचरितफले स्वल्पीभूते गां गतानां स्वर्गिणां शेषैः पुण्यैः दिवः हृतं एकं कान्तिमत् खण्डं इव तां पुरीं व्यावर्ण्य अलम् ।

**व्यावर्ण्ये**त्यादि । **तां** विशालापराभिख्यां उज्जयिनीं **भुवनमहितां** भुवनेन तात्स्थ्यात् तत्रत्यैः निखिलैः जनैःमहितां पूजितां स्तुतिविषयतां नीतां **उत्तमर्द्धिं** उत्कृष्टैश्वर्यवतीं । उत्तमा उत्कृष्टा ऋद्धिः ऐश्वर्यं यस्याः सा । ताम् । उक्तं च– 'ऋद्धिर्वृद्धिः सुखं सिद्धी रथाङ्ग मङ्गलं वसु । ऋद्धिसृष्टा युगं योग्यं लक्ष्मीः सर्वजनप्रिया ॥' इति । **लक्ष्म्या** श्रियः **शश्वन्निवसनभुवं** शाश्वतिकं निवासस्थानं । **सम्पदां** श्रियां धनानां वा **एकसूतिं** एकां अद्वितीयां सूतिं उत्पत्तिस्थानं। 'एकस्तु स्यात्त्रिषु श्रेष्ठे केवलेतरयोरपि ' इति विश्वलोचने । सूयतेऽस्यामिति सूतिः । **सुचरितफले** । सुचरितस्य पुण्यस्य शुभकर्मणः वा फलं सुचरितफलं । तस्मिन् । सुचरितफलमत्र स्वर्गसुखोपलक्षणम् ।

**स्वल्पीभूते** स्वल्पतां । गते । **गां** भुवं । ' गौरिला कुम्भिनी क्षमा ' इत्यमरः । **गतानां** । प्राप्तानां **स्वर्गिणां** स्वर्गभुवां देवानां अवशिष्टैः **पुण्यैः** सुकृतैः **दिवः** स्वर्गात् **हृतं** अपनीतं भुवि आनीतं च **एकं** भुक्तावशिष्टं अन्यत् **कान्तिमत्** उज्ज्वलं । कान्तिरस्यास्तीति कान्तिमत् । 'तदस्याऽस्तीति मतुः' इति मतुः । **खण्डं इव** शकलं इव **तां** पुरीं उज्जयिनीं **व्यावर्ण्य** वर्णयित्वा **अलं** पर्याप्तम् । ' निषेधेऽलंखल्वोः क्त्वा ' इति क्त्वा ।

Enough of describing that city, highly praised by the whole world, possessing excellent glory, the eternal abode of the goddess of wealth ( or glory ), the only source of happiness or wealth, an unparalleled shining piece of heaven stripped off on account of the remaining portions of merit of the residents of heaven gone down to the earth owing to the friut of their good deeds being reduced to a very small scale or measure.

**यस्यामुच्चैरुपवनतरून्नामयन्मातरिश्वा**
**वीचिक्षोभादधिकशिशिरः सञ्चरत्यप्कणौघैः ।**
**दीर्घीकुर्वन्पटु मदकलं कूजितं सारसानां**
**प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ॥ १११ ॥**

अन्वयः— उच्चैः उपवनतरून् नामयन्, वीचिक्षोभात् अधिकशिशिरः, सारसानां पटु मदकलं कूजितं दीर्घीकुर्वन्, स्फुटितकमलामोदमैत्रीकषायः मातरिश्वा यस्यां प्रत्यूषेषु अप्कणौघैः सञ्चरति ।

**यस्यामि**त्यादि । **उच्चैः** उन्नततरान् **उपवनतरून्** आरामोद्भूतान् तरून् । **नामयन्** प्रह्वीकुर्वन् । नतान् कुर्वन्नित्यर्थः । **वीचिक्षोभात्** कल्लोलप्रक्षोभात् । वीचीनां कल्लोलानां क्षोभः उच्चलनं तस्मात् । प्रभञ्जनोच्चलितजलजनितकल्लोलत्वादित्यर्थः । **अधिकशिशिरः** । अधिकं अत्यर्थं शिशिरः शीतः अधिकशिशिरः । तुहिनकणवाहित्वातो यथाऽधिकशिशिरस्तथा वायूच्चालितसलिलोत्थकल्लोलप्रक्षितशीकरासारवाहित्वाज्जनिताधिकशैत्य इत्यर्थः । **सारसानां** पक्षिविशेषाणां । ' सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः ' इति यादवः । ' सारसः पक्षिचन्द्रयोः ' इति विश्वलोचने । यद्वा सारसानां हंसानां । ' चक्राङ्गः सारसो हंसः ' इति शब्दार्णवे । **पटु** प्रस्फुटम् । **मदकलं** मदेन कलं मधुराव्यक्तं । ' कलस्तु मधुराव्यक्तशब्देऽजीर्णे कलं सिते ' इति विश्वलोचने । ' पटुर्वाग्मिनि नीरोगे तीक्ष्णे दक्षे स्फुटे त्रिपु ' इत्यपि विश्व-

लोचने । कूजितं स्तनितं । दीर्घीकुर्वन् । अदीर्घं दीर्घं सम्पद्यमानं करोतीति दीर्घीकरोति । दीर्घीकरोतीति दीर्घीकुर्वन् । 'लक्षणहेत्वोः' इति सति शतृत्यः । 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति च्विः । स्फायन् वृद्धिं नयन्नित्यर्थः । स्फुटितकमलामोदमैत्रीकषायः । स्फुटितानि विकसितानि च तानि कमलानि उत्पलानि स्फुटितकमलानि । तेषामामोदः सुगन्धः । तेन या मैत्री मित्रत्वं । संसर्ग इत्यर्थः । तया कषायः सुरभितः । कषायः सुरभिगन्धः अस्य अस्तीति कषायः । 'अर्शआदिभ्यः' इत्यः । 'अस्त्री कषायो निर्यासे रसे रक्ते विलेपने । अङ्गरागे सुगन्धे तु त्रिषु स्याल्लोहितेऽपि च' इति विश्वलोचने । मातरिश्वा प्रभञ्जनः । मातरि व्योम्नि श्वसितीति मातरिश्वा सदागतिः वायुः । 'श्वसनः स्पर्शनो वायुः मातरिश्वा सदागतिः' इत्यमरः । यस्यां नगर्यां विशालाख्यायां । प्रत्यूषेषु अहर्मुखेषु । दिवसारम्भे इत्यर्थः । 'प्रत्यूषोऽहर्मुखे पुंसि प्रत्यूषो वसुदैवते' इति विश्वलोचने । अप्कणौघैः । अपां जलस्य कणाः बिन्दवः अप्कणाः । तेषां ओघाः समूहाः । तैः । 'ओघः पाथःप्रवाहे च समूहे च पुमानयम्' इति विश्वलोचने । सञ्चरति प्रवहति । वातीत्यर्थः ।

Where the wind, bending the lofty trees grown in the gardens, very cool owing to the disturbance of waves, prolonging the shrill notes of cranes ( or swans ), indistinct yet sweet owing to their being intoxicated, fragrant owing to its association with the perfume of the lotuses burst into flowers, blows along with the masses of the drops of water at day-break.

**कल्लोलान्तर्वलनशिशिरः शीकरासारवाही**
**धूतोद्यानो मदमधुलिहां व्यञ्जयन् सिञ्जितानि ।**
**यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः**
**शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ११२ ॥**

अन्वय :— यत्र कल्लोलान्तर्वलनशिशिरः, शीकरासारवाही, धूतोद्यानः, मदमधुलिहां शिञ्जितानि व्यञ्जयन्, प्रियतमः इव प्रार्थनाचाटुकारः अङ्गानुकूलः शिप्रावातः स्त्रीणां सुरतग्लानिं हरति ।

कल्लोलेत्यादि । यत्र विशालाख्यायां नगर्यां कल्लोलान्तर्वलनशिशिरः वीच्यन्तरप्रदेशभ्रमणजनितशीतस्पर्शः । कल्लोलानां वीचीनामन्तः मध्ये वलनं भ्रमणं । तेन शिशिरः शीतस्पर्शः । शीकरासारवाही वातप्रणुन्नाम्बुकणान् वहन् । शीकराः वात-

प्रणुन्नाः अम्बुकणाः । ' शीकरः सरले वातनिःसृताम्बुकणेषु च ' इति विश्वलोचने । आसाराः प्रसराः । ओघाः इत्यर्थः । शीकराणां वातेरिताम्बुकणानां आसाराः प्रसराः । तान् वहतीति शीकरासारवाही । **धूतोद्यानः** प्रकम्पितोपवनः **मदमधुलिहां** आनन्दिनां भ्रमराणां । मदाः मदिनः । मदः हर्षः अस्त्येषामिति मदाः । ' ओऽभ्रादिभ्यः ' इत्यो मत्वर्थीयः । मधु लिहन्तीति मधुलिहः । मदाः हर्षिताः मधुलिहः भ्रमराः मदमधुलिहः । तेषां । **सिंञ्जितानि** रसितध्वनीन् अव्यक्तान् । **व्यञ्जयन्** प्रकाशयन् । **प्रियतमः** इव वल्लभः इव । **प्रार्थनाचाटुकारः** प्रार्थनायां सुरतयाचनार्थं चाटुः प्रियवचनं प्रार्थनाचाटुः । तं करोतीति प्रार्थनाचाटुकारः । ' कर्मणोऽण् ' इत्यण् । निधुवनविधेरनन्तरं पुनः प्रादुर्भूतसुरताभिलाषः पुनः सुरतभोगप्राप्त्यर्थं स्वप्रेयसीं प्रार्थयन् यथा प्रियवचनं प्रयुनक्ति तथा प्रियवचनं प्रयोजयन् **अङ्गानुकूलः** अङ्गनानां अङ्गानां शरीराणां अनुकूलः सुखस्पर्शः । **शिप्रावातः** शिप्रासलिलोत्थितकल्लोलान्तरप्रदेशवाही वातः वायुः । शिप्राग्रहणमत्र शैत्यद्योतनार्थं । **स्त्रीणां** योषितां निधुवनविधिजनितक्लमक्लिन्नानां **सुरतग्लानिं** पूर्वनिधुवनजनितश्रमं **हरति** दूरमपसारयति ।

Where the breeze (blowing) from above the Sipra, cool on account of its blowing through the waves, carrying the masses of sprays, setting the gardens in motion, displaying the buzzings of the gladdened bees, speaking gallantly like a lover requesting his beloved for sexual enjoyment, agreeable to the body, dispels the fatigue of women caused by enjoyment.

तीक्ष्णस्याऽरेः स किल कलहे युद्धशौण्डो मुरुण्डः
प्रद्योतस्य प्रिय ! दुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमभवनमभूदत्र तस्यैव राज्ञः
हासालापैरिति रमयति स्त्रीजनो यत्र बालान् ॥ ११३ ॥
शैलं शैलप्रमितवपुषा पीडयन्नुन्मदिष्णून्
निघ्नन् व्यालान् कुपितसमवर्तीव मेघं मरुद्वत् ।
अत्रोत्क्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पा-
दित्यागन्तून् रमयति जनो यत्र बन्धूनभिज्ञः ॥ ११४ ॥

अन्वयः—' प्रिय ! सः युद्धशौण्डः मुरुण्डः वत्सराजः कलहे प्रद्योतस्य तीक्ष्णस्य अरेः दुहितरं अत्र किल जह्रे । यत्र स्त्रीजनः बालान् हासालापैः रमयति

( तस्मिन् ) अत्र ( प्रदेशे ) तस्य एव राज्ञः हैमं तालद्रुमवनं अभूत् ' इति, ' शैल-प्रतिमवपुषा शैलं पीडयन् ' मेघं मरुद्वत् उन्मदिष्णून् व्यालान् कुपितसमवर्ती इव निघ्नन् नलगिरिः दर्पात् स्तम्भं उत्पाट्य अत्र उद्भ्रान्तः किल ' इति ( च ) यत्र अभिज्ञः जनः आगन्तून् बन्धून् रमयति ।

तीक्ष्णस्येत्यादि । प्रिय हे मित्र युद्धशौण्डः युद्धविद्यानिपुणः । युद्धे शौण्डः युद्धशौण्डः । ' ईप् शौण्डैः ' इति ईप् । मुरुण्डः मुरुण्डानां राजा । मुरुण्डः लम्पकदेशः इति हेमचन्द्रः । मुरुण्डानां राजा मुरुण्डः । ' उप् चोलादेः ' इति राजप्रत्ययस्योप् । ' सर्वत्र बहुषूप् ' इति, ' स्वभावतः पञ्चालादिशब्देन राष्ट्रं राजा चाऽभिधीयते ' इति चोक्तं महावृत्तौ । वत्सराजः । वत्सानां राजा शासिता वत्सराजः । 'राजाहःसखिभ्यष्टः' इति टः सान्तः । अत्र वत्सराजशब्देन उदयनस्य ग्रहणं नेष्टं मुरुण्डः इति विशेषणात् मुरुण्डाधिपतित्वाभावादुदयनस्य तस्य मुरुण्डदेशाधिपत्वाभावाद्भगवच्छ्रीपार्श्वनाथतीर्थंकर-परमदेवसमसमयवर्तित्वाभावाच्च । अतोऽनेनान्येन केनचिदुदयनराजपूर्ववर्तिना पार्श्वसम-कालसम्भवेन कौशाम्बीपतिना भाव्यमिति सुस्पष्टतामाटीकते । कलहे युद्धे । यद्वा आत्मकर्मणोरन्योन्यं विजिगीष्वोः अनादेः कालात्प्रवृत्ते युद्धे । प्रद्योतस्य प्रकृष्टः प्रगतः वा द्योतः आत्मतेजः यस्य सः । तस्य । प्रादिर्बसः । शुद्धनिश्चयापेक्षया प्रकृष्टतेजसः आत्मनः तीक्ष्णस्य उग्रस्य । भयङ्करस्येत्यर्थः । अरेः शत्रोः । कर्मारेरित्यर्थः । दुहितरं दुहितृतुल्यकर्मप्रकृतिं । दोग्धि पितराविति दुहिता । दोग्धीत्यनेन पित्रोर्धनमपहरतीत्यर्थो रूढो यौगिकश्च । कर्मप्रकृतयोऽपि स्वजनकस्यात्मनः स्वं आत्मस्वरूपरूपं धनमपहरतीति-कर्मप्रकृतेः दुहित्रा तुल्यत्वं । दुहितेव दुहिता । कर्मप्रकृतिः । ' देवपथादिभ्यः ' इतीवार्थस्य कस्योस् । दुहितरमित्येकवचनं जातिनिबन्धनमिति दुहितरमित्यस्य दुहितॄः इत्यर्थः । तेन सर्वासां कर्मप्रकृतीनां ग्रहणं कर्तव्यम् । अत्र उज्जयिन्याः कस्मिंश्चिद्भूप्रदेशे । किलेति वार्तायां । जह्रे विनाशितवान् । इति एवं यत्र यस्मिन् (प्रदेशे) स्त्रीजनः स्त्रियः बालान् स्वार्भकान् हासालापैः हासैः आलापैश्च रमयति विनोदयति तस्मिन् प्रदेशे अत्र तत्प्रदेशस्थेऽस्मिन् स्थाने तस्य एव राज्ञः वत्समुरुण्डानामधिपतेः एव हैमं शैत्ययुक्तं सुवर्णवर्णं वा तालद्रुमवनं तालद्रुमाणां प्रोन्नतवृक्षविशेषाणां वनं काननं अभूत् आसीत् इति एवंप्रकारेण । शैलप्रतिमवपुषा शैलतुल्यशरीरेण । शैलप्रतिमं शैलानुकारि वपुः शरीरं शैलप्रतिमवपुः । तेन । ' प्रतिमाऽनुकृतौ दन्तबन्धनेऽपि च दन्तिनाम् ' इति विश्वलोचने । यद्वा शैलेन प्रतिमीयते इति शैलप्रतिमं । ' प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया ' इत्यमरः । शैलं पर्वतं पीडयन् मर्दयन् । मेघं मरुद्वत् यथा

मरुन्मेघं निहन्ति तथा निघ्नन्। 'सुप इवे' इति गजमरुतोर्हननक्रियातुल्यत्वात् उपमानभूतात् सुबन्तान्मरुतो वत्यः। उन्मदिष्णून् उन्मदिष्णून्। 'भूभ्राज्यलङ्कृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृद्वृधुसहचर इष्णुः' इति इष्णुः सति काले। 'उन्मदिष्णुस्तून्मदिता' इत्यमरः। व्यालान् दुष्टगजान् श्वापदान् वा। 'व्यालः शठे भुजङ्गे च श्वापदे दुष्टदन्तिनि' इति विश्वलोचने। कुपितसमवर्ती इव क्रोधान्धान्तकवत्। 'समवर्तीपरेतराट्' इत्यमरः। निघ्नन् घातयन्। नलगिरिः दमयन्तीशोधार्थं चङ्क्रम्यमाणेन नलनृपतिना चरणविन्यासेन पवित्रीकृतत्वाद्रामगिरिवत् नलगिरिरिति ख्यातिमापन्नः प्राक्कालभवः पर्वतविशेषः। नलगिरिरिव नलगिरिः। नलगिरिशरीराकाररूपादिमान् गजविशेषः। यद्वा नलगिरिरित्याख्यातः पाकशासनस्य स्तम्बेरमः। स इव नलगिरिः गजविशेषः। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। दर्पात् बलवत्त्वाभिमानात्। 'दर्पो। भवेदहङ्कारे दर्पो मृगमदेऽपि च' इत्यमरः। स्तम्भं आलानस्तम्भं। गजबन्धनार्थं निखातं स्तम्भमित्यर्थः। उत्पाट्य आमूलादुद्धृत्य उद्भ्रान्तः उद्भ्रमति स्म। किल वार्तायाम्। इति च एवं च यत्र विशालायां अभिज्ञः प्राचीनैतिह्यकोविदः। जनः लोकः। आगन्तून् आगतान्। अतिथीनित्यर्थः। 'स्युरावेशिक आगन्तुरतिथिर्ना गृहागते' इत्यमरः 'आतिथ्योऽतिथिरागन्तुः' इति माला च। बन्धून् बान्धवान् रमयति विनोदयति। अथवा प्रद्योतस्य तेजस्विनः। प्रकृष्ट द्योतः तेजः यस्य सः। तीक्ष्णस्य शत्रुभयङ्करस्य अरेः परिपन्थिनः कस्यचिद्राज्ञः प्रियदुहितरं प्रियात्मजां वत्समुरुण्डाधिपतिः अत्र उज्जयिनीविषयेऽत्र स्थाने जह्रे हृतवान्। अत्र मेघदूतकाराभिप्रेतार्थपरिवर्तनं कालव्यतिक्रमनिरासार्थमवसेयं सुधीभिः।

Wherein the well-informed people entertain their relatives come there on a visit as: 'Here, oh friend! it is reported, did the king of the Vatsas and the Murundas, a veteran warrior in a fight, destroy the elementary divisions, which are like daughters, of the Karman, the ferocious enemy of the soul possessing perfect knowledge (under the cover of Karman); here where women are regaling their children by means of mirth and narration, was the grove of Tala trees, possessing a golden yellow colour (or possessing coolness); here, it is reported, did an elephant immitating the bodily form etc. of the Nalgiri (mountain named after the king Nala who sanctified it with his foot-prints), butting against the mountain with his mountain-like body, destroying like the angry god of death the wild beasts or elephants like the wind destroying clouds, wander about, having uprooted the post (meant for tying him) through rashness.

यस्यां बिभ्रत्यवनिपपथा रत्नराशीनुदग्रान्
शूर्पोन्मेयाञ्जलधय इवापीततोया युगान्ते ।
हारांस्तारांस्तरलगुटिकान्कोटिशः शङ्खशुक्तीः
शष्पश्यामान्मरकतमणीनुन्मयूखप्ररोहान् ॥ ११५ ॥

अन्वयः—यस्यां अवनिपपथाः युगान्ते आपीततोयाः जलधयः इव शूर्पोन्मेयान् उदग्रान् रत्नराशीन् तरलगुटिकान् तारान् हारान् कोटिशः शङ्खशुक्तीः, उन्मयूखप्ररोहान् शष्पश्यामान् मरकतमणीन् बिभ्रति ।

**यस्या**मित्यादि । **यस्यां** उज्जयिनीनगर्यां **अवनिपपथाः** राजमार्गाः । अवनीं पृथ्वीं पातीत्यवनिपः राजा । तस्य पन्थानः मार्गाः । तान् । 'ऋक्पूरब्धूःपथामानक्षे' इत्यत्सान्तः । युगान्ते युगकालावसाने । प्रलयकाले इत्यर्थः । 'प्रशस्तरथसीराङ्गे युग्मेऽपि स्यात्कृतादिषु । युगं हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च ' इति विश्वलोचने । **आपीततोयाः** शोषितजलाः । **जलधयः** इव सागराः इव । जलं धीयतेऽस्मिन्निति जलधिः। **शूर्पोन्मेयान्** । शूर्पैः प्रस्फोटनैः उन्मातुमर्हन्तीति शक्यन्ते इति वा शूर्पोन्मेयाः । तान् । ' तृव्याश्चार्हे ' इति अर्हार्थे । त्यः । ' शकि लिङ् च ' इति शक्यार्थे व्यः । ' प्रस्फोटनं शूर्पमस्त्री ' इत्यमरः । **उदग्रान्** अत्युन्नतान् । उद्गतानि अग्राणि प्रान्तप्रदेशाः शिखराकारभागाः येषां तान् । ' अग्रं त्रिषु प्रधाने स्यादग्रं मूर्धादिकादिषु । पुरस्तात्पलमाने च ज्ञातेऽप्यालम्बनान्तयोः ' इति विश्वलोचने । **रत्नराशीन्** मणिसमूहान् । रत्नानां मणीनां राशयः पुञ्जाः समूहाः रत्नराशयः । तान् । ' राशिस्तु पुञ्जे पुंस्येव तथा मेषवृषादिषु ' इति विश्वलोचने । **तरलगुटिकान्** मध्यगमहारत्नान् । तरलाः भासुराः हारमध्यगाः गुटिकाः महारत्नानि येषां ते । तान् । ' तरलश्चञ्चले खड्गे भासुरे त्रिषु पुंसि तु । हारमध्यमणौ ' इति विश्वलोचने । ' पिण्डे मणौ महारत्ने गुटिका बद्धपारदे ' इति शब्दार्णवे । **तारान्** शुद्धमौक्तिकवतः । ताराः शुद्धमौक्तिकाः सन्त्यस्य ताराः । तान् । ' तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके ' इति विश्वलोचने । ' ओऽभ्रादिभ्यः ' इत्यत्यो मत्वर्थीयः । **हारान्** मुक्तावलीः । **कोटिशः** । कोटिं कोटिं कोटिशः । ' स्येकाद्वीप्सायां ' इति वीप्सायां शस् । शङ्खशुक्तीः । शङ्खाश्च शुक्तयश्च मुक्तास्फोटाश्च शङ्खशुक्तयः । ताः शङ्खशुक्तीः । इव्बहुवचनम् । ' शुक्तिः शङ्खनखे शङ्खे मुक्तास्फोटेऽपि कम्बुनि ' इति विश्वलोचने । **उन्मयूखप्ररोहान्** मयूखाः किरणाः प्ररोहाः अङ्कुराः इव मयूखप्ररोहाः । ' किरणोऽस्त्रमयूखांशुगभस्तिघृणिरश्मयः ' इत्यमरः । ' व्याघ्रादिभिरुपमेयोऽतद्योगे ' इति मयूखोपमेयस्य प्ररोहोपमानेन सः सामान्ययोगे, व्याघ्रादेरा-

कृतिगणत्वात् । उद्गताः मयूखप्ररोहाः येषां तान् । शष्पश्यामान् । शष्पं बालतृणमिव श्यामाः हरिद्वर्णाः । तान् । 'शष्पं बालतृणं क्लीबं शष्पस्तु प्रतिभाक्षये' इति 'श्यामस्तु हरिते कृष्णे प्रयागस्य वटद्रुमे । पिके पयोधरे वृद्धदारकेऽपि पुमानयं । श्यामवर्णे हरिद्वर्णे त्रिषु' इति च विश्वलोचने । 'सामान्येनोपमानं' इति सामान्यवाचिना श्यामशब्देन सहोपमानस्य शष्पशब्दस्य पक्षः । मरकतमणीन् हरिन्मणीन् 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः' इत्यमरः । बिभ्रति धारयन्ति ।

Wherein, the royal roads (or main streets), resembling the oceans with their water drunk up at the time of the destruction of the worlds, possess lofty heaps of jewels worthy of being measured with winnowing-baskets, with faultless (or genuine) pearls, and with big jems at their centres, crores of conches, shells and emeralds as green as young grass and shooting their rays upwards.

भूयो नानाभरणरचनायोग्यरत्नप्रवेकान्-
ज्योतिर्लेखारचितरुचिमच्छक्रचापानुकारान् ।
दृष्ट्वा यस्यां विपणिरचितान्विद्रुमाणां च भङ्गान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः ॥ ११६ ॥

अन्वय :— भूयः यस्यां विपणिरचितान् ज्योतिर्लेखारचितरुचिमच्छक्रचापानुकारान् नानाभरणरचनायोग्यरत्नप्रवेकान् विद्रुमाणां भङ्गान् च दृष्ट्वा सलिलनिधयः तोयमात्रावशेषाः संलक्ष्यन्ते ।

भूय इत्यादि । भूयः पुनः यस्यां विशालाख्यनगर्यां विपणिरचितान् । विपणिषु पण्यवीथिकासु रचितान् प्रसारितान् । 'विपणिस्तु स्त्रियां पण्यवीथ्यामापणपण्ययोः' इति विश्वलोचने । ज्योतिर्लेखारचितरुचिमच्छक्रचापानुकारान् । ज्योतिषां तेजसां लेखाः राज्यः ज्योतिर्लेखाः । 'ज्योतिर्भद्योतदृष्टिषु' इत्यमरः । 'लेखाराजीलिपिष्वपि' इति विश्वलोचने । ताभिः रचितः रुचिमान् कान्तिमांश्चासौ शक्रस्येन्द्रस्य चापः धनुश्च । तस्यानुकारः अनुहारः सादृश्यं विद्यते येषां ते । तान् । 'अनुहारोऽनुकारः स्यात्' इत्यमरः । नानाभरणरचनायोग्यरत्नप्रवेकान् । नाना अनेकविधान्याभरणानि अलङ्काराः भूषणानि नानाभरणानि । तेषां रचना । तस्या योग्याः रत्नप्रवेकाः रत्नोत्तमाः । तान् । रत्नानां प्रवेकाः अनुत्तमाः श्रेष्ठाः अतिशोभनाः वा । 'क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः' इत्यमरः । विद्रुमाणां प्रवालमणीनां

भङ्गान् रचनाविशेषान्। भङ्गः भक्तिः रचनाविशेषोऽस्त्येषामिति भङ्गाः। तान्। 'ओऽभ्रादिभ्यः' इत्यत्यः। च समुच्चये **दृष्ट्वा** अवलोक्य **सलिलनिधयः** पाथोधयः। समुद्रा इत्यर्थः। **तोयमात्रावशेषाः**। तोयमेव तोयमात्रं। 'मात्रट्' इति मानेऽवधारणार्थे मात्रट्। 'मात्रं कार्त्स्न्येऽवधारणे' इति विश्वलोचनेऽमरकोशे च। तोयमात्रं तोयमेव नान्यत्किञ्चिद्रत्नादिकमवशेषो येषां ते तोयमात्रावशेषाः। **संलक्ष्यन्ते** तां नगरीमवलोकमानैर्जनैरनुमीयते। तन्नगरीपण्यवीथिकारचितानि रत्नादीन्यवलोक्य रत्नानि समुद्रान्प्रमुष्य तत्र नगर्यां स्थापितानीति सागराः मुषितरत्नादित्वात्तोयमात्रावशेषाः जाता इत्यवलोकमानैस्तां नगरीं जनैः कल्प्यते इति भावः

Moreover, on seeing in which the best jewels, worthy of being turned into various ornaments, imitating the beautiful Indra's bow, brought into being by the streaks of sunlight, and the structures of corals arranged in the shops on the bazaar roads (or in the markets for sale), the oceans are looked upon as having only water remaining behind (in them).

**विश्रम्योच्चैर्वलभिषु पुरीं प्राप्य तामुत्तमार्द्धिं**
**स्वर्गावासप्रणयमुररीकृत्य सौधैस्तथाऽस्याः।**
जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्तोपहारः ॥ ११७ ॥

**स्वःसौधेषु प्रणयमचिरात्संहरिष्यस्यवश्यं**
**मन्द्रातोद्यध्वनिषु सततारब्धसङ्गीतकेषु।**
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखिन्नान्तरात्मा
नीत्वा खेदं ललितवनितापादरागाङ्कितेषु ॥ ११८ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचितमेघदूतवेष्टिते पार्श्वाभ्युदये भगवत्कैवल्यवर्णनं (१) नाम प्रथमः सर्गः।

अन्वय :— तां उत्तमार्द्धिं पुरीं प्राप्य, वलभिषु उच्चैः विश्रम्य तथा अस्याः सौधैः स्वर्गावासप्रणयं उररीकृत्य, जालोद्गीर्णैः केशसंस्कारधूपैः उपचितवपुः, भवनशिखिभिः बन्धुप्रीत्या दत्तनृत्तोपहारः मन्द्रातोद्यध्वनिषु, सततारब्धसङ्गीतकेषु, कुसुमसुरभिषु, ललितवनितापादरागाङ्कितेषु अस्याः हर्म्येषु, अध्वखिन्नान्तरात्मा (त्वं) खेदं नीत्वा स्वःसौधेषु प्रणयं अचिरात् अवश्यं संहरिष्यसि।

**विश्रम्येत्यादि**। तां प्रसिद्धां। **उत्तमर्द्धिं** उत्तमा अनुत्तमा ऋद्धिः सुखं यस्याः सा। उक्तं च– 'ऋद्धिर्वृद्धिः सुखं सिद्धी रथाङ्गं मङ्गलं वसु। ऋद्धिपुष्टा (सृष्टा) युगं योग्यं लक्ष्मीः सर्वजनप्रिया' इति। **पुरीं** विशालानामधेयां नगरीं **प्राप्य** गत्वा **वलभिषु** सौधोपरितनभागेषु। 'आच्छादनं स्याद्वलभिर्गृहाणां' इति हलायुधः। **उच्चैः** नितरां **विश्रम्य** अध्वखेदापनयनार्थं स्थित्वा। **तथा** तेनैव प्रकारेण **अस्याः** विशालायाः **सौधैः** सुधाधवलप्रासादैः। 'हेतौ सर्वाः प्रायः' इति हेतौ भा। **स्वर्गावासप्रणयं**। स्वर्गे आवासः निवासः निवासस्थानं वा। तत्र प्रणयः प्रेम आकाङ्क्षा वा। तम्। **उररीकृत्य** स्वीकृत्य। 'च्विडाजूर्याद्यनुकरणं' इति क्रियायोगे तिसञ्ज्ञा। तस्यां च ल्यप्। **जालोद्गीर्णैः** गवाक्षेभ्यो निःसृतैः। 'जालस्तु क्षारकानाय-गवाक्षे दम्भवृक्षयोः' इति विश्वलोचने। जालेभ्यो जालैर्वा उद्गीर्णैः उद्वान्तैः **केश-संस्कारधूपैः**। केशानां संस्कारः अलङ्करणं केशसंस्कारः। 'सम्पर्युपात्कुः सुड्भूषे' इति समः परस्य कृञः सुड्भूषार्थे। केशसंस्कारस्य धूपाः केशसंस्कारधूपाः तैः। धूपानां केशसंस्कारार्थत्वेऽपि यूपस्य दारुविकारत्वाद्विकार्यविकारकभावसद्भावाद्यथा यूपाय दारु यूपदारुरिति सः तथा संस्कारस्य धूपविकारत्वाभावाद्विकार्यविकारकभावाभावान्नास्ः, अपि तु तास एव। **उपचितवपुः** परिपुष्टदेहः। उपचितं परिपुष्टं वपुः देहः यस्य सः। **भवनशिखिभिः** गृहमयूरैः **बन्धुप्रीत्या**। बन्धौ बन्धुरिति वा प्रीत्या प्रेम्णा **दत्तनृत्तोपहारः**। नृत्तं नृत्यं एव उपहारः उपायनं। नृत्तशब्दः पुल्लिङ्गोऽपि कोशान्तरेषु लभ्यते। 'नृत्तः स्यान्नर्तने क्लिबो' इति विश्वलोचने 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः। दत्तः नृत्तोपहारः यस्मै इति दत्तनृत्तोपहारः। **मन्द्रातोद्यध्वनिषु**। मन्द्राः आतोद्यानां वादित्रविशेषाणां ध्वनयो येषु। तेषु। **सततारब्धसङ्गीतकेषु**। सततं निरन्तरं आरब्धं सङ्गीतकं येषु। 'गीतं वाद्यं नर्तनं च त्रयं सङ्गीतमुच्यते' इति सङ्गीतकलक्षणम्। **कुसुमसुरभिषु**। कुसुमानां सुरभिः सौगन्ध्यं इव सुरभिः येषां। तेषु। 'ईवुपमानपूर्वस्य द्युखं गतार्थत्वात्' इति द्युखं। 'सुरभिश्चम्पके चैत्रे वसन्ते गन्धके कवौ। स्वर्णे जातीफले चाऽब्जे त्रिषु मद्यसुगन्धयोः। ख्याते च' इति विश्वलोचने। **ललितवनितापादरागाङ्कितेषु**। ललिताः सुन्दर्यश्च ताः वनिताः स्त्रियः ललित-वनिताः। 'ललितं हारभेदे स्यात्त्रिष्वेव ललितेष्टयोः' इति विश्वलोचने। 'ललितं त्रिषु सुन्दरम्' इति शब्दार्णवे। तासां पादयोर्यो रागः लाक्षारसः आलक्तकरसो वा तेन अङ्कितेषु चिह्नितेषु **अस्याः** विशालायाः **हर्म्येषु** इभ्यभवनेषु। श्रीमतामालयेष्वित्यर्थः **अध्वखिन्नान्तरात्मा**। अध्वना मार्गक्रमणसङ्क्लेशेन खिन्नः सञ्जातखेदः श्रान्तः अन्त-रात्मा अन्तःकरण यस्य सः। त्वं **खेदं** श्रमं नीत्वा अपनीय। अपसार्येत्यर्थः।

स्वःसौधेषु स्वर्गहर्म्येषु । प्रणयं तीव्रामाकाङ्क्षां अचिरात् शीघ्रं अवश्यं निश्चयेन संहरिष्यसि परिहरिष्यसि । स्वर्गवास्तव्यनिवासभूतालयेभ्योऽपि विशालावास्तव्यधनिजनसौधानां सौन्दर्याद्यपेक्षयाऽऽधिक्यमत्र प्रकटितमिति भावः ।

इति श्रीपार्श्वाभ्युदये मुक्तेन्दुधर्मविरचितायां बालप्रबोधिन्याख्यायां व्याख्यायां शठकमठकृतभगवदुपसर्गवर्णनं नाम प्रथमः सर्गः ।

Having reached that city, a place abounding in excellent prosperity ( or a place of excellent mechanism and fine art ), having taken full rest on the uppermost parts of the mansions, having had recourse to your strong desire for making a stay in the heavens through its mansions, you, having your body increased in volume owing to the aromatic smoke used for hair toilet issuing forth from the lattices, having presents offered by the domestic peacocks in the form of dances accompained with songs through brotherly love, become tired at heart by the fatigue caused by the journey, having removed the fatigue on the mansions of the city, resounding with the deep pleasing sounds of the musical instruments, having entertainments consisting in songs attended with music and dancing arranged always in them, perfumed with the fragrance of flowers, marked with red dyes applied to the feet by the beautiful ladies, would give up in no time ( or without delay ) necessarily the strong desire ( cherished by you ) for the heavenly mansions ( or celestial buildings ).

---

# अथ द्वितीयः सर्गः

विश्रम्याऽथ क्षणमिव भवान् पर्यटेत्सन्दिदृक्षुः
शोभां तस्याः शतमखपुरीं ह्रेपयन्त्याः स्वभूत्या ।
स्निग्धश्यामं वपुरुपवहन्नागराणां फणाभृ-
द्भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः ॥ १ ॥

अन्वयः—अथ क्षणमिव विश्रम्य स्निग्धश्यामं वपुः उपवहन्, फणाभृद्भर्तुः कण्ठच्छविः इति नागराणां गणैः सादरं वीक्ष्यमाणः, स्वभूत्या शतमखपुरीं ह्रेपयन्त्याः तस्याः शोभां सन्दिदृक्षुः भवान् पर्यटेत् ।

विश्रम्येत्यादि । अथ अनन्तरं उज्जयिनीनगरीप्राप्त्यनन्तरमित्यर्थः । 'अथाऽथो च शुभे प्रश्ने साकल्यारम्भसंशये । अनन्तरेऽप्यन्यथात्वपरार्थवितथार्थयोः ।' इति विश्वलोचने । क्षणमिव अल्पकालमात्रमेव । 'इवेन सह नित्यसमासो विभक्त्य-लोपश्च' इतीवेन सह नित्यसमासः । विश्रम्य श्रमापहारं विधाय । श्रमपरिहारार्थं तत्र क्षणप्रमाणकालं यावदेव त्वया तत्र स्थातव्यं, नाऽधिककालं, विलम्बसम्भवादित्यभिप्राय-प्रधानोक्तिरियं कमठचरशम्बरासुरस्य । स्निग्धश्यामं सतेजस्कं श्यामवर्णं च । स्निग्धं च तत् श्यामं च स्निग्धश्यामं । 'वर्णो वर्णैः' इति सः । वपुः शरीरं । उपवहन् धरन् । फणाभृद्भर्तुः । फणाः स्फटाः बिभ्रतीति फणाभृतः । नागा इत्यर्थः । तेषां भर्ताऽधिपतिः तस्य । कण्ठच्छविः । कण्ठस्य कन्धरायाः छविः इव च्छविः कान्तिः यस्य सः । इति अस्माद्धेतोः । नागराणां नगरवासिजनानां । गणैः समूहैः । 'गणः समूहे प्रमथे सङ्ख्यासैन्यप्रभेदयोः' इति विश्वलोचने । सादरं आदरेण सहितं यथा स्यात् तथा । वीक्ष्यमाणः अवलोक्यमानः । स्वभूत्या स्वकीयेनैश्वर्येण । 'भूतिर्मात-ङ्गशृङ्गारे भस्मसम्पत्तिजन्मसु' इति विश्वलोचने । शतमखपुरीं इन्द्रनगरीममरावत्य-भिधानां । शतमखस्य शतमन्योरिन्द्रस्य पुरीं राजधानीभूतां नगरीं । ह्रेपयन्त्याः लज्जालुत्वं प्रापयन्त्याः । स्वसम्पत्प्रदर्शनजनितेन्द्रपुरीलज्जायाः विशालानगर्या इत्यर्थः । तस्याः विशालाभिधानायाः नगर्याः । शोभां सौन्दर्यं । सन्दिदृक्षुः सञ्जाततद्दर्शना-भिलाषः । सन्द्रष्टुमिच्छुः सन्दिदृक्षुः । 'तुमीच्छायां धोर्वोप्' इति सन् 'सन्भिक्षा-शंसादुः' इत्युश्च । भवान् त्वं । पर्यटेत् । नगरं परितोऽटाट्यां विधेहि । यदि ते तन्नगरीदिदृक्षाऽस्ति, एकस्थानस्थितिको मा भूः, तस्मात्तन्नगरवैभवदर्शनासम्भवादिति भावः ।

You, having taken rest just for a moment, possessing body having resplendent and darkish complexion, looked at with respect by the crowds of citizens owing to (your) possessing the lustre like that of the neck of the lord of cobras (hooded-snakes), should roam about with a desire to enjoy the beauty of it (i. e. Vishālā) putting the city of Indra to shame by its glory.

पूर्वं तावद्धवलितनभोभागमभ्रंलिहाग्रं
कैलासाद्रिश्रियमिव हसन्मोहशत्रोर्निहन्तुः ।
कर्मारीणां विजितमदनस्याऽर्हतः सञ्चिचीषुः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य ॥ २ ॥

अन्वयः— पुण्यं सञ्चिचीषुः ( त्वं ) पूर्वं तावत् कर्मारीणां मोहशत्रोः निहन्तुः विजितमदनस्य चण्डेश्वरस्य त्रिभुवनगुरोः अर्हतः धवलितनभोभागं अभ्रंलिहाग्रं कैलासाद्रिश्रियं हसत् इव धाम यायाः ।

पूर्वमित्यादि । पुण्यं सुखजनकं शुभं कर्म । 'पुण्यं तु सुकृते धर्मे त्रिषु मध्यमनोज्ञयोः' इति विश्वलोचने । यस्मिन् कृते सति भविष्यति सुखमुपजायते तत् कर्म पुण्यमित्यभिधीयते । सञ्चिचीषुः सञ्चेतुमिच्छुः । पुण्यकर्मसञ्चयार्थं जाताभिलाष इत्यर्थः । 'सञ्चिचीर्षुः' इति पाठस्य प्रामादिकत्वात्तं परिहृत्य 'सञ्चिचीषुः' इति पाठोऽत्रास्माभिरुररीकृतः सन्त्यात्पूर्वस्याऽचो दीत्वदर्शनाद्धोः 'इन्यचां सनि' इत्यजन्तत्वाद्धलन्तस्य दीत्वासम्भवाच्चरतेश्च हलन्तत्वात् । 'तुमीच्छायां धोर्वोप्' इति सनि तुम उपि च 'सन्भिक्षाशंसाद्धुः' इत्युः । त्वं पूर्वं प्रथमं । आदावित्यर्थः । तावत् । अत्र तावच्छब्दोऽवधारणार्थः । तेनादावेवेत्यर्थः । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । कर्मारीणां कर्मशत्रूणां । कर्माणि ज्ञानावरणादीन्येवारयः शत्रवः कर्मारयः । तेषां । तेषामन्यतमस्येत्यर्थः । 'यतश्च निर्धारणं' इति षष्ठी । मोहशत्रोः मोहनीयाख्यस्य शुद्धात्मस्वभावपिधायकस्यात एव परिपन्थिनः कर्मणः । मोह एव शत्रुः मोहशत्रुः । तस्य । अत्र मोहशब्द उपलक्षणार्थः । तेन घातिचतुष्कस्यात्र ग्रहणं कर्तव्यम् । ततश्च परिपन्थिभूतघातिचतुष्कस्येत्यर्थः । घातिचतुष्कप्रतिघातमन्तरेणार्हत्पदप्राप्त्यसम्भवादत्र चाऽर्हत्पदप्रयोगदर्शनान्मोहशब्दस्योपलक्षणार्थत्वं सङ्गृहीतमन्यथा छद्मस्थवीतरागग्रहणापत्तेः । निहन्तुः घातकस्य । विजितमदनस्य पराजितकामस्य । घातिसङ्घातान्यतमदर्शनचारित्रमोहप्रकारमोहनीयस्य निर्मूलकाषं कषितत्वा-

द्वेदोदयासम्भवाद्विजितमदनत्वमस्य भगवतोऽर्हतोऽवसेयम् । चण्डेश्वरस्य उग्रतपसां प्राग्रहरस्य क्रोधादिद्रव्यभावकर्महन्तुर्वा । चण्डानां क्रोधादिकषायाणामीष्टे इति चण्डेश्वरः । यद्वा चण्डानामुग्रतपसामीश्वरश्चण्डेश्वरः । चण्डमुग्रतपोऽस्याऽस्तीति चण्डः । 'ओऽभ्रादिभ्यः' इत्यः । चण्डानामीश्वरः श्रेष्ठश्चण्डेश्वरः । यद्वा चण्ड शीघ्रगामिन्निवेत्यर्थः । अत्र चेश्वरपदेन भगवदर्थो ग्राह्यः । चण्डीश्वरस्येति पाठे तु चण्डमुग्रतपोऽस्याऽस्तीति चण्डी । अनेकान्त्वाददन्तत्वाच्च व्रीह्यादिवदिन्त्यः । चण्डिनामुग्रतपसां मुनीनामीश्वरोऽग्रणीश्चण्डीश्वरः । तस्य । यद्वा क्रोधादिद्रव्यभावकर्महननाच्चण्डीश्वरो रुद्रः इव चण्डीश्वरः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । त्रिभुवनगुरोः भुवनत्रयवर्तिजीवानामुपदेशदानेन साक्षात् परम्परया च संसारनिबन्धनाज्ञानान्धकारनाशकत्वाद्गुरुरूपस्य भगवतः । 'गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निवारकः' इत्युक्तेर्गुरोरज्ञानान्धकारनिवारकत्वमवसेयम् । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । यद्वा त्रैलोक्याधिपतेः । अर्हतः भगवतो जिनेन्द्रस्य । अर्हतीत्यर्हन् । अनन्तज्ञानदर्शनवीर्यादिचतुष्टयमधिगन्तुमर्हतीत्यर्हन् भगवाञ्जिनेन्द्रः । शतृत्यः । तस्यार्हतः । धवलितनभोभागं धवलीकृतव्योमप्रदेशं । धवलितं धवलीकृतम् । 'मृदो ष्वर्थे णिज् बहुलं' इति णिचि क्तः । नभसो भागो नभोभागः । धवलितो नभोभागो येन तद् धवलितनभोभागं । अभ्रंलिहाग्रं अभ्रङ्कषशिखराग्रम् । अभ्रमाकाशप्रदेशं लेढीत्यभ्रंलिहं । 'वहाभ्रे लिहः' इति खश् । अभ्रंलिहं अग्रमन्तो यस्य तत् । 'अग्रं त्रिषु प्रधाने स्यादग्रं मूर्धाधिकादिषु । पुरस्तात्पलमाने च व्रातेऽप्यालम्बनान्तयोः ॥' इति विश्वलोचने । 'पुरोऽधिकमुपर्यग्राणि' इत्यमरः । कैलासाद्रिश्रियं अष्टापदाचलशोभाम् । के जले लसनमस्य कैलासः । स एवाऽद्रिः कैलासाद्रिः । तस्य श्रीः । ताम् । हसदिव उपहासं कुर्वाणमिव । इवशब्दोऽत्रोत्प्रेक्षायाम् । धाम मन्दिरं । 'धाम रश्मौ गृहे देहे प्रभावस्थानजन्मसु' इति विश्वलोचने । यायाः गच्छेः ॥

First of all, ( you ), desirous of coming into possession of religious merit, should have recourse to the temple ( visit the temple ), laughing as it were at the beauty of the Kailasa mountain, touching with its uppermost part the sky, whitening a region of the sky, of the Arhat, the master of all the three worlds, the conqueror of passions ( or the lord of sages practising austere penance ), bringing sexual passion into subjection, ( and ) destroying infatuation which is one of the enemies in the form of ( eightfold ) Karmans.

तं सेवेथाः कृतपरिगतिर्व्याकिरन्पुष्पवर्षं
स्तोत्रीकुर्वन् स्तनितमभितो दुन्दुभिस्वानमन्द्रम् ।
वातोद्धूतैरनिभृततरैरुत्तरङ्गैः पयोभि—
र्धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्याः ॥ २ ॥

अन्वय :—( त्वं ) कृतपरिगतिः, पुष्पवर्षं व्याकिरन्, दुन्दुभिस्वानमन्द्रं स्तनितं स्तोत्रीकुर्वन्, गन्धवत्याः वातोद्धूतैः अनिभृततरैः उत्तरङ्गैः कुवलयरजोगन्धिभिः पयोभिः तं धूतोद्यानं सेवेथाः ।

तमित्यादि । त्वं **कृतपरिगतिः** कृतप्रदक्षिणः । परितः अभितः गतिः गमनं परिगतिः । कृता विहिता परिगतिः प्रदक्षिणं गमनं येन सः । **पुष्पवर्षं** पुष्पमिव पुष्पं । पुष्पाणां वर्षः पुष्पवर्षः । तं । **व्याकिरन्** विकिरन् । यद्वा धूतोद्यानं पुष्पवर्षं व्याकिरन् । उद्यानं विधूय पुष्पवृष्टिं विकिरन्नित्यर्थः । **दुन्दुभिस्वानमन्द्रं** भेरीध्वनिवद्गम्भीरं । दुन्दुभेर्भेर्याः स्वानो ध्वनिः दुन्दुभिस्वानः । तद्वन्मन्द्रं गम्भीरं दुन्दुभिस्वानमन्द्रम् । 'दुन्दुभिर्दैत्यभेर्योः स्त्री त्वक्षत्रिन्दुत्रिके द्वये ।' इति विश्वलोचने । 'स्वाननिर्घोषनिर्ह्राद-नादनिस्वाननिस्वनाः' इति 'मन्द्रस्तु गम्भीरे' इति चाऽमरः । **स्तनितं** गर्जितं **स्तोत्रीकुर्वन्** स्तोत्रतां प्रापयन् । प्रागस्तोत्रमिदानीं स्तोत्रं करोतीति स्तोत्रीकुर्वन् । 'कृभ्वस्तियोगेऽभूततद्भावे सम्पद्यकर्तरि च्विः' इति च्विः । स्वगर्जिध्वनिना भगवतः स्तवनं कुर्वन्नित्यर्थः । **गन्धवत्याः** गन्धवत्यभिधायाः नद्याः **वातोद्धूतैः** समीरणसमीरितैः । वातेन वायुनोद्धूतैरूर्ध्वं प्रापितैः । **अनिभृततरैः** चञ्चलतरैः । निभृतोऽचपलः । अनिभृतचपलः । अनिभृततराः चञ्चलतराः । तैः । **उत्तरङ्गैः** उत्थितकल्लोलैः । उत्थिताः तरङ्गाः कल्लोला येषु तैः । **कुवलयरजोगन्धिभिः** कुवलयानां कमलानां रजांसि परागाः कुवलयरजांसि । कुवलयरजसामिव गन्धोऽस्य कुवलयरजोगन्धि । तैः । 'वोपमानात्' इति गन्धस्येः । **पयोभिः** सलिलैः । **तं** अर्हन्तं । **धूतोद्यानं** धूतमुद्यानं यथा स्यात्तथा । उद्यानं विधूयेत्यर्थः । उद्यानविधूननेनात्तगन्धो भूत्वेत्यभिप्रायः । **सेवेथाः** भजेथाः । यद्वा धूतोद्यानं कृतपरिगतिः । प्रदक्षिणावसरे तन्मन्दिरपरिसरस्थोद्यानं प्राग्विधूय प्रदक्षिणां कुर्वित्यर्थः ।

You, moving round in a way causing the garden to shake, scattering showers of water like those of flowers, turning the thundering sound rumbling like that of a kettle-drum into a hymn of praise, should worship Him with the waters of the Gandhavati, fragrant on

account of the pollens of blue-lotuses, possessing lofty waves, moving very violently on account of their being disturbed by the wind.

**सत्यन्यस्मिन् सुरभिशिशिरस्वच्छतोयह्रदादौ**
**नानास्वादौ पयसि पविते पीतिनस्त्वद्विनोदः ।**
**व्याधूतैस्तैः कथमिव भवेद्वारिभिर्गन्धवत्याः**
**तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ४ ॥**

अन्वयः— अन्यस्मिन् सुरभिशिशिरस्वच्छतोयह्रदादौ नानास्वादौ पविते सति पयसि पीतिनः त्वत् मरुद्भिः व्याधूतैः तोयक्रीडानिरतयुवतिस्नानतिक्तैः तैः गन्धवत्याः वारिभिः विनोदः कथमिव भवेत् ? ।

**सतीत्यादि** । **अन्यस्मिन्** गन्धवत्यभिख्यायाः सरितो भिन्ने **सुरभिशिशिरस्वच्छतोयह्रदादौ** सुगन्धिशीतलनिर्मलसलिलपल्वलतडागादौ । सुरभि सुगन्धि च तत् शिशिरं शीतलं च सुरभिशिशिरं । सुरभिशिशिरं च तत् स्वच्छं निर्मलं सुरभिशिशिरस्वच्छं । सुरभिशिशिरस्वच्छं तोयं येषां ते । सुरभिशिशिरस्वच्छतोयश्चासौ ह्रदश्च सुरभिशिशिरस्वच्छतोयह्रदः । सः आदिः यस्य सः । तस्मिन् । खञ्जकुब्जादिवत्सः । **नानास्वादौ** नितरां स्वादुनि । आ अत्यर्थं स्वादु रुचिरं आस्वादु । न आस्वादु अनास्वादु । 'नञोऽन्' इत्यन् । 'अचि' इति सनकारस्यानः श्रवणम् । न अनास्वादु नानास्वादु । 'पुनर्नञ्से नञः प्रकृतिभावः' इति महावृत्तिकारभगवदभयनन्दिवचनादनास्वादुशब्दस्याजादित्वेऽपि 'अचि' इति सनकारस्यानः श्रवणं न सम्भवति । यद्वा ना स्वादु नास्वादु । ना नास्वादु नानास्वादु । स्वाद्वेवेत्यर्थः । **पविते** पूते **सति** समीचीने **पयसि** जले **पीतिनः** पानं कुर्वतः । स्वादिष्ठं पूतं समीचीनं च जलं पिबत इत्यर्थः । 'इष्टादेः' इतीन् । 'क्तेन्कर्मणि' इति कर्मणि ईप् । **त्वत्** तव । 'त्वमौ त्वयौ चैके' इति युष्मदस्ताया एकवचनान्तं रूपं । **मरुद्भिः** समीरणैः **व्याधूतैः** प्रकम्पितैः । जनितप्रकम्पैरित्यर्थः । **तोयक्रीडानिरतयुवतिस्नानतिक्तैः** जलक्रीडासक्तयुवतिप्रयुक्तस्नानीयद्रव्यजनितसौरभैः । तोयक्रीडायां जलक्रीडायां निरतानां व्यापृतानां युवतीनां तरुणीनां स्नानेन स्नानीयेन चन्दनादिद्रव्येण तिक्तैः सुगन्धिभिः । 'स्नानीयेऽभिषवे स्नानं' इति यादवः । 'तिक्तो रससुगन्धयोः' इति विश्वलोचने । **तैः** प्रसिद्धैः **गन्धवत्याः** गन्धवतीनामनद्याः **वारिभिः** जलैः **विनोदः** सुखं सन्तोषो वा **कथमिव** केन प्रकारेण **भवेत्** जायेत ? न कथमपि जायेतेति भावः । गन्धवतीजलपिपासुना त्वया तत्र स्थित्वा विलम्बो न कर्तव्य इत्यभिप्रायवतेदमुक्तं शम्बरासुरेण ।

How, possibly, would you, when you would have drunk very sweet and pure water in other lakes etc. possessing fragrant, cool and pure water, be gratified by those waters of the Gandhavatī which are pungent (or fragrant) owing to the unguents, perfumed powders etc. of the young ladies engaged in water-sports?

द्रष्टुं वाञ्छा यदि च भवति प्रेतगोष्ठीं विचित्रां
तिष्ठातिष्ठन्नुपरिनिपतद्गृध्रबद्धान्धकारे ।
दोषामन्येऽप्यहनि नितरां प्रेतगोष्ठीति रात्रे-
रप्यन्यस्मिञ्जलधर ! महाकालमासाद्य काले ॥ ५ ॥

अन्वयः— (हे) जलधर ! यदि च विचित्रां प्रेतगोष्ठीं द्रष्टुं वाञ्छा भवति उपरिनिपतद्गृध्रबद्धान्धकारे दोषामन्ये अहनि अपि नितरां प्रेतगोष्ठी इति रात्रेः अन्यस्मिन् अपि काले महाकालं आसाद्य अतिष्ठन् तिष्ठ ।

द्रष्टुमित्यादि । हे जलधर वारिवाह ! यदि च विचित्रां आश्चर्यावहां । अत्यद्भुतामित्यर्थः । 'चित्रं तु कर्बुराद्भुतयोस्त्रिषु' इति विश्वलोचने । प्रेतगोष्ठीं पिशाचसभम् । 'प्रेतो भूतान्तरे मृते' इति 'गोष्ठी सभायां संलापे' इति च विश्वलोचने । पिशाचसम्भाषणमिति वाऽर्थः । द्रष्टुं अवलोकयितुं वाञ्छा अभिलाषः भवति अस्ति तर्हि उपरिनिपतद्गृध्रबद्धान्धकारे महाकालवनोपरितनव्योमप्रदेशे उड्डयमानैः गृध्रैः प्रेतपलाशनपक्षिविशेषैः विरचितान्धतमसे । उपरि महाकालाख्यकाननोपरितनाकाशप्रदेशे निपतन्तः उड्डयमानाः ये गृध्राः तैः बद्धः विरचितः अन्धकारः तमः यस्मिन् । तस्मिन् । दोषामन्ये रात्रिसंकाशे । दोषां रात्रिमात्मानं मन्यते इति दोषामन्यं । तस्मिन् । 'खश् स्वस्य' इति खश् । शित्वाच्छ्यः । खितः परत्वात् 'मुमचः' इति मुमागमप्राप्तेः दोषाशब्दस्य झित्वात् प्रत्याख्यानं 'खित्यझेः कृति—' इति तस्य झित्वादेव प्रत्वप्रतिषेधश्च । अहनि दिने अपि नितरां अतिशयेन प्रेतगोष्ठी पिशाचसंलापः । अस्तीति शेषः । इति तस्मात् कारणात् । 'इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः' इति विश्वलोचने । रात्रेः दोषायाः अन्यस्मिन् अपि काले दिनेऽपि महाकालं तदभिधानं वनं आसाद्य प्राप्य अतिष्ठन् कालयापनामविधाय तिष्ठ आस्स्व । दिवाऽप्यन्धतमसावगुण्ठितत्वाद्वनस्य महाकालेत्यभिख्या । अन्धतमसावगुण्ठितत्वात्पिशाचसभस्य दिवाऽपि सम्भवाद्रात्रिसमयपर्यन्तं विलम्ब्यालमिति शम्बरासुराभिप्रायः ।

Oh cloud ! if you are desirous of seeing ( or hearing ) the very wonderful conference ( or talk ) of those that are dead, then approching the Mahakala forest at any time other than night-time, you should wait there only for a while because the meetings of those that are dead are always held even in day-time which, being dark owing to the flights of vultures above, is as good as night.

तस्माज्जीर्णद्रुमशतबृहत्कोटरान्तःप्रबद्ध-
ध्वानोलूकप्रतिभयरवे प्रेतशोफातिरौद्रे ।
तस्योपान्ते परिणतशिवारब्धसांराविणोग्रे
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ॥ ६ ॥

अन्वयः — तस्मात् यावत् भानुः ते नयनविषयं अत्येति ( तावत् ) तस्य जीर्णद्रुमशतबृहत्कोटरान्तःप्रबद्धध्वानोलूकप्रतिभयरवे प्रेतशोफातिरौद्रे परिणतशिवारब्धसांराविणोग्रे उपान्ते स्थातव्यम् ।

**तस्मा**दित्यादि । **तस्मात्** यस्मात्कारणाद्दिवाऽपि प्रेतगोष्ठीदर्शनश्रवणे सम्भवतः तस्मात्कारणात् । **यावत्** यावता कालेन । अत्र मानार्थे यावच्छब्दः । 'यावन्मानेऽवधारणे । सीम्नि कात्स्न्र्ये परिच्छेदे' इति विश्वलोचने । **भानुः** सहस्ररश्मिः **ते** तव **नयनविषयं** नेत्रगोचरं । नयनयोः नेत्रयोः विषयः गोचरः नयनविषयः । तम् । 'विषयो गोचरे देशे इन्द्रियार्थेऽपि नीवृति' इति विश्वलोचने । **अत्येति** अतिक्रामति । तावता कालेन **तस्य** महाकालवनस्य । **जीर्णद्रुमशतबृहत्कोटरान्तःप्रबद्धध्वानोलूकप्रतिभयरवे** जीर्णवृक्षशतबृहद्बिलान्तर्विरचितध्वनिपेचकभयङ्करध्वनौ । जीर्णाश्च ते द्रुमाश्च जीर्णद्रुमाः । तेषां शतं जीर्णद्रुमशतं । अत्र सङ्ख्यावाची शतशब्दः वैपुल्यार्थे प्रयुक्तः । बृहन्तो विशालाश्च ते कोटराः निष्कुहाश्च बृहत्कोटराः । जीर्णद्रुमशतस्य बृहत्कोटराः जीर्णद्रुमशतबृहत्कोटराः । तेषामन्तर्मध्ये प्रबद्धः निरुद्धः ध्वानः ध्वनिः येषां ते । ते च ते उलूकाः पेचकाः । तेषां प्रतिभयाः भयजनकाः रवाः ध्वनयः यस्मिन् । तस्मिन् । उलूकानामपि भयजनकाः ध्वनयस्तत्र सन्तीति भावः । 'निष्कुहः कोटरं वा ना' इत्यमरः । 'उलूकः पेचके शक्रे कुरुयोधेऽपि सम्मतः' इति 'क्लीबं प्रतिभयं भीतौ वाच्यवत्तु भयानके' इति च विश्वलोचने । 'भयङ्करं प्रतिभयं' इत्यमरः । **प्रेतशोफातिरौद्रे** शवश्वयथुनाऽतिभयङ्करे । प्रेतानां शवानां शोफेनातिरौद्रे अतिभयङ्करे । 'शोफस्तु श्वयथुः शोथः' इत्यमरः । **परिणतशिवा-**

रववसांराविणोग्रे परिणतैः प्रवृद्धैः महत्त्वं प्राप्तैः शिवाभिः क्रोष्ट्रीभिः आरब्धैः कृतैः सांराविणैः प्रसरणक्रियया दिगन्तव्यापिभिः ध्वनिभिः उग्रे भयानके । 'रौद्रं तूग्रममी त्रिषु' इत्यमरः । 'शिवा झाटामलापथ्याक्रोष्ट्रीसक्तुफलासु च' इति विश्वलोचने । 'ञिन् व्याप्तौ' इति सम्पूर्वाद्रौतेर्ञिन् नञ्भावे व्याप्तौ । क्रियागुणाभ्यां कात्स्न्र्येन व्याप्ताविन्यर्थः । 'आञिनोऽण्' इति स्वार्थिकोऽण् । 'हृल्यक्त्रादेः' इति ञिति ह्रस्वस्य परत्वादादेरच ऐप् । उपान्ते समीपभूमौ स्थातव्यं । त्वयेति शेषः ।

You, therefore, should, until the sun passess beyond the range of your eyes, make a halt in the immediate proximity, abounding in noises terrorising the owls with their hootings impeded inside the interior of the extensive hollows of hundreds of old trees, extremely formidable owing to the intumescence of the dead bodies, terrible owing to the full grown and pervading howlings of female jackals.

विद्यासिद्धिं प्रति नियमिनो धौतवस्त्रस्य मन्त्रै—
हुंफुङ्कारैः पितृवनमभि भ्राम्यतः स्वैर्विरिब्धैः ।
पूजामाप्तास्यनघमधुरैः साधकौघस्य तस्मिन्
कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीयाम् ॥ ७ ॥

अन्वयः— तस्मिन् विद्यासिद्धिं प्रति नियमिनः, धौतवस्त्रस्य, हुंफुङ्कारैः मन्त्रैः पितृवनं अभि भ्राम्यतः, शूलिनः साधकौघस्य स्वैः अनघमधुरैः विरिब्धैः सन्ध्याबलिपटहतां कुर्वन् श्लाघनीयां पूजां आप्तासि ।

विद्येत्यादि । तस्मिन् महाकालवने विद्यासिद्धिं प्रति मन्त्रविद्यानिष्पत्तिमुद्दिश्य । मन्त्रविद्यासिद्ध्यर्थमित्यर्थः । नियमिनः व्रतिनः । नियमो व्रतमस्याऽस्तीति नियमी । तस्य नियमिनः । 'अत इनिठनौ' इतीन् । धौतवस्त्रस्य प्रक्षालितवसनस्य । धौतानि प्रक्षालितानि वस्त्राणि वसनानि यस्य सः । तस्य । हुंफुङ्कारैः हुंफुङ्कारबीजाक्षरस्वरूपैः मन्त्रैः देवादिसिद्धिनिबन्धनवाक्यविशेषैः । पितृवनं अभि स्मशाने । 'स्मशानं स्यात्पितृवनं' इत्यमरः । भ्राम्यतः भ्रमणं कुर्वतः शूलिनः शूलवतः । शूलमस्याऽस्तीति शूली । तस्य । 'अत इनिठनौ' इतीन् । 'शूलं मृत्यौ ध्वजे ना तु योगे न स्त्री रुगस्त्रयोः' इति विश्वलोचने । साधकौघस्य मन्त्राराधकनिकायस्य । 'ओघः पाथः प्रवाहे च समूहे च पुमानयम्' इति विश्वलोचने । स्वैः स्वकीयैः अनघमधुरैः अनवद्यप्रियैः । अनघानि निरवद्यानि च तानि मधुराणि प्रियाणि च अनघमधुराणि । तैः ।

'मधुरो रसवत्स्वादुप्रियेषु त्रिषु वाच्यवत्' इति विश्वलोचने। विरिब्धैः ध्वनिभिः। 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टघुष्टविरिब्धफाण्टबाढपरिवृढं मन्थमनस्तमःसक्ताविस्पष्टाविशब्द-स्वरानायासभृशप्रभौ' इति क्तान्तस्य विरिब्धशब्दस्य ध्वन्यर्थस्य निपातः। विपूर्वस्य रेभृङोऽनिट्त्वमित्वं च। विशब्दैरिति पाठे तु स्वाभिप्रायनिवेदनैः शब्दैरित्यर्थो ग्राह्यः। तदा च तस्य मन्त्रैरिति पदेनान्वयः कार्यः। प्रोक्तश्च विशब्दपदार्थः 'शब्देनाभिप्रायनिवेदनं विशब्दनं' इति महावृत्तिकारोक्तिप्रामाण्यात्सङ्गृहीतः। विशब्दैरिति मुद्रितपाठमपहायाऽस्माभिर्योगिराजविरचितटीकायां शब्दसिषाधयिषयोद्धृतं सूत्रमवलोक्य विशब्दपदस्य क्तान्तत्वाभावं विज्ञाय प्रयुक्तः पाठः क्तान्त इति योगिराजोक्तिं मनसि विधाय विरिब्धपदस्य क्तान्तत्वं विलोक्य 'क्षुब्ध' इत्यादिसूत्रस्य विशब्दपदसिद्धिनिबन्धनत्वमनवलोक्य, तत्र सूत्रे ध्वन्यर्थकक्तान्तविरिब्धशब्दं निपातितं दृष्ट्वा विरिब्धैरिति पाठः स्वीकृतः, तत्पदाभावे तत्सूत्रोद्धृतेर्वैफल्यप्रसङ्गात्। सन्ध्यावलिपटहताम् सान्ध्यपूजावसरे पटहस्यार्थक्रियां कुर्वन् सम्पादयन्। पटहशब्दस्य रूढिशब्दत्वात् 'भावे त्वतल्' इति तल्त्यविधाने जात्यभिधानमेव प्रयोजकम्। गर्जिध्वनिना पटहकार्यं कुर्वन्नित्यर्थः। श्लाघनीयां प्रशंसार्हां पूजां सम्मानं आप्तासि लब्धासि। लुटो मध्यमपुरुषैकवचनम्। 'वलिश्चामरदण्डेऽपि करपूजोपहारयोः' इति विश्वलोचने।

There, you, acting as a drum beaten at the time of worship pergormed ( by magicians ) in the evening by means of your flawless pleasing sounds ( of thunder ) towards the assemblage of magicians, wearing washed clothes, armed with spears, moving on the cremation qround ( i e. necropolis ) uttering incantations consisting in हुं and फुं, rigidly observing the rites prescribed for the sake of attaining magical skill, would attain praiseworthy honours.

तत्राऽस्त्यन्तर्वणमपभियामासितं सन्मुनीनां
जैनं वेश्म स्तुतिकलकलादात्ततन्नामरूढि।
तं सेवित्वा स्तनितपटहैरुच्चरद्भिस्त्वमुच्चै-
रामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम्॥ ८॥

अन्वयः— तत्र अन्तर्वणं अपभियां सन्मुनीनां आसितं, स्तुतिकलकलात् आत्ततन्नामरूढि जैनं वेश्म अस्ति। तं उच्चरद्भिः स्तनितपटहैः सेवित्वा गर्जितानां अविकलं उच्चैः फलं त्वं लप्स्यसे।

तत्रेत्यादि। तत्र महाकालवने अन्तर्वणं वनमध्यभागे। वनस्यान्तः अन्तर्वणं। 'पारेमध्येऽन्तस्तया वा' इति ह्रसः। 'प्राग्रेऽन्तर्निःशरेक्षुप्लक्षपीयूक्षाकार्द्याम्रखदिरात्' इति वननकारस्य णः। अपभियां वीतभीतीनां। अपगता विनष्टा भीर्भयं येषां तेऽपभियः। तेषां। प्रादिसमासः। 'भीतिर्भीः साध्वसं भयं' इत्यमरः। सन्मुनीनां आगमानुसारिचारित्रत्वात् सतां मुनीनां आसितं आसनं। निवासस्थानमित्यर्थः। अत्रेमे आसते स्मेत्यासितं। 'आधारे चाद्यर्थाच्च' इत्याधारे क्तः।'क्तस्याधारसतोः' इत्याधारार्थकक्तत्यान्तासितशब्दप्रयोगनिबन्धना ता सन्मुनीनामिति पदस्य। स्तुतिकलकलात् मुनीश्वरसङ्गीतस्तुतिजनितकलकलध्वनेः। 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इति 'कोलाहलः कलकलः' इति चामरः। आत्ततन्नामरूढि गृहीतकलकलजिनालयाभिधानप्रसिद्धि। आत्ता गृहीता तस्य कलकलस्य नाम्नोऽभिधानस्य रूढिः प्रसिद्धिर्येन तत्। जैनं जिनस्वामिकं। जिनस्येदं जैनम्। 'तस्येदं' इत्यण्। वेश्म मन्दिरं। 'गृहं देवोद्वसितं वेश्म सद्म निकेतनम्' इत्यमरः। अस्ति विद्यते। तं भगवन्तं जिनं। उच्चराद्भिः निनदद्भिः। स्तनितपटहैः गर्जिध्वनिरूपैः पटहैः। 'पटहस्तु समारम्भे न स्त्री पटहमानके' इति विश्वलोचने। 'स्तनितं गर्जितं मेघनिर्घोषे रसितादि च' इत्यमरः। सेवित्वा आराध्य गर्जितानां निर्घोषाणां अविकलं सम्पूर्णं उच्चैः उत्कृष्टं फलं लाभं 'फलं तु सस्ये हेत्वर्थे फलके व्युष्टिलाभयोः। जातीफलेऽपि कङ्कोले मार्गणाग्रेऽपि न द्वयोः' इति विश्वलोचने। त्वं भवान् लप्स्यसे प्राप्स्यते। लभेः कर्तरि लृट्।

In the interior part of that forest, there is a temple dedicated to Jina, known by that name (i. e. Kalakala Jinalaya) traditionally owing to the confused noise of prayers, the seat (or abode) of good sages. Worshipping Him with drums in the form of thunders sounded, you would obtain remuneration in full of your loud rumbling thunders.

सायाह्ने चेत्तदुपगतवान् धाम तत्कालपूजा–
सङ्गीतान्ते श्रमजलकणैराचिताङ्गीः सुकण्ठीः।
मन्दं यान्तीश्चतुरगणिकाः शीकरैः सन्नयेस्त्वं
पादन्यासक्वणितरसनास्तत्र लीलावधूतैः ॥ ९ ॥

अन्वयः— तत्र सायाह्ने तत् धाम उपगतवान् चेत् तत्कालपूजासङ्गीतान्ते श्रमजलकणैः आचिताङ्गीः सुकण्ठीः मन्दं यान्तीः पादन्यासक्वणितरसनाः चतुरगणिकाः लीलावधूतैः शीकरैः त्वं सन्नयेः।

सायाह्न इत्यादि। तत्र महाकालवने सायाह्ने सन्ध्यासमये। सायं च तत् अहश्च सायाह्नः। विशेषणसविधिः। 'एभ्योऽह्नोऽह्नः' इति क्षिसञ्ज्ञकसायंशब्दात्परस्याहञ्शब्दस्याह्नादेशः। अस्य चाह्नादेशस्य कृतमकारखसायशब्दपूर्वस्याऽपि ङौ परेऽपि 'स्यविसाया-द्वाऽह्नस्याह्न् ङौ' इत्यहन्नादेशस्य वैकल्पिकत्वादह्नादेशस्य स्थानेऽह्न विहितः। तत् कलकलजिनालयाख्यं धाम मन्दिरं। 'धाम रश्मौ गृहे देहे प्रभावस्थानजन्मसु' इति विश्वलोचने। उपगतवान् गतः चेत् यदि तर्हि तत्कालपूजासङ्गीतान्ते सान्ध्यपूजासङ्गीतावसाने। स चासौ कालश्च तत्कालः। सायाह्नः इत्यर्थः। सायाह्ने क्रियमाणा या पूजा तस्याः सङ्गीतस्यान्तेऽवसाने तत्कालपूजासङ्गीतान्ते श्रमजलकणैः श्रमजनितस्वेदजलबिन्दुभिः आचिताङ्गीः। आचितानि व्याप्तानि अङ्गानि गात्राणि यासां ताः। इव्बहुवचनम्। सुकण्ठीः। शोभनाः कण्ठाः यासां ताः। स्फोटङ्गकण्ठयोर्ङीविधानं कथमिति चेत् 'नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात्' इति सूत्रेण तद्विधानात्। मन्दं शनैः यान्तीः गच्छन्तीः। यान्तीति यान्त्यः। ताः। शतृत्यः। स्त्रियां 'ङ्युगिदृन्नञ्चोः' इति ङी। पादन्यासक्वणितरसनाः। पादन्यासैः चरणनिक्षेपैः क्वणिताः कृतध्वनयः रसनाः काञ्चीदामानि यासां ताः। क्वणतेर्धित्वात् 'धिगत्यर्थाच्च' इति कर्तरि क्तः। चरणविन्यासजनितध्वनिमेखला इत्यर्थः। 'स्त्रीकट्यां मेखला काञ्ची सतकी रसना तथा' इत्यमरः। चतुरगणिकाः पट्व्यः वेश्याः। 'दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च' इति 'वारस्त्री गणिका वेश्या' इति चाऽमरः। लीलावधूतैः। लीलायै क्रीडायै अवधूतैः व्याधूतैः। प्रक्षिप्तैरित्यर्थः। 'लीला हावान्तरे स्त्रीणां केलौ खेलाविलासयोः' इति विश्वलोचने। क्रीडार्थं प्रक्षिप्तैरिति भावः। 'साधनं कृता बहुलं' इत्यत्र बहुलग्रहणात्सम्प्रदानं कारकमपि कृता समस्तं भवति। शीकरैः पृषद्भिः। जलबिन्दुभिरित्यर्थः। त्वं सन्नयेः संयोगं कुरु।

If you would reach that temple there ( i. e. in that forest ) in the evening, you should bring the drops of water, discharged sportively, in contact with the clever courtezans, wearing girdles jingling on account of the movements of their feet, going slowly, having beautiful necks, having their bodies covered over with drops of perspiration given off through exertion at the end of songs sung in chorus at the worship performed at that time ( i. e. in the evening ).

तास्तत्राहर्मणिभयरणन्नूपुराः पण्ययोषाः
प्रोद्गायन्तीः सुललितपदन्यासमुद्भ्रूविलासाः।

पश्योत्पश्या नवजलकणद्वित्रसिक्ता विलोला
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ॥ १० ॥

अन्वयः— तत्र अहर्मणिमयरणन्नूपुराः सुललितपदन्यासं प्रोद्गायन्तीः, उद्भ्रूविलासाः, उत्पश्याः, नवजलकणिकाद्वित्रसिक्ताः, विलोलाः, रत्नच्छायाखचितवलिभिः चामरैः क्लान्तहस्ताः ताः पण्ययोषाः पश्य ।

ता इत्यादि । तत्र महाकालवनान्तर्भागस्थकलकलजिनालये **अहर्मणिमयरणन्नूपुराः** सूर्यकान्तमणिघटितक्वणन्मञ्जीराः । अहर्मणिः सूर्यः इवाहर्मणिः 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । अहर्मणेर्विकारा अहर्मणिमयाः । 'मयड्वाऽभक्ष्याच्छादने' इति विकारे मयट् । सूर्यकान्तमणिनिर्मिता इत्यर्थः। रणन्तः क्वणन्तः । शब्दायमाना इत्यर्थः। रणन्तश्च ते नूपुराश्च रणन्नूपुराः । नूपुराः मञ्जीराः । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः। अहर्मणिमयाः रणन्नूपुराः यासां ताः । **सुललितपदन्यासं** । सुतरां ललितो मनोहरः सुललितः । पदानां चरणानां न्यासः प्रक्षेपः पदन्यासः । सुललितः पदन्यासः यस्मिन् कर्मणि तत् । यद्वा सुललितानां ललितानां लालित्यगुणोपेतानां पदानां सुप्तिङन्तरूपाणां न्यासः प्रयोग यस्मिन् कर्मणि तत् । शोभनपादविक्षेपपूर्वकं विपुललालित्यगुणोपेतसुप्तिङन्तपदानि प्रयुज्य वा प्रोद्गायन्तीः प्रकर्षेणोच्चैः स्वरेण गानं कुर्वाणाः । **उद्भ्रूविलासाः** । भ्रुवोर्विलासः भ्रूविलासः । उद्गतः प्रकर्षं प्राप्तो भ्रूविलासो यासां ताः । **उत्पश्याः** । उदूर्ध्वं पश्यन्तीति उत्पश्याः । 'पाघ्राध्माधेट्दृशः शः' इति गौ वाचि दृशेः शः । 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदाः' इति पश्यादेशः । **नवजलकणिकाद्वित्रसिक्ताः** । नवं मेघवृष्टं भुवमप्राप्तत्वान्नव्यं च तज्जलं सलिलं च नवजलं । द्वित्राणि सिक्तानि सेचनानि द्वित्रसिक्तानि । द्वे वा त्रीणि वा द्वित्राणि । 'स्यिः सुब्वार्थे' इति विकल्पे स्यिसञ्ज्ञावाचि बसः । अत्र क्रियाप्रवृत्तिदर्शनाद्विकल्पार्थो ग्राह्यः, न संशयार्थः तत्र क्रियाप्रवृत्त्यसम्भवात्संशयस्यानिर्णयरूपप्रतिभासत्वात् । द्वे वा त्रीणि वा द्वित्राणीत्यत्र डः । डित्वादचोन्त्यादिलक्षणायाष्टेः खम् । नवजलकणिकाभिः द्वित्राणि सिक्तानि सेचनानि यासां ताः नवजलकणिकाद्वित्रसिक्ताः । सिक्तं सेचनं । 'नब्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च । **विलोलाः** चञ्चलाः अतिशयेन शोभमाना वा । विशिष्टा लोला श्रीः यासां ताः विलोलाः । 'लोला जिह्वाश्रियोः' इति विश्वलोचने। **रत्नच्छायाखचितवलिभिः** रत्नानां छाया रत्नच्छायं । 'छाया बहूनां' इति रत्नानां बाहुल्याच्छायान्तस्यास्य षस्य

नप् । तेन आखाचिता रूपिता व्याप्ता वा वलयश्चामरदण्डाः येषां ते । तैः । 'वलिश्चामरदण्डेऽपि करपूजोपहारयोः ' इति विश्वलोचने । 'वलिश्चामरदण्डे चर्मणि ' इति विश्वः । **चामरैः** प्रकीर्णकैः । वालव्यजनैरित्यर्थः । **क्लान्तहस्ताः** । क्लान्ताः सञ्जातदुःखाः श्रान्ता वा हस्ताः पाणयः यासां ताः । दैशिकनृत्यसूचनमेतत् 'दुकूलदण्डिकामालाखड्गचामरगोलकैः । हस्तसञ्चारिभिः कुर्युर्नृत्तं तद्दैशिकं स्मृतम् । ' इत्युक्तेः । देशान्तरे धृतप्रकीर्णका एव पण्याङ्गनाः नृत्तं कुर्वन्ति । ताः जिनालये नृत्तं कुर्वाणाः पण्याङ्गनाः **पश्य** विलोकय ।

There ( in that temple ), you should see those courtezans wearing jingling anklets made up ( or studed with ) of jewels ( lit. sun-crystals ), singing loudly in keeping with the graceful movements of their feet, possessing graceful movements of their eye-brows turned upwards, looking upwards, sprinkle over twice or thrice with drops of fresh sprays of water ( discharged by you ), possessing nimbleness ( or extraordinary beauty ), having their hands fatigued on account of ( waving ) the Camaras possessing handles covered over with the lustre of jewels.

**त्वां तत्राऽर्हद्भवनवलभेरूर्ध्वभागे निषण्णं**
**सन्ध्यारागच्छुरितवपुषं विद्युदुद्भासिदण्डम् ।**
**द्रक्ष्यन्ते ता विरचितमिव व्योम्नि लीलावितानं**
**वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दून् ॥ ११ ॥**

अन्वय :— तत्र ताः वेश्याः त्वत्तः नखपदसुखान् वर्षाग्रबिंदून् प्राप्य अर्हद्भवनवलभेः ऊर्ध्वभागे निषण्णं सन्ध्यारागच्छुरितवपुषं विद्युदुद्भासिदण्डं त्वां व्योम्नि विरचितं लिलावितानं इव द्रक्ष्यन्ति ।

**त्वामित्यादि** । तत्र कलकलाजिनालये ताः जिनालये नृत्तं कुर्वाणाः **वेश्याः** । रूपाजीवाः **त्वत्तः** त्वत्सकाशात् **नखपदसुखान्** सुरतसमये जनितानां नखव्रणाङ्कानां सुखकरान् । नखपदानि नखजनितव्रणचिह्नानि । तेषां सुखं शर्म येभ्यस्ते । तान् । व्यधिकरणो बसः । **वर्षाग्रबिन्दून्** । वर्षायाः वृष्टेः ये अग्रबिन्दवः प्रथमबिन्दवः तान् । प्राप्य समधिगम्य । **अर्हद्भवनवलभेः** अर्हन्मन्दिरच्छादनस्य । अर्हतो जिनस्य भवनं मन्दिरं अर्हद्भवनम् । तस्य वलभिश्छादनं । तस्याः । 'गोपानसी तु वलभी छादने वक्रदारुणि' इत्यमरः । **ऊर्ध्वभागे** उपरिभागे । **निषण्णं** उपविष्टम् । **सन्ध्यारागच्छुरितवपुषं** । सन्ध्यायाः रागः रक्तिमा सन्ध्यारागः । तेन च्छुरितंमिश्रितं वपुः यस्य सः ।

तम्। विद्युदुद्भासिदण्डं। उद्भासते इति उद्भासी। विद्युता उद्भासी दण्डः शरीरं यस्य सः। तम्। 'दण्डश्चण्डांशोः पारिपार्श्विके। दण्डः सैन्यव्यूहभेदे मानभेदे दमे यमे। मन्थानेऽश्वेऽभिमाने च कोणदण्डप्रकाण्डयोः। विग्रहे च ग्रहे यष्टौ लगुडेऽस्ति मतोऽस्त्रियाम्॥' इति विश्वलोचने। त्वां व्योम्नि आकाशे विरचितं निर्मितं लीलावितानं विलासदूष्यं इव द्रक्ष्यन्ति प्रेक्षिष्यन्ते।

Those courtezans, there, on obtaining from you the first drops of rain water, pleasing to the marks (wounds) made by the nails (at the time of sexual enjoyment), would look at you, sitting on the upper part of the roof of the temple dedicated to Jina, possessing body enlightened by the (red) lustre of evening, possessing (or having) body enlightened by lightning, as a beautiful canopy spread in the sky.

भूयश्च त्वत्स्तनितचकिताः किंस्विदित्यात्तशङ्काः
किञ्चित्तिर्यग्वलितवदनास्तत्र पण्याङ्गनास्ताः।
बद्धोत्कम्पस्तनतटलुठल्लोलहाराः सलीलान्
आमोक्ष्यन्ति त्वयि मधुकरश्रेणीदीर्घान्कटाक्षान् ॥१२॥

अन्वयः— भूयश्च तत्र त्वत्स्तनितचकिताः, 'किंस्वित्' इति आत्तशङ्काः, किञ्चित्तिर्यग्वलितवदनाः, बद्धोत्कम्पस्तनतटलुठल्लोलहाराः ताः पण्याङ्गनाः त्वयि सलीलान् मधुकरश्रेणिदीर्घान् कटाक्षान् आमोक्ष्यन्ति

भूयश्चेत्यादि। भूयश्च पुनश्च तत्र कलकलजिनालये त्वत्स्तनितचकिताः युष्मद्गर्जितेन भीत्याक्रान्तस्वान्ताः किंस्विदिति किमिदमिति आत्तशङ्काः गृहीतसन्देहाः। सन्देहदोलायितमनस्काः। इत्यर्थः। किञ्चित्तिर्यग्वलितवदनाः ईषद्वक्रीभूतमुखाः। किञ्चिदीषत्तीर्यग्वलितानि वक्रीभावं गतानि वदनानि मुखानि यासां ताः। बद्धोत्कम्पस्तनतटलुठल्लोलहाराः भीतिरचितवेपथुस्तनप्रदेशलुठच्चलमालाः। बद्धः भीत्या विरचितः उत्कम्पः वेपथुः ययोस्तौ बद्धोत्कम्पौ। तौ च तौ स्तनतटौ च। तयोर्लुठन्त उपावर्तमानाः लोलाश्चञ्चलाश्च हाराः मालाः यासां ताः। ताः जिनालये नृत्तं कुर्वाणाः पण्याङ्गनाः पण्यस्त्रियः। वेश्या इत्यर्थः। त्वयि भवति सलीलान् लीलया श्रिया सहितान् मधुकरश्रेणिदीर्घान् भ्रमरराजिरिव दीर्घान्। मधुकराणां भ्रमराणां श्रेणी राजिरिव दीर्घाः आयताः। तान्। कटाक्षान् दृष्टिक्षेपान् 'अपाङ्गो नेत्रयोरन्ते कटाक्षोपाङ्गदर्शने' इत्यमरः। आमोक्ष्यन्ति आवर्जिष्यन्ति। क्षेप्स्यन्तीत्यर्थः।

Moreover, the courtezans, there, frightened by your thunders, cherishing doubt as 'what is this ?', having their faces turned aslant a little, having dangling necklaces rolling on their tremulous breasts, would cast on you their beautiful side-glances which would be as much long as the rows of bees.

इत्थं भक्तिप्रकटनपटुस्तत्र चातोद्यगोष्ठीं
कृत्वा मन्द्रस्तनितमुरवध्वानमाविर्वितन्वन् ।
वन्दारूणां शृणु सुनिभृतः स्तोत्रपाठं मुनीनां
पश्चादुच्चैर्भुजतरुवनं मण्डलेनाऽभि लीनः ॥ १३ ॥

अन्वयः— पश्चात् च तत्र इत्थं भक्तिप्रकटनपटुः आतोद्यगोष्ठीं कृत्वा मन्द्रस्तनितमुरवध्वानं आविर्वितन्वन् उच्चैर्भुजतरुवनं अभि मण्डलेन लीनः, वन्दारूणां मुनीनां स्तोत्रपाठं सुनिभृतः ( सन् ) शृणु ।

इत्थमित्यादि । पश्चात् अनन्तरं च तत्र कलकलजिनालये इत्थं उक्तप्रकारेण **भक्तिप्रकटनपटुः** जिनगुणानुरागप्रकाशननदीष्णातः । भक्तेर्जिनगुणानुरागस्य प्रकटने प्रकटीकरणे । प्रकाशन इत्यर्थः । पटुः नदीष्णातः । कुशल इत्यर्थः । **आतोद्यगोष्ठीं** ततावनद्धघनसुषिरभेदातोद्यविषयं सम्भाषणं । 'ततं चैवाऽवनद्धं च घनं सुषिरमेव च । चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम्' इति भरतमुनिविरचिते नाट्यशास्त्रे । तच्च वादित्रापरनामकम् । 'ततं वीणादिकं वाद्यं आनद्धं मुरजादिकं । वंशादिकं तु सुषिरं कांस्यतालादिकं घनं । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ।' इत्यमरः । आतोद्यस्य वाद्यस्य गोष्ठी संलापः । ताम् । 'गोष्ठी सभायां संलापे' इति विश्वलोचने । आतोद्यविषयकं संलापमित्यर्थः । **कृत्वा** विधाय । **मन्द्रस्तनितमुरवध्वानं** गम्भीरगर्जितमुरजध्वनिं । मन्द्रं गम्भीरं च तत् स्तनितं मेघनिर्घोषश्च मन्द्रस्तनितं । मुरवस्य मुरजस्य ध्वानः ध्वनिः । मन्द्रस्तनितमेव मुरवध्वानः मन्द्रस्तनितमुरजध्वानः । तं । 'कलो मन्द्रस्तु गम्भीरे' इति 'स्तनितं गर्जितं मेघनिर्घोषे रसितादि च' इति चाऽमरः । **आविर्वितन्वन्** आविष्कुर्वन् । प्रकटीकुर्वन्नित्यर्थः । 'प्रकाशे प्रादुराविः स्यात्' इत्यमरः । **उच्चैर्भुजतरुवनं** उन्नतशाखायुक्तवृक्षकान्तारम् । उच्चैर्महान्तश्च ते भुजाः शाखा येषां ते उच्चैर्भुजाः । ते च ते तरवश्च । तेषां वनं कान्तारम् । भुजशब्दोऽत्र शाखावाची । **अभि** । अभिरत्र विभक्त्यर्थः । तेनोन्नतशाखायुक्तवृक्षवनोपरितनभागे इत्यर्थः । **मण्डलेन** मण्डलाकारेण । मण्डलाकारं भ्रमित्वेत्यर्थः । **लीनः** स्थितः । **वन्दारूणां** वन्दन-

शीलानां । 'शृङ्गन्दादारुः' इति शीलार्थे आरुस्त्यः । **मुनीनां** तपस्विनां । **स्तोत्रपाठं** स्तुतिपठनं **सुनिभृतः** सुतरां वाचंयमः सन् **शृणु** श्रुतिविषयं नयस्व ।

And afterwards, having entered upon a discourse with reference to the musical instruments, you, proficient in manifesting your devotion thus, revealing resonant sounds of drums in the form of your rumbling thunders, descended circuitously upon a grove of trees possessing very tall and big branches, should, becoming silent, listen to the hymns of praise recited by sages engaged in praying.

तस्मिन्काले जलधरपथे स्वं वितत्य प्रहर्षा-
द्विद्युद्दीपैर्जिनमुपहरन्भक्तिभारावनम्रः ।
द्रष्टासि त्वं दधदिव मुहुः स्वामिसेवानुरागं
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ॥ १४ ॥

अन्वयः— तस्मिन् काले जलधरपथे स्वं वितत्य भक्तिभारावनम्रः प्रहर्षात् विद्युद्दीपैः जिनं उपहरन्, प्रतिनवजपापुष्परक्तं सान्ध्यं तेजः दधानः स्वामिसेवानुरागं दधत् इव त्वं मुहुः द्रष्टासि ।

**तस्मिन्नित्यादि** । **तस्मिन्काले** स्तोत्रश्रवणसमये **जलधरपथे** व्योममार्गे । जलधराणां मेघानां पन्थाः मार्गः जलधरपथः । 'ऋक्पूरप्पथोऽत्' इत्यकारः सान्तः । **स्वं** आत्मानं **वितत्य** विस्तृत्य । आत्मनः शरीरस्य विस्तारं कृत्वेत्यर्थः । **भक्तिभारावनम्रः** भक्त्यतिशयेन विनतः । भक्तेर्जिनानुरागस्य भारः अतिशयः भक्तिभारः । तेनावनम्रः विनतः भक्तिभारावनम्रः । भारभरशब्दौ समानार्थौ । 'भरस्त्वतिशये भारे' इति विश्वलोचने । 'नम्रकम्पिस्म्यजस्कमहिंसदीपो रः' इति शीलादौ रः । **प्रहर्षात्** प्रकृष्टसन्तोषात् । प्रकृष्टः हर्षः सन्तोषः प्रहर्षः । तस्मात् । **विद्युद्दीपैः** । विद्युतः एव दीपाः विद्युद्दीपाः । तैः । **जिनं** जिनेश्वरं । **उपहरन्** पूजयन् । जिनेश्वरस्यापचितिं विदधानः इत्यर्थः । **प्रतिनवजपापुष्परक्तं** प्रत्यग्रौड्रपुष्पारुणं । प्रतिनवानि प्रत्यग्राणि जपापुष्पाणि ओड्रपुष्पाणि प्रतिनवजपापुष्पाणि । तानीव रक्तमरुणं । 'सामान्येनोपमानं' इति षसः । 'ओड्रपुष्पं जपा' इत्यमरः । **सान्ध्यं** सन्ध्याभवं । **तेजः** दीप्तिम् । **दधानः** वहन् । **स्वामिसेवानुरागं** । स्वामिनो भगवतो जिनेश्वरस्य सेवायां अनुरागः प्रीतिः स्वामिसेवानुरागः । तं । **दधत् इव** दधानः इव **त्वं** भवान् **द्रष्टासि** द्रक्ष्यसे ।

At that time ( i. e. when you would be listening to the prayars ), you, expanding your bodily form in the sky, worshipping Jina by waving lights in the form of lightnings very gladly, assuming the evening lustre red like that of a fresh Japā flower, would be looked at again and again as if cherishing fondness for the worship of the Lord.

**भक्तिं कुर्वञ्शतमख इवाऽऽविर्भवद्दिव्यरूप-**
**श्चित्रां वृत्तिं स्वरसरचितां शैखिनीं वा मनोज्ञां ।**
**कण्ठच्छायां स्ववपुषि वहन्मा स्म यन् साधुवादं**
**नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छाम् ॥ १५ ॥**

अन्वय :— शतमखः इव पशुपतेः भक्तिं कुर्वन्, आविर्भवद्दिव्यरूपः, स्वरसरचितां द्विव्यां वृत्तिं मनोज्ञां शैखिनीं कण्ठच्छायां वा स्ववपुषि वहन्, नृत्तारम्भे साधुवादं यन् आर्द्रनागाजिनेच्छां मा स्म हर ।

**भक्तिमित्यादि ।** **शतमखः इव** सौधर्मेन्द्रः इव **पशुपतेः** अहिंसाधर्मोपदेशेन प्राणिगणरक्षणपरस्य भगवतो जिनेन्द्रस्य । पातीति पतिः । पशूनां मृगादिप्राणिमात्रस्य पतिः पाता । तस्य । **भक्तिं** गुणानुरागं **कुर्वन्** विदधानः । जन्मादिकल्याणकाले यथा सौधर्मेन्द्रो भगवतो जिनेन्द्रस्य सहस्रनामोच्चारणेन भक्तिं विदधाति तथा भक्तिं कुर्वन्नित्यर्थः । **आविर्भवद्दिव्यरूपः** आविर्भवत् प्रकटीभवत् दिव्यं रूपं यस्य सः । **स्वरसरचितां** स्वेच्छाविहितां । स्वस्य आत्मनः रसेन अभिलाषया । इच्छयेत्यर्थः । रचितां कृतां । **दिव्यां** मनोहारिणीं । 'दिव्यं तु वल्गौ दिविभवेऽन्यवत्' इति विश्वलोचने । **वृत्तिं** अवस्थां । परिणतिमित्यर्थः । **मनोज्ञां** सौन्दर्यबन्धुरां **शैखिनीं** मायूरीं । शिखिनः मयूरस्येयं शैखिनी । ताम् । **कण्ठच्छायां** ग्रीवाकान्तिं । कण्ठस्य ग्रीवायाः छाया कान्तिः कण्ठद्युतिः । ताम् । **वा** च । **स्ववपुषि** स्वशरीरे **वहन्** धरन् । **नृत्तारम्भे** नृत्तोद्यमे । नृत्तक्रियाविषये नृत्तकाले वेत्यर्थः । 'आरम्भः उद्यमे दर्पे त्वरायां च वधेऽपि च' इति विश्वलोचने । **साधुवादं** प्रशंसां । 'साधु, साधु' इति वादः साधुवादः । तम् । **यन्** । प्राप्नुवन् । **आर्द्रनागाजिनेच्छां** आर्द्रनागकेसरकुसुमेच्छां जलपूर्णमेघानां प्रबलामिच्छां वा । आर्द्राः प्रत्यग्राणि नागकेसराः नागकेसरकुसुमानि । 'पुष्पमूलेषु बहुलं' इति पुष्पप्रत्ययस्योप् । तेषां आ समन्तात् जिना जित्वरी इच्छा आर्द्रनागाजिनेच्छा तां । यद्वा आर्द्राः जलपरिपूर्णाः नागाः मेघाः आर्द्रनागाः । तेषां आजिनां अतिशयेन जित्वरीं । तीव्रामित्यर्थः । इच्छां जिनपूजना-

भिलाषं। मा स्म हर विफलां मा कुरु। 'स्मे लङ् च' इति स्मे माङि लुङ्-लङोर्विधाने कृते सत्यपि 'स्मे लोट्' इति प्रैषेऽधीष्टे वा लोट्। प्रैषः बलान्नियोगः। अधीष्टमिच्छा। प्रत्यग्रनागकेसरकुसुमार्थी त्वदीयां इच्छां, प्रत्यग्रनागकेसरमूलानां त्वज्जलार्थीमिच्छां, जलपरिपूर्णानां त्वादृशामन्येषां मेघानां जिनेन्द्रपूजनेच्छां मा विफलां कुरु। जलवृष्टया नागकेसरकुसुमसम्बन्धिनीं स्वामिच्छां नागकेसरमूलानां त्वज्जलार्थीमिच्छां वा सफलां कुरु। तन्मन्दिरं विहायाकाशमार्गेणालकां यियासुर्जलवृष्टिं कृत्वा शीघ्रं याया इत्यर्थः। यद्वाऽऽस्मानं तन्मदिरादपसार्य त्वादृशोऽन्यान्मेघाञ्जिनपूजनावसरं प्रदायाग्रतोऽलकाध्वनि शीघ्रं व्रजेति भावः।

Worshipping the protector of animals (i. e. Jina) like Indra, possessing excellent beauty becoming manifest (of its own accord), having your body endowed with a new form modified according to your liking (i. e. taste) or with lustre like that of the neck of a peacock, winning high praise expressed with a cry of 'well done, well done' at the time of the performance of a dance, do not give up your very strong desire for the fresh flowers of Nāgakesara (Mesua Roxburghii) (for worship) (or do not frustrate the strong desire of the fresh or young Nāgakesara trees).

**नाट्यं तन्वन्सुरुचिरतनुर्नाटय व्योमरङ्गे**
**तारापुष्पप्रकररुचिरे सौम्यविद्युन्नटीं तां।**
**नायं रौद्रो मृदुरिति चिरं साधुवादैः प्रियान्ते**
**शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ १६ ॥**

अन्वयः— नाट्यं तन्वन् 'न अयं रौद्रः (अपि तु) मृदुः' इति प्रियान्ते साधुवादैः भवान्या शान्तोद्वेगस्तिमितनयनं चिरं दृष्टभक्तिः, सुरुचिरतनुः, तारापुष्पप्रकररुचिरे व्योमरङ्गे तां सौम्यविद्युन्नटीं नाटय।

नाट्यमित्यादि। नाट्यं गीतवादित्रानुगतं नृत्यं। 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने। तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम्' इत्यमरः। 'नाट्यं तौर्यत्रिके लास्ये' इति विश्वलोचने। तन्वन् विदधानः 'न अयं रौद्रः (अपि तु) मृदुः' अयं नृत्यं कुर्वाणो न रौद्रः भयङ्करः, अपि तु मृदुः मनोहरः। 'मृद्वतीक्ष्णे त्रिषु श्लक्ष्णे' इति विश्वलोचने। इति अमुना प्रकारेण। 'इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः' इति

विश्वलोचने । **प्रियान्ते** स्वपतिसमीपे । स्वप्रीतिभाजनसौधर्मेन्द्रसकाशे इत्यर्थः । **साधुवादैः** 'साधु साधु' इति प्रशंसापरैर्वचनैः । 'जनोदाहरणं कीर्तिं साधुवादं यशो विदुः' इति धनञ्जयः । 'साधूनां सत्पुरुषाणां वादः साधुवादः । कुशलो योग्यो हितश्च साधुरुच्यते' इत्यमरकीर्तिः । अत्र चार्वर्थे साधुशब्दप्रयोगः । 'साधुर्वार्द्धुषिके पुंसि चारुसज्जनयोस्त्रिषु' इति विश्वलोचने । **भवान्या** शच्या इन्द्राण्या वा । भवः श्रेयः अणिमाद्यष्टविधमैश्वर्यमस्यास्तीति भवः । इन्द्र इत्यर्थः । 'भवः श्रीकंठसंसारश्रेयःसत्तातिजन्मसु' इति विश्वलोचने । तस्य पत्नी स्त्री वा भवानी । इन्द्राणीत्यर्थः । 'वरुणभवशर्वरुद्रेन्द्रमृडात्' इति पुंयोगात् ङी आनुक् च । तया **शान्तोद्वेगस्तिमितनयनं** । शान्तः प्रशमं गतश्चासौ उद्वेग उद्भ्रमश्च शान्तोद्वेगः । शान्तोद्वेगेन स्तिमिते स्तब्धत्वं प्राप्ते त्र शान्तोद्वेगस्तिमिते । शान्तोद्वेगस्तिमिते नयने यस्मिन् कर्मणि स्यात्तथा । हसः । त्वद्विरचितनाट्यदिदृक्षया तत्रैकस्मिन्नग्रे बद्धत्वात्प्रशमितचलने; तत एव च स्तिमिते नयने कृत्वेत्यर्थः । 'उद्वेग उद्भ्रमे' इत्यमरः । ओविजी भयचलनयोरित्यस्माद्घोर्घञ् । उद्वेगो भयमित्यन्ये । नाट्यं वितन्वतो मेघस्य रौद्रत्वाभावात् भयासम्भवाच्छान्तोद्वेगेतिसामासिकपदस्थोद्वेगशब्दस्य भयमित्यर्थोऽत्र ग्राह्यत्वं नातिवर्तते । **चिरं** चिरकालं यावत् । **दृष्टभक्तिः** दृष्टाऽवलोकिता भक्तिः जिनगुणानुरागः यस्य सः । दृष्टभक्तिरिति पाठः शास्त्रविरुद्धः 'स्त्रयुक्तपुंस्कादनूङेकार्थेऽडट्प्रियादौ स्त्रियाम्' इति दृष्टशब्दस्योक्तपुंस्कत्वेऽपि भक्तिशब्दस्य प्रियादिगणपाठे पठितत्वात् पूर्वपदस्य पुंस्त्वासम्भवात् । दृढं भक्तिर्यस्यासौ दृढभक्तिरित्यादिवदप्यस्य प्रकृतस्य पाठस्य सामञ्जस्यं न घटते । 'दृढं भक्तिरस्य दृढभक्तिः; शोभनभक्तिरित्यादौ न पूर्वपदं स्त्रीलिङ्गमिति । तेन प्रियादौ द्यौ पूर्वस्य टावाशङ्का न कर्तव्या' इति महावृत्तिकारोक्त्यनुसारेणापि प्रकृतपाठस्य समीचीनत्वं घटामटेन्न वेति वयं न जानीमः । **सुरुचिरतनुः** । सुतरां रुचिरा मनोज्ञा तनुः कायः यस्य सः । सुशोभनशरीर इत्यर्थः । **तारापुष्पप्रकररुचिरे** । तारा एव पुष्पाणि । तेषां प्रकरः विकीर्णकुसुमसमूहः तारापुष्पप्रकरः । 'प्रकरो निकुरम्बे स्यात्प्रकीर्णकुसुमादिषु' इति विश्वलोचने । तेन रुचिरो मनोज्ञः । तस्मिन् । **व्योमरङ्गे** । व्योमैव रङ्गो नृत्तस्थलं । तस्मिन् । 'रङ्गं त्रपुणि रङ्गो ना रोगे वृत्तस्थले रणे' इति भास्करः । **तां** प्रसिद्धां । **सौम्यविद्युन्नटीं** । विद्युदेव नटी विद्युन्नटी । सौम्या मनोज्ञाऽनुग्रा वा विद्युन्नटी सौम्यविद्युन्नटी । तां । 'सौम्योऽथ वाच्यवत् । बौद्धे मनोरमेऽनुग्रे पामरे सोमदैवते' इति विश्वलोचने । नाट्य नर्तय ।

Performing a dance, you, with (your) devotion noticed for a long time with (her) eyes rendered motionless owing to their rolling being

subsided by Bhavani (शची), highly praised before her beloved husband in the words as 'This one is not terrible but beautiful', possessing a very beautiful form, should make the actress, the agreeable lightning, dance on the plat-form in the form of the sky beautiful on account of the scattered flowers in the form of stars.

आलोक्यैवं श्रियमथ महाकालदेवालयानां
कृत्वा सान्ध्यं समुचितविधिं चात्र भूयो नगर्याम् ।
लीलां पश्यन्विहर शनकै रात्रिसम्भोगहेतोः
गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तम् ॥ १७ ॥

अन्वयः— अथ एवं महाकालदेवालयानां श्रियं आलोक्य अत्र भूयः सान्ध्यं समुचितविधिं च कृत्वा तत्र नगर्यां नक्तं रात्रिसंभोगहेतोः रमणवसतिं शनकैः गच्छन्तीनां योषितां लीलां पश्यन् विहर ।

आलोक्येत्यादि । अथ नृत्यविधानान्तरं । 'अथाऽथो च शुभे प्रश्ने साकल्यारम्भसंशये । अनन्तरेऽपि ' इति विश्वलोचने । एवं प्रोक्तप्रकारेण महाकालदेवालयानां महाकालाभिधवनस्थाजिनेन्द्रमन्दिराणां श्रियं सौन्दर्यं । 'श्रीर्लक्ष्मीभारतीशोभाप्रभासु सरलद्रुमे । वेशत्रिवर्गसम्पत्तौ शेषापकरणे मतौ ' इति विश्वलोचने । आलोक्य नयनातिथितां नीत्वा अत्र जिनेन्द्रमन्दिरे भूयः पुनः । ' भूयस्तु स्यात्पुनः पुनः । अनव्ययं प्रभूतार्थे ' इति विश्वलोचने । सान्ध्यं सन्ध्यासमयसम्बन्धिनं । सन्ध्यायां भवं सान्ध्यम् । समुचितविधिं च भगवतोऽर्हतो योग्यं विधिं विधानं । क्रियामित्यर्थः । चकरोऽत्राप्यर्थे ज्ञेयः । कृत्वा विधाय । तत्र नगर्याम् । नक्तं रात्रौ । ' नक्तं च रजनाविति ' इत्यमरः । रात्रिसम्भोगहेतोः । रात्रौ क्रियमाणः सम्भोगः स्त्रीसङ्गः रात्रिसम्भोगः । ' रते भोगे च सम्भोगः सम्भोगो जिनशासने ' इति विश्वलोचने । तस्य हेतुः । तस्मात् । रमणवसतिं प्रियनिवासस्थानं । ' रमणस्तु प्रिये स्मेरे ' इति ' वसतिः स्यान्निशाविश्रमावस्थानेऽप्यर्हद्राश्रमे' इति च विश्वलोचने । शनकैः शनैः । गच्छन्तीनां । गच्छतीति गच्छन्ती । बहुवचनम् । योषितां स्त्रीणां । ' ललना कामिनी योषिद्योषा सीमन्तिनी वधूः ' इति धनञ्जयः । लीलां शृङ्गारादिक्रीडां पश्यन् अवलोकयन् विहर विहारं कुरु ।

Afterwards, having perceived thus the beauty of the temples situated in the Mahākāla forest, and again having performed the evening rites here ( i. e. in this temple ), move about in that city seeing amorous sports of the women going slowly to the residence of their lovers for the sake of having nocturnal sexual enjoyment.

गर्जत्युच्चैर्भवति पिहितव्योममार्गे रमण्यो
गाढोत्कण्ठा मदनविवशाः पुंसु सङ्केतगोष्ठीम् ।
एकाकिन्यः कथमिव रतौ गन्तुमीशा निशीथे
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ॥ १८ ॥

अन्वयः— पिहितव्योममार्गे भवति उच्चैः गर्जति निशीथे नरपतिपथे सूचिभेद्यैः तमोभिः रुद्धालोके पुंसु गाढोत्कण्ठाः मदनविवशाः रमण्यः रतौ सङ्केतगोष्ठीं एकाकिन्यः गन्तुं कथमिव ईशाः ?

गर्जतीत्यादि पिहितव्योममार्गे प्रच्छादिताकाशाध्वनि । पिहितः प्रच्छादितः व्योममार्गः आकाशपथः येन सः । तस्मिन् । 'धाञ्नह्योः' इति धाञि परतोऽपेरादेः खम् । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वाऽल्लोपः । भवति त्वयि उच्चैः महान्तं ध्वनिमुच्चार्य गर्जति गर्जिध्वनिं कुर्वति । सतीति शेषः । 'यद्भावाद्भावगतिः' इतीप् । निशीथे रात्रौ । 'निशीथस्तु निशामात्रार्धरात्रयोः' इति विश्वलोचने । नरपतिपथे राजमार्गे । नरपतेः राज्ञः पन्थाः नरपतिपथः । 'ऋक्पूरप्पथोत्' इति सान्तोऽत्यः । सूचिभेद्यैः अतिनिबिडैः । तमोभिः तिमिरैः । रुद्धालोके प्रतिबद्धप्रकाशे । 'आलोको दर्शनेऽपि स्यादुद्योते बन्दिभाषणे' इति विश्वलोचने । पुंसु पुरुषविषये । गाढोत्कण्ठाः सञ्जाततीव्रौत्सुक्याः । 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च' इति 'उत्कण्ठोत्कालिके समे' इति चाऽमरः । 'तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः' इत्यप्याहुः । मदनविवशाः कामवासनाधीनमनस्काराः रमण्यः स्त्रियः रतौ निधुवनक्रीडाहेतोः । 'हेतौ सर्वाः प्रायः' इति हेतावीप् । संकेतगोष्ठीं सङ्केतनिकेतनं । समयस्थानमित्यर्थः । एकाकिन्यः असहायाः । 'एकादाकिंश्चासहाये' इत्यसहायार्थेऽत्राकिन् । ङी च । गन्तुं प्राप्तुं कथमिव केन प्रकारेण ईशाः समर्थाः । ता एकाकिन्यः समर्था न भविष्यन्तीत्यर्थः ।

How could the women, cherishing strong desire for males, highly inflamed by passion, be able to go alone to the places of appointment,

when you, who would have blockaded the heavenly path, would be giving out roaring thunders and when the royal roads would have the light obstructed by the masses of very pitch darkness at night?

तस्मान्नोच्चैर्ध्वनिषु च भवाऽऽडम्बरं संहराशु
प्रत्यूहानां करणमसतामादृतं नोन्नतानां।
कर्तव्या ते सुजन विधुरे प्रत्युतोपक्रियाऽऽसां
सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीम्॥ १९॥

अन्वयः— तस्मात् ध्वनिषु उच्चैः न भव आडम्बरं च आशु संहर। प्रत्यूहानां करणं असतां आदृतं, न उन्नतानां। प्रत्युत (हे) सुजन आसां विधुरे उपक्रिया ते कर्तव्या। कनकनिकषस्निग्धया सौदमन्या उर्वीं दर्शय।

**तस्मा**दित्यादि। **तस्मात्**। यतः सङ्केतगोष्ठीं निशीथे गन्तुमसमर्थाः भविष्यन्ति ततः। **ध्वनिषु** ध्वन्युच्चारणविषये **उच्चैः** महान् **न भव** मा भव। मन्दमन्दध्वनिर्भवेत्यर्थः। नीचैर्भवेति पाठस्तु समीचीनः। **आडम्बरं च** प्रपञ्चं च। ध्वनिमहत्त्वमित्यर्थः। 'आडम्बरं करीन्द्राणां गर्जिते तूर्यनिस्वने। समारम्भे प्रपञ्चे च रचनायां च दृश्यते' इति विश्वलोचने। **आशु** शीघ्रं **संहर** दूरीकुरु। **प्रत्यूहानां** विघ्नानां। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। **करणं** विधानं **असतां** दुर्जनानां **आदृतं** प्रियं। 'आदृतः सादरेऽपि स्यात्पूजितेऽप्यभिधेयवत्' इति विश्वलोचने। **न उन्नतानां** न सज्जनानां। भवतीति शेषः। **प्रत्युत** पक्षान्तरे हे **सुजन** भो साधो। हे भद्रपुरुषेत्यर्थः। **आसां** वनितानां **विधुरे** विपदि प्रविश्लेषे वा। 'विधुरं तु प्रविश्लेषे प्रत्यवायेऽपि तन्मतम्' इति विश्वलोचने। **उपक्रिया** उपकृतिः **ते** तव। त्वयेत्यर्थः। 'व्यस्य वा कर्तरि' इति ता। **कर्तव्या** विधातव्या। **कनकनिकषस्निग्धया**। निकष्यतेऽत्रेति निकषः। 'गोचरसञ्चरवहव्रजव्यजसङ्क्रमापणखेलभगकषानिकषनिगमाः' इत्याधारे घान्तो निपातः। कनकस्य निकषो निकषोपलः कनकनिकषः। निकषस्य कषपट्टिकेत्यर्थः। निकषितकनकरेखायाः कषपट्टिकास्थितकत्वान्निकषेत्याभिख्या न दोषावहा। तेन निकषस्य कषोल्लिखितसुवर्णरेखाया अत्र ग्रहणम्। स इव स्निग्धया तेजस्विन्या वा। स्निग्धयेतिपदस्य तेजस्व्यर्थग्रहणे, 'सामान्येनोपमानं' इति सः। स्निग्धं तेजः अस्या अस्तीति स्निग्धा। 'ओऽभ्रादिभ्यः' इत्यत्यः। यद्वा तस्य स्निधं तेज इव स्निग्धं यस्याः सा। 'इवुपमानपूर्वस्य द्युखं गतार्थत्वात्' इति वा सः। यद्वा तस्येव स्निग्धा मनोहारिणीति वा

विग्रहः। तया। सौदामन्या विद्युता। सुदाम्ना अद्रिणा मेघेन वैकदिक् सौदामनी। 'सुदामा त्वम्बुदे गिरौ' इति विश्वलोचनः। 'एकदिक्' इति भान्तादेकदिगर्थे समानदिगर्थे यथाविहितं त्यः। अणित्यर्थः। 'अनः' इति सुदामनिति शब्दस्यान्नन्तत्वादाणि परेऽपि टिखाभावः। उर्वीं भूमिं दर्शय प्रकाशय। प्रकाशितां कुर्वित्यर्थः। अन्धतमसे स्थपुटितभूभागदर्शनासम्भवात्पातशङ्काकुलत्वात्तासां मार्गं दर्शयेत्यर्थः।

Do not, therefore, be very noisy, while giving forth thunders and contract immediately ( your ) expanse. The act of impeding is looked upon favourably by the wicked and not by the noble-minded. Oh benevolent one! you should help those distressed ones. By means of flashes of lightning shining like a gold streak on a touch-stone point out the earth to those.

क्रीडाहेतोर्यदि च भवतो गर्जनेनोत्सुकत्वं
मन्दं मन्दं स्तनय वनितानूपुरारावहृद्यम्।
तासामन्तर्मणितसुभगं सम्भृतासारधारः
तोयोत्सर्गस्तनितमुखरो मा च भूर्विक्लवास्ताः॥ २०॥

अन्वयः— यदि च क्रीडाहेतोः भवतः गर्जनेन उत्सुकत्वं वनितानूपुरारावहृद्यं तासां अन्तर्मणितसुभगं मन्दं मन्दं स्तनय; सम्भृतासारधारः तोयोत्सर्गस्तनितमुखरः च मा भूः, ताः विक्लवाः।

क्रीडेत्यादि। यदि च पक्षान्तरे। 'पक्षान्तरे चेद्यदि च' इत्यमरः। क्रीडाहेतोः क्रीडार्थम्। क्रीडायाः परीहासस्य हेतोः कारणात् क्रीडाहेतोः। 'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च' इत्यमरः। गर्जितध्वनिजनितभीतियोषित्कृतकोलाहलदिदृक्षयेत्यभिप्रायः। भवतः तव। गर्जनेन गर्जिध्वनिना। उत्सुकत्वं उत्कण्ठितत्वं। गर्जिध्वनिजनने तदर्थे वोत्सुकत्वमित्यर्थः। वनितानूपुरारावहृद्यं। वनितानां योषितां नूपुराः मञ्जीराः वनितानूपुराः। नारीमञ्जीराः। तेषामारावा ध्वनयः। शिञ्जितानीत्यर्थः। ते इव हृद्यं मनोहरं यथा स्यात्तथा। हृदयस्य प्रियं बन्धनं वा हृद्यम्। 'जन्यवश्यधर्म्यधेनुष्यामूल्यहृद्यगार्हपत्याः' इति यान्तो निपातः यत्ये च परतः 'हृदयस्य हृल्लेखाण्यलासे' इति हृदयस्य हृद्। तासां योषितां। अन्तर्मणितसुभगं। निधुवनक्रियायामुच्चारितोऽनक्षरो ध्वनिविशेषो अन्तर्मणितं। तद्वदिव सुभगं मनोहरं यथा स्यात्तथा। मन्दं मन्दं शनै शनैः। स्तनय गर्जितध्वनिं कुरु। सम्भृतासारधारः। आसारस्य

वेगवद्वर्षस्य धाराः स्रवाः आसारधाराः । 'आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले' इति 'धारा पङ्क्तौ द्रवद्द्रव्यस्रवेऽश्वगतिपञ्चके ।...।... धाराभ्यासे नुतावपि' इति च विश्वलोचने । सम्भृताः निष्पादिताः आसारधाराः वेगवद्वर्षजनितस्रवाः येन सः । **तोयोत्सर्गस्तनितमुखरः** । तोयोत्सर्गः जलवृष्टिः । स्तनितं गर्जितं । गर्जनध्वनिरित्यर्थः । तोयोत्सर्गश्च स्तनितं च तोयोत्सर्गस्तनिते । ताभ्यां मुखरः वाचालः तोयोत्सर्गस्तनितमुखरः । स्तनितशब्दस्याल्पाच्त्वात्पूर्वनिपाते प्राप्तेऽपि परनिपातः पूर्वनिपातशास्त्रानित्यत्वनिबन्धन इत्यवसेयं । यद्वा, तोयोत्सर्गे जलवृष्टिकाले यत् स्तनितं गर्जनाध्वनिः तेन मुखरः इति वा विग्रहः । च । चोऽत्र समुच्चये । 'चः पादपूरणे पक्षान्तरे चाऽपि समुच्चये । अन्वाचये समाहारेऽप्यन्योन्यार्थेऽवधारणे' इति विश्वलोचने । **मा भूः** मा भव । **ताः** स्त्रियः । **विक्लवाः** भीरवः । तासां भीरुत्वादित्यर्थः । अत्र वाविभक्तिर्हेतौ 'हेतौ सर्वाः प्रायः' इति वचनात् । यद्वा हेतुगर्भमेतद्विशेषणम् । 'विक्लवते कातरीभवति विक्लवः' इति क्षीरस्वामी स्वोपज्ञायाममरकोशटीकायाम् ।

If at all you are ardently desirous of giving forth thunders for the sake of ridiculing, roar very slowly as charmingly as the jingling of anklets and as the internal inarticulate murmuring uttered at co-habitation. Do not pour showers of heavy rain and do not be noisy with thunder at the time of down-pour of water; for they are timid.

**भ्रान्त्वा कृत्स्नां पुरमिति चिरं रात्रिसम्भोगधूपै-**
**र्लब्धामोदः सुखमनुभव त्वं गरीयानशेषाम् ।**
**तां कस्याञ्चिद्भवनवलभौ सुप्तपारावतायां**
**नीत्वा रात्रीं चिरविलसनात् खिन्नविद्युत्कलत्रः ॥ २१ ॥**

अन्वय :— रात्रिसम्भोगधूपैः लब्धामोदः चिरविलसनात् खिन्नविद्युत्कलत्रः गरीयान् त्वं इति कृत्स्नां पुरं भ्रान्त्वा सुप्तपारावतायां कस्याञ्चित् भवनवलभौ तां अशेषां रात्रीं नीत्वा सुखं अनुभव ।

भ्रान्त्येत्यादि । **रात्रिसम्भोगधूपैः** निशीथे क्रियमाणे सम्भोगे स्त्रीसमागमे उपयुक्तैर्धूपैः । रात्रौ निशीथे क्रियमाणः सम्भोगः स्त्रीसङ्गः रात्रिसम्भोगः । 'रते भोगे च सम्भोगः सम्भोगो जिनशासने' इति विश्वलोचने । तत्रोपयुक्ताः धूपाश्चन्दनागुर्वादिसुगन्धिद्रव्यचूर्णानि । तैः । **लब्धामोदः** सम्प्राप्तसौगन्ध्यः । लब्धः सम्प्राप्तः आमोदः परिमलः येन सः । 'सुगन्धिमुदि वाऽऽमोदः' इति विश्वलोचने ।

**चिरविलसनात्** दीर्घकालं यावत्सञ्जनितप्रकाशत्वात् । विद्युतः क्षणरुचिकत्वेऽपि दीर्घकालं यावत् पौनःपुन्येनोद्दामहासप्रकटनादिति भावः । **खिन्नविद्युत्कलत्रः** श्रान्तसौदामनीभार्यः । विद्युत् सौदामन्येव कलत्रं भार्या विद्युत्कलत्रं । खिन्नं श्रान्तं विद्युत्कलत्रं यस्य सः खिन्नविद्युत्कलत्रः । 'कलत्रं भूभुजां दुर्गस्थानेऽपि श्रोणिभार्ययोः' इति विश्वलोचने । **गरीयान्** गुरुतरः । प्रकृष्टो गुरुर्वेत्यर्थः । 'गुणाङ्गाद्वेष्ठेयसू' इतीयसि 'बहुलगुरूरुवृद्धतृप्रदीर्घवृन्दारकाणां बंहिगर्वर्वर्षित्रप्द्राघवृन्दाः' इति गुरोर्गरादेशः । **त्वं** भवान् । **इति** उक्तप्रकारेण **कृत्स्नां** निखिलां **पुरं** नगरीं **भ्रान्त्वा** परिभ्रम्य । तस्यां नगर्यां निखिलायां परिभ्रमणं विधायेत्यर्थः । **सुप्तपारावतायां** । सुप्ताः निद्रामुद्रितलोचनाः पारावताः कलरवाः यस्यां सा । तस्यां । 'पारावतः कलरवे शैले मर्कटतेन्दवे' इति विश्वलोचने । **कस्याञ्चित्** कुत्रचित् **भवनवलभौ** । भवनस्य प्रासादस्य वलभिः गृहाच्छादनं भवनवलभिः । तत्र । 'वलभी छादने वक्रदारुणि' इत्यमरः । 'पटलाधारो वंशपञ्जरो वलभी, वलभ्याश्चूडा वा । वल संवरणे' इति क्षीरस्वाम्यमरटीकायाम् । 'आच्छादनं स्याद्वलभिर्गृहाणां' इति हलायुधः । **तां अशेषां रात्रीं** तां निखिलां निशीथिनीं **नीत्वा** यापयित्वा **सुखं** आनन्दं **अनुभव** अनुभूवाः । अनुभूतिविषयतां प्रापयेत्यर्थः ।

You, enjoying fragrance of the incense used at the time of the nocturnal cohabitation, having your beloved, the lightning, fatigued owing to her emitting flashes of light again and again for a long time, possessing a very expansive ( bodily ) form, having roamed for a long time over the city and having spent that whole night on the upper part of some mansion-gallery having pigeons asleep, should enjoy happiness.

**यद्यप्यस्यां क्षणपरिचयः स्वर्गवासातिशायी**
**तत्राऽऽसक्तिं सपदि शिथिलीकृत्य वैरं च योगात् ।**
**दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशिष्टं**
**मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ २२ ॥**

अन्वयः— यद्यपि अस्यां क्षणपरिचयः स्वर्गवासातिशायी [ तथापि ] तत्र आसक्तिं योगात् वैरं च शिथिलीकृत्य पुनरपि सूर्ये दृष्टे भवान् अध्वशिष्टं वाहयेत् । सुहृदां अभ्युपेतार्थकृत्याः न खलु मन्दायन्ते ।

यद्यपीत्यादि। यद्यपि अस्यां एतस्यामुज्जयिन्यभिधानायां नगर्यां क्षणपरिचयः। क्षणं क्षणमात्रकालं यावत् परिचयः संसर्गः क्षणपरिचयः। अल्पकालपरिमाणः सम्बन्ध इत्यर्थः। स्वर्गवासातिशायी। स्वर्गे नाके देवनिवासे वासः स्वर्गवासः। तं अतिशेते इति स्वर्गवासातिशायी। 'शीलेऽजातौ णिन्' इति शीले णिन्। तथापि तत्र तस्यां नगर्यां क्षणपरिचये वा। आसक्तिं लाम्पट्यम्। योगात्। योगं संबन्धं सङ्गतिं मित्रत्वं वा प्राप्य। 'ल्यब्लोपे कर्माधारे' इति ल्यब्लोपे का। 'योगः सन्नाहसन्धानसङ्गतिध्यानकर्मणि। विष्कम्भादिषु सूत्रे च द्रव्ये विश्वस्तघातिनि। चरे चापूर्वलाभेऽपि भेषजोपाययुक्तिषु' इति विश्वलोचने। शत्रावपि मित्रभावमाश्रित्येत्यर्थः। वैरं च शात्रवं च। शिथिलीकृत्य। अशिथिलं शिथिलं श्लथं कृत्वा शिथिलीकृत्य। 'च्विडाजूर्यादनुकरणं' इति तिसंज्ञत्वात् 'तिकाद्युदुः' इति पसः, तिसत्वाच्च 'ल्यस्तिवाक्से क्त्वः' इति क्त्वाल्यस्य ल्यः। स्वर्गवासातिशायिन्यपि तत्र क्षणपरिचयं आसक्तिं मयि वैरबन्धं परित्यज्य मित्रभावं च प्राप्याभ्युपेतसुहृदर्थकृत्यो भवानलकागमनविषये विलम्बं मा कुर्विति भावः। अपि तु पुनरपि भूयोऽपि सूर्ये मरीचिमालिनि दृष्टे नयनविषयतां प्राप्ते सति भवान् त्वं अध्वशिष्टं। अध्वनः आक्रान्तमार्गं विहाय शिष्टः शेषः अध्वशिष्टः। तम्। आक्रान्तोर्वरितं मार्गमित्यर्थः। वाहयेत् गच्छेत्। सुहृदां मित्राणां। 'अथ मित्रं सखा सुहृत्' इत्यमरः। अभ्युपेतार्थकृत्याः ऊरीकृतमित्रप्रयोजननिष्पादनाः। अर्थस्य प्रयोजनस्य कृत्या क्रिया अर्थकृत्या। 'अर्थः प्रयोजने चित्ते हेत्वभिप्रायवस्तुषु' इति विश्वलोचने। 'कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिषु' इत्यपि तत्रैव। इष्टप्रयोजननिष्पादनमित्यर्थः। 'क्रियायां करणे कृत्या, यथा—कां कृत्यामकार्षीः' इति क्षीरस्वामी। तेन कृत्येत्यस्य करणं विधानं सम्पादनमित्यर्थः। 'कृः शश्च' इति क्यप्। सापेक्षः सोऽयं गमकत्वात्तस्यार्थस्य 'सापेक्षत्वेऽपि गमकत्वात्समासः' इत्यस्य शास्त्रविहितत्वात्। न खलु नैव। 'खलु स्याद्वाक्यभूषायां खलु वीप्सानिषेधयोः। निश्चिते सान्त्वने मौने जिज्ञासादौ खलु स्मृतम्' इति विश्वलोचने। मन्दायन्ते मन्दाः अलसाः भवन्ति। 'मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः' इत्यमरः। अमन्दाः मन्दाः आलस्याः भवन्तीति मन्दायन्ते। 'भृशादेश्च्व्यो स्तः' इति क्यङ् 'डाज्लोहितादिभ्यः क्यप्' इति क्यष् वा च्व्यर्थे मन्दशब्दस्योभयत्र पठनात्।

Though the familiarity, lasting for a moment, with this ( city ), surpasses the ( life-long ) stay in the heavens, you, giving up your fondness for the city and dispelling enmity ( with me ) by entering

into frindship ( with me ), should cover the remaining portion of your travel when the sun would be seen again ( the next morning ).

रुद्धे भानौ नयनविषयं नोपयाति त्वयाऽसौ
भासो भङ्गादघनिरसनं मा स्म भूत्त्वन्निमितम् ।
तस्मिन्काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ॥ २३ ॥

अन्वयः— त्वया भानौ रुद्धे असौ नयनविषयं न उपयाति । त्वन्निमित्तं भासः भङ्गात् अघनिरसनं मा स्म भूत् । तस्मिन् काले खण्डितानां योषितां नयनसलिलं प्रणयिभिः शान्तिं नेयम् । अतः भानोः वर्त्म आशु त्यज ।

रुद्धे इत्यादि । त्वया भवता भानौ मरीचिमालिनि रुद्धे स्वशरीराविस्तारेणाऽभितः व्याप्ते सति असौ सूर्यः नयनविषयं नेत्रगोचरं । नयनयोः नेत्रयोः विषयः गोचरः नयनविषयः । तम् । न उपयाति न प्राप्नोति । घनाघनशरीरविस्तारेण सर्वतः सूर्यबिम्बे पिहिते सति व्यवधाननिह्नुतत्वात् नयनगोचरतां न प्राप्नोतीति भावः । त्वन्निमितं भवन्निमित्तेन भासः प्रकाशस्य । सूर्यातपस्येत्यर्थः । भङ्गात् विनाशात् । भवच्छरीरविस्तारव्याप्तरविबिम्बत्वात् तदातपविनाशादित्यर्थः । अघनिरसनं दुःखविनाशः । 'पापेऽर्त्तौ व्यसने चाऽघं' इति विश्वलोचने । 'अंहो दुःखव्यसनेष्वघं' इत्यमरः । 'स्यान्निरासे निरसनं वधे निष्ठीवने तथा' इति विश्वलोचने । 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः' इत्यमरः । मा स्म भूत् मा स्म भवत् । न भविष्यतीति भावः । 'स्मे लङ् च' इति स्मे माङि लुङ् । 'लुङ्लङ्लृङ्क्ष्वमाङ्याट्' इति माङो योगादत्राडागमप्रतिषेधो लुङि परतोऽपि । रविबिम्बस्य भवता निह्नुतत्वात् सूर्यातपाभावात् रात्रिसम्भ्रमात् स्वप्रियतमविधीयमानप्रार्थनाचाटुसम्भवात् खण्डितानां दुःखोपशमो न सम्भवेदिति भावः । 'भासोऽभङ्गादघनिरसनं मा स्म भूस्तन्निमित्तं' इति परिवर्तिते पाठे आश्रिते 'भासः अभङ्गात् अघनिरसनं [ भवति, त्वं ] तन्निमित्तं मा स्म भूः' इत्यन्वयः । भासः सूर्यातपस्य अभङ्गात् अविनाशात् । प्रादुर्भूतत्वादिति भावः । भङ्गादिति पाठे तु प्रादुर्भावादित्यर्थः, भङ्गशब्दस्य विरचनार्थत्वात् । अघनिरसनं दुःखपरिहारः भवतीति शेषः । उदयशिखरिशिखरारूढसहस्रार्चिर्विकीर्णमरीचिमालालङ्कृते भूमण्डलेऽन्यासम्भोगचिह्नितस्वपतिदर्शनोद्भूतदुःखदुर्मनायमानभामिनीदुःखप्रशमनाभिलापः परदारगामी सन्नपि तत्प्रियतमश्चाटुकारक्षमायाचनपादपतनाद्युपायैः तद्दुःखप्रशमनं करोतीत्य-

भिप्रायं मनसिकृत्य 'भानोऽभङ्गादघनिरसनं' इति कव्युक्तिरित्यवसेयम्। **तस्मिन् काले** पूर्वश्लोकप्रदर्शिते सूर्यदर्शनकाले **खण्डितानां** इत्वरिकापरिगृहीतापरिगृहीताद्यन्यतमागमनचिह्नाङ्कितस्वप्रियतमदर्शनजानितेर्ष्याकषायितानां **योषितां** स्त्रीणां। 'पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः। सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता' इति साहित्यदर्पणे विश्वनाथः। **नयनसलिलं** नयनयोराविर्भूतमश्रुजलं **प्रणयिभिः** प्रियतमैः **शान्तिं** शमनं **नेयं** नेतव्यम्। शान्तिसलिलशब्दयोरिबन्तत्वं नयतेर्द्विकर्मकत्वादवसेयम्। अतः खण्डितानयनाश्रुजलोपशमनावसरप्रदानहेतोः **भानोः** सूर्यस्य **वर्त्म** मार्गं **आशु** शीघ्रं **त्यज** मुञ्च। सहस्रकिरणकिरणकलापमार्गावरोधकस्त्वं मा भूरित्यर्थः।

The sun would not fall in the range of sight, when he would be obstructed by you. Dissipation of misery ( of women ) would not be possible owing to the disappearance of the sun-light caused by you. At that time ( i. e. in the morning when the sun rises ), the tears of women treacherously disappointed ( by their lovers ) are to be alleviated by their affectionate lovers— so, quit ( or go away from ) the path of the sun quickly.

**अन्यच्चान्यव्यसनविधुरेणाऽऽर्य मित्रेण भाव्यं**
**तन्मा भानोः प्रियकमलिनीसंस्तवं त्वं निरुन्धाः।**
**प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः**
**प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः॥ २४॥**

अन्वयः— अन्यत् च आर्य। मित्रेण अन्यव्यसनविधुरेण भाव्यं; तत् त्वं भानोः प्रियकमलिनीसंस्तवं मा निरुन्धाः। नलिन्याः कमलवदनात् प्रालेयास्रं हर्तुं प्रत्यावृत्तः सः अपि त्वयि कररुधि अनल्पाभ्यसूयः स्यात्।

अन्यच्चेत्यादि। अन्यत् च। भवन्निमित्तेन दिनमणिकिरणौघानां प्रत्याहतत्वात्खण्डितानां योषितां दुःखनिरसनं न भविष्यतीत्येकं दूषणमभिधाय तन्मार्गनिरोधे दूषणान्तरं दर्शयितुमन्यच्चेत्याह। **आर्य** सतां पूज्य **मित्रेण** सुहृदा। 'मित्रं सख्यौ रवौ पुमान्' इति विश्वलोचने। **अन्यव्यसनविधुरेण** अन्यविपत्तिदुःखितेन। अन्यस्य व्यसनं विपत्तिः अन्यव्यसनं। 'व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु। दैवानिष्टफले पाके विपत्तौ विफलोद्यमे॥ सक्तिमात्रे सुचरिताद्भ्रंशे कोपजदूषणे।' इति विश्वलोचने। तेन विधुरः विकलः। दुःखितः इत्यर्थः। 'विधुरं तु प्रविश्लेषे प्रत्यवायेऽपि तन्मतं।

विधुरा तु रसालायां विधुरं विकलेऽन्यवत् ॥' इति विश्वलोचने । तेन । भाव्यं अवश्यं भवितव्यम् । 'ओरावश्यके' इत्युवर्णान्तादभूधोरावश्यके द्योत्ये ण्यः । सूर्यस्य मित्रः इति नामान्तरं । तच्च मित्रत्वगुणनिबन्धनमित्यभिप्रेत्य मित्रेण सुहृद्भावाङ्कितस्वान्तेनानेन भानुनाऽन्यविपत्तिविकलेनावश्यं भवितव्यमन्यथा मित्रत्वव्याहतेः । यद्वा, अयं मित्रो भानुः अन्यापत्तिविकलो जातः एवेति सुस्पष्टं भातीति भावः । तत् यस्मात्कारणादयं भानुः परदुःखदुःखितः प्रतिभाति तस्मात्कारणात् । त्वं भवान् भानोर्द्युमणेः **प्रियकमलिनीसंस्तवं** प्रियनलिनीपरिचयं । प्रिया हृदयग्राहिणी चाऽसौ कमलिनी नलिनी च प्रियकमलिनी 'प्रियस्तु त्रिषु हृद्ये स्याद्धवे वृद्ध्यौषधे पुमान्' इति विश्वलोचने । 'पुंवद्यजातीयदेशीये' इति यत्वात्पुंवद्भावः । तस्याः संस्तवः परिचयः । तं । 'संस्तवः स्यात्परिचयः' इत्यमरः । **मा निरुन्धाः** मा स्म निवारयतु । **नलिन्याः** कमलिन्याः । नलानि कमलानि सन्त्यस्याः इति नलिनी । तस्याः । 'नलं तु सरसीरुहे' इति विश्वलोचने । 'पुष्करादेशे' इति नलशब्दादिनि परे 'जातेरयोङ्शूद्रात्' इति स्त्रियां ङी । यद्वा 'अतोऽनेकाचः' इतीनि परे स्त्रियां ङी । **कमलवदनात्** नलिनाननात् । कमलं नलिनमेव वदनमाननं कमलवदनं । तस्मात् । **प्रालेयास्रं** नीहाररूपमश्रुजलं । प्रलयादागतं 'ततः आगतः' इत्यणि 'केकयमित्रयुप्रलयानां यादेरिय्' इत्यणो णित्त्वाद्यकारादेरिय् । प्रालेयमेवास्रमश्रु प्रालेयास्रं । 'अस्रु नेत्राम्बु रोदनं चास्रमश्रु च' इत्यमरः । **हर्तुं** अपनेतुं **प्रत्यावृत्तः** पुनरागतः **सः अपि** सः भानुः अपि **त्वयि** मेघाकारधारिणि भवति **कररुधि** किरणव्यवधायके सति । करान् किरणान् हस्तसदृशान्किरणान्वा रुणद्धीति कररुध् । क्विप् । कराः हस्ताः इव कराः किरणाः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । **अनल्पाभ्यसूयः** विपुलमत्सरः । अनल्पा अधिका अभ्यसूया गुणेषु दोषारोपणक्रिया विद्यते यस्य सः । **स्यात्** भवेत् । प्राक्तनदिनावसानकाले आत्मानं विमुच्यान्यत्र गतं स्वप्रियतमं दिनमणिं दृष्ट्वेर्ष्याकषायिता प्ररुदिता नेत्राश्रूणि गालयतीति मत्वा प्रत्यागच्छतो द्युमणेस्तदस्रापनुनुदिषोः किरणान्कराकारान् मा निरुन्धा इत्यभिप्रायः । 'निरुन्धाः' इति लङन्तमध्यमपुरुषैकवचनम् ।

Moreover, Oh noble one ! a friend should necessarily feel sorry for the severe pressure of pain on the other. You should not, therefore, put obstacles in the acquaintance of the sun with the lotus-creeper, his beloved. He too, come back to remove the tears in the form of dew-drops from the face in the form of the lotus of the lotus-creeper, might be not a little angry when you would be obstructing ( his ) hand-like rays.

गम्भीरेति त्वमपि सुभगां तां धुनीं माऽवमंस्थाः
गत्वा तस्या रसमनुभव त्वय्यतिस्वच्छवृत्तेः ।
गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्माऽपि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ॥ २५ ॥

अन्वयः— त्वं अपि तां सुभगां धुनीं गम्भीरा इति मा अवमंस्थाः । गत्वा त्वयि अतिस्वच्छवृत्तेः तस्याः रसं अनुभव । गम्भीरायाः सरितः चेतसि इव प्रसन्ने पयसि ते प्रकृतिसुभगः छायात्मा अपि प्रवेशं लप्स्यते ।

गम्भीरेत्यादि । **त्वं अपि** भवानपि **तां** प्रसिद्धां **सुभगां** मनोहरां । शोभनं भगं सौन्दर्यमस्याः सुभगा । तां । 'भगं तु ज्ञानयोनीच्छायशोमाहात्म्यमुक्तिषु । ऐश्वर्यवीर्यवैराग्यधर्मश्रीरत्नभानुषु' इति विश्वलोचने । **धुनीं** नदीं । 'तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी । स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगाऽऽपगा' इत्यमरः । **गम्भीरा इति** अगाधेति । अगाधत्वादित्यर्थः । इतीति हेतावत्र । 'इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः' इति विश्वलोचने । **मा अवमंस्थाः** मावज्ञासीः । तस्याः अवज्ञां मा कुर्वित्यर्थः । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति माङ्योगसद्भावादडागमोऽत्र प्रतिषिद्धः । **गत्वा** तां गम्भीराख्यां नदीं प्राप्य **त्वयि** भवद्विषये **अतिस्वच्छवृत्तेः** सुनिर्मलमतेः । अति प्रकर्षेण स्वच्छा निर्मला वृत्तिः समुदाचारः मतिः वा यस्याः सा । तस्याः । **तस्याः** गम्भीराभिधानायाः सरितः **रसं** जलं । अत्र रसशब्देन गम्भीरायाः अनुरागोऽपि ध्वन्यते । **अनुभव** अनुभूतिविषयतां नयस्व । **गम्भीरायाः सरितः** गम्भीराभिधनिम्नगायाः **चेतसि इव** मनसि इव **प्रसन्ने** निर्मले **पयसि** पानीये **ते** तव **प्रकृतिसुभगः** स्वभावसुन्दरः । प्रकृत्या स्वभावेन सुभगः सुन्दरः प्रकृतिसुभगः । 'सुन्दरेऽधिकभाग्यांशे उदिते तटवासरे । तुरीयांशे श्रीमति च सुभगः' इति शब्दार्णवे । **छायात्मा अपि** प्रतिबिम्बरूपं शरीरं अपि । 'छाया स्यादातपाभावे सत्कान्त्युत्कोचकान्तिषु । प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति 'आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु' इति च विश्वलोचने । **प्रवेशं लप्स्यते** प्राप्स्यति ।

Even you should not dishonour that beautiful river (only) because of her being very deep. Having approached (her), you should enjoy the water (love) of her whose behaviour with reference to you is extremely pure (flawless). In the pure waters which are as if the

pure heart of the Gambhīrā river, your self, under the guise of a reflected image also, naturally charming, would gain entrance.

तस्मादेवं प्रणयपरतां त्वय्यभिव्यञ्जयन्ती
लीलाहासानिव विदधती सा धुनी शीकरोत्थान्।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या—
न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ २६ ॥

अन्वयः— तस्मात् शीकरोत्थान् लीलाहासान् विदधती इव सा धुनी एवं त्वयि प्रणयपरतां व्यञ्जयन्ती (भवेत्)। तस्मात् अस्याः कुमुदविशदानि चटुलशफरोद्वर्तनप्रेक्षितानि धैर्यात् मोघीकर्तुं त्वं न अर्हसि।

**तस्मा**दित्यादि। **तस्मात्** ततः। स्वचेतसि प्रवेशप्रदानादित्यर्थः। **शीकरोत्थान्** निःसृताम्बुकणोत्पन्नान्। 'शीकरः सरले वाते निःसृताम्बुकणेषु च' इति विश्वलोचने। **लीलाहासान्**। लीलायुक्ताः सविलासाः केलौ कृताः वा हासाः लीलाहासाः। तान्। **विदधती इव** कुर्वाणेव **सा धुनी** सा गम्भीराभिधाना नदी। **एवं** प्रोक्तप्रकारेण **त्वयि** भवति **प्रणयपरतां** प्रेमपरत्वं **व्यञ्जयन्ती** आविर्भावयन्ती। भवेदिति शेषः। **तस्मात्** प्रेमपरत्वप्रकटीकरणात् **अस्याः** गम्भीराख्यसरितः **कुमुदविशदानि**। कुमुदानीव कमलानीव विशदानि धवलानि कुमुदविशदानि। कमलधवलानीत्यर्थः। 'विशदः पाण्डुरे व्यक्ते' इति विश्वलोचने। 'सामान्येनोपमानं' इति सामान्यवाचिना विशदशब्देन सहोपमानभूतकुमुदशब्दस्य षसः कुमुदशफरोद्वर्तनप्रेक्षितयोर्वैशद्यस्य साधारणधर्मत्वात्। **चटुलशफरोद्वर्तनप्रेक्षितानि**। चटुलानि शीघ्रगतीनि शफराणां मत्स्यानामुद्वर्तनान्युल्लुण्ठितान्येव प्रेक्षितानि विलोकनानि। 'त्रिषु स्याच्चटुलं शीघ्रं-' इति विश्वः। एतावतैव गम्भीरानद्यास्त्वय्यनुरागो व्यज्यते। **धैर्यात्** धाष्ट्यात्। औद्धत्यादिति भावः। **मोघीकर्तुं** विफलीकर्तुं। अमोघानि मोघानि विफलानि कर्तुं मोघीकर्तुम्। च्विः। 'मोघस्तु निष्फले दीने' इति विश्वलोचने। **त्वं** भवान् **न अर्हसि** न योग्यो भवति। धूर्तो मा भूस्त्वमिति भावः। एनां त्वयि रक्तां विहायान्यत्रारक्तायामारक्तो मा भूस्त्वमिति तात्पर्यम्।

That river, expressing her whole-hearted love for you, therefore, as if giving out sportive smiles originating from the sprays, would, thus, manifest her love for you. You do not, therefore, deserve to

neutralize immodestly her glances in the form of the beautiful springings up of the fish which are as white as the lilies.

ज्ञास्यस्युच्चैःपुलिनजघनादुच्चरत्पक्षिमाला-
भास्वत्काञ्चीमधुररणितात् कामसेवाप्रकर्षम्।
तस्याः किञ्चित्करधृतमिव प्राप्तवानीरशाखं
हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ॥ २७ ॥

तामुत्फुल्लप्रततलतिकागूढपर्यन्तदेशां
कामावस्थामिति बहुरसां दर्शयन्तीं निषद्य।
प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि
ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥ २८ ॥

अन्वयः— उच्चरत्पक्षिमालाभास्वत्काञ्चीमधुररणितात् उच्चैःपुलिनजघनात् तस्याः कामसेवाप्रकर्षं ज्ञास्यसि। सखे! मुक्तरोधोनितम्बं प्राप्तवानीरशाखं किञ्चित् करधृतं इव नीलं सलिलवसनं हृत्वा बहुरसां कामावस्थां इति दर्शयन्तीं उत्फुल्लप्रततलतिकागूढपर्यन्तदेशां तां निषद्य लम्बमानस्य ते प्रस्थानं अपि कथं भावि? कः ज्ञातास्वादः विवृतजघनां विहातुं समर्थः?

ज्ञास्यसीत्यादि श्लोकद्वयम्। उच्चरत्पक्षिमालाभास्वत्काञ्चीमधुररणितात्। उदूर्ध्वं चरतामुड्डीयमानानां उच्चरतां स्वनतां वा पक्षिणां पतत्रिणां माला पङ्क्तिः उच्चरत्पक्षिमाला। सैव भास्वत्काञ्ची तेजसा स्फुरन्ती रशना। तस्याः मधुरं श्रोत्रप्रियं रणितं क्वाणः यत्र तत्। तस्मात्। हेतावत्र का। पक्षे उच्चरत्पक्षिणां मालेव माला उच्चरत्पक्षिमाला। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। तया युक्ता भास्वत्काञ्ची। तस्याः मधुरं रणितं यत्र तत्। तस्मात्। क्वणत्किङ्किणीजालनिबद्धमालालङ्कृतभास्वत्काञ्चीदामश्रुतिप्रियक्वणितादित्यर्थः। उच्चैःपुलिनजघनात्। उन्नतात्पुलिनरूपात्कटिभागात् पक्षे उन्नतपुलिनतुल्यकटिप्रदेशात्। उच्चैरुन्नतं पुलिनं सैकतमेव जघनं कटिः। तस्मात्। पक्षे पुलिनमिव पुलिनं। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। पुलिनमिव जघनं। पुलिनजघनं। उच्चैरुन्नतं पुलिनजघनं। तस्मात्। 'जघनं वनिताश्रोणीपुरोभागे कटावपि' इति विश्वलोचने। 'तोयोत्थितं तत्पुलिनं' इत्यमरः। 'तत्तटं तोयात्क्रमेणोत्थितं पुलिनं, पुलो महत्त्वमस्यास्तीति' इति क्षीरस्वामी। तस्याः गम्भीरावाः नद्याः कामसेवाप्रकर्षं मैथुनसेवनोद्रेकं। कामसेवायाः सम्भोगक्रीडायाः प्रकर्षः उद्रेकः।

तम् । **ज्ञास्यसि** अधिगमिष्यसि । भास्वत्काञ्चीदामश्रुतिमधुरक्वणितादुन्नतजघनाद्धेतोर्यथा कामिन्याः निधुवनसेवनोत्कर्षः विज्ञायते तथा स्वनत्पक्षिमालारूपभास्वत्काञ्चीदाममधुररसनादुन्नतात्पुलिनरूपजघनाद्धेतोस्तस्याः गम्भीरानामधेयनद्याः कामसेवनोत्कर्षः अस्याः अस्तीति त्वं ज्ञास्यसीति भावः । **सखे** मित्र **मुक्तरोधोनितम्बं** परित्यक्ततटकटिकं । रोधस्तटमेव नितम्बः कटीचक्रं रोधोनितम्बः । 'कटीचक्रे नितम्बः स्याच्छिखरिस्कन्धरोधसोः' इति विश्वलोचने । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिपु'। इत्यमरः । मुक्तः परित्यक्तः रोधोनितम्बः येन तत् । **प्राप्तवानीरशाखं** । वानीरस्य जलवेतसस्य शाखा समीपप्रदेशः पल्लवः वा वानीरशाखा । प्राप्ता आश्रिता वानीरशाखा येन तत् प्राप्तवानीरशाखं वानीरसमीपप्रदेशाश्रितं सदित्यर्थः । **किञ्चित्** ईषत् **करधृतं इव** करेण धृतमिव । हस्तावलम्बितमिवेत्यर्थः नीलं नीलवर्णं **सलिलवसनं** जलरूपं वस्त्रं । सलिलमेव वसनं सलिलवसनम् । पक्षे सलिलमिव वसनं । दुकूलः इत्यर्थः । तत् । **हृत्वा** अपनीय **बहुरसां** विपुलानुरागां । बहुर्विपुलो रसोऽनुरागो यस्याः सा । ताम् । 'रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे । पारदे धातुवीर्याम्बुरागे गन्धरसे तनौ' इति विश्वलोचने । **कामावस्थां** मदनोद्रेकजनितामवस्थां **इति** उक्तप्रकारेण **दर्शयन्तीं** आविर्भावयन्तीं **उत्फुल्लप्रततलतिकागूढपर्यन्तदेशां** । उत्फुल्लः सम्फुल्लः प्रततः प्रसृतः उत्फुल्लप्रततः । 'ञिफला विशरणे' इत्यस्माद्धोः 'ति' इति तकारादौ त्ये परतोऽत उत्वं 'समुदः' इति फुल्लनिपातस्तस्य धोरुदः परत्वात् । ताश्च ताः लताः वल्लयः । ताभिः गूढः प्रच्छन्नः पर्यन्तदेशः यस्याः सा । ताम् । पक्षे उत्फुल्ले योनिदेशे प्रतता प्रसृता उत्फुल्लप्रतता । सा चासौ लतिका मुक्तामाला चोत्फुल्लप्रततलतिका । 'उत्फुल्लः करणे स्त्रीणामुत्ताने विकचेऽन्यवत्' इति विश्वलोचने । तया गूढः प्रच्छन्नः पर्यन्तदेशः योनेः प्रत्यासन्नः देशः यस्याः सा । ताम् । **तां** गम्भीराख्यां नदीं **निषद्य** अवलम्ब्य । समाश्रित्येत्यर्थः । **लम्बमानस्य** जलादानाद्दीर्घीकृतस्वकायस्य पक्षे विषयसुखानुभवार्थं दीर्घीकृतस्वकायस्य **ते** तव **प्रस्थानं** तस्मात्स्थानान्निष्क्रमणं । प्रयाणमित्यर्थः । **अपि कथं भावि** केन प्रकारेण भविष्यति । अपीत्यत्र प्रश्ने । 'अपि सम्भावनाशङ्काप्रश्नगर्हासमुच्चये' इति विश्वलोचने । कामातुराणां कार्यान्तरे शीतकत्वमवश्यम्भावीति मत्वा भवतः कामातुरत्वसम्पत्तेः ततोऽग्रे शीघ्रं प्रस्थानं न सम्भवेदिति भावः । **कः ज्ञातास्वादः** अनुभूतसम्भोगशृङ्गाररसः **विवृतजघनां** अनावृतजघनां **विहातुं** परित्यक्तुं **समर्थः** शक्तिसम्पन्नः । न कोपीत्यर्थः । कामावस्थां नाभिजघनादिना व्यञ्जयन्तीं कामिनीं दृष्ट्वा कामुकस्तां विहायान्यत्र गन्तुमसमर्थो भवति यथा तथा सलिलवसनमपहृत्य

स्वरोधोनितम्बप्रदर्शनेन कामावस्थां व्यञ्जयन्तीमाश्रित्य लम्बमानस्य ते प्रयाणं न सम्भवेदिति शम्बराऽसुराभिप्रायः ।

You would come to know the excess of her sexual enjoyment from the prominent buttocks in the form of sandy beaches possessing charming jinglings of a resplendent zone in the form of the rows of chirping birds. Dear friend ! how would your departure be possible when you, on resorting to her, whose adjoining regions would be coverd over with flowery creepers spreading there, who would be manifesting her passion abounding in love by removing the blue garment in the form of water, slipped off the buttocks in the form of her banks, attained, as though being held by her hand, to the blades of canes growing in her waters, would be stretching out yourself (or would be lying at full length) ? Who, become acquainted with sexual enjoyment, would be capable of giving up a woman having her hips laid bare (or uncovered) ?

उत्तीर्यामूं कथमपि ततो गन्तुमुद्यच्छमानं
त्वामुन्नेष्यत्यनुवनमसौ गन्धवाहः सुगन्धः ।
त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः
स्रोतोरन्ध्रध्वनितमधुरं दन्तिभिः पीयमानः ॥ २९ ॥

अन्वयः—अमूं कथमपि उत्तीर्य ततः गन्तुं उद्यच्छमानं त्वां त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः दन्तिभिः स्रोतोरन्ध्रध्वनितमधुरं पीयमानः असौ सुगन्धः गन्धवाहः त्वां अनुवनं उन्नेष्यति ।

उत्तीर्येत्यादि । अमूं तां गम्भीराख्यां नदीं कथमपि महता कष्टेन उत्तीर्य उल्लङ्घ्य ततः तस्माद्गम्भीरानदीप्रदेशात् गन्तुं यातुं उद्यच्छमानं उद्यमं कुर्वाणं । प्रयतमानमित्यर्थः । त्वां भवन्तं त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः । तव निष्यन्दः वृष्टिः त्वन्निष्यन्दः । तेन उच्छ्वसिता उच्छूना । विजृम्भितेत्यर्थः । सा चासौ वसुधा भूमिश्च । 'पुंवद्यजातीयदेशीये' इति पुंवद्भावः । तस्याः गन्धः आमोदः । 'गन्धो गन्धकसम्बन्धलेशेष्वामोदगर्वयोः' इति विश्वलोचने । तस्य सम्पर्केण सम्बन्धेन । संसर्गेणेत्यर्थः । 'सम्पर्कः स्यान्निधुवने संसर्गे स्पर्शनेऽपि च' इति विश्वलोचने । रम्यः मनोहरः । दन्तिभिः गजैः स्रोतोरन्ध्रध्वनितमधुरं । स्रोतसः नासिकायाः

रन्ध्रं विवरं स्रोतोरन्ध्रं। स्रोतोरन्ध्रे नासिकाकुहरे यद्ध्वानितं शब्दः तेन मधुरं यथा स्यात्तथा । 'स्रोतोऽम्बुवेगेन्द्रिययोः' इत्यमरः । इन्द्रियवाचिना स्रोतःशब्देन नासिकाऽत्र लक्ष्यते। यद्वा स्रोतोरन्ध्रे कर्णविवरे यद्ध्वनितं समीरणपानध्वनिः तेन मधुरं यथा स्यात्तथा। 'स्रोतोऽम्बुवेगे कर्णे च स्रोतो देहशिरास्वपि' इति विश्वलोचने। पीयमानः आघ्रायमाणः । मेघवर्षोच्छ्वसितवसुधासुगन्धलोभेन नासिकाकुहरेणाघ्रायमाणः इत्यर्थः। असौ एषः सुगन्धः सुरभिः। शोभनः गन्धः यस्य सः। 'सुपूत्युत्सुरभेर्गुणे गन्धस्येः' इत्यस्य वसत्वादिकारादेशेन सान्तेन भाव्यमिति चेत्, न, सान्तविधेरनित्यत्वाद्गन्धशब्दस्य द्रव्यवचनत्वाद्वा। शोभनाः गन्धद्रव्यकणाः सन्त्यस्येति सुगन्धः। गन्धवाहः समीरणः। गन्धं सुगन्धं वहतीति गन्धवाहः। 'कर्मण्यण्' इति कर्मणि वाचि धोरण्। 'पृषदश्वो गन्धवहो गन्धवाहाऽनिलाऽऽशुगाः। समीरमारुतमरुज्जगत्प्राणसमीरणाः' इत्यमरः। त्वां भवन्तं अनुवनं वने। 'झिः सुप्-' इत्यादिना विभक्त्यर्थे हसः। उन्नेष्यति प्रापयिष्यति।

This wind, pregnant with fragrance, drunk by elephants in a manner charming owing to the low gruff sound produced in the apertures of their trunks, charming on account of its contact with the odour emitted by the earth sending out vapour on account of your discharge of rain, would convey you, who would be trying to proceed on from that place after having crossed the river anyhow, to the interior part of a forest.

गत्वा किञ्चिच्छ्रमपरिजुषस्त्वत्क्लमच्छेददक्षः
प्रत्युद्यासुः प्रियसुहृदिवारूढसौगन्ध्ययोगः।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वातः परिणमयिता काननोदुम्बराणाम् ॥ ३० ॥

अन्वयः— किञ्चित् गत्वा देवपूर्वं गिरिं उपजिगमिषोः श्रमपरिजुषः ते प्रियसुहृत् इव प्रत्युद्यासुः त्वत्क्लमच्छेददक्षः आरूढसौगन्ध्ययोगः काननोदुम्बराणां परिणमयिता शीतः वातः नीचैः वास्यति।

गत्वेत्यादि । किञ्चित् ईषद्दूरं गत्वा यात्वा देवपूर्वं देवशब्दपूर्वं । देवशब्दः पूर्वस्मिन् यस्य सः । तम् । गिरिं पर्वतं । देवगिरिमित्यर्थः। उपजिगमिषोः उपगन्तुमिच्छोः। 'सन्भिक्षाशंसादुः' इति सन्नन्ताद्ग-

मेरुत्यः । **श्रमपरिजुषः** श्रमयुक्तस्य । श्रान्तस्येत्यर्थः । श्रमं श्रान्तिं परिजुषते इति श्रमपरिजुट् । तस्य । क्विप् । **ते** तव **प्रियसुहृदिव** प्रियमित्रमिव **प्रत्युद्यासुः** प्रयतमानः । प्रयत्नं कुर्वाणः इत्यर्थः । प्रत्युद्यसतेरौणादिकः उण् । **त्वत्क्रमच्छेददक्षः** त्वच्छ्रमपरिहरणतत्परः । तव क्रमः श्रमः त्वत्क्रमः । तस्य च्छेदे परिहरणे दक्षः चतुरः अनलसः वा त्वत्क्रमच्छेददक्षः । 'दक्षः स्याद्दक्षिणभुजे प्रगल्भेऽनलसे त्रिषु' इति विश्वलोचने । **आरूढसौगन्ध्ययोगः** सञ्जातसौरभसम्पर्कः । आरूढः समुत्पन्नः सौगन्ध्येन सौरभ्येण योगः सम्पर्कः यस्य सः । 'योगः सन्नाहसन्धानसङ्गतिध्यानकर्मणि' इति विश्वलोचने । **काननोदुम्बराणां** । काननेषु वनेषु उदुम्बराणि उदुम्बरफलानि काननोदुम्बराणि । तेषां । उदुम्बरस्य जन्तुफलस्यावयवः फलं उदुम्बरम् । 'उप्फले' इति फलत्यस्योप् । 'उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः' इत्यमरः' । **परिणमयिता** परिपाचयिता । परिणमयति परिपाचयतीति परिणमयिता । 'घटादिकगेवनुजनीजूष्रन्सक्नसुरंज्यमोऽपर्यपस्खलकमूचस्यमः प्रोऽमन्योस्तु दीर्घो' इति णौ परे प्रः । **शीतः** शैत्ययुक्तः **वातः** वायुः **नीचैः** मन्दं **वास्यति** वक्ष्यति ।

A cool breeze of wind, ripening the sylvan figs, rich in fragrance, exerting like a dear friend, prompt to dissipate weariness of you who would be fatigued and who would be desirous of approaching the Devagiri mountain on proceeding a little, would be blowing gently.

**ईशोमाभ्यामपचितपदं तं पुपुत्रीयिषुभ्यां**
**पूजां जैनीं विरिरचयिषुं स्वौकसि प्राज्यभक्त्या ।**
**तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा**
**पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः ॥ २१ ॥**

अन्वयः—तं पुपुत्रीयिषुभ्यां ईशोमाभ्यां अपचितपदं, स्वौकसि प्राज्यभक्त्या जैनीं पूजां विरिरचयिषुं, तत्र नियतवसतिं स्कन्दं पुष्पमेघीकृतात्मा भवान् व्योमगङ्गाजलार्द्रैः पुष्पासारैः स्नपयतु ।

ईशेत्यादि । तं स्कन्दाख्यं देवविशेषं **पुपुत्रीयिषुभ्यां** आत्मनः पुत्रं कर्तुमिच्छुभ्यां 'क्यजश्छिमः' इत्यात्मनः इबन्तादिच्छायां क्यच् 'तुमीच्छायां धोर्वोप्' इति तुमीच्छायां सन् तुमश्चोप् च । **ईशोमाभ्यां** उत्तरपूर्वादिक्पतितदङ्गनाभ्यां । ईशः उत्तरपूर्वादिक्पतिः । उमा कान्तिः अस्याः अस्तीति उमा । सौन्दर्यसम्पन्ना दिक्पते-

भार्या । अपचितपदं । अपचिते प्रार्चिते पदे चरणे यस्य सः । तम् । स्वौकसि स्वगृहे । स्वस्याऽत्मनः ओको गृहं स्वौकः । तत्र स्वौकसि । 'ओकस्त्वाश्रयसद्मनोः' इति विश्वलोचने । प्राज्यभक्त्या महत्या भक्त्या । प्राज्या महती चासौ भक्ति-र्भजनं च प्राज्यभक्तिः । तया । 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' इत्यमरः । जैनीं जिनेन्द्रसम्बन्धिनीम् । जिनस्येयं जैनी । ताम् । अण् ङी च । पूजां सपर्यां विरिरचयिषुं विरचयितुमिच्छुं । 'तुमीच्छायां धोर्वोप्' इति सन्निच्छायां तुमश्चोप् । तत्र देवगिरौ नियतवसतिं निश्चितनिवासं । नियता निश्चिता वसतिर्निवासः यस्य सः । तम् । स्कन्दं तदभिधानं कश्चिद्देवविशेषम् । स्कन्दति विघ्नानपहरतीति स्कन्दः विघ्नहरः कश्चिद्देवविशेषः । तम् । पुष्पमेघीकृतात्मा कुसुमवर्षुकमेघकृत-स्वकायः । पुष्पाणां मेघः पुष्पमेघः । अपुष्पमेघः पुष्पमेघः कृतः आत्मा शरीरं येन सः । च्विः । 'आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु' इति विश्वलोचने । देवयोनि-सम्भूतत्वाद्वैक्रियिकविग्रहसम्पन्नत्वाद्विरचितपुष्पोपादानकारणजातकार्यभूतशरीरः इत्यर्थः । भवान् त्वं व्योमगङ्गाजलार्द्रैः आकाशगङ्गानदीजलार्द्रीकृतैः । उन्नततरहिमवत्कुला-चलोद्भूतत्वाद्गङ्गायाः व्योमगङ्गेति नामान्तरमित्यवसेयम् । व्योमगङ्गायाः आकाश-गङ्गायाः जलेन आर्द्रैः आर्द्रतां नीतैरित्यर्थः । पुष्पासारैः पुष्पधारासम्पातैः 'धारा-सम्पात आसारः' इत्यमरः । स्नपयतु अभिषिंचतु । अभिषेचनं करोत्वित्यर्थः ।

You, with your body formed into a flower-cloud, should perform ablution, with showers of flowers moistened with the waters of the heavenly Ganges, of Skanda, whose feet are worshipped by Īsa (the lord of the north eastern direction) and his beautiful beloved with a desire to make him their son, who is desirous of performing worship of Jina with great devotion in his house, and who has his residence permanently situated there (i. e. on the Devagiri mountain).

पूज्यं देवैर्जिनपतिमजं पूजयन्तं सदैनं
दृष्ट्वा पूतं त्वमपि भवताद्देववृन्दे दिवाऽग्र्यम् ।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः ॥ ३२ ॥

अन्वयः— देवैः पूज्यं अजं जिनपतिं सदा पूजयन्तं पूतं एनं दृष्ट्वा (यत्) देववृन्दे अग्र्यं, (यत्) हुतवहमुखे (विधते), (यत्) वासवीनां चमूनां रक्षाहेतोः नवशशिभृता दिवा सम्भृतं, तत् अत्यादित्यं तेजः त्वं अपि भवतात् ।

पूज्यं देवैरित्यादि । देवैः दिविभवैः । दीव्यन्तीति देवाः वा । पचाद्यच् । अमरैरित्यर्थः । पूज्यं अपचेयं । पूजार्हमित्यर्थः । पूजां अपचितिं अर्हतीति पूज्यः । तम् । अजं जन्मरहितम् । न विद्यते जा उत्पत्तिर्यस्य सः अजः । 'जः स्याज्जाविनि जोद्भूतौ' इति विश्वलोचने । जाशब्दस्योपलक्षणार्थत्वाज्जरामरणयोर्ग्रहणं, नष्टघातिकर्मचतुष्कत्वाज्जरामरणविकलत्वात्तस्य । जिनपतिं अष्टादशदोषान्कर्मोदयजनिताञ्जयन्तीति जिनाः प्रमत्तादिगुणस्थानवर्तिनः एकदेशजिनाः । तेषां पतिः । तम् । 'जिनस्त्वर्हति बुद्धेऽतिवृद्धजित्वरयोस्त्रिषु' इति विश्वलोचने । सदा सर्वकाले पूजयन्तं तत्पूजां कुर्वाणं । अत एव पूतं पवित्रं । 'पूतं पवित्रे शब्दे च त्रिषु स्याद्बहुलीकृते' इति विश्वलोचने । पावनमिति वा । एनं । स्कन्दाभिधानं देवं दृष्ट्वा विलोक्य यत् तेजः देववृन्दे देवनिकाये । दिवि आकाशे भवन्तीति देवाः । ग्रहनक्षत्रप्रकीर्णकतारकाः ज्योतिष्कदेवाः । तेषां वृन्दे निकाये । अग्र्यं पराध्यं । उत्कृष्टमित्यर्थः । 'पराध्याग्रप्राग्रहरप्राग्र्याग्र्यग्रीयमग्रियं' इत्यमरः । यत् हुतवहमुखे । हुतं वहतीति हुतवहः । हुतभुगग्निरित्यर्थः । तस्य मुखं वक्त्रं । तत्र । अत्र मुखशब्दस्योपलक्षणार्थत्वात्सर्वेषामवयवानां ग्रहणं, तेजसोऽग्नौ सर्वत्र विद्यमानत्वात् । यत्तेजोऽग्नौ सर्वत्र शरीरे विद्यते तत्तेजः इत्यर्थः । यत् वासवीनां । वसूनि धनानि सन्त्यस्यामिति वासवी । 'ज्योत्स्नादिभ्योऽण्' इत्यण् 'इञ्टिड्ढाणञ्-' इति स्त्रियां ङी च ज्योत्स्नादीनां प्रयोगगम्यत्वात् । वासवी वसुन्धरेत्यर्थः । वासवीनामिति बहुवचननिर्देशः भूविभागबाहुल्यज्ञानपार्थः । भूभागस्थितानामित्यर्थः । चमूनां प्राणिनां । चमति अन्नोदकं सेवते इति चमूः । 'कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः' इत्यौणादिकः 'चमु अदने' इत्यस्माद्धातोरूः । रक्षाहेतोः रक्षायाः कारणेन । रक्षार्थमित्यर्थः । 'हेतौ सर्वाः प्रायः' इति हेतुशब्दप्रयोगात्ता हेत्वर्थे । जीविकार्जनार्थायाः प्राणिगणप्रवृत्तेः सूर्यातपदर्शने सम्भवात् ईर्यायां सूक्ष्मजन्तुसंरक्षणस्य तदातपे सत्येव सम्भवाच्च सूर्यतेजसः प्राणिगणरक्षार्थत्वमिहाभिप्रेतमित्यवसेयम् । नवशशिभृता । नवं प्रशस्तं शशिनं बिभर्तीति नवशशिभृत् । क्विप् । तया । नूयते इति नवः । प्रशस्तः इत्यर्थः । दिवा व्योम्ना सम्भृतं सङ्गृहीतं । तत् पूर्ववर्णितं । अत्यादित्यं देवतेजसोऽप्यधिकतरं । आदित्यानमरानतिक्रान्तमत्यादित्यं । 'आदितेया दिविषदो लेखा अदितिनन्दनाः । आदित्या ऋभवोऽस्वप्ना अमर्त्या अमृतान्धसः' इत्यमरः । 'प्रात्यवपरिनिःप्रत्यादयो गतक्रान्तक्रुष्टग्लानक्रान्तस्थितादिषु वेभ्याप्केभिः' इति प्रादिरिवन्तेन सह षसः । तत् प्रसिद्धं तेजः सूर्यातपरूपं त्वं अपि भवानपि भवतात् भव । 'तुह्योर्ङ्ताद्वा' इति लोटो मध्यमपुरुषैकवचनत्यस्य हेर्ङ्तादाशिष्यर्थे । भवितेत्यस्य तृतीयपुरुषैकवचनलुट्त्यान्तत्वात्कर्तुश्च मध्यमपुरुषार्थत्वाद् भ्रान्तत्वाद्

'भवतात्' इति लोटो रूपमस्माभिरुररीकृतम्। 'ण्वुतृचौ' इति तृजन्तस्य भवितृशब्दस्यापि परिहारः कृतः, वाक्यस्याऽपि सोपस्कारत्वप्रसङ्गाद्वर्तमानार्थकत्वाच्च तस्य।

Having seen this sinless one always engaged in worshipping the lord of Jinas who have rid themselves of birth, oldness and death, and who are worthy of being worshipped by the heavenly gods, you also, I hope, would be getting yourself transformed into that lustre (i. e. the sun), the foremost of the large number of the heavenly bodies (lit. gods; i. e. stars etc), found inherent in the fire, presented by the sky carrying the glorious moon with a view to protect the earthly living beings.

सोऽपि त्वत्तः श्रुतिपथसुखं गर्जितं प्राप्य बर्ही
तुष्टः केकाः प्रतिविकुरुते वाहनं तस्य भर्तुः।
ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति॥ ३३॥

अन्वयः— यस्य गलितं ज्योतिर्लेखावलयि बर्हं भवानी पुत्रप्रेम्णा कर्णे कुवलयदलप्रापि करोति सः अपि तस्य भर्तुः वाहनं बर्ही त्वत्तः श्रुतिपथसुखं गर्जितं प्राप्य तुष्टः केकाः प्रतिविकुरुते।

सोपीत्यादि। **यस्य** मयूरस्य **गलितं** कलापकलापात् च्युतं **ज्योतिर्लेखावलयि**। ज्योतिषां तेजसां लेखाः रेखाः राजयो वा ज्योतिर्लेखाः। 'लेखा रेखाराजीलिपिष्वपि' इति विश्वलोचने। तासां वलयानि मण्डलाकाराः अस्य सन्तीति ज्योतिर्लेखावलयि। 'अतोऽनेकाचः' इति इन्। बर्हं पिच्छं। 'बर्हं मयूरपिच्छेऽपि दलेपि स्यान्नपुंसकम्' इति विश्वलोचने। **भवानी** रुद्राणी। भवस्य रुद्रस्य पत्नी भवानी। 'वरुणभवशर्वरुद्रेन्द्रमृडात्' इति पुंयोगात् ङी भवत्यानुक्च। **पुत्रप्रेम्णा**। रुद्ररुद्राणीभ्यां स्कन्दस्य पुत्रत्वेनाभिलषितत्वात्साक्षात्तत्तनयत्वाभावात्कृतकतनयत्वाच्च 'पुत्रः इव पुत्रः' इति इवार्थककत्वस्य ग्रहणम्। पुत्रे प्रेमा स्नेहः पुत्रप्रेमा। तेन। पुत्रीयिते स्कन्दे यः प्रेमा तेन हेतुना तद्वाहनभूतमयूरस्य बर्हं **कर्णे** श्रोत्रप्रदेशे **कुवलयदलप्रापि**। कुवलयस्य कमलस्य यद्दलं पत्रं तत् प्राप्नोतीति कुवलदलप्रापि। कर्णजाहविनिवेशितकुवलयदलसमीपे स्थापयित्वा तद्योगि **करोति** विदधाति। यद्वा कुवलयदलं प्राप्नोति यत्र सः कुवलयदलप्राप्। क्विप्। तत्र कुवलयदलप्रापि कर्णे करोति। यत्र कर्णजाहे कुवलयदलं स्थाप्यते

तत्र कर्णप्रदेशे तद्बर्हं निवेशयतीति भावः । सः अपि तस्य स्कन्दाभिधानविघ्नहर-देवविशेषस्य भर्तुः विभोः वाहनं यानभूतः । नित्यनपुंसकलिङ्गत्वात् नपुंसकत्वम् । बर्ही मयूरः । बर्हाणि पिच्छानि सन्त्यस्येति बर्ही । 'अतोऽनेकाचः' इति इन् । त्वत्तः भवत्सकाशात् । श्रुतिपथसुखं । श्रुत्योः श्रोत्रयोः पन्थाः श्रुतिपथः । 'ऋक्पूरप्पथोऽत्' इत्यकारः सान्तः। श्रुतिपथस्य श्रोत्रविवरस्य सुखं सुखकरं श्रुतिपथसुखं । गर्जितं स्तनितं प्राप्य लब्ध्वा । श्रुत्वेत्यर्थः । तुष्टः सन्तुष्टः सन् केकाः केकारवान् । 'केका वाणी मयूरस्य' इत्यमरः । प्रतिविकुरुते प्रत्युक्तिरूपेण जनयति । त्वद्गर्जितं श्रुत्वा केकारवान् कुरुते इत्यर्थः ।

Even that peacock, the conveyance of that lord ( Skanda ), satisfied on receiving ( through ears ) your thundering pleasing to the ears, a dropped feather of whom possessing circles formed by streaks of lustre, does Bhavani ( lit. the beloved of the Rudra ), owing to her affection towards him taken by her into a relationship of a son, put on her ear in such a way as to make it come into contact with the petal of the blue lotus, gives out crackling sounds in response ( to your thundering ).

**यः सद्धर्मात्सकलजगतां पावकाल्लब्धजन्मा**
**तस्य प्रीत्या प्रथममुचितां सत्सपर्यां विधेहि ।**
**धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं**
**पश्चाददिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ३४ ॥**

अन्वय— यः सकलजगतां पावकात् सद्धर्मात् लब्धजन्मा तस्य प्रीत्या उचितां सत्सपर्यां प्रथमं विधेहि । पश्चात् हरशशिरुचा धौतापाङ्गं पावकेः तं मयूरं अद्रिग्रहण-गुरुभिः गर्जितैः नर्तयेथाः ।

य इत्यादि । यः स्कन्दाभिधानो देवः सकलजगतां सकलानां जगन्निवासिनां लोकानां । जगतामित्यनेन तन्निवासिनां लोकानां ग्रहणं, तात्स्थ्याल्लोकानां जगद्व्यप-देशात् । पावकात् । पुनातीति पावकः । 'ण्वुतृचौ' इति ण्वुः । सद्धर्मात् शोभना-द्धर्मात् । संश्चाऽसौ धर्मश्च सद्धर्मः । तस्मात् । लब्धजन्मा प्राप्तसम्भवः । लब्धं प्राप्तं जन्म सम्भवः येन सः लब्धजन्मा । तस्य पुण्योदयाद्देवभूयं प्राप्तस्य स्कन्दस्य प्रीत्या अनुरागेण । भक्त्येत्यर्थः उचितां योग्यां । तदर्हामित्यर्थः । सत्सपर्यां

समीचीनां पूजां । ' सपर्याऽर्चार्हणाः समाः ' इत्यमरः। **प्रथमं** पूर्वं । **विधेहि** कुरु । **पश्चात्** अनन्तरं **हरशशिरुचा** । शशिनश्चन्द्रमसः रुक् उद्योतः शशिरुक्। हरा मनोहरा चासौ शशिरुक् च हरशशिरुक् । हरत्यघं दुःखमिति हरा । पचाद्यच् स्त्रियां टाप् च । ' पुंवद्यजातीयदेशीये ' इति पुंवद्भावः । तया हरशशिरुचा । यद्वा हरस्य पूर्वोत्तरस्याः दिशः स्वामिनः यः शशी तस्य रुचा कान्त्या । ज्योत्स्नयेत्यर्थः । **धौतापाङ्गं** । धौतौ धवलीकृतौ अपाङ्गौ नेत्रान्तौ यस्य सः । तम् । ' अपाङ्गौ नेत्रयोरन्तौ ' इत्यमरः । **पावकेः** पावकस्य धर्मस्य पुत्रापत्यं पावकिः । ' इञतः ' इत्यपत्यार्थे इञ् । तस्य । **मयूरं** कलापिनं। स्कन्दस्य वाहनभूतं केकिनमित्यर्थः । **अद्रिग्रहणगुरुभिः** । अद्रेः देवगिरेः ग्रहणेन गह्वरे सङ्क्रमणेन गुरुभिः गौरवं प्राप्तैः । प्रवृद्धैरित्यर्थः । **गर्जितैः** गर्जिध्वनिभिः **नर्तयेथाः** नाटय । नृत्यं कारयेत्यर्थः । ' मयूरः नृत्यति ' इत्यत्राण्यन्तावस्थायां ' नृती गात्रविक्षेपे ' इत्यस्य धेर्धोर्मयूरप्राणिकर्तृकत्वाण्ण्यन्तावस्थायां ण्यन्ताद्धोः 'नाऽणौ धेः प्राणिकर्तृकाण्णे ' इति दस्य प्रतिषेधान्मं। नृत्यतेश्चलनार्थत्वात् 'चल्यद्यर्थात् ' इति ण्यन्तत्वात्प्राप्तं मं न भवति ' पादम्याङ्यसपरिमुहरुचिनृद्धेङ्वदसः ' इति दस्य विधानात् ।

First of all, you should perform deserving and excellent worship of him who owes his birth to the excellent righteousness purifying all the worlds. Thereafter, you should cause the peacock of the offspring of the purifier ( pāvaka ), with the angles of ( his ) eyes rendered ( more ) bright by the lustre of the captivating moon, to dance by ( your ) thunderings deepened on account of (their) being reverberated by the mountain ( Devagiri ).

हृद्ये स्वच्छे सरसि विपुले धर्मसञ्ज्ञे भवत्वा—
लब्धाभिख्यं भुवनजनतामाननीयं व्रजाऽऽशु ।
आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ॥ २५ ॥

अन्वयः— हृद्ये स्वच्छे विपुले धर्मसञ्ज्ञे सरसि भवत्वात् लब्धाभिख्यं भुवनजनतामाननीयं एनं शरवणभवं देवं आराध्य उल्लङ्घिताध्वा, जलकणभयात् वीणिभिः सिद्धद्वन्द्वैः मुक्तमार्गः आशु व्रज ।

हृद्येत्यादि । हृद्ये । हृदयाय हितं सुखकरं हृद्यं । 'प्राण्यंगरथखलयवमाषवृषब्रह्मतिलाद्यः' इति हृदयस्य प्राण्यङ्गत्वाद्धितार्थे यः । ये परतश्च 'हृदयस्य हृल्लेखाण्यलासे' इति हृत् । स्वच्छे निर्मले । निर्दोषे इत्यर्थः । विपुले पृथुले अगाधे वा । 'विपुलः पृथुलेऽगाधे मेरुपश्चिमपर्वते' इति विश्वलोचने । धर्मसञ्ज्ञे । धर्मः इति सञ्ज्ञाऽभिधानं यस्य तास्मिन् । 'सञ्ज्ञा नामनि गायत्र्यां चेतनारविभोषितोः । अर्थस्य सूचनायां च हस्तमस्तकलोचनैः' इति विश्वलोचने । सरसि तडागे । 'सरस्तोयतडागयोः' इति विश्वलोचने । भवत्वात् लब्धजन्मत्वात् । समुद्भूतत्वादित्यर्थः । लब्धाभिख्यं लब्धसञ्ज्ञं । लब्धा प्राप्ता अभिख्या सञ्ज्ञा विख्यातिर्वा येन सः । तम् । 'अभिख्या तु यशःकीर्तिशोभाविख्यातिनामसु' इति विश्वलोचने । भुवनजनतामाननीयं । जनानां समूहः जनता । 'गजग्रामजनबन्धुसहायात्तल्' इति समूहार्थे तल् । भुवनानां जगतां जनता भुवनजनता । तया तस्याः वा माननीयं पूज्यं । एनं स्कन्दाख्यं । शरवणभवं । शरं जलं वन्यते सेव्यतेऽत्र शरवणं । 'शरं वनं कुशं नीरं तोयं जीवनमव्विषम्' इति धनञ्जयः । यद्वा शराणामुदकानां वनं शरः शरवणं । 'प्राग्रेऽन्तर्निःशरेक्षुप्लक्षपीयूक्षाकार्श्याम्रखदिरात्' इति वननकारस्य णः । तत्र भवतीति, तत्र भवः जन्म यस्येति वा शरवणभवः । तम् । 'भवः श्रीकण्ठसंसारश्रेयःसत्तातिजन्मसु' इति विश्वलोचने । देवं स्वामिनं आराध्य पूजयित्वा उल्लङ्घिताध्वा अतिक्रान्तमार्गः । उल्लङ्घितः अतिक्रान्तः अध्वा मार्गः येन सः । जलकणभयात् सलिलबिन्दुपातभीतेः । जलस्य कणाः लवाः बिन्दवः जलकणाः । तेभ्यः भयं । तस्मात् । हेतौ का । वीणिभिः वीणा वल्लकिः अस्याऽस्तीति वीणी । 'अतोऽनेकाचः' इति इन् । तैः । सिद्धद्वन्द्वैः सिद्धानां देवविशेषाणां द्वन्द्वानि मिथुनानि सिद्धद्वन्द्वानि । तैः । 'द्वन्द्वं तु मिथुने युग्मे द्वन्द्वः कलहगुह्ययोः' इति विश्वलोचने । मुक्तमार्गः परिहृतमार्गप्रतिबंधः आशु शीघ्रं व्रज याहि ।

Having worshipped this god, sprung up from a lake, worthy of being worshipped by the crowds of people of the world, winning the name (Śaravaṇabhava) owing to his being sprung up from a lake called Dharma (righteousness) which is beautiful, clear, (and) expansive (or deep), you, that would have travelled some portion of the distance of your way, having your path left unclosed (by moving astray) by the couples of the Siddha gods possessing lutes through fear of the drops of water (or owing to their being afraid of the drops of water impairing the usefulness of their lutes), should proceed on immediately.

गत्वा तस्मादविरलगलन्निर्झरान्तर्मलां तां
प्राप्याऽकीर्तिं जनवदनजां क्षालयन्पुण्यतोयैः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥ ३६ ॥

अन्वयः— तस्मात् गत्वा अविरलगलन्निर्झरान्तर्मलां, सुरभितनयालम्भजां जनवदनजां भुवि स्रोतोमूर्त्या परिणतां रन्तिदेवस्य अकीर्तिं तां प्राप्य पुण्यतोयैः क्षालयन् (तां) कीर्तिं मानयिष्यन् व्यालम्बेथाः ।

गत्वेत्यादि । तस्मात् देवगिरेः । गत्वा यात्वा । तं देवगिरिं विमुच्याऽग्रतो गत्वेत्यर्थः । अविरलगलन्निर्झरान्तर्मलां । अविरलं सततं गलद्भिः प्रपतद्भिः निर्झरैः प्रपातैः प्रस्रवणैर्वा अन्तः मध्येप्रवाहं मलः जम्बालादिरूपः यस्याः सा । ताम् । 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमरः । सुरभितनयालम्भजां । सुरभेः कामधेनोः तनयाः सुताः सुरभितनयाः । गावः इत्यर्थः । तासां आलम्भाद्विशसनात् जायते इति सुरभितनयालम्भजा । तां । 'सुरभिर्गवि च स्त्रियां' इत्यमरः । आलम्भनमालम्भः विशसनमित्यर्थः । 'आलम्भपिञ्जविशरघातोन्माथवधा अपि' इत्यमरः । 'घञि च गेः' इति लभेर्गिपूर्वस्य नुमागमः । जनवदनजां । जनानां वदनानि मुखानि जनवदनानि । तेभ्यो जायते इति जनवदनजा । ताम् । भुवि जगत्यां स्रोतोमूर्त्या प्रवाहाकारेण । स्रोतसः प्रवाहस्य मूर्तिः शरीरं स्रोतोमूर्तिः । तया । 'स्रोत इन्द्रिये निम्नगारये ।' इत्यमरः । 'स्रवति स्रोतः । रयः प्रवाहो लक्षणया स्रोतः' इति क्षीरस्वामी । 'मूर्तिः कायेऽपि काठिन्ये मृत्युयाचितयोर्मतम्' इति विश्वलोचने । परिणतां अवस्थान्तरं प्राप्तां । रन्तिदेवस्य दशपुराधिपतेर्महाराजस्य । यदुक्तं 'अथ प्रीतो राजा पशुनिवहमालभ्य विधिना । बहूनीजे यज्ञान्बहुमतिपदं भू-दिविषदाम् ॥ विशस्तानां तस्यां मखभुवि पशूनामयुतशः । स्रवन्ती सस्यन्दे क्षतजविसरैश्चर्मगलितैः ॥ चर्मण्वतीति तव कीर्तिरनन्तकीर्तेः शश्वत्पुनातु धरणीं सरिदात्मनेति' इति रन्तिदेवचरिते । अकीर्तिं सुरभिसहस्रालम्भजमयशः तां प्रसिद्धां चर्मण्वतीनदीं प्राप्य आसाद्य पुण्यतोयैः पावनोदकैः । पुण्यानि पावनानि तोयानि जलानि पुण्यतोयानि । तैः । तीर्थोदकैरित्यर्थः । क्षालयन् प्रक्षाल्य विशोधयन् तां नदीं कीर्तिं यशः मानयिष्यन् सम्भावयितुमिच्छन् । 'क्षिप्राशंसोक्तौ लट्‌लिङ्' इत्याशंसायामिच्छायां लटि'लटो वाऽनितौ शतृशानौ' इति शतृत्यः । रन्तिदेवस्य कीर्तिरेतन्नदीस्रोतोरूपेण

परिणताऽस्तीत्येषा तस्य महाराजस्य कीर्तिरेवेति सम्भावयन्नित्यर्थः। व्यालम्बेथाः आश्रयेथाः। तन्नद्याश्रयं कुर्वित्यर्थः। 'पुरा किल राज्ञः रन्तिदेवस्य गवालम्भेष्वेकत्र सम्भृताद्रक्तनिष्यन्दाच्चर्मराशेः काचिन्नदी सस्यन्दे। सा चर्मण्वतीत्याख्यायते' इत्युक्तं मल्लिनाथेन मेघदूतटीकायाम्। गोसहस्रविशसनजनितां अकीर्तिं स्रोतोमूर्त्या परिणतां चर्मण्वतीं विज्ञाय तां प्राप्य पुण्यतोयैः प्रक्षाल्य विशोधयन् इयं रन्तिदेवस्य कीर्तिरूपाऽस्तीति तां सम्भावयितुमिच्छंस्तामाश्रयेथाः इति तात्पर्यम्।

Having departed from that (i. e. the Devagiri mountain) and having approached her (i. e. Charmanvati) who possesses dirt in her stream owing to the rivulets (or streams) incessantly pouring into her, who is the infamy, come into being owing to the slaughter of the daughters of Surabhi (i. e. cows), spreading through the mouths of people and bringing itself into the shape of a river (i. e. the Charmanvatī) on the earth, you, washing her off by holy waters and honouring her (the river) as the fame (of Rantideva), should have recourse to her (i. e. the Charmanvatī).

तस्या मध्येजलमुपचिताम्भोनिकाये मुहूर्तं
छायां कृष्णाजिनमदहरां सन्दधाने समग्राम्।
मन्ये युक्तं सरिति सुतरां तत्र चर्मण्वतीति
त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे ॥ २७ ॥

अन्वयः— तत्र सरिति शार्ङ्गिणः वर्णचौरे त्वयि जलं आदातुं अवनते तस्याः मध्येजलं उपचिताम्भोनिकाये कृष्णाजिनमदहरां समग्रां छायां मुहूर्तं सन्दधाने (सति तस्याः) 'चर्मण्वती' इति (अभिधानं) सुतरां युक्तं मन्ये।

तस्या इत्यादि। तत्र सरिति तस्यां चर्मण्वत्यभिधानायां नद्यां शार्ङ्गिणः कृष्णाभिधानस्य बलभद्रभ्रातुर्नारायणस्य। शृङ्गस्य विकारः शार्ङ्गं। 'तस्य विकारः' इत्यण्। शार्ङ्गं धनुरित्यर्थः। तदस्यास्तीति शार्ङ्गी। 'अतोऽनेकाचः' इतीन्। तस्य शार्ङ्गिणः। पीताम्बरनिवसनस्य गोविन्दस्येत्यर्थः। 'दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः। पीताम्बरोऽच्युतः शार्ङ्गी विश्वक्सेनो जनार्दनः' इत्यमरः। वर्णचौरे।

वर्णस्य कान्तेश्चौरः तदनुज्ञामन्तरेण तत्कान्तिग्राहकत्वादत्र मेघस्य चौरत्वम्। नारायणसवर्णः इत्यर्थः। तस्मिन्। त्वयि भवति। जलं चर्मण्वतीसलिलं आदातुं गृहीतुं अवनते निचैरागते तस्याः चर्मण्वत्याः मध्येजलं जलमध्यदेशे। 'पारेमध्येऽन्तस्तया' इति तान्तेन ह्रसः मध्यशब्दस्यैत्वनिपातश्च। मध्यं जलस्य मध्येजलं। जलमध्यभागे इत्यर्थः। उपचिताम्भोनिकाये सञ्चितवाराशौ। सञ्चितजलसमूहे इत्यर्थः। 'वार्वारि कं पयोऽम्भोऽम्बु पाथोऽर्णं सलिलं जलं' इति धनञ्जयः। 'निदिग्धोपचिते...(समे)' इत्यमरः। 'निकायस्त्वात्मवेश्मनोः। सधर्मिनिवहे लक्ष्ये संहतानां च मेलके' इति विश्वलोचने। उपचितानां अम्भसां सलिलानां निकायः संहतिः उपचिताम्भोनिकायः। तस्मिन्। कृष्णाजिनमदहरां कालवर्णचर्मगर्वं खर्वयन्तीम्। कृष्णं कालायसवर्णत्वात्कालवर्णं च तदजिनं चर्म च कृष्णाजिनं। तस्य मदं गर्वं हरतीति कृष्णाजिनमदहरा। ताम्। समग्रां सम्पूर्णां छायां प्रतिबिम्बं। 'छाया स्यादातपाभावे सत्कान्त्युत्कोचकान्तिषु। प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने। मुहूर्तं क्षणमात्रकालं यावत्। सन्दधाने प्रयच्छति सति। तज्जलनिकाये स्वात्मनि प्रतिबिम्बिते सतीत्यर्थः। तस्याः नद्याः 'चर्मण्वती' इति अभिधानं फलकवतीति नामधेयं। पयःपतितत्वदाकारप्रतिबिम्बस्य वर्णाकृत्यादिना फलकतुल्यत्वात्त्वत्प्रतिबिम्बवत्यास्तस्याश्चर्मण्वतीति नामधेयं सुतरां अतिशयेन युक्तं योग्यं समीचीनं वा। युक्तरूपमित्यर्थः। मन्ये जानामि। चर्म फलकं अस्याः अस्तीति चर्मण्वती। 'चर्मण्वत्यष्ठीचक्रीवत्कक्षीवद्रुमण्वत्' इति नदीनाम्नि चर्मणः परस्य मतोर्नुडागमो निपातितः मृदन्तस्य च नस्य खम्। 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नस्य णः। फलकस्य चर्ममयत्वाच्चर्मेति सञ्ज्ञा। यद्वा यथा चर्ममयत्वात्फलकस्य चर्मसञ्ज्ञाविधानं तथा चर्ममयत्वात् 'चर्मोदरे पूरेः' इति सूत्रविहितणमन्तस्य चर्मपूरमित्यस्य 'चर्म पूरयित्वा' इत्यर्थस्य दर्शनाच्च चर्मशब्दस्य दृत्यर्थकत्वमप्यत्र सम्भवति। तेन चर्मण्वतीत्यस्य दृतिमतीत्यर्थो ग्राह्यः। तत्र चर्मण्वतीसरिति कालवर्णविकृतभवच्छरीरप्रतिबिम्बदर्शनात्प्रतिबिम्बितभवच्छरीरस्य च दृतितुल्यत्वात्तस्याश्चर्मण्वतीति सञ्ज्ञाकरणं समीचीनमिति शम्बरासुराभिप्रायः।

In that river there when you, the spoiler of the complexion of Kṛṣṇa, descended to take up her water, would be having for a moment your reflection in full, dissipating the pride of the hide of a black-antelope, in the water of her pool formed by accumulated water, I would think that the name Charmanvatī given to that river is absolutely deserving.

त्वय्यभ्यर्णे हरति सलिलं तत्र राहोस्सवर्णे
नूनं ज्योत्स्नाविसरविमलं तर्कयेयुर्नभोगाः ।
मध्ये नीलं सितमिव दुकूलोत्तरीयं पृथिव्याः
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ॥ ३८ ॥

अन्वयः— राहोः सवर्णे त्वयि तत्र अभ्यर्णे सलिलं हरति ( सति ) तस्याः सिन्धोः पृथुं अपि तनुं ज्योत्स्नाविसरविमलं प्रवाहं नभोगाः पृथिव्याः मध्ये नीलं सितं दुकूलोत्तरीयं इव नूनं तर्कयेयुः ।

त्वयीत्यादि । राहोः विधुन्तुदस्य । 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः । रहयति चन्द्रार्काविति राहुः । **सवर्णे** समानकान्तौ । 'समानस्य धर्मादिषु' इति समानस्य सादेशः । समानः वर्णः कान्तिः यस्य सः । तस्मिन् । 'अथ पुंस्येव वर्णः स्यात्स्तुतौ रूपयशोगुणे । रागे द्विजादौ मुक्तादौ शोभायां चित्रकम्बले ॥' इति विश्वलोचने । **त्वयि** भवति । **तत्र** चर्मण्वतीनद्यां **अभ्यर्णे** समीपप्रदेशे । नदीसमीपप्रदेशमागत्येत्यर्थः । **सलिलं** जलं **हरति** आत्मसात् कुर्वति सति । हरतीति हरन् । तस्मिन् । **तस्याः** चर्मण्वत्याः **सिन्धोः** नद्याः । 'सिन्धुरब्धौ नदे देशभेदे ना सरिति स्त्रियाम्' इति विश्वलोचने । **पृथुं अपि** महान्तं अपि **दूरभावात्** दूरदेशस्थितत्वात् **तनुं** स्वल्पशरीराकारतया प्रतिभासमानं **ज्योत्स्नाविसरविमलं** चन्द्रिकाप्रसरनिर्मलं । ज्योत्स्नायाः चन्द्रिकायाः विसरेण विसरवद्वा विमलं विगतमलं । निर्मलमित्यर्थः । द्वितीयपक्षे 'सामान्येनोपमानं' इति षसः । 'विसरः प्रसरे पुंसि विसरो निकुरम्बके' इति विश्वलोचने । **प्रवाहं** स्रोतसं **नभोगाः** खेचराः । नभसा गच्छन्तीति नभोगाः विहायश्चराः । खगाः इत्यर्थः । 'गमेः खच्खड्डाः' इति गमेर्डः । **पृथिव्याः** भूमेः **मध्ये** मध्यदेशे **नीलं** नीलवर्णं **सितं** धवलवर्णं **दुकूलोत्तरीयं** क्षौमसंव्यानं सूक्ष्मवासोरूपं वा संव्यानं । 'दुकूलमद्वयोः क्षौमे दुकूलः सूक्ष्मवाससि' इति विश्वलोचने । दुकूलं दुकूल एव वोत्तरीयं दुकूलोत्तरीयम् । 'संव्यानमुत्तरीयं च' इत्यमरः । **इव** वा । **नूनं** निश्चयेन **तर्कयेयुः** सम्भावयेयुः । अत्र नदीप्रवाहस्य नीलमध्यमभागेन सितोत्तरीयेण सादृश्यं ज्योत्स्नाविसरविमलप्रवाहपतितमेघप्रतिबिम्बत्वादित्यवसेयम् ।

The sky-wanderers would verily regard the current, as transparent as ( or transparent on account of ) the diffusion of the moon-

light, of the river ( Charmaṇvatī ), though broad, looking thin on account of its being at a long distance, as a silken white uppergarment of the earth possessing blue colour in the middle part, when, in the vicinity there, you, possessing complexion similar to that of Rāhu, would be taking in water.

विद्युद्वर्ध्रीविततवपुषं कालिकाकर्बुराङ्गं
त्वामामन्द्रध्वनितसुभगं पूर्यमाणं पयोभिः ।
क्रीडाहेतोः शितिमिव दृतिं स्वर्वधूभिर्विमुक्तां
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टीः ॥ ३९ ॥

अन्वयः— विद्युद्वर्ध्रीविततवपुषं कालिकाकर्बुराङ्गं, आमन्द्रध्वनितसुभगं, पयोभिः पूर्यमाणं त्वां स्वर्वधूभिः क्रीडाहेतोः विमुक्तां शितिं दृतिं इव गगनगतयः दृष्टीः आवर्ज्य नूनं प्रेक्षिष्यन्ते ।

विद्युदित्यादि । विद्युद्वर्ध्रीविततवपुषं । विद्युत् सौदामन्येव वर्ध्री नद्ध्री विद्युद्वर्ध्री । वर्धते दीर्घीभवति चर्मरज्जुत्वाद्वर्ध्री ' इति क्षीरस्वामी । तया विशेषेण ततं व्याप्तं वपुः शरीरं यस्य सः । तम् । विद्युद्वरत्रासंव्याप्तदेहमित्यर्थः । ' नद्ध्री वर्ध्री वरत्रा स्यात् ' इत्यमरः । कालिकाकर्बुराङ्गं । कालिकया काष्र्ण्येन कर्बुरं चित्रमङ्गं शरीरं यस्य सः ।तम् । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ' इत्यमरः । यद्वा कालिकेव रोमावलीव वायसीव, मेघजालमिव, धूम इव, नवनीरद इव वा कर्बुरमङ्गं यस्य सः । तम् । कृष्णवर्ण-शरीरमित्यर्थः । ' कालिका चण्डिकायां स्याद्योगिनीभेदकाष्र्ण्ययोः । पश्चाद्दातव्यमूल्ये च पटोलकलतान्तरे॥ रोमालीधूमरीमांसीकाकीवृश्चिकपत्रके॥ घनावलावलं धूमप्रभेदे नवनीरदे॥' इति विश्वलोचने । आमन्द्रध्वनितसुभगं ईषद्गम्भीरस्तनितमनोहरं । आ ईषत् मन्द्रं गम्भीरं आमन्द्रं । ' मन्द्रस्तु गम्भीरे ' इत्यमरः । आमन्द्रध्वनितेन सुभगः । तम् । पयोभिः सलिलैः पूर्यमाणं भ्रियमाणं । पूर्यते इति पूर्यमाणस्तम् । जलमात्मसात्कुर्वाण-मित्यर्थः । त्वां भवन्तं । स्वर्वधूभिः स्वर्गाङ्गनाभिः क्रीडाहेतोः क्रीडार्थं । हेतुशब्द-प्रयोगे ता । विमुक्तां काचितां शिक्यितां वा शितिं मेचकवर्णाम् । कृष्णामित्यर्थः । ' शिती धवलमेचकौ' इत्यमरः । ' शिञ् निशाने, मेचकः कृष्णः ' इति क्षीरस्वामी । दृतिं इव जलोदञ्चनं चर्ममयं पात्रं इव । ' मोट, पखाल' इति महाराष्ट्र्याम् । गगन-गतयः नभश्चराः सिद्धविद्याधरादयः । विहायसि गतिर्गमनं येषां ते । ' अवर्ज्यो

बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' ( काव्या. सू. ५-२-१९ ) इति वामनः । दृष्टीः नयनानि आवर्ज्य परिवर्त्य । नेत्रपरिवर्तनं कृत्वेत्यर्थः । नूनं अवश्यं । 'नूनमवश्यं निश्चये द्वयम्' इत्यमरः । प्रेक्षिष्यन्ते अवलोकयिष्यन्ति । अम्बरचारिणस्ते धूम्रवर्णत्वात्खेचरास्त्वां स्वदृष्टीः परिवर्त्यावलोकयन्तः कूपोदराज्जलोदञ्चनचर्ममयपात्रमिव सम्भावयेयुरिति भावः ।

The sky-wanderers would verily be looking upon you, with your body encircled with a leathern thong in the form of lightning, with your body darkened like smoke, charming owing to your rumbling sounds, absorbing water, as a black leathern bag meant for drawing water sustained ( between heaven and earth ) by the heavenly women for the sake of making sport.

अध्यासीने त्वयि कुवलयश्यामभासि क्षणं वा
सिन्धोरस्याः शशधरकरस्पर्धिनं तत्प्रवाहम् ।
द्रक्ष्यन्त्यग्राद्ध्रुवमनिमिषा दूरमावर्ज्य दृष्टीः
एकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४० ॥

अन्वयः— अस्याः सिन्धोः शशधरकरस्पर्धिनं तत्प्रवाहं कुवलयश्यामभासि त्वयि क्षणं वा अध्यासीने स्थूलमध्येन्द्रनीलं भुवः एकं मुक्तागुणं इव अनिमिषाः दृष्टीः दूरं आवर्ज्य अग्रात् ध्रुवं द्रक्ष्यन्ति ।

अधीत्यादि । अस्याः वर्ण्यविषयभूतायाः सिन्धोः चर्मण्वत्याख्यायाः निम्नगायाः शशधरकरस्पर्धिनं शशधरस्य क्षपाकरस्य करैः किरणैः स्पर्धते साम्यमातनुते इति शशधरकरस्पर्धी । तम् । क्षपाकरकराकारसदृशमित्यर्थः । तत्प्रवाहं । सः सर्वजनप्रसिद्धश्चासौ प्रवाहः स्रोतश्च तत्प्रवाहः । तम् । कुवलयश्यामभासि नीलोत्पलनीलवर्णे । कुवलयं नीलोत्पलम् । कुवलयस्याब्जत्वसामान्येऽपि सामान्यस्य विशेषवृत्तेः नीलोत्पलत्वमर्थतो विज्ञेयम् । 'स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च' इत्यमरः । कुवलयमिव श्यामा नीला कुवलयश्यामा । 'सामान्येनोपमानं' इति षसः । कुवलयश्यामा भाः रुक् यस्य कुवलश्यामभाः । तस्मिन् । 'भाः प्रभावे रुचि स्त्रियाम्' इति विश्वलोचने । त्वयि भवति क्षणमिव क्षणमात्रकालं यावत् अध्यासीने आस्थिते सति । 'कर्मवाधेः शीङ्स्थाऽऽसः' इत्यधिपूर्वस्य शीङ आधारस्य कर्म-

स्वम् । स्थूलमध्येन्द्रनीलं । स्थूलः महान् मध्यः मुक्तागुणमध्यदेशस्थितः 'मध्यं न्याय्येऽवकाशे च मध्यं मध्यस्थिते त्रिषु' इति विश्वलोचने । स्थूलः मध्यः इन्द्रनीलो मणिविशेषः यस्य सः । तम् । मध्यदेशस्थितस्थूलकायेन्द्रनीलमणिकमित्यर्थः । भुवः पृथिव्याः एकं एकयष्टिकं मुक्तागुणं इव मौक्तिकनिबद्धसरमिव अनिमिषाः सुराः । 'सुरे मत्स्येऽप्यनिमिषः सुरे मत्स्येऽनिमेषवत्' इति विश्वलोचने । दृष्टीः नयनानि दूरं आवर्ज्य व्यापार्य । प्रक्षिप्येत्यर्थः । अग्रात् उन्नततरादाकाशप्रदेशात् ध्रुवं अवश्यं 'ध्रुवं तु निश्चिते तर्के नित्यनिश्चलयोस्त्रिषु' इति विश्वलोचने । द्रक्ष्यन्ति विलोकयिष्यन्ति । नीलोत्पलतुल्यनीलिमालङ्कृतकायं चर्मण्वतीवेण्यां प्रतिबिम्बितं भवन्तं हारमध्यमणिनीकाशं गणयित्वा तं प्रवाहं 'भुवो हारयष्टिरिवायं प्रवाहः' इति तर्कयिष्यन्तीति तात्पर्यम् ।

When you, possessing complexion as dark as that of a blue lotus, would, for a moment, be hanging over the stream of the river (Charmanvatī), carrying on rivalry with the rays of the moon, the gods, casting their glances at a very long distance, would certainly be looking from the uppermost part (of the sky) upon the current as a single string of pearls worn (lit. of) by the earth having a big sapphire at its centre.

एवम्प्रायां सलिलविहृतिं तत्र कृत्वा मुहूर्तं
वारां पुण्यां सुरगज इव व्योममार्गानुसारी ।
लीलां पश्यन् प्रजविपवनोद्धूतवीचीचयानां
तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणाम् ॥ ४१ ॥

अन्वयः— तत्र एवम्प्रायां सुरगजः इव सलिलविहृतिं मुहूर्तं कृत्वा व्योममार्गानुसारी प्रजविपवनोद्धूतवीचीचयानां परिचितभ्रूलताविभ्रमाणां वारां पुण्यां लीलां पश्यन् तां उत्तीर्य व्रज ।

एवमित्यादि । तत्र चर्मण्वतीनद्यां एवम्प्रायां एतादृशीं सुरगजः इव ऐरावतः इव सलिलविहृतिं जलविहारं । सलिले जले विहृतिः विहारः क्रीडा सलिलविहृतिः । ताम् । मुहूर्तं मुहूर्तमात्रकालं यावत् । कृत्वा विधाय । व्योममार्गानुसारी विहायसा गच्छन् । व्योम्नः व्योमैव वा मार्गः व्योममार्गः । तमनुसरतीति व्योममार्गानुसारी ।

'शीलेऽजातौ णिन्' इति शीलार्थे णिन्। **प्रजविपवनोध्दूतवीचीचयानां**। प्रकृष्टः जवः वेगः प्रजवः। 'वेगे जवो वेगिनि वाच्यवत्' इति विश्वलोचने। 'अतोऽनेकाचः' इत्यस्त्यर्थे इन् जवशब्दस्यानेकच्त्वात्। प्रजवी वेगवांश्चासौ पवनश्च प्रजविपवनः। तेन वायुना उद्धूताः उत्कम्पिताः वीचीनां चयाः समूहाः यत्र। तेषां वारां। 'प्रजवी जवनो जवः' इत्यमरः। **परिचितभ्रूलताविभ्रमाणां**। भ्रुवः लताः इव। 'व्याघ्रादिभिरुपमेयोऽतद्योगे।' इति भ्रूशब्दस्योपमेयभूतस्योपमानभूतलताशब्देन षसः, सामान्यस्यायोगात्। भ्रूलतानां विभ्रमाः विलासाः भ्रूलताविभ्रमाः। परिचिताः विज्ञाताः अभ्यस्ताः वा भ्रूलताविभ्रमाः याभिः ताः तासाम्। यद्वा परिचिताः सर्वजनविज्ञाताः भ्रूलतानां विभ्रमाः इव विभ्रमाः यासां ताः। तासाम्। 'इवुपमानपूर्वस्य ग्रुखं गतार्थत्वात्' इति ग्रुखं। **वारां** सलिलानां 'वार्वारि कं पयोऽम्भोऽम्बु पाथोऽर्णं सलिलं जलं' इति धनञ्जयः। **पुण्यां** मनोज्ञां। 'पुण्यं तु सुकृते धर्मे त्रिषु मध्यमनोज्ञयोः' इति विश्वलोचने। **लीलां** विलासं **पश्यन्** विलोकयन् **तां** चर्मण्वतीं नदीं **उत्तीर्य** उल्लङ्घ्य **व्रज** गच्छ।

Having thus sported in the water there for a moment like a celestial elephant ( Airāvata ) you, moving on the heavenly way, having crossed her, proceed on seeing the charming sports of the waters possessing multitudes of waves roused up by forcible wind and well-acquainted with the movements like those of the creeper-like eyebrows.

**तस्याः सिन्धोरनुवनमुदक्तीरभाजां लताना-**
**मुत्फुल्लानां ततमधुलिहां मुक्तधारं प्रवर्षन्।**
**सीतापूरं व्रज लघु ततो जातहार्दस्तु मानात्**
**पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम्॥ ४२॥**

अन्वयः— तस्याः सिन्धोः उदक् अनुवनं तीरभाजां उत्फुल्लानां ततमधुलिहां लतानां मुक्तधारं सीतापूरं प्रवर्षन् ततः तु पक्ष्मोत्क्षेपात् उपरिविलसत्कृष्णशारप्रभाणां मानात् जातहार्दः लघु व्रज।

**तस्या** इत्यादि। **तस्याः सिन्धोः** पूर्वत्र श्लोके वर्णितायाः चर्मण्वतीसञ्ज्ञकाया नद्याः **उदक्** उत्तरस्यां दिशि। उदीच्या अञ्चत्यन्तत्वाद्दिशि वर्तमानत्वादीवन्ताद् 'दिग्भ्यो वाकेभ्योऽस्तात् दिग्देशकाले' इतिसूत्रविहितस्याऽस्तातः 'वैनोऽदूरेऽकायाः' इतिसूत्रविहितस्य चैनस्य 'अञ्चेरुप्' इत्युप्। **अनुवनं** वने। 'झिःसुब्व्यृद्ध्यृद्ध्यर्थाभावातीत्यस-

म्प्रतिशब्दख्यातिपश्चाद्यथायुगपत्सम्पत्साकल्यान्ते ' इति ईत्रर्थे द्दसः । **तीरभाजां** तीरप्रदेशे विरूढानां । तीरं भजते इति तीरभाक् । तेषां तीरभाजां । 'भजो ण्विः' इति सुपि वाचि भजोर्ण्विः । **उत्फुल्लानां** सञ्जातकुसुमानां । 'समुदः' 'इति 'ञिफला विशरणे' इत्यस्य धोः फुल्लो निपातितः उदः परत्वात्तस्य । **ततमधुलिहां** प्रसृतभ्रमराणां । तताः प्रसृताः मधुलिहः मधुकराः यासु ताः । तासाम् । मधु क्षौद्रं लेढीती मधुलिट् । क्विप् । 'विसृतं विस्तृतं ततं' इत्यमरः । **लतानां** वल्लरीणां । 'प्रततिर्वल्लरी लता' इति धनञ्जयः । **मुक्तधारं** । मुक्ताः अप्रतिबध्दाः धाराः जलसम्पाताः यस्मिन् कर्मणि तत् । **सीतापूरं** सीताः हलकृष्टाः भूमयः यावता जलेन पूर्णाः भविष्यन्ति तावत् । वर्षेयत्त्वेऽ स्योत्वं वा ' इति वृष्टिप्रमाणेऽर्थे कर्मणि वाचि पूरयतेर्णम् । 'सीता तु जानकीव्योम-गङ्गालाङ्गलवर्त्मसु' इति विश्वलोचने । **प्रवर्षन्** वृष्टिं विदधानः **ततः** तु तस्मात् प्रदेशात् तदनन्तरं वा । पक्ष्मोत्क्षेपात् । पक्ष्मणां नेत्रलोम्नां उत्क्षेपः उन्नमनं पक्ष्मोत्क्षेपः । तस्मात् । हेतावत्र का । नेत्रलोमोन्नमनाद्धेतोरित्यर्थः । 'पक्ष्म लोचनलोमनि । पक्ष्म सूत्रादिसूक्ष्मांशे पक्ष्म स्यात्केशरेऽपि च' इति विश्वलोचने । **उपरिविलसत्कृष्णशार-प्रभाणां** । उपरि लोचनलोम्नामुत्क्षेपादूर्ध्वभागे विलसन्त्यः कृष्णशाराः प्रभाः यासां ताः । तासां । दशपुरवास्तव्यानां स्त्रीणामित्यर्थः । कृष्णाश्च ताः शाराः कृष्णरक्तसिताश्च कृष्णशाराः । 'कृष्णरक्तसिताः शाराः' इति यादवः । 'शारस्तु शबले वाते' इति विश्वलोचने । 'वर्णो वर्णैः' इति सः । शारशब्दादेव कृष्णवर्णत्वसिद्धेः पुनरपि कृष्णपदो-पादानं दोषावहमिति चेत्, न, तस्य कृष्णवर्णप्राधान्यप्रतिपादनार्थत्वात् । **मानात्** मानं प्राप्य । मानं सम्मानं पूजां वा प्राप्येत्यर्थः । 'प्यखे कर्माधारे' इति प्राप्येति प्यान्तस्य खे कर्मणि का । 'मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे । मानः स्यादपि पूजायां' इति विश्वलोचने । **जातहार्दः** जातानन्दः । जातं हार्दं प्रेम आनन्दो वा यस्य सः । हृदयस्य भावः हार्दम् । हार्दं प्रेम आनन्दः । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः । 'हृदयपुरुषादसे' इति भावेऽण् । अणि च 'हृदयस्य हृल्लेखाण्यलासे' इति हृदादेशः । प्रोषितस्वभर्तृप्रत्यागमनकालजिज्ञासया मेघागमनविलोकितुकामाभिर्भवदवलो-कनजनितसन्तोषाभिर्विहितात्सम्मानाज्जातामन्दानन्दो भवानित्यर्थः । लघु शीघ्रं व्रज याहि ।

Pouring incessantly heavy showers of rain in the forest on the creepers, grown on the northern bank, bearing full-blown flowers, having bees diffused in them, so as to fill the furrows cut in the soil by ploughs to their utmost capacity, you, become delightful on account of your being honoured by the women ( of Dasapur ), with their dark

and variegated lustre shooting up from the eyes owing to their lifting up of the eye-lashes, should proceed on speedily from that place.

गच्छन्मार्गे प्रियमुपहरेः प्राणनाथोपयान-
प्रत्याश्वासाद्वियति सुदृशां कृष्णशारोदराणाम् ।
लक्षीकुर्वन् पथिकवनितालोचनोल्लासकानां
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बम् ॥ ४३ ॥

अन्वयः— वियति मार्गे गच्छन् कृष्णशारोदराणां कुन्दक्षेपानुगमधुकरश्रीमुषां पथिकवनितालोचनोल्लासकानां आत्मबिम्बं लक्षीकुर्वन् सुदृशां प्राणनाथोपयानप्रत्याश्वासात् प्रियं उपहरेः ।

गच्छन्नित्यादि । वियति आकाशे मार्गे अध्वनि गच्छन् प्रयान् कृष्णशारोदराणां । कृष्णं च तत् शारं च कृष्णशारं । 'वर्णो वर्णैः' इति यसः । कृष्णशारं उदरं मध्यभागः येषां ते । तेषाम् । "कृष्णसारोदराणां । कृष्णसारस्येव मृगविशेषस्येव उदरं यासां तासाम् । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररोहिषाः' इत्यमरः । तलोदरीणामित्यर्थः" इति यद्योगिराजेनोक्तं तन्न समीचीनं, तलोदरीणामित्यस्य घटाकारोदरीणामित्यर्थकत्वात्काव्यसौन्दर्यहानेः । कुन्दक्षेपानुगमधुकरश्रीमुषां । कुन्दानि माघ्यकुसुमानि । 'माघ्यं कुन्दं' इत्यमरः । कुन्दानि कुन्दकुसुमानि । 'पुष्पमूले बहुलं' इति पुष्पत्यस्योस् । तेषां क्षेपः इतस्ततश्चलनं । तमनुगच्छन्तीति तस्याऽनुगाः अनुसारिणो वा कुन्दक्षेपानुगाः । ते च ते मधुकराः मधुलिहश्च । तेषां श्रीः सौन्दर्यं । तां मुष्णन्तीति । क्विप् । तेषाम् । समीरणनुन्नकुन्दकुसुमक्षेपानुसारिभ्रमरदेशीयानामित्यर्थः । पथिकवनितालोचनोल्लासकानां । पथिकाः पन्थानं प्रयान्तः । 'पथष्ठट्' इति यात्यर्थे ठट् । पथिकानां प्रोषितत्वात्पथि चरतां वनिताः स्त्रियः पथिकवनिताः तासां लोचनानि नयनानि । तेषां उल्लासकाः विलासाः प्रक्षेपाः प्रभाः वा । तेषाम् तासां वा । उल्लासः एव उल्लासकः । तेषाम् प्रोषितभर्तृककामिनीनयनप्रभाणामित्यर्थः । आत्मबिम्बं नैजं मण्डलाकारं शरीरं लक्षीकुर्वन् गोचरतां नयन् । अलक्षं लक्षं करोतीति लक्षीकुर्वन् । सुदृशां प्रोषितभर्तृकाणां कामिनीनां प्राणनाथोपयानप्रत्याश्वासात् स्वप्रियकरप्रत्यागमनविश्वासमुत्पाद्य । प्राणनाथस्य प्रियकरस्य उपयानं प्रत्यागमनं । तस्मिन् प्रत्याश्वासः विश्वासः । तस्मात् । तमुत्पाद्येत्यर्थः । 'ल्यपखे कर्माधारे' इति ल्यान्तस्य खे कृते कर्मणः

का। प्रियं अभीष्टं। 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्' इत्यमरः। उपहरेः विधेहि।

You, proceeding on your way in the sky, and making your round form the object of the glances of the eyes of the wives of those gone abroad–glances, black and variegated in the interior, depriving the bees following the tossings of the Kunda-flowers of their beauty, should do what is dear to them by inspiring confidence in them regarding the arrival of their lovers.

**तस्मिन्नध्वन्यनतिचिरयन्नध्वनीनः प्रयायाः**
**यस्मिन्यात्राफलमविकलं लप्स्यसे दैवयोगात्।**
**जैत्रेषूणामिव हृदिशयस्यायतानां स्वबिम्बं**
**पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम्॥ ४४॥**

अन्वयः— हृदिशयस्य जैत्रेषूणां इव आयतानां दशपुरवधूनेत्रकौतूहलानां स्वबिम्बं पात्रीकुर्वन् यस्मिन् दैवयोगात् अविकलं यात्राफलं लप्स्यसे तस्मिन् अध्वनि अध्वनीनः (त्वं) अनतिचिरयन् प्रयायाः।

**तस्मिन्नित्यादि।** **हृदिशयस्य** कामस्य। हृदि हृदये मनसि वा शेते हृदिशयः। 'आधारे' इत्याधारे वाचि शीङोऽत्यः। 'हृच्चित्तवुक्कयोः क्लीबं' इति विश्वलोचने। तस्य। हृदिशयः मनसिजः। कामः इत्यर्थः। **जैत्रेषूणां इव** जेतृबाणानामिव। जेत्रैव जैत्रं। प्रज्ञादित्वादण्। **आयतानां** दीर्घाणां। 'सुदूरे दीर्घमायतौ' इत्यमरः। **दशपुरवधूनेत्रकौतूहलानां।** दशपुरं रन्तिदेवस्य राजधानी। तत्र विद्यमानानां वधूनां स्त्रीणां नेत्रकौतूहलानां नेत्राभिलाषाणां। साभिलाषदृष्टीनामित्यर्थः। 'कुतूहलं कौतुके स्यात्त्रिषु शस्ते कुतूहलं' इति विश्वलोचने। 'स्त्री नारी वनिता मुग्धा भामिनी भीरुरङ्गना। ललना कामिनी योषिद्योषा सीमन्तिनी वधूः॥' इति धनञ्जयः। **स्वबिम्बं** स्वशरीरं **पात्रीकुर्वन्** गोचरीकुर्वन् योग्यं कुर्वन् वा। 'योग्यभाजनयोः पात्रं' इत्यमरः। **यस्मिन्** यत्र मार्गे **दैवयोगात्** शुभकर्मोदयवशात्। लाभान्तरायकर्मक्षयोपशमादित्यर्थः।' 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः। **अविकलं** सम्पूर्णं। न विकलं अविकलं। विकलं नष्टांशम्। **यात्राफलं** प्रयाणफलं। 'यात्राऽनुवृत्तौ गमने यापने देवतोत्सवे' इति विश्वलोचने। **लप्स्यसे** अधिगमिष्यसि **तस्मिन् अध्वनि** तस्मिन् वर्त्मनि **अध्वनीनः** शीघ्रगमनः।

अध्वानं अलं गामी अध्वनीनः। 'खश्चाध्वानं च' इति खः। त्वं **अनतिचिरयन्**। अतिचिरं करोति अतिचिरयति। 'मृदोध्वर्थे णिज्बहुलं' इति णिच्। न अतिचिरयतीति अनतिचिरयन्। ईषच्चिरयन्निति तात्पर्यम्। अल्पकालं तत्र तिष्ठन्नित्यर्थः। **प्रयायाः** गच्छ।

You, making your round form the object of the glances cast by the ladies of the city of Dasapur, as long as the arrows, leading to victory, of the god of love, moving fast on that way where you would be gaining the fruit of your journey fortunaiely in full, should proceed on without making any delay.

**रम्यान्देशानिति बहुविधान्सादरं वीक्षमाणः**
**देशातिथ्यं व्रजतु स भवांस्तत्र तत्राऽपि वर्षन्।**
**सस्यक्षेत्रे गिरिषु सरितामन्तिके च स्थले च**
**ब्रह्मावर्तं जनपदमथ च्छायया गाहमानः॥ ४५॥**

अन्वयः— अथ इति बहुविधान् रम्यान् देशान् सादरं वीक्षमाणः, तत्र तत्र अपि सस्यक्षेत्रे, गिरिषु, सरितां अन्तिके च स्थले च वर्षन्, ब्रह्मावर्तं जनपदं छायया गाहमानः सः भवान् देशातिथ्यं व्रजतु।

रम्यानित्यादि। अथ अनन्तरं। 'अथाऽथो च शुभे प्रश्ने साकल्यारम्भसंशये। अनन्तरेऽपि' इति विश्वलोचने। इति एवं प्रोक्तप्रकारेण **बहुविधान्** नानाप्रकारान्। बह्व्यः विधाः प्रकाराः येषां ते बहुविधाः। तान्। 'विधा प्रकारे ऋद्धौ च गजान्ने वेतने विधौ' इति विश्वलोचने। **रम्यान्** मनोहरान् **देशान्** जनपदान् **सादरं** प्रीतिसहितं यथा स्यात्तथा। 'ज्ञिः सुप्–' इति हसः। 'हेऽकाले' इति सहस्य सः। **वीक्षमाणः** अवलोकयन्। वीक्षते इति वीक्षमाणः। **तत्र तत्र अपि** तस्मिंस्तस्मिन्नपि। वीप्सायां द्विः। **सस्यक्षेत्रे** केदारादौ **गिरिषु** भूधरेषु **सरितां** नदीनां **अन्तिके** च समीपदेशे च **स्थले** च अकृत्रिमायां भूमौ च **वर्षन्** वृष्टिं कुर्वन् **ब्रह्मावर्तं** ब्रह्मावर्तनामधेयं **जनपदं** देशविशेषं। 'सरस्वतीदृशद्वत्योर्देवनद्योर्यदन्तरं। तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते' इति मनुः। 'पुमाञ्जनपदो देशे तथा जनपदो जने' इति विश्वलोचने। **छायया** आतपाभावरूपया प्रतिमूर्त्या। 'छाया स्यादातपाभावे' इति विश्वलोचने। **गाहमानः** प्रविशन्। आकाशप्रदेशस्थितत्वात्स्वरूपेणावगाहनासम्भवा-

च्छायारूपया स्वप्रतिमूर्त्या तं देशं प्रविशन्निति भावः । सः भवान् सः त्वं देशातिथ्यं ब्रह्मावर्तजनपदस्यातिथित्वं व्रजतु गच्छतु । ब्रह्मावर्तजनपदस्यातिथिर्भवतु भवानिति भावः । यद्वा आतिथ्यं अतिथिसत्कारं व्रजतु अधिगच्छतु अनुभवतु वा । धातूनामनेकार्थत्वादर्थभेदः ।

Then, in this way, you, beholding various beautiful countries with eagerness, pouring showers of rain everywhere in the fields of corn, on the mountains, in the vicinity of rivers, and on the dry land (**terra firma**) there, and plunging into the Brahmāvarta country by your shadow, should enjoy hospitality afforded by the country.

**यस्मिन्नद्यः क्षतजकलुषाः कौरवीणां चमूनां**
**प्रावर्तन्त प्रतियुयुधिरे यत्र चामोघशस्त्राः ।**
**पाण्डोः पुत्राः प्रतिहननतः पापभीताः सशङ्कं**
**क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ॥ ४६ ॥**

अन्वयः— यस्मिन् कौरवीणां चमूनां क्षतजकलुषाः नद्यः प्रावर्तन्त, यत्र च अमोघशस्त्राः प्रतिहननतः पापभीताः पाण्डोः पुत्राः सशङ्कं प्रतियुयुधिरे तत् क्षत्रप्रधनपिशुनं कौरवं क्षेत्रं भजेथाः ।

**यस्मिन्नित्यादि** । **यस्मिन्** कुरुक्षेत्रे । **कौरवीणां** कुरुस्वामिकानां । कुरूणामियं कौरवी । अण् ङीच स्त्रियाम् । तासाम् । कुरूणां राजा कुरुः । तस्येयमिति कौरवी । तासाम् । 'पुरुपद्वयञ्मगधकलिंगसूरमसादण्' इति राजार्थस्याणः 'उप्चोलादिभ्यः–' इत्युप् । कुरुसम्बन्धिनीनां वा । यद्वा कुरोरपत्यानि कुरवः । 'पुरुपद्वयञ् –' इत्यपत्यार्थस्याणः 'उप्चोलादिभ्यः' इत्युप् । कुरूणां निवासः जनपदः कुरवः 'जनपद उस्' इति निवासार्थस्य त्यस्योस् । कुरुनिवासिनमित्यर्थः । 'कुरुर्नृपान्तरे भक्ते कुरुः श्रीकण्ठजाङ्गले' इति विश्वलोचने । **चमूनां** सेनानां । **क्षतजकलुषाः** लोहिताविलाः क्षतात्द्व्रणाज्जातं क्षतजं । तेन कलुषाः आविलाः क्षतजकलुषाः । 'कलुषं किल्बिषे क्लीब माविले कलुषं त्रिषु' इति विश्वलोचने । **नद्यः** सरितः । **प्रावर्तन्त** प्रादुरभूवन् । **यत्र च** यस्मिंश्च कुरुक्षेत्रे **अमोघशस्त्राः** सफलायुधाः । अमोघानि सफलानि शस्त्राणि आयुधानि येषां ते अमोघशस्त्राः । 'मोघस्तु निष्फले दीने' इति विश्वलोचने । **प्रतिहननात्** प्राणिहिंसनात् **पापभीताः** प्राणिहिंसाजनितपापाद्भीताः । पापात् किल्बिषात् भीताः

सञ्जातभयाः पापभीताः । पाण्डोः पाण्डुराजस्य पुत्राः तनयाः सशङ्कं शङ्कया भीत्या सहितं यथा स्यात्तथा । 'शङ्का त्रासे वितर्के च' इति विश्वलोचने । प्रतियुयुधिरे प्रतियुध्यन्ते स्म । तत् क्षत्रप्रधनपिशुनं क्षात्रसङ्ग्रामसूचकम् । क्षत्राणां क्षत्रियाणां प्रधनं युद्धं क्षत्रप्रधनम् । 'प्रधनं दारुणे सङ्ख्ये' इति विश्वलोचने । तस्य पिशुनं सूचकं क्षत्रप्रधनपिशुनं । 'पिशुनो नारदे पुंसि खलसूचकयोस्त्रिषु' इति विश्वलोचने । कौरवं कुरुराजसत्कं । कुरूणामिदं कौरवं । कुरुराजस्वामिकमित्यर्थः । क्षेत्रं विषयं । भजेथाः । कुरुक्षेत्रं प्रयायाः इत्यर्थः ।

You should betake yourself ( or have recourse ) to the region of Kurus, indicative of the battles fought by the Kshatriyas whereby many rivers were rendered turbid by the blood of the armies of the Kurus, and where the sons of Pandu, carrying weapons achieving success, made a counter-attack through fear caused by their being afraid of the sin incurred by slaughtering ( the enemies ).

वीरक्षोणीं भुवनविदितां तां क्षणेन व्यतीयाः
क्षात्रं तेजः प्रतिभयभटस्तम्भनैः सूचयन्तीम् ।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४७ ॥

अन्वयः— यत्र धारापातैः कमलानि त्वं इव गाण्डीवधन्वा शितशरशतैः राजन्यानां मुखानि अभ्यवर्षत्, तां प्रतिभयभटस्तम्भनैः क्षात्रं तेजः सूचयन्तीं भुवनविदितां वीरक्षोणीं क्षणेन व्यतीयाः ।

वीरक्षोणीमित्यादि । यत्र कुरुक्षेत्रे धारापातैः जलधाराप्रवर्षणैः । धाराणां जलधाराणां पाताः प्रवर्षणानि धारपाताः । तैः कमलानि नलिनानि त्वं इव भवानिव गाण्डीवधन्वा अर्जुनः । गाण्डीवं पर्वाऽस्यास्तीति गाण्डीवं । 'गाण्ड्यादिभ्यः' इति मत्वर्थीयो वत्यः । गाण्डीवं पर्ववदित्यर्थः । गाण्डीवं धनुरस्य गाण्डीवधन्वा । 'धनुः खौ' इति वसे खौ धनुःशब्दे प्रयोक्तव्येऽपि केषाञ्चिन्मतेन तस्य वैकल्पिकत्वाद्वसाद्धनुःशब्दान्तादन् । शितशरशतैः निशितेषुसमूहैः । शिता तीक्ष्णाश्च ते शराः बाणाश्च शितशराः । तेषां शतानि । तैः । शतशब्दोऽत्र बाहुल्यवचनः । 'शो तनूकरणे' इत्यस्मात्किति क्ते परतः 'छश्च वा' इति इत् । शितस्तेजित इत्यर्थ । राजन्यानां क्षत्रियाणां । राज्ञः अपत्यं राजन्यः । 'जातौ राज्ञः' इति जातौ गम्यमानायां

रन् सः लाङ्गली याः सिषेवे ताः पुंसां वन्द्याः भूमयः दृष्टमात्राः पुरा ते पुण्यं विदधति परिगमनतः त्वां सद्यः पुनन्ति एव।

ताः इत्यादि। प्रजासु जनतायां। 'प्रजा सन्तानलोकयोः' इति विश्वलोचने। बन्धुस्नेहात् बन्धुप्रेम्णः। बन्धौ बान्धवे इव स्नेहः प्रेम बन्धुस्नेहः। तस्मात्। प्रजानां बान्धवतुल्यत्वात् तासु यत्प्रेम तस्मात्। 'बन्धुर्बधूभ्रातरि बान्धवे' इति विश्वलोचने। समरविमुखः युद्धपराङ्मुखः। प्रजाहिंसनभयात् परित्यक्तसाम्परायः इत्यर्थः। समरात् युद्धात् विमुखः पराङ्मुखः समरविमुखः। आत्तदीक्षः गृहीतमुनिदीक्षः। आत्ता गृहीता दीक्षा मुनिधर्मः येन सः। एनां इमां पृथ्वीं भूमण्डलं विहरन् पर्यटन् सः लाङ्गली सः हलायुधः बलरामः। 'लाङ्गलं कुसुमान्तरे। गृहदारुविशेषे च सिरे ताले च लाङ्गलं' इति विश्वलोचने। लाङ्गलं सीरः अस्यास्तीति लाङ्गली। 'अतोऽनेकाचः' इति इन्। याः भूमयः सिषेवे सेवते स्म ताः भूमयः पुंसां पुरुषाणां वन्द्याः वन्दनीयाः। 'व्यस्य वा कर्तरि' इति ता। पुरुषैः वन्दनीयामित्यर्थः। भूमयः भुवः दृष्टमात्राः दृष्टाः एव। 'मात्रं कार्त्स्न्येऽवधारणे' इति विश्वलोचने। पुरा प्रथमं ते तव पुण्यं श्रियं कल्याणं शुभं वा विदधति कुर्वन्ति। करिष्यन्तीत्यर्थः। 'पुरायावतोर्लट्' इति भविष्यत्यर्थे लट्। परिगमनतः प्रदक्षिणीकरणात् त्वां भवन्तं सद्यः सपदि पुनन्ति एव पवित्रीकरिष्यन्त्येव। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति समीपभविष्यत्यर्थे लट्।

Those regions, worthy of being worshipped by men, to which the plough-bearer, averse to take any part in the battle out of his showing as much affection towards his subjects as shown towards his relatives, got initiated into monkhood, roaming on this earth, betook himself, would at first bring in merit only on seeing those and on going round it ( or on arrival ), would at once purify you.

सद्भिस्तीर्णाः प्रविमलतराः पुष्कलाः सुप्रसन्नाः
हृद्याः सद्यः कलिमलमुषो याः सतीनां सदृक्षाः।
कृत्वा तासामधिगममपां सौम्य सारस्वतीनां
अन्तःशुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः॥ ५०॥

अन्वयः— सद्भिः तीर्णाः, प्रविमलतराः, पुष्कलाः, सुप्रसन्नाः, हृद्याः, सद्यः कलिमलमुषः, सतीनां सदृक्षाः याः, तासां सारस्वतीनां अपां अधिगमं कृत्वा (हे) सौम्य वर्णमात्रेण कृष्णः अपि त्वं अन्तःशुद्धः भविता।

सद्भिरित्यादि। सद्भिः सज्जनैः, ग्रहनक्षत्रप्रकीर्णकतारकादिभिर्वा तीर्णाः प्लाविताः अधिगताः व्याप्ताः वा। प्रतिफलितग्रहनक्षत्रादिबिम्बाः सज्जनप्लाविताः वेत्यर्थः। 'ह्रादत्त्स्य तो नोऽमत्तूमूर्च्छा' इति तरतेः परस्य ततस्य नः। नस्य च णकारः। प्रविमलतराः प्रचुरनैर्मल्याः। 'गुणाङ्गाद्विष्ठेयसू' इति तरः प्रविमलशब्दस्य गुणमभिधाय द्रव्ये प्रवर्तनात्। प्रकृष्टाः प्रविमलाः प्रविमलतराः। सारस्वतीरापो विहायान्यासां तासां नैर्मल्यापेक्षयाऽपकृष्टत्वात्सारस्वतीनामपां प्रविमलतरत्वमभिव्यञ्जितम्। पुष्कलाः अतिशयेन प्रशस्याः। 'श्रेयान् श्रेष्ठः पुष्कलः स्यात्' इत्यमरः। सुप्रसन्नाः स्फटिकप्रभाः। सुतरां प्रसन्नाः विशदाः सुप्रसन्नाः। हृद्याः हृत्प्रियाः। 'हृद्यस्तु वशकृद्वेदमन्त्रे वृद्ध्याख्यभेषजे। स्याच्छ्वेतजीरके हृद्यं हृत्प्रिये हृद्भवे त्रिषु' इति विश्वलोचने। 'हृदयस्य हृल्लेखाण्यलासे' इति ये परतः हृदयस्य हृदादेशः। सद्यः तत्क्षणे एव। 'सद्यः सपदि तत्क्षणे' इत्यमरः। कलिमलमुषः परम्परयैदंयुगीनपापापहारिण्यः। कलिमलं कलिकालेरितप्राणिगणविहितदुष्कर्मजनितपापं मुष्णन्ति अपहरन्तीति कलिमलमुषः। ताः। क्विप्। सतीनां एकपत्नीनां सदृक्षाः समानाः। समाना इव दृश्यन्ते सदृक्षाः। 'कर्मणीवे त्यदाद्यन्यसमाने दृशष्टक् सक् च' इति कर्मणीवार्थे सक् 'घदृदृग्दृशदृक्षे' इति दृक्षे परतश्च समानस्य सः। 'वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक्' इत्यमरः। याः अपः सरस्वतीनद्याः तासां सारस्वतीनां सरस्वतीनद्यां प्रवाहिनीनां। सरस्वत्याः इमाः सारस्वत्यः। तासाम्। अपां सलिलानां अधिगमं सेवनं कृत्वा विधाय हे सौम्य सुभग वर्णमात्रेण वर्णेनैव। 'मात्रं कार्त्स्न्येऽवधारणे' इति विश्वलोचने। कृष्णः श्यामः अपि त्वं भवान् अन्तःशुद्धः अन्तरात्मनि शुद्धः पूतः। अन्तः आत्मनि शुद्धः पवित्रः विगलितपापकर्मा वा अन्तःशुद्धः। भविता भवन्। भविष्यसीत्यर्थः। कृदन्तं धातुत्वं न जहातीति परिभाषानुसारेण 'वर्तमानसामीप्ये वर्तमानवद्वा' इति आसन्नभविष्यत्यर्थे तृजन्तस्य भवितृशब्दस्य प्रयोगः 'ण्वुल्तृचौ' इति तृच् वैकल्पिकः। 'त्वमसि भविता' इति योगिराजोररीकृतः पाठोऽपि समीचीनः।

O gentle one! you, though dark only in complexion, having imbibed those waters of the Sarasvatī which are plunged into by virtuous men (or which are pervaded by the reflexions of stars etc.), which are very pure, excellent, pleasing to the heart, destroying immediately sin committed in this age called Kali and which resemble chaste women, would become pure inside, [ or you, though pure at

राजन्शब्दादपत्यार्थे यः । ये परतश्च 'येऽङ्गे' इति टिलाभावः । प्रतिपक्षिणां क्षत्रियाणामित्यर्थः । 'मूर्धाभिषक्तो राजन्यः बाहुजः क्षत्रियो विराट्' इत्यमरः । **मुखानि** आननानि **अभ्यवर्षत्** अभिमुखं वृष्टिं चकार । निशितेषुशतपातैस्तेषां प्रतिपक्षिणां क्षत्रियाणामाननानि चिच्छेदेति भावः । **तां** कुरुभूमिं **प्रतिभयभटस्तम्भनैः** भयङ्करयोद्धृणामभिमुखागमनस्य प्रतिबन्धनैः । प्रतिभयाः भयङ्कराश्च ते भटाः योद्धारश्च प्रतिभयभटाः । 'भयङ्करं प्रतिभयं रौद्रं तूग्रममी त्रिषु' इत्यमरः । तेषां स्तम्भनैः तेषामभिमुखमभियानस्य प्रतिबन्धैः **क्षात्रं** क्षत्रियजातिविषयकं सहजं **तेजः** बलं प्रभावं पराक्रमं वा । 'तेजः पराक्रमे दीप्तौ प्रभावे बलशुक्रयोः' इति विश्वलोचने । **सूचयन्तीं** पिशुनयन्तीं । दर्शयन्तीमित्यर्थः । **भुवनविदितां** भूमण्डलप्रसिद्धां । भुवनेन तात्स्थ्यात्तन्निवासिभिर्जनैः विदितां ज्ञातां । 'विदितं ज्ञाते' इति विश्वलोचने । **वीरक्षोणीं** वीरभुवं । वीरोत्पत्तिस्थानं रणभूमिं वेत्यर्थः । **क्षणेन** क्षणमात्रेण **व्यतीयाः** उल्लङ्घ्य । तस्याः भयङ्करत्वात्तत्र चिरं मा तिष्ठेति भावः ।

In a moment, you should pass over that land of warriors, wellknown in the whole world, indicating the valour of the military tribes (i. e. Kṣatriyas) by the acts of checking the advance (or progress) of formidable warriors, where the warrior armed with the Gāṇḍiva bow (i. e. Arjuna) poured (discharged) volleys of hundreds of sharpened arrows on the faces of warriors, like you, pouring showers of rain over the lotuses.

**पुण्यक्षेत्रं तदपि भजनीयं हि तस्योपकण्ठे**
**यस्मिन्सोऽस्थात्तपसि हलभृत् प्राप्तराजर्षिवृत्तः ।**
**शार्ङ्गिण्यस्तं गतवति महीनिःस्पृहो मन्मथीयां**
**हित्वा हालामभिमतरसां रेवतीलोचनाङ्काम् ॥ ४८ ॥**

अन्वयः– शार्ङ्गिणि अस्तं गतवति सः महीनिःस्पृहः, प्राप्तराजर्षिवृत्तः अभिमतरसां रेवतीलोचनाङ्कां मन्मथीयां हालां हित्वा यस्मिन् तपसि अस्थात् तत् तस्य उपकण्ठे पुण्यक्षेत्रं अपि हि भजनीयम् ।

पुण्यक्षेत्रमित्यादि । **शार्ङ्गिणि** नारायणे । शृङ्गस्य विकारः धनुः शार्ङ्गम् । तदस्यास्तीति शार्ङ्गी 'अतोऽनेकाचः' इति इन् । **अस्तं** विलयं **गतवति** प्राप्तवति । 'यद्भावा-

द्रावगतिः' इतीप्। सः प्रसिद्धः महीनिःस्पृहः। मह्यां भूमौ निस्पृहः आशावशातीतः। विनष्टभूम्याशः इत्यर्थः। प्राप्तराजर्षिवृत्तः स्वीकृतमुनीन्द्राचारः। प्राप्तं स्वीकृतं राजर्षेः वृत्तं आचारः येन सः। 'त्रिषु वृत्तं तु चरिते' इति विश्वलोचने। हलभृत् बलरामः। हलं लाङ्गलं बिभर्तीति हलभृत्। हलायुधः इत्यर्थः। 'रेवतीरमणो रामः कामपालो हलायुधः' इत्यमरः। अभिमतरसां। अभिमतः अभीष्टः रसः शृङ्गारादिः आनन्दः वा यस्याः सा। ताम्। अभिमतशृङ्गारादिरसमाविर्भावयन्तीमित्यर्थः। रेवतीलोचनाङ्कां रेवतीनयनलक्षणां। रेवत्याः हलिकान्तायाः लोचने नयने रेवतीलोचने। 'रेवती हलिकान्तायां ताराभेदेऽपि मातृषु' इति विश्वलोचने। ते एव अङ्को लक्षणं यस्याः सा। ताम्। 'अङ्को रेखायां चिह्नलक्ष्मणोः। नाटकादिपरिच्छेदोत्सङ्गयोरपि रूपके। चित्रयुद्धेऽन्तिके मन्तौ स्थानभूषणयोरपि।' इति विश्वलोचने। मन्मथीयां। मन्मथस्येयं मन्मथीया। ताम्। 'वा नाम्नः' इति नाम्नः दुसञ्ज्ञत्वात् 'दोश्छः' इति छः। मन्मथसम्बन्धिनीमित्यर्थः। हालां सुरां। 'हाला मद्ये नृपे' इति विश्वलोचने। हित्वा परित्यज्य यस्मिन् पुण्यक्षेत्रे तपसि तपश्चरणार्थं। 'हेतौ सर्वाः प्रायः' इति हेतावीप्। अस्थात् अतिष्ठत् तत् प्रसिद्धं तस्य कुरुक्षेत्रस्य उपकण्ठे समीपे विद्यमानं। 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा' इत्यमरः। पुण्यक्षेत्रं तीर्थस्थानं अपि हि अवश्यं। 'हि विशेषेऽवधारणे। हि पादपूरणे हेतौ' इति विश्वलोचने। भजनीयं सेवनीयम्। तवेति शेषः 'तां क्षणेन व्यतीयाः' इति मयोक्ते सत्यपि कुरुक्षेत्रोपकण्ठदेशस्थितं तीर्थक्षेत्रं विहायाग्रगामी मा भूरिति शम्बरासुराभिप्रायः।

In the vicinity of it that holy land even, wherein, after the disappearance of Krsna, the plough-bearer (Baladeva), resorting to the mode of life of a great sage (or royal sage) deprived of aspiration for kingdom (lit. the earth), having renounced liquor of the god of love in the form of the eyes of Revatī, giving pleasure that is desired for, stayed for practising penance, should verily be resorted to by you.

तास्ते पुण्यं विदधति पुरा भूमयो दृष्टमात्राः
वन्द्याः पुंसां परिगमनतस्त्वां पुनन्त्येव सद्यः।
पृथ्वीमेनां स किल विहरन्नात्तदीक्षः प्रजासु
बन्धुस्नेहात्समरविमुखो लाङ्गली याः सिषेवे ॥ ४९ ॥

अन्वयः— प्रजासु बन्धुस्नेहात् समरविमुखः, आत्तदीक्षः, एनां पृथ्वीं विह-

heart, would become dark only in complexion ( and not impure at heart. ) ].

यास्ता नद्यः कुलगिरिभवाः स्वर्धुनीरूढिभाजः
तासामेताः प्रतिनिधितया तत्समाख्याः कुनद्यः ।
तीर्थालोके त्वमुपसर तां जाह्नवीं यन्मयोक्तं
तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णाम् ॥ ५१ ॥

अन्वय :— याः नद्यः कुलगिरिभवाः ताः स्वर्धुनीरूढिभाजः । एताः कुनद्यः तासां प्रतिनिधितया तत्समाख्याः । 'तीर्थालोके त्वं उपसर' इति यत् मया उक्तं तस्मात् अनुकनखलं शैलराजावतीर्णां तां जाह्नवीं गच्छेः ।

याः इत्यादि । याः नद्यः याः सरितः कुलगिरिभवाः हिमवन्नभिधकुलाचलसमुद्भूताः । कुलगिरौ हिमवति भवः जन्म यासां ताः कुलगिरिभवाः । व्यधिकरणो वसः । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । 'हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वताः' इति तत्त्वार्थमहाशास्त्रोक्ताः षट् कुलाचलाः । अन्यशास्त्रापेक्षया तु 'महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः' इति सप्त ते । ताः गङ्गासिन्ध्वादयो नद्यः । स्वर्धुनीरूढिभाजः स्वस्तरङ्गिणीप्रसिद्धिमत्यः । स्वर्धुनी देवनदी व्योमसरित् वा इति रूढिं प्रसिद्धिं भजन्ते वहन्तीति स्वर्धुनीरूढिभाजः । 'भजो ण्विः' इति ण्विः । याः हिमवदादिकुलाचलसम्भूतयस्तासामेवात्युन्नतप्रस्थप्रदेशोद्भूतत्वात् व्योमतरङ्गिण्यभिधानवत्त्वेन प्रसिद्धिः, नान्यासां तत्समाननाम्नामपि तदुद्भूतिस्थानभूतसानुप्रदेशानां तादृगौन्नत्याभावात् । एताः कुलाचलेतरधरणीधरोन्नततरशिखराग्रसमुद्भूताः गङ्गासिन्ध्वादितत्तुल्याभिधानाः कुनद्यः स्वल्पसरितः । कुलाचलोन्नततमशिखराग्रभागसम्भूतगङ्गासिन्ध्वादिनद्यायामविस्तारापेक्षयैतासां तदभिधानभाजामपि तरङ्गिणीनां स्वल्पायामविस्तारवत्त्वात्कुनद्यः इति व्यपदेशः इत्यवसेयम् । 'अल्पे' इति कोरीषदर्थत्वस्य ज्ञापकम् । 'कु निन्दायामीषदर्थे किल्बिषे वारणेऽपि च' इतिविश्वलोचने । तासां कुलाचलसम्भवानां वाहिनीनां गङ्गासिध्वादीनां प्रतिनिधितया कुलाचलोद्भूतगङ्गासिन्ध्वादिप्रतिकृतिरूपत्वात् । प्रतिनिधीयते प्रतिनिधिर्मुख्यसदृशी भवति । 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्' इत्यमरः । तत्समाख्याः कुलाचलसम्भूतगङ्गासिन्ध्वादितुल्या आख्या नामधेयं यासां

ताः। यद्वा ते गङ्गासिन्धू इति समाख्ये नामनी यासां ताः। तीर्थाँलोके तीर्थदर्शनार्थं तन्नदीप्रपातदर्शनार्थं। पुण्यक्षेत्रदर्शनार्थं। तन्नदीप्रपातदर्शनार्थं तन्नदीमहापात्रदर्शनार्थं चेत्यप्यर्थोऽत्र ग्राह्यः। 'तीर्थं शास्त्रावतारयोः। पुण्यक्षेत्रमहापात्रोपायोपाध्यायदर्शने। ऋषिजुष्टे जले यज्ञे जातौ च वनितार्तवे' इति विश्वलोचने। 'हेतौ सर्वाः प्रायः' इति हेताविप्। त्वं भवान् उपसर गच्छतु इति यत् यस्मात्कारणात्। 'हेतुयद्यर्थयोस्तु यत्' इति विश्वलोचने। मया कमठचरशम्बरासुरेण उक्तं कथितं 'पुण्यक्षेत्रं तदपि भजनीयं' (पा. २।४८) इत्यत्र। तस्मात् तस्मात् कारणात्। अनुकनखलं कनखलसमीपप्रदेशे। 'समीपे' इति समीपार्थे वर्तमानस्यानोस्सुबन्तेन सह द्वसः। शैलराजावतीर्णां शैलराजाद्धिमालयावतीर्णाम्। शैलः राजेव शैलराजः। 'व्याघ्रादिभिरुपमेयोऽतद्योगे' इति सामान्यावोगे राजशब्देनोपमेयेन सह षसः व्याघ्रादेराकृतिगणत्वात्। यद्वा शैलानां राजा शैलराजः। शैलश्रेष्ठः इत्यर्थः। तस्मादवतीर्णाऽधः पतन्ती। ताम्। 'राजाहःसखेष्टः' इति टः सान्तः। हिमवदित्यभिख्यया कुलाचराचलेभ्यः उन्नततरत्वाच्च हिमवत्कुलाचलतुल्यत्वात् हिमालयस्य शैलराजाभिधानं युक्तरूपम्। शैलराजः इव शैलराजः। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। हिमालयस्य हिमवत्कुलाचलान्त्यभूतत्वादन्येभ्यो धराधरेभ्यः उन्नतत्वाच्च शैलराजाभिधानमुपचरितमित्यवसेयम्। तां प्रसिद्धां मानससरःसम्भवां जाह्नवीं गङ्गां गच्छेः यायाः। अत्र श्लोके गङ्गादीनां यत्स्वर्धुनीलदिभाक्त्वमुक्तं तत् 'पूर्वापरौ तोयनिधी वगाह्य' स्थिताद्धिमवदभिधानकुलाचलात्समुद्भूतानामेव, न पूर्वापरतोयनिध्यनवगाहिनो हिमालयात्समुद्भूतानाम्। कालिदासेनाऽपि 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः। पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः' इति कुमारसम्भवाद्यश्लोके हिमालयस्य पूर्वापरतोयनिध्यवगाहित्वमुक्तम्। विद्यमानस्तु हिमालयो न पूर्वापरतोयनिध्यवगाही। अतस्तत्समुद्भूतानामपि गङ्गासिन्ध्वादितरङ्गिणीनां कथं स्वर्धुनीलदिभाक्त्वं सम्भवति? अतोऽत्र श्लोके यदुक्तं कविना तदस्मन्मतेन नासमञ्जसम्।

Those rivers that have their origins from the principal mountains have become known by the name 'heavenly rivers, These rivers bear their names owing to their being their representatives. As I asked you to visit the holy places, you should visit the Ganges, falling down from the mountain Himalaya, resembling the Lords of mountains (i. e. कुलाचल s ), near Kanakhala.

मोपेक्षिष्ठास्त्वमुपनदिकेत्याशुगत्वा प्रविश्य
प्राहुस्तीर्थप्रतिनिधिमपि क्षालनं कश्मलानाम् ।
तां सेवेथाः सुभग सुरसां लोकरूढेः प्रतीतां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ॥ ५२ ॥

अन्वयः—(हे) सुभग! उपनदिका इति प्रविश्य आशुगत्वा त्वं मा उपेक्षिष्ठाः [ यतः ] तीर्थप्रतिनिधिं अपि कश्मलानां क्षालनं प्राहुः । लोकरूढेः प्रतीतां जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिं सुरसां तां सेवेथाः ।

मेत्यादि । हे सुभग । सुश्रीक । शोभनं भगः श्रीर्यस्य सः सुभगः । तस्य किः । 'भगं तु ज्ञानयोनीच्छायशोमाहात्म्यमुक्तिषु । ऐश्वर्यवीर्यवैराग्यधर्मश्रीरत्नभानुषु' इति विश्वलोचने । उपनदिका इति स्वर्धुनीसादृश्यमावहन्ती महत्त्वायामापेक्षया स्वल्पेयं नदीति प्रविश्य सङ्क्रान्तप्रतिबिम्बात्मत्वेनावगाह्य आशुगत्वा शीघ्रगामी । प्रवेशानन्तरं शीघ्रं तां विमुच्य गच्छन्नित्यर्थः । आशु शीघ्रं गच्छतीति आशुगत्वा । 'मन्वन्क्वनिब्विचः क्वचित्' इति क्वनिप् । त्वं भवान् मा उपेक्षिष्ठाः उपेक्षां मा कृथाः । ईक्षेर्लुङन्तमध्यमपुरुषैकवचनम् । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमप्रतिषेधः माङ्योगसद्भावात् । यतः तीर्थप्रतिनिधिं अपि पुण्यक्षेत्रप्रतिनिधिभूतमपि कश्मलानां पापानां । क्षालनं निर्णेजकं । क्षालयतीति क्षालनं । 'ल्युट् च बहुलम्' इति कर्तर्यनट् । प्राहुः ऊचुः । आचार्याः इति शेषः । जैनबौद्धचार्वाकेतरदार्शनिकापेक्षयेदमुक्तमित्यवसेयम् । लोकरूढेः लोकसङ्केताद्धेतुभूतात् प्रतीतां प्रसिद्धिमितां जह्नोः जह्नुनृपतेः कन्यां तनयां । जलाप्लावितजह्नुयज्ञभूमित्वात्क्रुद्धेन जह्नुनापीय श्रोत्रेणोद्गीर्णत्वाद्गङ्गायाः जह्नुकन्यात्वमिति पौराणिकाः । सगरतनयस्वर्गसोपानपङ्क्तिं । सगरस्य तनयाः पुत्राः सगरतनयाः । तेषां स्वर्गारोहणार्थं विरचितां सोपानपङ्क्तिं सोपानपरम्पराभूताम् । कपिलमहसाऽमर्षात्प्लुष्टान् पितुः पितामहान् ( प्रपितामहान् ) तारयितुमाचीर्णतीव्रतपस्यो भगीरथो भागीरथीमिध आनिनायेति पौराणिकीं कथामनुसृत्येदमुक्तमित्यवसेयम् । सुरसां स्वादुजलां । शोभनः जिह्वासन्तर्पणः रसः जलं यस्याः सा । ताम् । 'रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे । पारदे धातुवीर्याम्बुरागे गन्धरसे तनौ' इति विश्वलोचने । तां गङ्गां सेवेथाः आराधय ।

O beautiful one! you, leaving her immediately after plunging into her water, should not disregard her only because of her being a small

river; since the learned say that even a representative of a holy land is a purifier from sins (impurities). You should worship the daughter of Jahnu, possessing sweet water, forming the flight of steps to heaven for the sons of Sāgara, so known owing to the practice based on convention.

तामेवैनां कलय सरितं त्वं प्रपाते हिमाद्रेः
गङ्गादेव्याः प्रतिनिधिगतस्यादिदेवस्य भर्तुः ।
गौरी वक्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥५२॥

अन्वयः — या इन्दुलग्नोर्मिहस्ता, गौरी, फेनैः वक्रभ्रुकुटिरचना विहस्य इव हिमाद्रेः प्रपाते गङ्गादेव्याः प्रतिनिधिगतस्य शम्भोः आदिदेवस्य भर्तुः केशग्रहणं अकरोत् तां एव एनां सरितं त्वं कलय ।

तामित्यादि । या हिमवत्कुलाचलशिखरस्थपद्माख्यसरस्सम्भूता गङ्गाभिधाना महानदी **इन्दुलग्नोर्मिहस्ता** चन्द्रमोविमानसंलग्नकल्लोलकरा । इन्दौ चन्द्रमसि लग्नाः सञ्जातसम्बन्धाः ऊर्मयः कल्लोला एव हस्ताः कराः यस्याः सा । समुत्थितचन्द्रमोविमान-स्पृगभ्रङ्कषवीचिरित्यर्थः । **गौरी** शुभ्रवर्णा । गङ्गासलिलस्य दुग्धोपमत्वाद्गौरवर्णत्वम् । गौरः श्वेतवर्णः अस्याः अस्तीति गौरी । 'गौरादिभ्यः' इति स्त्रियां ङी । 'गौरः पुंसि निशाकरे । गौरः पीतारुणश्वेतविशुद्धेष्वभिधेयवत्' इति विश्वलोचने । **फेनैः** डिण्डीरपिण्डैः । 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । **वक्रभ्रुकुटिरचनां** । भ्रुकुट्योः रचना भ्रुकुटिरचना । वक्रा कुटिला चाऽसौ भ्रुकुटिरचना च वक्रभ्रुकुटिरचना । ताम् । यद्वा **गौरीवक्रभ्रुकुटिरचनां** । गौर्याः गौरवर्णायाः स्त्रियः वक्त्रे मुखे या भ्रुकुटि-रचना स्वपतिपरस्त्रीगामित्वविज्ञानात्सञ्जातामर्षायाः गौरवर्णस्त्रियः यद्भ्रूभङ्गकरणं तत् **विहस्य इव** अवहस्येव **हिमाद्रेः** हिमवत्कुलाचलस्य **प्रपाते** जलप्रपतनस्थानभूते भृगौ । 'प्रपातो निर्झरे कृच्छ्रे पतनावटयोरपि' इति विश्वलोचने । **गङ्गादेव्याः** गङ्गाकुट-वासिन्याः देव्याः । हिमवत्कुलाचलस्य गङ्गाजलौघप्रपतस्थानभूते प्रपाते गङ्गाभिधाना देवता गङ्गाकूटे निवासं करोति । तस्याः देवतायाः **प्रतिनिधिगतस्य** प्रतिबिम्बरूपस्य । गङ्गादेवीस्वामिनोऽकृत्रिमपाषाणप्रतिमारूपस्य **शम्भोः** अर्हतः । 'अर्हत्पिनाकिनौ शम्भू' इति धनञ्जयः । शं सुखं भवत्यस्मादिति शम्भुः । शं शुद्धात्मसुखरूपो भवतीति वा शम्भुः । 'मितंद्र्वादयः' इति शम्भुशब्दो निपातितः । 'विप्रशमोऽन्यौ डुः'

इति शम्पूर्वाद्भुवो ड्वी। तस्य। आदिदेवस्य आदिब्रह्मणः ऋषभेश्वरस्य भर्तुः त्रैलोक्याधिपतेः। केशग्रहणं अकरोत् इन्दुलग्नोर्मिहस्तेन जिनबिम्बमूर्धदेशविरचित-जटाजूटं जग्राह। गङ्गादेवीप्रासादशिखरस्थकमलकर्णिकास्थितजटाजूटालङ्कृतादिदेव-प्रतिबिम्बमूर्ध्नि गङ्गामहानदी पपातेति तात्पर्यम्। तां एव तां महतीं गङ्गानदीमिव एनां सरितं एनां गङ्गाभिधानां तत्प्रतिनिधिरूपां तरङ्गिणीं त्वं भवान् कलय अभि-जानीतात्। एषा मानससरस्सम्भृता गङ्गाभिधाना या नदी सा महागङ्गानद्येवेति त्वयाभिमन्तव्यमिति भावः।

Take this river for that very one who, having her hands in the form of waves clinging to the moon, possessing a white complexion, having as if laughed at the crooked formation of eye-brows by the masses of foam, took hold of the hair of the idol of lord Arhat, the first God ( Tīrthakara ) belonging to the goddess Gangā, existing at the place over which the water, flowing down from the Himavat mountain, falls.

स्वादु स्वच्छं शुचि हिमशिलासम्भवं हारि नीरं
प्राप्तमोदं तटवनपतत्पुष्पकिञ्जल्कवासैः
अध्वश्रान्तिं श्लथयितुमथः प्राप्तमात्रोऽध्यवस्येः
तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी ॥ ५४ ॥

अन्वयः— अध्वश्रान्तिं श्लथयितुं तस्याः स्वादु, स्वच्छं, शुचि, हिमशिला-सम्भवं, हारि, तटवनपतत्पुष्पकिञ्जल्कवासैः प्राप्तामोदं नीरं अथः प्राप्तमात्रः व्योम्नि पश्चार्धलम्बी सुरगजः इव पातुं अध्यवस्येः।

स्वाद्वित्यादि। अध्वश्रान्तिं मार्गाक्रमणखेदं। अध्वनः मार्गाक्रमणस्य श्रान्तिः श्रमः अध्वश्रान्तिः। ताम्। श्लथयितुं शिथिलीकर्तुं। अपनेतुमित्यर्थः। तस्याः भागीरथ्याः। स्वादु सुरुचिरं स्वच्छं निर्मलं शुचि स्फटिकोपमं पवित्रं वा हिमशिलासम्भवं प्रालेयपाषाणनिष्यन्दि। हिमस्य प्रालेयस्य शिला हिमशिला। तस्याः सम्भवः जन्म यस्य तत्। व्यधिकरणो बसः। हारि मनोहरम्। 'हृद्यं हारि मनोहरं च रुचिरम्' इति हलायुधः। तटवनपतत्पुष्पकिञ्जल्कवासैः। तटे तीरे विद्यमानं वनमरण्यं तटवनं। तत्र पतन्ति च तानि पुष्पाणि कुसुमानि च तटवनपतत्पुष्पाणि। तेषां किञ्जल्काः केसराः। तेषां वासैः गन्धैः।

'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः । **प्राप्तामोदं** लब्धसौगन्ध्यं । प्राप्तः लब्धः आमोदः सौगन्ध्यं येन तत् । 'सुगन्धिमुदि वामोदः' इति विश्वलोचने । **नीरं** सलिलं 'क्षरं वनं कुशं नीरं तोयं जीवनमम्बिषम्' इति धनञ्जयः । अधः अधस्तात् **प्राप्तमात्रः** प्राप्तः एव सन् । यस्मिन्क्षणेऽधस्तात्प्राप्तः स्याः तस्मिन्नेव क्षणे इत्यर्थः । **व्योम्नि** आकाशप्रदेशे **पश्चार्धलम्बी** लम्बमानपश्चार्धभागः । पश्चादर्धं पश्चार्धं । पृषोदरादित्वात्साधुः । पश्चार्धेन लम्बते इति पश्चार्धलम्बी । व्योमप्रदेशस्थितपश्चार्धभागः जलोन्मुखपूर्वकायभागश्चेत्यर्थः । **सुरगजः इव** देवदन्तिवत् **पातुं** पानार्थं **अध्यवस्येः** निश्चिनुयाः । मनसि कुर्वित्यर्थः ।

To mitigate exhaustion caused by your journey, you, hanging on, like a heavently elephant, by your hinder part in the sky, should make up your mind the very moment you would be reaching below to drink her water which is sweet, pure, transparent, oozing out of the snowy rocks, charming (and) made fragrant by the smell of the pollens of flowers falling down in the forests grown on her banks.

**तीव्रोदन्याश्रमपरिगतो न त्वकं चेत्तदानीं**
**तूष्णीं स्थित्वा क्षणमिव गताध्वश्रमो जातवर्षः ।**
**मध्येगङ्गं ह्रदमधिवसेर्भूरि तस्याः प्रपातुं**
**त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ॥ ५५ ॥**

अन्वयः— त्वकं तीव्रोदन्याश्रमपगितः न चेत्, क्षणं इव तूष्णीं स्थित्वा गताध्वश्रमः जातवर्षः त्वं तस्याः अच्छस्फटिकविशदं भूरि अम्भः तिर्यक् प्रपातुं तर्कयेः चेत्, तदानीं मध्येगङ्गं ह्रदं अधिवसेः ।

तीव्रेत्यादि । **त्वकं** त्वं । 'युष्मदस्मदोः सुपोऽश्चोर्सि' इति टेः प्रागक् । **तीव्रोदन्याश्रमपरिगतः** तीक्ष्णपिपासाजनितदुःखवेदनापरिगतः । तीव्रा तीक्ष्णा चासौ उदन्या पिपासा च तीव्रोदन्या । उदन्या उदकेच्छा । 'क्षुत्तृड्गर्द्धेऽशनायोदन्यधनायं' इति क्यजन्तो निपातः । 'उदन्या तु पिपासा तृट् तृषा' इत्यमरः । तस्याः श्रमः तृडुत्पन्नदुःखसंवेदनं । तेन परिगतः आक्रान्तः । **न चेत्** यदि न स्याः । **क्षणं इव** क्षणमात्रं **तूष्णीं** जोषम् । वाचंयमत्वेन मौनित्वेन वेत्यर्थः । **स्थित्वा** आस्थाय । **गताध्वश्रमः** विनष्टमार्गखेदः । **जातवर्षः** जनितवृष्टिः । जातः वर्षः वृष्टिः यस्मात् सः । यद्वा जातः इत्यस्यान्तर्भावितण्यर्थत्वेन ग्रहणे जनितः इत्यर्थः । जातः जनितः वर्षः वृष्टिः येन सः । **त्वं** भवान्

तस्याः भागीरथ्याः अच्छस्फटिकविशदं निर्मलस्फटिकवद् विशुद्धं । अच्छः निर्मलश्चासौ स्फटिकश्च अच्छस्फटिकः । तद्वत् विशदं विशुद्धं । 'सामान्येनोपमानं' इति सः। हेतुगर्भविशेषणमेतत् । तेनाच्छस्फटिकविशुद्धत्वाद्धेतोरित्यर्थः । भूरि विपुलं अम्भः जलं तिर्यक् तिरश्चीनं यथा स्यात्तथा प्रपातुं पातुं तर्कयेः मनसि कुर्याश्चेत् यदि, तदानीं तस्मिन्काले । तर्हीत्यर्थः । मध्येगङ्गं गङ्गायाः मध्ये मध्यभागे । 'पारेमध्येऽन्तस्तया' इति इसः । ह्रदं ह्रदेऽगाधजले । 'तत्रागाधजलो ह्रदः' इत्यमरः ।अधिवसेः तिष्ठ । 'वसोऽनूपाध्याङः' इति ईत्राधारे ।

If you would not be distressed by the strong desire to drink water (or by excessive thirst and) if you, having the fatigue of your journey removed by keeping silence for a moment, pouring showers of rain, would make up your mind to drink in a slanting manner abundent water of her (the Ganges) on account of its being pure like transparent crystal, settle yourself, then, on the large and deep pool of water occupying the centre of the Ganges.

तिष्ठत्वेकं क्षणमिव भवानिन्द्रनीलस्य लक्ष्मी–
मातन्वानः स्ववपुषि भृशं पीततोयोऽपि येन ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छायया सा
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५६ ॥

अन्वय :— स्ववपुषि इन्द्रनीलस्य लक्ष्मीं आतन्वानः भवान् भृशं पीततोयः अपि एकं क्षणं इव तिष्ठतु येन स्रोतसि सपदि संसर्पन्त्या भवतः छायया सा अस्थानोपगतयमुनासङ्गमा इव अभिरामा स्यात् ।

तिष्ठत्वित्यादि । स्ववपुषि स्वशरीरे । स्वस्य आत्मनः वपुः शरीरं स्ववपुः । तस्मिन् । इन्द्रनीलस्य नीलवर्णमणिविशेषस्य । इन्द्रः इव नीलः इन्द्रनीलः । अत्र नीलशब्दः कृष्णवर्णार्थः ग्राह्यः मेघस्य जलप्रपूर्णस्य कृष्णत्वात् । 'कृष्णे नीलाऽसितश्यामकालश्यामलमेचकाः' इत्यमरः । गारुत्मताख्यमणेरित्यर्थः । लक्ष्मीं शोभां तेजो वा । 'लक्ष्मीः श्रीरिव सम्पत्तौ पद्माशोभाप्रियङ्गुषु' इति विश्वलोचने । आतन्वानः विस्तारयिता विरचयन् वा । भवान् त्वं भृशं अत्यर्थं पीततोयः अपि पीतपानीयः अपि । पीतं सेवितं तोयं पानीयं येन सः । एकं क्षणं इव क्षणमात्रं तिष्ठतु अग्रतः गमनात् विरमतु येन क्षणमात्रं यावदवस्थानेन स्रोतसि गङ्गानदी-

प्रवाहे सपदि शीघ्रं संसर्पन्त्या प्रचलन्त्या भवतः तव च्छायया प्रतिबिम्बेन। 'छाया स्यादातपाभावे सत्कान्त्युत्कोचकान्तिषु। प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने। सा गङ्गानदी। अस्थानोपगतयमुनासङ्गमा इव। अस्थानं गङ्गायमुनास्थानात् प्रयागाख्याद्भिन्नं स्थानं अस्थानं। 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्तिताः' इत्यन्यार्थे नञत्र। अस्थाने उपगतः प्राप्तः यमुनासङ्गमः यया सा। भागीरथीत्यर्थः। सा इव। अभिरामा मनोहरा स्यात् भवेत्। भागीरथीशुभ्रवर्णार्णसि प्रतिफलितत्वदाकारस्य यमुनार्णोवर्ण-सवर्णत्वात् मेघच्छायाकुलायाः गङ्गायाः प्रयागादन्यत्रापि कालिन्दीसमागमसम्पत्तिरिति तात्पर्यम्।

You, diffusing lustre like that of sapphire throughout your body, should wait only for a moment, though you would have drunk up abundent water. She would thereby become charming as if having a union with the Yamunā brought about at a wrong place owing to your image moving speedily through her flow of water ( Or – She, owing to your image proceeding hurriedly in her flow of water, would become as charming as she herself having her own stream united with that of the Yamunā at a wrong place. )

पुण्याम्बूनामिति भृतितरं चर्मपूरं प्रपूर्णः
किञ्चिद्गत्वा हिमवदचलस्याऽनुपादं निषीद।
तत्पर्यन्ते वनपरिकरं प्रेक्षणीयं प्रपश्य–
न्नासीनानां सुरभितशिलं नाभिगन्धैर्मृगाणाम् ॥ ५७ ॥

अन्वयः—इति पुण्याम्बूनां भृतितरं चर्मपूरं प्रपूर्णः किञ्चित् गत्वा हिमवदचलस्य अनुपादं तत्पर्यन्ते आसीनानां मृगाणां नाभिगन्धैः सुरभितशिलं प्रेक्षणीयं वनपरिकरं प्रपश्यन् निषीद।

पुण्याम्बूनामित्यादि। इति एवंप्रकारेण पुण्याम्बूनां मनोज्ञसलिलानाम्। 'पुण्यं तु सुकृते धर्मे त्रिषु मध्यमनोज्ञयोः' इति विश्वलोचने। 'प्रपूर्णः' इति पाठस्य वर्तमानार्थकक्तान्तत्वात् 'क्तस्याधारसतोः' इति ता। पुण्यानि मनोज्ञानि च तानि अम्बूनि जलानि च पुण्याम्बूनि। तेषाम्। पुण्याम्बुभिरित्यर्थः। भृतितरम्। भृतिः भरणम्। 'स्त्रियां क्तिः' इति भावेऽकर्तरि स्त्रियां क्तिः। प्रकृष्टा भृतिः भरणं यथा

स्यात्तथा । 'द्विविभज्ये तरः' इति प्रकृष्टे तरः ।चर्मपूरं प्रपूर्णः दृतिरिव. प्रपूर्णः चर्म दृतिः चर्ममयत्वात्तस्याः । चर्मेव प्रपूर्णः सम्भृतः चर्मपूरं प्रपूर्णः । 'कर्मणि चेवे' इति पूरेर्णम्पूरेरेव धोरनुप्रयुक्तत्वात् । 'चर्मोदरे पूरेः' इति णमः परकालैककर्तृकत्व-स्याप्राकरणिकत्वादानर्थक्यम् । किञ्चित् ईषत् गत्वा प्रक्रम्य हिमवदचलस्य हिमालयाख्यस्य भूधरस्य अनुपादं प्रत्यन्तपर्वते । 'क्षिः सुप्-' इति ईवर्थे हसः । 'पादोऽस्त्री चरणे मूले तुरीयांशेऽपि दीधितौ । शैलप्रत्यन्तशैले ना' इति विश्वलोचने । तत्पर्यन्ते हिमवदचलप्रत्यन्तप्रदेशे । आसीनानां निषण्णानां मृगाणां कस्तूरीमृगाणां नाभिगन्धैः कस्तूरिकागन्धैः । नाभेः कस्तूरिकायाः गन्धाः नाभिगन्धाः । तैः । 'नाभिर्ना क्षत्रे चक्रवर्तिनि । द्वयोः प्रधानचक्रान्तः प्राण्यङ्गेषु मदे स्त्रियाम्' इति विश्वलोचने । 'मृगनाभिर्मृगमदः कस्तूरी' इत्यमरः । 'नाभिः प्रधाने कस्तूर्यां मदे च क्वचिदीरिता' इति विश्वः । सुरभिताशिलं सुरभीकृतप्रस्तरं । सुरभिताः सुरभीकृताः शिलाः प्रस्तराः यस्य तत् । सुरभिताः सुरभीकृताः । 'मृदो ध्वर्थे णिज्बहुलं' इति णिजन्तात्क्तः । प्रेक्षणीयं मनोहरं वनपरिकरं वनविस्तारं । 'वृन्दप्राभवयोश्चैव पर्यङ्कपरिवारयोः । आरम्भे च परिस्तारे भवे परिकरस्तथा' इति कोशान्तरे । प्रपश्यन् अवलोकयन् निषीद उपविश । 'पद्लृ विशरणगत्यवसादनेषु' इत्यस्य धोः 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदाः' इति सीदादेशः । लोट् ।

Thus, you, filled up with charming water to your utmost capacity like a leathern bag meant for holding water, proceeding on a little, should sit on a hill at the foot of the mountain, Himalaya, enjoying the sight of the expanse of the beautiful forests grown in the adjoining regions of the mountain having its rocks perfumed by the fragrance of the musk of the musket-dear sitting on them.

विश्रम्याऽथो घन घनपथोल्लङ्घिकूटं हिमाङ्कं
पश्योदग्रैः शिखरतरुभिस्त्वामिवोपान्तयन्तम् ।
स्वस्याः कीर्तेरिव विधुरुचो नाकभाजां स्रवन्त्या-
स्तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ॥ ५८ ॥

अन्वयः— अथो घन ! विश्रम्य घनपथोल्लङ्घिकूटं उदग्रैः शिखरतरुभिः त्वां

उपान्तयन्तं इव, स्वस्याः कीर्तेः इव विधुरुचः तस्याः नाकभाजां स्रवन्त्याः एव प्रभवं तुषारैः गौरं हिमाङ्कं अचलं प्राप्य पश्य।

विश्रम्येत्यादि। **अथो** अनन्तरं। 'अथाऽथो च शुभे प्रश्ने साकल्यारम्भसंशये। अनन्तरेऽपि' इति विश्वलोचने। हे **घन** मेघ **विश्रम्य** मार्गश्रममपनीय **घनपथोल्लङ्घिकूटं** आकाशोल्लङ्घिशिखरं। घनस्य मेघस्य पन्थाः घनपथः। आकाशमित्यर्थः। 'ऋक्पूरप्पथोत्' इत्यत्समासान्तः। 'द्यौराकाशमन्तरिक्षं मेघवायुपथोऽपि' इति धनञ्जयः घनपथमुल्लङ्घयतीति घनपथोल्लङ्घि। तत्कूटं शिखरं यस्य सः। तम्। **उदग्रैः** उच्छ्रितैः। 'उच्चप्रांशून्नतोदग्रप्रोच्छ्रिताः' इत्यमरः। **शिखरतरुभिः** शिखरोत्पन्नवृक्षैः। **त्वां** भवन्तं **उपान्तयन्तं इव** उपान्ते समीपे आह्वयन्तं। उपान्ते आह्वयतीत्युपान्तयति। उपान्तयतीति उपान्तयन्। तम्। 'मृदो ध्वर्थे णिज्बहुलम्' इति णिच्। ततश्च शतृत्यः। तमिव। उत्प्रेक्षायामत्रेवशब्दः। **स्वस्याः** स्वकीयायाः **कीर्तेः इव** यशसः इव **विधुरुचः** धवलवर्णायाः। विधोश्चन्द्रमसः रुगिव रुग्यस्याः सा। तस्याः। 'ईत्वुमानपूर्वस्य ह्रुस्वं गतार्थत्वात्' इति ह्रुस्वम्। **तस्याः** प्रसिद्धायाः **नाकभाजां स्रवन्त्याः** देवतरङ्गिण्याः। गङ्गायाः इत्यर्थः। न विद्यते अकं दुःखमत्रेति नाकः स्वर्गः। 'अकं दुःखाघयोः' इति विश्वलोचने। 'आकाशे त्रिदिवे नाकः' इत्यमरः। नाकं भजते इति नाकभाक्। 'भजो ण्विः' इति ण्विः। तेषां नाकभाजां **स्रवन्त्याः एव** निम्नगायाः एव। 'स्रवन्ती निम्नगाऽऽपगा' इत्यमरः। **प्रभवं** उद्गमस्थानं। प्रभवत्युद्गच्छत्यस्मादिति प्रभवः। तम्। 'प्रभवो जन्महेतौ स्यादपांमूले पराक्रमे। प्रभवः किंवदन्तीनां सञ्चारगतिकारके' इति विश्वलोचने। **तुषारैः** हिमसंहतिभिः 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमं। प्रालेयं मिहिका चाऽथ हिमानी हिमसंहतिः' इत्यमरः। **गौरं** धवलकायं। 'सितो गौरोवलक्षः' इत्यमरः। **हिमाङ्कं** हिमालयाभिधानं। 'अङ्को रेखायां चिह्नलक्ष्मणोः' इति विश्वलोचने। **अचलं** भूधरं **प्राप्य** गत्वा **पश्य** अवलोकय।

Afterwards, O cloud! having taken rest, you, on reaching the mountain called Himalaya, white with snow, the source of that very *river of gods white like her own fame, calling you as if near with the* tall trees grown on its peaks, with its peaks rising above in the sky, should look at it.

**आरुह्याविर्मदकलमयूरारवैः कृष्यमाणः**
**कुञ्जे कुञ्जे दधि घनमिव प्रेक्षमाणो हिमानीम्।**

वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५९ ॥

अन्वयः— आविर्मदकलमयूरारवैः कृष्यमाणः कुञ्जे कुञ्जे घनं दधि इव हिमानीं प्रेक्षमाणः अध्वश्रमविनयने तस्य शृङ्गे आरुह्य निषण्णः शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयां शोभां वक्ष्यसि ।

आरुह्येत्यादि । आविर्मदकलमयूरारवैः । आविः प्रादुर्भूतः मदः आनन्दः आविर्मदः । 'प्राकाश्ये प्रादुराविः स्यात्' इत्यमरः । 'मदो मृगमदे मद्ये दानमुद्गर्व-रेतसि' इति विश्वलोचने । तेन कलाः मधुराव्यक्ताः आविर्मदकलाः । 'कलस्तु मधुराव्य-क्तशब्देऽजीर्णे कलं सिते' इति विश्वलोचने । मयूराणामारवाः मयूरारवाः । आविर्मद-कलाः मयूरारवाः आविर्मदकलमयूरारवाः । तैः । कृष्यमाणः अपह्रियमाणमनस्कः कुञ्जे कुञ्जे प्रतिकुञ्जं । प्रतिलताभवनमित्यर्थः । वीप्सायां द्विः । घनं पिण्डीभूतं । सान्द्रीभूतमित्यर्थः । 'काठिन्ये चाथ कठिने सान्द्रेऽपि च घनं त्रिषु' इति विश्वलोचने । दधि इव दधिवत् । हिमानीं हिमसंहतिं । 'हिमानी हिमसंहतिः' इत्यमरः । उरु हिमं हिमानी । 'हिमारण्याद्वुरौ' इति महत्यर्थे हिमशब्दात् ङी आनुक् च । प्रेक्षमाणः विलोकयन् । अध्वश्रमविनयने देशभ्रमणजनितश्रमपरिहारार्थं । अध्वनो देशपरिभ्रमस्य श्रमः खेदः अध्वश्रमः । देशपरिभ्रमणजनितः श्रमः इत्यर्थः । तस्य विनयनं परिहारः अध्वश्रमविनयनं । 'करणाधारे चानट्' इति भावेऽनट् । ईब्त्र हेतौ 'हेतौ सर्वाः प्रायः' इति । यद्वाऽध्वश्रमस्य विनयनं परिहर्तृ अध्वश्रमविनयनं । 'व्यानड् बहुले' इति कर्तर्यनट् । एवंकृतव्याख्यानस्यास्य सामासिकपदस्य 'शृङ्गे' इत्यस्य विशेषणत्वमभ्यूह्यम् । तस्य हिमवदद्रेः शृङ्गे सानौ आरुह्य आरोहणं कृत्वा । तमिति शेषः । निषण्णः उपविष्टः शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयां धवलरौद्रवृषभोत्खातजम्बाले-नोपमानार्हाम् । त्रिनयनस्य त्र्यम्बकस्य रुद्रस्येशानदिगिन्द्रस्य वृषः वृषभः त्रिनयनवृषः । शुभ्रः धवलवर्णश्चासौ त्रिनयनवृषश्च शुभ्रत्रिनयनवृषः । तेन उत्खातः शृङ्गाग्रविदारितश्चासौ पङ्कश्च । तेन सहोपमेयां उपमातुं योग्यां । 'तृज्व्याश्चार्हे' इत्यर्हार्थे व्यः । शोभां सौन्दर्यं वक्ष्यसि वोढासि । वहतेर्लृट् । त्रिनयनेत्यत्र 'प्राक्पदस्थात् णौ' इति प्राप्तस्य णकारादेशस्य 'क्षुभ्नाद्यन्तेषु' इति प्रतिषेधः क्षुभ्नादेराकृतिगणत्वात् त्रिनयनेत्यस्य तत्रान्तर्भावात् श्रीनन्दिहरिनन्द्यादिवत् ।

You, attracted by the indistinct and charming cracklings of peacocks given out through joy manifested (by the peacocks on

listening to the thundering sounds of you, the cloud ), looking in every bower of creepers at the masses of snow looking like ( or resembling ) solid curd, resting on its peak on having ascended ( it ) for the sake of removing ( your ) exhaustion of the journey, would possess a charm comparable to that of the mud dug up by the white bull of the three-eyed one ( i. e. Rudra ).

अध्वक्षामं शिथिलिततनुं शैलमार्गाधिरोहा-
त्त्वामौल्लङ्घ्ये घटयितुमसौ शक्नुयादेव वह्निः ।
धूमैः सान्द्रैर्वनविटपिजैर्नातिवर्षन्नुपेयाः
त्वं चेद्वायौ सरति सरलस्कन्धसङ्घट्टजन्मा ॥ ६० ॥

अन्वयः— त्वं वायौ सरति अतिवर्षन् न उपेयाः चेत् सरलस्कन्धसङ्घट्टजन्मा असौ वह्निः वनविटपिजैः सान्द्रैः धूमैः अध्वक्षामं शैलमार्गाधिरोहात् शिथिलिततनुं त्वां औल्लङ्घ्ये घटयितुं शक्नुयात् एव ।

अध्वक्षाममित्यादि । **त्वं** भवान् **वायौ** समीरणे **सरति** वहति सति । सरतीति सरन् । तास्मिन् । 'यद्भावाद्भावगतिः' इतीप् । अतिवर्षन् अतिवृष्टिं विदधानः । अतिवर्षतीति अतिवर्षन् । **न उपेयाः** । हिमवदचलसमीपं न गच्छेश्चेत् यदि तदा **सरलस्कन्धसङ्घट्टजन्मा** । सरलाः पीतदारवः । देवदारुद्रुमाः इत्यर्थः । 'पीतद्रुः सरलः पूतिकाष्ठं चाऽथ द्रुमोत्पलः' इत्यमरः । सरलानां स्कन्धाः प्रकाण्डाः महत्यः शाखाः सरलस्कन्धाः । 'स्कन्धः कायप्रकाण्डयोः' इति विश्वलोचने । तेषां सङ्घट्टनेनान्योन्यसङ्घर्षणेन जन्म उत्पत्तिः यस्य सः । व्यधिकरणोऽप्ययं बसोऽवर्ज्यो जन्मोत्तरपदत्वात् 'अवर्ज्यो व्यधिकरणो बहुव्रीहिर्जन्माद्युत्तरपदः' इत्युक्तेः । **असौ वह्निः** एष धनञ्जयः **वनविटपिजैः** अरण्यतरुसम्भूतैः । वनविटपिभ्यो वन्यवृक्षेभ्यो जाताः सम्भूताः वनविटपिजाः । तैः । 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इत्यमरः । **सान्द्रैः** घनैः । 'सान्द्रं त्रिषु घने मृदौ' इति विश्वलोचने । **धूमैः** धूमव्रातैः । **अध्वक्षामं** प्रयाणायासकृशीकृतकायम् । अध्वना प्रयाणेन क्षामः क्षीणतनुः अध्वक्षामः । तम् । 'क्षो मः' इति क्षायतेस्ततकारस्य मादेशः । **शैलमार्गाधिरोहात्** । शैलस्य भूधरस्य मार्गः पन्थाः शैलमार्गः । तत्र तस्य वा आरोहः आरोहणं शैलमार्गाधिरोहः । तस्माद्धेतुभूतात् । हेतावत्र का । शैलमार्गाधिरोहणेनेत्यर्थः । **शिथिलिततनुं** दुर्बलतनुं । शिथिलिता शिथिलीकृता तनुः शरीरं यस्य सः । तम् । शिथिलयति शिथिलीकरोति स्म शिथिलिता ।

'मृदो ध्यर्थे णिज्बहुलं' इति णिचि क्तः। त्वां भवन्तं। औल्लङ्घ्ये अवश्यमुल्लङ्घनीये मार्गे। 'व्या' इत्यावश्यकार्थस्य गम्यमानत्वाद् व्याः। उल्लङ्घ्य : एवौल्लङ्घ्यः। स्वार्थिकोऽण्। घटयितुं प्रेरयितुं मार्गक्रमणार्थं बलाधानं कर्तुं वा शक्नुयादेव समर्थः भवेदेव। निश्चयेन समर्थो भविष्यतीत्यर्थः। तमिति पाठे तस्य हिमाचलमित्यर्थः 'अतिवर्षन् तं न उपेयाश्चेत्' इत्यन्वयश्च।

If you would not approach it pouring heavy showers of rain at the same time when the wind would be blowing, the fire, produced by the friction of the branches of the Sarala ( pine ) trees, would certainly be able to infuse spirit into you, emaciated owing to the fatigue of your journey, with your body enfeebled by your upward movement on the way running through the ranges of the mountain, to resume your journey by the clustered columns of smoke generated by the trees grown in the forests.

आशृङ्गाग्रं कवचितमिवारूढमूर्तिं हिमान्या
त्वत्सान्निध्यादुपहितरसैश्चौषधीनां सहस्रैः।
आकीर्णान्तं सरसगहनं शैलराजं न चैनं
बाधेतोल्काक्षपितचमरीवालभारो दवाग्निः ॥ ६१ ॥

अन्वयः— हिमान्या आशृङ्गाग्रं कवचितं इव आरूढमूर्तिं, उपहितरसैः ओषधीनां सहस्रैः च आकीर्णान्तं, सरसगहनं च एनं शैलराजं उल्काक्षपितचमरीवालभारः दवाग्निः त्वत्सान्निध्यात् न बाधेत।

आशृङ्गाग्रमित्यादि। हिमान्या हिमसंहत्या। 'हिमानी हिमसंहतिः' इत्यमरः। 'हिमारण्याद्गुरौ' इति महत्यर्थे हिमशब्दात् ङी आनुक् च। आशृङ्गाग्रं शिखराग्रमभिव्याप्य। 'आङ् मर्यादाभिविध्योः' इति अभिविधावाङत्र। 'पर्यपाङ्-बहिरञ्चः' इति सः। कवचितं इव कवचाच्छन्नमिव आरूढमूर्तिं समन्तादध्यासितदेहं। आ समन्तात् रूढा अध्यासिता मूर्तिर्देहो यस्य सः। तम्। 'मूर्तिः कायेऽपि काठिन्ये मृत्युयाचितयोर्मतम्' इति विश्वलोचने। आगूढमूर्तिमिति पाठे तु समन्ततश्छन्नविग्रहमित्यर्थः। उपहितरसैः धृताम्बुभिः। अत्यक्तार्द्रीभावैरित्यर्थः। 'रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे। पारदे धातुवीर्याम्बुरागे गन्धरसे तनौ' इति विश्वलोचने। ओषधीनां फलपाकान्तजातीनां सहस्रैः अनेकदेशशतकैः च

आकीर्णान्तं व्याप्तपर्यन्तप्रदेशं । आकीर्णः व्याप्तः अन्तः पर्यन्तदेशः यस्य सः । तम् । 'अन्तो नाशे मनोहरे । स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु' इति विश्वलोचने । सरसगहनं च अनाश्यानकाननं । सरसं मनोज्ञं अपरित्यक्तार्द्रीभावं वा गहनं काननं यस्य सः । तम् । 'गहनं काननं वनं' इत्यमरः । एनं एतं शैलराजं पर्वतश्रेष्ठं । 'राजाहःसखेष्टः' इति टः सान्तः । उल्काक्षपितचमरीबालभारः । उल्काः ज्वालाः 'उल्का ज्वाला' इति क्षीरस्वामी । ताभिः क्षपिताः क्षयं प्रापिताः चमर्यः मृगविशेषाः । तासां वालभाराः कचसमूहाः चमरीवालभाराः । उल्काभिः क्षपिताः चमरीवालभाराः येन सः । दवाग्निः वनपावकः । 'दवो दावश्च पुंस्येव वनेऽपि वनपावके' इति विश्वलोचने । दवः एव अग्निः दवाग्निः । त्वत्सान्निध्यात् तव सामीप्यात् । न बाधेत न पीडयेत् ।

The sylvan fire, destroying by its flames the large bushy tails of the Camaris, would not, owing to your being in its proximity, damage this, the lord of mountains, possessing beautiful forests, with its borders scattered over with thousands of juicy plants, having its body as if armoured on accouat of its being covered over with the masses of snow from its foot to the uppermost part of its peaks.

त्वत्तो निर्यन्स यदि सहसा विद्युतो जातवेदाः<br>
प्रालेयाद्रिं सतुहिनवनं निर्दिधक्षेत्तदा स्वैः ।<br>
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-<br>
रापन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ ६२ ॥

अन्वयः— त्वत्तः सहसा निर्यन् विद्युतः जातवेदाः यदि सतुहिनवनं प्रालेयाद्रिं निर्दिधक्षेत् तदा स्वैः वारिधारासहस्रैः एनं अलं शमयितुं अर्हसि, हि (यतः) उत्तमानां सम्पदः आपन्नार्तिप्रशमनफलाः ।

त्वत्तः इत्यादि । त्वत्तः भवतः सकाशात् सहसा शीघ्रं निर्यन् निर्गच्छन् । प्रादुर्भवन्नित्यर्थः । विद्युतः सौदामन्याः जातवेदाः धनञ्जयः । 'अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनञ्जयः । कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्' इत्यमरः । वैद्युतोऽग्निरित्यर्थः । यदि सतुहिनवनं सहिमवनं । तुहिनेन सह सतुहिनं । सतुहिनानि वनानि यस्य सः सतुहिनवनः । तम् । 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमं । प्रालेयं मिहिका च' इत्यमरः । प्रालेयाद्रिं हिमाद्रिं । निर्दिधक्षेत् निःशेषेण दग्धुमिच्छेत् ।

दह्तेस्सन्नन्ताल्लिङ् । तदा तस्मिन्काले स्वैः स्वकीयैः वारिधारासहस्रैः जलधाराणां सहस्रैः । सहस्रसङ्ख्याकाभिः वारिधाराभिरित्यर्थः । एनं प्रालेयाद्रिं अलं अत्यर्थं शमयितुं दावदहनजनितप्लोषसम्भूततदर्तिमपनेतुं अर्हसि योग्यो भवसि । हि यतः । 'हि पादपूरणे हेतौ' इति विश्वलोचने । उत्तमानां महत्तमानां सम्पदः समृद्धयः आपन्नार्तिप्रशमनफलाः आर्तार्तिप्रशमनप्रयोजनाः । आपन्नानामापदुपहतानां याः अर्तयः दुःखसंवेदनानि तासां प्रशमनं परिहरणमेव फलं प्रयोजनं यासां ताः । भवतः वारिसम्पत्तियुक्तत्वात्प्रालेयाद्रेर्विद्युज्जनितजातवेदोविहितप्लोषत्वादापदुपहतत्वात्सम्पन्नेन भवता तदर्तिरवश्यं परिहर्तव्येति भावः । एनमित्यनेन जातवेदसो ग्रहणमयुक्तं तस्यानापन्नत्वात् तद्दुःखप्रशमनस्यासम्भवात् । अतः एव मल्लिनाथादिटीकाकृत्कृतव्याख्यानं चिन्त्यम् ।

If the fire of lightning, originating from you all at once, would cherish a desire to burn out the Himālaya with its forests possessing ( masses of ) snow, then in that case you deserve to soothe it ( the mountain ) fully by means of thousands of showers of your water; for the riches of the noblest ( the best ) have their purpose effected by the alleviation of the sufferings of suffering mortals.

मोच्चैस्तत्र स्तनितनिनदानद्रिकुञ्जे तथास्त्वं
भैषां त्वद्भूद्भयमसुहरं शौर्यदर्पोद्धुराणाम् ।
ये सरम्भोत्पतनरभसास्स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ॥ ६३ ॥

अन्वयः— तस्मिन् संरम्भोत्पतनरभसाः ये शरभाः मुक्ताध्वानं भवन्तं स्वाङ्गभङ्गाय सपदि लङ्घयेयुः [ तेषां ] शौर्यदर्पोद्धुराणां एषां त्वत् असुहरं भयं मा भूत् [ इति ] तत्र अद्रिकुञ्जे उच्चैः स्तनितनिनदान् त्वं मा तथाः ।

मेत्यादि । तस्मिन् हिमवद्गिरौ संरम्भोत्पतनरभसाः कोपोच्चलनरभसाः । संरम्भेण प्रयत्नावेशेन कोपेन वा उत्पतनमुच्चलनं सरम्भोत्पतनं । 'संरम्भः सम्भ्रमे कोपे' इति शब्दार्णवे । संरम्भोत्पतने रभसो वेगो येषां ते संरम्भोत्पतनरभसाः । 'हर्षे वेगे च रभसः' इति विश्वलोचने । ये शरभाः अष्टापदाख्याः मृगविशेषाः । 'शरभः शलभे चाष्टापदे प्रोक्तो मृगान्तरे' इति विश्वः । मुक्ताध्वानं परित्यक्त-

शरभोत्प्लवनमार्गं । मुक्तः परित्यक्तः अध्वा शरभोच्चलनमार्गः येन सः । तम् । **भवन्तं** त्वाम् । **स्वाङ्गभङ्गाय** स्वशरीरविघातार्थं । स्वस्य आत्मनः अङ्गं शरीरं स्वाङ्गम् । तस्य भङ्गः विघातः स्वाङ्गभङ्गः । स्वाङ्गानि भङ्क्तुमित्यर्थः । 'तुमर्थाद्भावे' इत्यप् । **सपदि** शीघ्रं **लङ्घयेयुः** अभिद्रवेयुः । **तेषां शौर्यदर्पोद्धुराणां** शौर्याभिमानोद्धतानाम् । शौर्यस्य वीर्यस्य दर्पः अभिमानः शौर्यदर्पः । तेन उद्धुराणामुद्धतानाम् । एषां शरभाणां **त्वत्** त्वत्तः । त्वत्सकाशादित्यर्थः । **असुहरं** प्राणहरं । प्राणघातकमित्यर्थः । असून् प्राणान् हरतीति असुहरं । 'कर्मण्यण्' इत्यण् । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । **भयं** भीतिः **मा भूत्** न भवतु । लुङि रूपम् । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति लुङि माङ्योगेऽडागमप्रतिषेधः । 'माङि लुङ्' इति माङ्योगे लुङ् । इति हेतोः तत्र हिमाचले अद्रिकुञ्जे गिरिगह्वरे **उच्चैः** महतः **स्वानितानिनदान्** गर्जितध्वनीन् । 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः । **त्वं** भवान् **मा तथाः** मा कुरु । लुङो दः । 'तनु विस्तारे' इत्यस्माद्धोः थासि परतः सेरुप् । 'हन्मन्यमुरमनमृगमूवनतितनादेर्ङ्खं झलि' इति तनुधोर्ङस्य खं थासथकारस्य झलत्वात् ।

You should not give out very loud thundering sounds there in the caverns of the mountain so that the Sarabhas, there, become ill-mannered owing to their being proud of their valour, possessing rapidity in their act of jumping high up in anger, who might be suddenly surprising you, keeping out of their way, ( only ) to tear down their own bodies, might not have any fear, depriving them of their lives, from you.

यद्यप्येते स्तनितरभसादुत्पतेयुर्भवन्तं
तैर्यग्योना भृशमपधियः स्वाङ्गभङ्गैकनिष्ठाः ।
तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्
केषां न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ६४ ॥

अन्वयः— यदि एते भृशं अपधियः स्वाङ्गभङ्गैकनिष्ठाः तैर्यग्योनाः स्तनितरभसात् भवन्तं उत्पतेयुः अपि [ तदा ] तान् तुमुलकरकावृष्टिपातावकीर्णान् कुर्वीथाः । निष्फलारम्भयत्नाः केषां परिभवपदं न स्युः ।

यदीत्यादि । **यदि एते** शरभाः **भृशं** अत्यर्थं **अपधियः** विनष्टसमीचीनज्ञानाः । अपगता विनष्टा धीः बुद्धिः येषां ते अपधियः । प्रादिर्षसः । स्वाङ्ग-

भङ्गैकनिष्ठाः स्वाङ्गभञ्जनैकव्यापाराः। स्वं स्वकीयं अङ्गं शरीरं स्वाङ्गं। तस्य भङ्गः भञ्जनमेव एका अद्वितीया निष्ठा व्यापारः येषां ते। 'निष्ठा निर्वहनिष्पत्तिनाशान्तोत्कर्षयाचने। क्लेशे' इति विश्वलोचने। निष्ठाशब्दोऽत्र क्लेशार्थकः। क्लेशशब्दश्च व्यवसायार्थेऽपि दृश्यते। 'क्लेशो रोगेऽपि रोगादौ व्यवसाये च दृश्यते' इति विश्वलोचने। तैर्यग्योनाः तिर्यग्योनेरागताः। तिर्यग्योनिजा इत्यर्थः। 'ततः आगतः' इत्यागतार्थेऽण्। स्तनितरभसात् त्वद्गर्जितध्वनितद्धक्रोधात् भवन्तं त्वां उत्पतेयुः अभिद्रवेयुः तदा तान् शरभान् तुमुलकरकावृष्टिपातावकीर्णान्। करकाः वर्षोपलाः। 'करका तु घनोपले' इति विश्वलोचने। करकाणां घनोपलानां वृष्टिः वर्षं करकावृष्टिः। तस्याः पातः पतनं करकावृष्टिपातः। तुमुलः दारुणश्चासौ करकावृष्टिपातश्च तुमुलकरकावृष्टिपातः। तेन अवकीर्णाः प्रद्राविताः। तान्। कुर्वीथाः कुरुष्व। विधौ लिङ्। तथा हि—निष्फलारम्भयत्नाः। आरभ्यन्ते इत्यारम्भाः। कर्माणि इत्यर्थः। तेषु यत्नाः उद्योगाः आरम्भयत्नाः। निष्फलाः विफलाः। असिद्धप्रयोजनाः इत्यर्थः। निष्फलाश्च ते आरम्भयत्नाश्च निष्फलारम्भयत्नाः। 'निष्फलः आरम्भयत्नः येषां ते निष्फलारम्भयत्नाः' इति योगिराजकृतं व्याख्यानं 'केषां' इति पाठस्य संग्रहे क्रियमाणेऽसमञ्जसम्। केषां परिभवपदं केषां पुंसां तिरस्कारास्पदं न स्युः न भवेयुः। सर्वेषां तिरस्कारास्पदं भवेयुरित्यर्थः।

If these beasts, exceedingly deprived of intellecual qualities, exerting only for tearing down their own bodies, would possibly surprise you on account of their passion being excited by your thunderings, then you should put them to rout by heavy hail-storms; whose attempts at doing what they have undertaken would not become an object of contempt when rendered futile !

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौले-
र्च्यं भर्तुस्त्रिभुवनगुरोरर्हतः सत्सपर्यैः।
शश्वत्सिद्धैरुपहृतबलिं भक्तिनम्रः परीयाः
पापापाये प्रथममुदितं कारणं भक्तिरेव ॥ ६५ ॥

अन्वयः—तत्र दृषदि व्यक्तं, अर्धेन्दुमौलेः अर्च्यं, सत्सपर्यैः सिद्धैः शश्वत्

उपहृतबलिं भर्तुः त्रिभुवनगुरोः अर्हतः चरणन्यासं भक्तिनम्रः [ सन् ] परीयाः [ यतः ] पापापाये भक्तिः एव प्रथमं कारणं उदितं ।

तत्रेत्यादि । तत्र हिमवति दृषदि शिलायां । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः । व्यक्तं प्रकटम् । अर्धेन्दुमौलेः । अर्धः खण्डभूतः इन्दुरिवेन्दुः चिह्नभूतः यत्र यस्य वा अर्धेन्दुः । अर्धशब्दस्यात्र खण्डवाचित्वात्समांशवाचित्वाभावात्पुंस्त्वेन निर्देशः समांशवाचिन एव 'अर्धं नप्' इति 'समेऽर्धम्' इति वा नप्त्वेन निर्देशात् । 'अर्धं समांशके क्लीबे अर्धः खण्डे पुमानपि' इति विश्वलोचने । इन्दुरिवेन्दुरित्यत्र 'उश् त्वर्चार्थध्वजचित्रे' इति ध्वजार्थे चिह्नार्थे विधीयमानस्य कस्योस् । तेनार्धेन्दुरित्यस्यार्धेन्दुचिह्नः इत्यर्थः । उक्तं च– 'अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ नाशः कृतो देवपथादिषु' इति, 'मत्स्याश्च पुष्पाणि च तारकाश्च चन्द्रार्धचन्द्राश्च पतत्रिणश्च । तस्मिन्निवार्थे उसमाचरेज्ज्ञः प्रासादगुल्मार्कमया मृगाश्च' इति च । अर्धेन्दुर्मौलिः किरीटं यस्य सः । तस्यार्धेन्दुमौलेरर्धेन्दुचिह्नाङ्कितकिरीटधारिणो देवविशेषस्य वा । 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः । 'मौलिर्धम्मिल्लचूडयोः । किरीटेऽपि' इति विश्वलोचने । अर्च्यं पूज्यं । 'व्यस्य वा कर्तरि' इति ता । किरीटधारिणा देवविशेषेण पूज्यमित्यर्थः । सत्सपर्यैः सत्परिचर्यैः सदर्हणैर्वा । सती समीचीना सपर्या परिचर्या शुश्रूषा वा येषां ते । तैः । सपर्याशब्दोऽर्चार्थोऽपि । 'सपर्याऽर्चाऽर्हणा समाः' इत्यमरः । सिद्धैः देवयोनिविशेषैः । 'सिद्धस्तु नित्ये निष्पन्ने प्रसिद्धे देवयोनिषु' इति विश्वलोचने । शश्वत् सर्वकालं उपहृतबलिं विहितपूजाविधिं । उपहृतः कृतः बलिः पूजाविधिः यस्य सः । 'बलिश्चामरदण्डेऽपि करपूजोपहारयोः । सैन्धवेऽपि' इति विश्वलोचने । भर्तुः त्रैलोक्याधिपतेः त्रिभुवनगुरोः त्रिभुवनाज्ञाननिवारकस्य । उक्तं च 'गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निवारकः' इति । त्रयाणां भुवनानां समाहारः त्रिभुवनं । 'रात्' इति स्त्रियां प्राप्तस्य ङीत्यस्य 'स्यपात्राद्यत्' इत्यकारान्तस्यापि भुवनशब्दस्य पात्रादौ पठितत्वात् प्रतिषिद्धत्वात् 'रः समाहारे' इति नप् । त्रिभुवनस्य गुरुः त्रिभुवनगुरुः । तस्य । अर्हतः भगवतो जिनेन्द्रस्य चरणन्यासं पादन्यासं । न्यस्यते निक्षिप्यते इति न्यासः । प्रतिष्ठितचरणद्वयमित्यर्थः । 'चरणोऽस्त्री बह्वृचादौ मूलेऽपि पदगोत्रयोः । चरणं भ्रमणेऽङ्घ्रौ स्यात्' इति विश्वलोचने । भक्तिनम्रः भक्त्या नमनशीलः सन् । 'नम्कम्पिस्म्यजसूकमहिंसदीपो रः' इति शीले रः । भक्तिभारावनतः सन्नित्यर्थः । परीयाः परितः इयाः यायाः । प्रदक्षिणयेत्यर्थः । अर्हच्चरणविन्यासं प्रदक्षिणीकुर्वित्यर्थः । यतः

पापापाये पापकर्मनाशकर्मणि भक्तिः एव जिनेन्द्रसेवैव । 'भक्तिर्विभागे सेवायां' इति विश्वलोचने । प्रथमं मुख्यं कारणं निदानं उदितं निवेदितम् । प्राचार्यैरिति शेषः ।

As devotion only is described as the excellent means of destroying sin, you, bowing down in devotion, should circumambulate the foot print of the lord, Jina ( Arhat ), the preceptor of all the three worlds, distinctly manifested on a stone there, worthy of being worshipped by a god wearing a crown bearing a mark of the crescent-moon, worshipped by the demigods that are highly respected.

यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
सिद्धक्षेत्रं विदधति पदं भक्तिभाजस्तमेनम् ।
दृष्ट्वा पूतस्त्वमपि भवताद्धि, पुनर्दूरतोऽमुं ।
कल्पिष्यन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ६६ ॥

अन्वयः— यस्मिन् दृष्टे उद्धूतपापाः भक्तिभाजः करणविगमात् ऊर्ध्वं सिद्धक्षेत्रं विदधति । एनं पदं दृष्ट्वा त्वं अपि पूतः भवतात् । अमुं दूरतः श्रद्दधानाः स्थिरगणपदप्राप्तये कल्पिष्यन्ते ।

यस्मिन्नित्यादि । यस्मिन् भगवदर्हच्चरणन्यासे दृष्टे अवलोकिते सति । 'यद्भावाद्भावगतिः' इति ईप् । उद्धूतपापाः विगलितकर्ममलकलङ्काः । उद्धूतं विगलितं पापं कर्ममलकलङ्कः येषां ते उद्धूतपापाः । भक्तिभाजः परमार्थभूताप्तागमतपोभृच्छ्रद्धानजुषस्तत्त्वार्थश्रद्धानजुषो वा । भक्तिं श्रद्धानं भजन्ते सेवन्ते इति भक्तिभाजः । 'भजो ण्विः' इति ण्विः । करणविगमात् ऊर्ध्वं द्रव्यमोक्षादनन्तरं । करणस्य गात्रस्य शरीरस्य विगमः विलयः आत्मनः पृथग्भावः करणविगमः । तस्मात् । ऊर्ध्वं अनन्तरं । 'करणं साधकतमे कार्यकायस्थकर्मसु । क्रियायामिन्द्रिये क्षेत्रे करणं बालवादिषु । गीताङ्गहारसंवेशक्रियाभेदेऽपि चेष्यते ।' इति विश्वलोचने । 'क्षेत्रं शरीरे दारेषु केदारे सिद्धसंश्रये' इत्यपि विश्वलोचने एव । सिद्धक्षेत्रं सिद्धसंश्रयं । सिद्धिगतिगमनस्थानमित्यर्थः । विदधति कुर्वन्ति । एनं एतत् पदं अर्हच्चरणन्यासस्थानं दृष्ट्वा विलोक्य त्वं अपि भवानपि पूतः विगलितकर्ममलकलङ्कत्वाच्छुद्धः भवतात् भव । 'तुह्योर्ङ्ताद्वा' इत्याशिषि हेर्ङ्तात् । अमुं भगवदर्हच्चरणन्यासं दूरतः अत्यर्थं श्रद्दधानाः श्रद्धानं कुर्वाणाः । भजमानाः इत्यर्थः । 'तिरोऽन्तर्द्धौ' इति प्रयोगात् श्रदन्तरोर्गिव-

द्वृत्तिः इति महावृत्तिकारोक्तेः अतो गित्वम्। स्थिरगणपदप्राप्तये। गणानां आचीर्णतीव्रतपस्यानां मुनिसङ्घातानां पदं स्थानं मोक्षः शुद्धपर्यायो वा गणपदं। स्थिरमविनश्वरं च तद्गणपदं च स्थिरगणपदम्। शुद्धपर्यायस्याविनश्वरत्वात्स्थिरेतिविशेषणम्। तस्य प्राप्तये तत्प्राप्तुं। 'ध्वर्थवाचोऽर्थात्कर्मणि स्थानिनः' इत्यप्। कल्पिष्यन्ते समर्थाः भविष्यन्ति।

May you, on seeing this (foot-print), on seeing which the devotees with their sins shaken off completely establish a holy place of Siddhas (the souls attaining salvation) after the abandonment of their bodies, become purified. Those, having full faith in this, would be able to attain the everlasting position attained by hosts of sages.

तस्योपान्ते रिरचयिषवो नूनमातोद्यगोष्ठीं
शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः।
तत्रासेवां विततनुपुभिर्लोकभर्तुर्जिनस्य
संरक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ॥ ६७ ॥

अन्वयः— तस्य उपान्ते आतोद्यगोष्ठीं रिरचयिषवः अनिलैः पूर्यमाणाः कीचकाः नूनं मधुरं शब्दायन्ते। तत्र लोकभर्तुः जिनस्य आसेवां विततनुपुभिः संरक्ताभिः किन्नरीभिः त्रिपुरविजयो गीयते।

तस्येत्यादि। तस्य भगवदर्हच्चरणन्यासस्य उपान्ते समीपे आतोद्यगोष्ठीं वादित्रविषयकं सम्भाषणं। आतोद्यं चतुर्विधं वाद्यं। 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः। तस्य गोष्ठी नानोक्तिसम्पन्ना सभा। 'समज्या परिषद्गोष्ठी सभासमितिसंसदः। आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः' इत्यमरः। 'गावो नानोक्तयस्तिष्ठन्त्यस्यामिति गोष्ठी' इति क्षीरस्वामी। ताम्। रिरचयिषवः रचितुमिच्छवः 'तुमीच्छायां धोर्वोप' इतीच्छायां सनि 'सन्भिक्षाशंसादुः' इत्युः। अनिलैः वायुभिः पूर्यमाणाः ध्मायमानाः कीचकाः वेणवः। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। नूनं मधुरं मनोज्ञं यथा स्यात्तथा शब्दायन्ते शब्दं कुर्वन्ति। 'शब्दादेः कृञि' इति शब्दादिद्यन्तात्करोत्यर्थे क्यङ्। तत्र भगवदर्हच्चरणन्यासप्रदेशे लोकभर्तुः त्रिलोकाधिपतेः जिनस्य अर्हतः आसेवां भक्तिं विततनुपुभिः वितनितुमिच्छुभिः। कर्तुमिच्छुभिरित्यर्थः। 'तुमीच्छायां धोर्वोप्' इतीच्छायां

सनि 'सन्भिक्षाशंसाद्गुः' इत्युः। संरक्ताभिः सातिशयभक्तिभाग्भिः। किन्नरीभिः किन्नरस्त्रीभिः। 'व्यन्तराः किन्नरकिम्पुरुषमहोरगगन्धर्वयक्षराक्षसभूतपिशाचाः' इति-सूत्रोक्तदेवविशेषस्त्रीभिरित्यर्थः। त्रिपुराविजयः औदारिकतैजसकार्मणशरीरत्रयविजयः। अनादिकालसम्बद्धशरीरत्रयजिहीर्षया तपस्यतस्तत्त्याग एव तज्जयः। मोक्षप्राप्तिरित्यर्थः। त्रयाणां पुराणां शरीराणां समाहारः त्रिपुरं। 'रात्' इति स्त्रियां प्राप्तस्य ङीत्यस्य 'स्यपात्राद्यत्' इत्यकारान्तस्यापि पुरशब्दस्य पात्रादौ पठितत्वात्प्रतिषिद्धत्वात् 'रः समाहारे' इति नप्। 'पुरं पाटलिपुत्रे स्यादगृहोपरिगृहे गृहे। पुरं देहे गुग्गुलौ तु पुरः पुरि पुरं न ना। दशपूर्वस्तु वालेये' इति विश्वलोचने। तस्य विजयः पराजयः। अभिभवो दमनं वेत्यर्थः। 'स्यिः समाहारे रश्चाखौ' इति त्रिशब्दस्य सङ्ख्यावाचिनः सुबन्तोत्तरपदेन सह रसः।

In the vicinity of it, the bamboos, being filled with wind, desirous of having a discourse upon the musical instruments, produce sweet sounds indeed. The victory over the three bodies is sung there by the Kinnara ladies, devoted very much, desirous of worshipping Jina, the lord of the world.

**वेणुष्वेषु स्फुटमिति तदा मन्द्रतारं ध्वनत्सु**
**प्रोद्गायन्तीष्वतिकलकलं तज्जयं किन्नरीषु।**
**निर्ह्रादी ते मुरव इव चेत्कन्दरीषु ध्वनिः स्यात्**
**सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समस्तः॥ ६८॥**

अन्वयः– तदा एषु वेणुषु इति स्फुटं मन्द्रतारं ध्वनत्सु, किन्नरीषु तज्जयं अति-कलकलं प्रोद्गायन्तीषु ते ध्वनिः मुरवे इव कन्दरीषु निर्ह्रादी स्यात् चेत्, तत्र पशुपतेः सङ्गीतार्थः ननु समस्तः भावी।

वेणुष्वित्यादि। तदा भगवदर्हच्चरणन्यासाराधनावसरे एषु तेषु तत्रत्येषु वेणुषु मस्करेषु। कीचकेष्वित्यर्थः। इति पूर्वश्लोकोक्तप्रकारेण। 'वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः। शतपर्वा यवफलो वेणुमस्करतेजनाः' इत्यमरः। 'इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः। इति प्रकरणेऽपि स्यात्समाप्तौ च निदर्शने' इति विश्वलोचने। स्फुटं प्रव्यक्तं मन्द्रतारं। मन्द्रः गम्भीरस्तारोत्युच्चः ध्वनिः यथा स्यात्तथा मन्द्रतारं। 'कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु। नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः' इत्यमरः। ध्वनत्सु ध्वनिं कुर्वाणेषु। किन्नरीषु किन्नरस्त्रीषु

किन्नरकन्यकासु वा। गन्धर्वस्त्रीषु गन्धर्वकन्यकासु वेत्यर्थः। 'पुंयोगादज्येष्ठादिभ्यः' इति स्त्रियां ङी। किन्नरस्य भार्या कन्या वा किन्नरी। अत्र किन्नरकन्यात्वमौपचारिकं देवानां वैक्रियिकशरीरधारित्वात्कन्याद्यपत्यासम्भवात्। पुंयोगेनात्र जन्यजनकभावोऽपि गृह्यते। उक्तं च तत्त्वबोधिनीकारैः– 'स [ पुंयोगः ] चेह दम्पतिभाव एवेति नाग्रहः, किन्तु जन्यजनकभावोऽपि गृह्यते, सङ्कोचे मानाभावात्' इति। तज्जयं त्रिपुरविजयं गायन्तीषु गानं कुर्वाणासु सतीषु। 'यद्भावाद्भावगतिः' इतीप्। कन्दरीषु दरीषु। 'वा स्त्री तु कन्दरो दर्यामङ्कुशे पुंसि कन्दरः' इति विश्वलोचने। निर्ह्रादी प्रतिध्वनन् स्यात् भवेत् चेत् यदि तत्र भगवदर्हच्चरणन्याससमीपप्रदेशे। पशुपतेः प्राणिगण-संरक्षकस्य भगवतोऽर्हतः। पशवः श्रेयोमार्गानभिज्ञाः प्राणिनः। 'पशुर्मृगादौ प्रमथे पशुर्मांसारिकात्मनि। अज्ञाने छागमात्रेऽपि' इति विश्वलोचने। शुद्धज्ञानस्वभावस्य कर्मावृतत्वादज्ञत्वात्प्राणिनां संसारिणां पशुत्वमित्यूह्यम्। पशून् अज्ञानान् प्राणिनः पातीति भगवतोऽर्हतः पशुपतित्वं। 'पाति पतिः। पातेर्डतिः (उ. ४९७)' इति क्षीरस्वामी। पशूनामज्ञानानां प्राणिनां पतिः पाता पशुपतिः। तस्य। उक्तं चाशाध-रैरनगारधर्मामृते 'श्रेयोमार्गानभिज्ञानिह भवगहने जाज्वलद्दुःखदाव–। चक्रे चङ्क्र-म्यमाणानतिचकितमिमानुद्धरेयं वराकान्॥ इत्यारोहत्परानुग्रहरसविकसत्प्रक्रमोपात्तपुण्य-प्रक्रान्तैरेव वाक्यैः शिवपथमुचिताञ् शास्ति योऽर्हन् स नोऽव्यात्॥' इति। सङ्गीतार्थः सङ्गीतवस्तु। 'तौर्यत्रिकं तु सङ्गीतं न्यायारम्भे प्रसिद्धके। तूर्याणां त्रितये च' इति शब्दार्णवे। 'अर्थः प्रयोजने चित्ते हेत्वभिप्रायवस्तुषु। शब्दाभिधेये विषये स्यान्निवृत्तिप्रकारयोः' इति विश्वलोचने। सङ्गीतमेवार्थः सङ्गीतार्थः। ननु खलु समस्तः समग्रः। सम्पूर्णः इत्यर्थः। भावी भविष्यति। 'गम्यादिर्वर्त्स्यति' इति गम्यादौ पठितः 'भुवश्च' इति णिना साधितः भावीतिशब्दः : भविष्यत्यर्थे साधुः। कथं भगवतोऽर्हतः पशुपतिरिति सञ्ज्ञा सम्भवतीति नाऽशङ्कनीयं, तस्याज्ञप्राणिगण-पातृत्वात्तन्नाम्नः गौणत्वात्।

If your thundering sound would be echoing in the valleys (or caves) like the sound of a drum in the drum itself when the bamboos would be giving out deep and very loud sounds clearly as described above at the time of praying Jina, and the Kinnara ladies would be singing loudly the victory over the three bodies in a manner producing a confused noise, there the concert of the protector of living beings (i. e. Jina) would indeed be made perfect.

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषान्
तस्याऽदूरे कुकविताकल्पितं तत्प्रतीयाः।
हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रं
दण्डेनाऽऽविष्कृतमिव गुहाद्वारकं वैजयार्धम् ॥६९॥

अन्वय—प्रालेयाद्रेः उपतटं तान् तान् विशेषान् अतिक्रम्य तस्य अदूरे कुकविकविताकल्पितं हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रं तत् दण्डेन आविष्कृतं वैजयार्धं गुहाद्वारकं इव प्रतीयाः।

प्रालेयेत्यादि। प्रालेयाद्रेः हिमालयाभिधानधराधरस्य उपतटं तटसमीपप्रदेशे। 'ह्निः सुप्' इत्यादिना समीपार्थे हसः। तांस्तान् सर्वान्। वीप्सायां द्विः। विशेषान् द्रष्टव्यार्थान्। 'विशेषोऽवयवे द्रव्ये द्रष्टव्योत्तमवस्तुनि' इति शब्दार्णवे। अतिक्रम्य दर्शं दर्शमुल्लङ्घ्य तस्य हिमवदचलस्य अदूरे प्रान्तप्रदेशे कुकविकविताकल्पितं। कवयः विद्वांसः, न काव्यकरः एव। 'कविः शुक्रेऽपि वाल्मीके सूरौ काव्यकरे पुमान्' इति विश्वलोचने। 'पण्डितः सूरिराचार्यः' इति धनञ्जयवचनात् 'धीमान्सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरवचनाच्च पण्डितार्थाभिधेयः सूरिशब्दः। अतः कविशब्दोऽपि विद्वदर्थवचनः। कुत्सितः कविः कुकविः। अल्पज्ञाननिबन्धना अज्ञाननिबन्धना वा कुत्सेत्यवसेयं सुधीभिः। नैव सा परमतनिन्दानिबन्धना। अज्ञानदोषाश्रयः कविः कुकविरित्यर्थोऽत्राभिमतः। कवेर्धिद्रूपः कर्म कविता। विद्वद्भिरचितो ग्रन्थ इत्यर्थः। कुकवेः कविता कुकविता। तस्यां ताभिर्वा कल्पितं कल्पनामात्रेण जल्पितम्। न परमार्थसदिति भावः। जिनागमानभिज्ञविद्वज्जनकल्पनाशिल्पिजल्पितमित्यर्थः। हंसद्वारं हंसानां मानससरःप्रस्थायिनां द्वारं गमनमार्गः भृगुपतियशोवर्त्म जामदग्न्ययशःप्रवृत्तिकारणं। भृगूणां भृगुकुलोत्पन्नानां पतिः श्रेष्ठः इति, भृगुः शिवः पतिः ईश्वरः यस्य सः इति वा भृगुपतिः। जामदग्न्यः इत्यर्थः। 'भृगुः शुक्रे प्रपाते च जमदग्नौ प्रपातिनि' इति विश्वलोचने। 'इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरिशिता' इत्यमरः। भृगुपतेः भृग्वीशितुः यशः कीर्तिः भृगुपतियशः। तस्य वर्त्म प्रसरणमार्गः। यत् क्रौञ्चरन्ध्रं क्रौञ्चस्य हिमालयस्य दक्षिणदिशि वर्तमानस्य कस्यचित्पर्वतविशेषस्य रन्ध्रं विवरं तत् दण्डेन षट्खण्डभरतभूमण्डलजिगीषया विजयार्धोत्तरदिग्वर्तिखण्डत्रयजिगमिषया विजयार्धधराधरकन्दरस्थपिहितद्वारं बिभित्सुना चक्रवर्तिना प्रयुक्तेन स्वकीयदण्डरत्नेन आविष्कृतं उद्घाटितं वैजयार्धं विजयार्धभूधराङ्गभूतं। विजयार्धस्येदं वैजयार्धं। वैजयार्थमिति पाठस्तु नास्माभिरूरीकृतः,

असमञ्जसत्वात्तदर्थग्रहणेऽस्माकं बुद्धिमान्द्यात्सामर्थ्याभावाद्वा । 'वैजयार्थ' इति पाठस्तु यथाकथञ्चिद्ग्राह्यः । गुहाद्वारकं इव अज्ञातं गुहाद्वारं । 'कुत्सिताज्ञाताल्पे' इति कज्ञातार्थे । ऐदंयुगीनजननां तद्दर्शनसामर्थ्याभावात्तस्याज्ञातत्वमिति भावः । कन्दरद्वारमिवेत्यर्थः । प्रतीयाः जानीहि ।

Having passed over all the beautiful scences of the regions adjoining to the Himalaya mountain, you should take the Krauñca defile which is in the proximity of it, which is conjectured as the gate for the swans and as the path of the glory of Parasurama in the works of the learned, ignorant of the facts, for the door, carved into the rock of the cave of the Vijayardha mountain by means of the sceptre ( of a Cakravartin ).

**बह्वाश्चर्ये हिमवति कृतालोकनत्वादसङ्गः**
**तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी ।**
**कृष्णः सर्पो गुरुरिव गिरेर्गह्वरान्निष्पताशु**
**श्यामः पादो बलिनियमनेऽभ्युद्यतस्येव विष्णोः ॥७०॥**

अन्वय— बह्वाश्चर्ये हिमवति कृतालोकनत्वात् असङ्गः तिर्यगायामशोभी [ त्वं ], तेन उदीचीं दिशं अनुसरेः । गुरुः कृष्णः सर्प इव [ गह्वरात् ] बलिनियमने अभ्युद्यतस्य विष्णोः श्यामः पादः इव गिरेः गह्वरात् आशु निष्पत ।

बह्वित्यादि बह्वाश्चर्ये बहुविस्मयावहदृश्यसम्पन्ने । बहूनि आश्चर्याणि विस्मयावहानि दृश्यानि यस्मिन् । तस्मिन् हिमवति हिमालयाभिधाने नगाधिराजे । 'हेतौ सर्वाः प्रायः' इति हेतावीप् । हिमालयं प्राप्तुमित्यर्थः । कृतालोकनत्वात् कृतविमर्शत्वात् कृतावधारणत्वाद्वा । कृतनिश्चयत्वादित्यर्थः । असङ्गः परित्यक्तबाह्याभ्यन्तरपरिग्रहः । तिर्यगायामशोभी तिरश्चीनदैर्घ्येण शोभमानः । तिर्यक् तिरश्चीनश्चासावायामो दैर्घ्यं च तिर्यगायामः । तेन शोभते इति तिर्यगायामशोभी । 'शीलेऽजातौ णिन्' इति शीलार्थे णिन् । त्वं तेन क्रौञ्चाख्यगिरिविवरमार्गेण उदीचीं दिशं उत्तरदिशं अनुसरेः अनुगच्छ । गुरुः महाकायः कृष्णः सर्पः इव कृष्णवर्णोरगः इव । कृष्णकायमहोरग इवेत्यर्थः । गह्वरात् बिलादिति शेषः । बलिनियमने बलिमर्दने । बलिमर्दनकाले बलिमर्दनार्थं वेत्यर्थः । अभ्युद्यतस्य कृतोन्नामस्य विष्णोः भगवतः प्रातर्द्धिकस्य विष्णुकुमाराभिधानमुनिराजस्य श्यामः कृष्णवर्णः पादः इव चरणः इव गिरेः

क्रौञ्चाभिधानभूधरस्य गह्वरात् विवरात् । 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा । गह्वरं' इत्यमरः । आशु शीघ्रं निष्पत निर्गच्छ । वैरनिर्यातनाभिप्रायेण जिनमुनिशतसप्तकमग्निमुखे प्रक्षेप्तुकामस्य बलिनामविप्रस्य प्रमर्दनार्थं धृतवामनाकृतिनर्द्धिभाजा विष्णुकुमाराभिधेन मुनीश्वरेण पादद्वियतेन पूर्वापरतोयनिधिमध्यस्थभरतभूमण्डलभुवमाभिव्याप्य तृतीयः पादः उन्नामितः आसीदिति पौराणिकी कथा ।

You, who have renounced all the worldly attachments, appearing beautiful owing to your horizontal length, should, on account of your having determined to go to the Himalayas, the abode of many wonders, proceed through the Krauñca defile to the northern direction. Like a big black serpent ( coming out of a hole ), you, resembling the black foot of the sage Viṣṇukumār raised high up for the pounding down of Bali, should immediately rush out of the defile of that mountain.

तस्माद्धूमप्रचय इव निःसृत्य शैलस्य रन्ध्राद्-
गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः ।
शुभ्रादभ्रस्फटिकघटनाशोभिगण्डोपलस्य
कैलासस्य त्रिदशवनितादर्पणस्याऽतिथिः स्याः ॥ ७१ ॥
क्षीरादच्छच्छविभिरभितः प्रोच्चलन्निर्झरौघैः
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खम् ।
नृत्तारम्भे प्रतिकृतिगतस्यादिभर्तुः पुरस्ताद्--
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ७२ ॥

अन्वय :— शैलस्य तस्मात् रन्ध्रात् धूमप्रचय इव निःसृत्य ऊर्ध्वं च गत्वा क्षीरात् अच्छच्छविभिः अभितः प्रोच्चलन्निर्झरौघैः कुमुदविशदैः शृङ्गोच्छ्रायैः प्रतिकृतिगतस्य आदिभर्तुः पुरस्तात् प्रतिदिनं नृत्तारम्भे राशीभूतः त्र्यम्बकस्य अट्टहासः इव खं वितत्य यः स्थितः तस्य दशमुखभुजोच्छ्वासितप्रस्थसन्धेः शुभ्रादभ्रस्फटिकघटनाशोभिगण्डोपलस्य त्रिदशवनितादर्पणस्य कैलासस्य अतिथिः स्याः ।

तस्मादित्यादि । शैलस्य क्रौञ्चसमाख्यातभूधरस्य तस्मात् प्राक्तनश्लोकोपवर्णितात् प्रसिद्धाद्वा रन्ध्रात् विवरात् । चक्रवर्तिदण्डरत्नविदारितवैजयार्धगुहाद्वारसधर्मणः क्रौञ्चाख्यगिरिगह्वरादित्यर्थः । धूमप्रचयः इव धूमराशिरिव । धूमस्य प्रचयः

राशिः धूमप्रचयः । **निःसृत्य** बहिर्निर्गत्य ऊर्ध्वं च गत्वा व्योममार्गप्रदेशे च सङ्क्रम्य **क्षीरात्** पयसोऽपि अच्छच्छाविभिः स्फटिकतुल्यनिर्मलकान्तिभिः । अच्छस्य स्फटिकस्य च्छविरिव च्छविः कान्तिः यस्य सः । 'ईबुपमानपूर्वस्य ह्रस्वं गतार्थत्वात्' इति ह्रस्वम् । 'अच्छाव्ययमाभिमुख्ये अच्छस्फटिकयोः पुमान् । अच्छः स्वच्छेऽन्यालिङ्गः स्यात्' इति विश्वलोचने । **अभितः** परितः । सर्वतः इत्यर्थः । **प्रोच्चलनिर्झरौघैः** प्रवहत्सफेनपाथःप्रवाहैः । निर्झराः सफेनाश्च ते ओघाः पाथसां प्रवाहाः निर्झरौघाः । 'सूर्याश्वे फेनकर्पासतुषवह्निषु निर्झरः' इति 'ओघः परम्परायां स्याद्द्रुतनृत्योपदेशयोः । ओघः पाथःप्रवाहे च समूहे च पुमानयम्' इति च विश्वलोचने । निर्झरा फेनाः सन्त्यस्येति निर्झरः । 'ओऽभ्रादिभ्यः' इति मत्वर्थेऽत्यः । प्रोच्चलन्तः प्रवहन्तश्च ते निर्झरौघाश्च प्रोच्चलन्निर्झरौघाः । तैः । **कुमुदविशदैः** । कुमुदानि सितकमलानीव विशदैः शुभ्रच्छायैः । 'सिते कुमुदकैरवे' इत्यमरः । 'विशदः पाण्डुरे व्यक्ते' इति विश्वलोचने । 'सामान्येनोपमानं' इति षसः । **शृंगोच्छ्रायैः** शिखरोत्सेधैः । शृङ्गाणां शिखराणां उच्छ्रायाः उत्सेधाः । तैः । 'नगाद्यारोह उच्छ्रायः उत्सेधश्चोच्छ्रयश्च सः' इत्यमरः । **प्रतिकृतिगतस्य** प्रतिबिम्बात्मकस्य **आदिभर्तुः** भगवतः आदिजिनेश्वरस्य **पुरस्तात्** अग्रतः । अग्रभागे इत्यर्थः । **प्रतिदिनं** प्रत्यहं । दिने दिने प्रतिदिनं । **नृत्तारम्भे** नर्तनप्रारम्भकाले । 'लास्यं नृत्तं च नर्तने' इत्यमरः । **राशीभूतः** पुञ्जीभूतः । अराशिः राशिः भवति स्म राशीभूतः । **त्र्यम्बकस्य** ईशानादिगीन्द्रस्य रुद्रस्य वा । त्रीणि अम्बकानि यस्य सः त्र्यम्बकः । तस्य । **अट्टहासः** महत्तरो हासः । 'अट्टावतिशयक्षौमौ' इति यादवः । 'अट्टहासो महत्तरे' इति विदग्धचूडामणौ । **इव** वा **खं** आकाशं **विततत्य** व्याप्य **स्थितः** तिष्ठन् । **तस्य दशमुखभुजोच्छ्वासितप्रस्थसन्धेः** । दश दशसङ्ख्याकानि मुखानि आननानि यस्य सः दशमुखः । रावणः इत्यर्थः । तस्य भुजाः बाहवः । ते इव उच्छ्वासिताः ऊर्ध्वं प्रापिताः प्रस्थसन्धयः शिखरभागाः यस्य सः । तस्य । 'कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः । 'सन्धिः पुंसि सुरङ्गायां रन्ध्रसङ्घट्टने भगे । सन्धिभंगेऽवकाशेऽपि वाटसञ्ज्ञेऽपि पुंस्ययम्' इति विश्वलोचने । **शुभ्रादभ्रस्फटिकघटनाशोभिगण्डोपलस्य** । शुभ्राः शुक्लवर्णाश्च ते अदभ्राः स्थूलाश्च शुभ्रादभ्राः । 'अदभ्रं भूरि भूयिष्ठम्' इति धनञ्जयः । शुभ्रादभ्राश्च ते स्फटिकाश्च शुभ्रादभ्रस्फटिकाः । तेषां घटना अनुवेधः । तया शोभन्ते इति शोभिनः शोभमानाः इत्यर्थः । 'शीलेऽजातौ णिन्' इति शीलार्थे णिन् । शुभ्रादभ्रस्फटिकघटनाशोभिनः गण्डोपलाः स्थूलोपलाः यस्य सः । तस्य । गण्डाः वराः । स्थूलाः इत्यर्थः । 'गण्डस्तु पिटके योगभेदे खड्गिकपो-

लयोः । वरे प्रवीरे चिह्ने च वाजिभूषणबुद्बुदे ' इति विश्वलोचने । गण्डाश्च ते उपलाश्च गण्डोपलाः । गण्डशैलास्तु च्युताः स्थूलोपलाः गिरेः ' इत्यमरः । त्रिदशवनितादर्पणस्य । त्रिदशाः देवाः । ' अमरा निर्जरा देवास्त्रिदशाः विबुधाः सुराः ' इत्यमरः । तेषां वनिताः स्त्रियः तासां । दर्पणस्य दर्पणतुल्यस्य । दर्पणः इव दर्पणः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् ॥ देवस्त्रीदर्पणायमानस्येत्यर्थः । कैलासस्य अष्टापदापराभिधानस्याद्रेः । अतिथिः प्राघूर्णिकः स्याः भवेः । ' अतिथिर्ना गृहागते, ' इत्यमरः । कैलासाचलप्रदेशं व्रज ।

Having rushed out of the defile of that mountain like a mass of smoke and having gone further high up, be you the guest of the Kailāsa mountain which resembles the loud laughter of the three-eyed god ( i. e. the lord of the north-east direction ) gathered into a heap every day at the time of the beginning ( or performance ) of a dance in front of the image of the first lord, on account of the foamy flows, possessing lustre whiter than that of milk, rushing down on all sides, and owing to the lofty peaks white like lotuses, which has stood overspreading the sky, which has its parts in the form of its peaks raised high up like the arms of the ten-mouthed one (i. e. Rāvana), which possesses big rocks appearing to the advantage owing to their being beset with big and white crystals, and which serves as a mirror for the heavenly damsels.

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
शोभामद्रेर्वटतरुमतो मण्डलभ्राजितस्य ।
सद्यःकृत्तद्विरदरदनच्छेदगौरस्य तस्य
प्रालेयांशोर्ग्रसितुमनसा राहुणेवाश्रितस्य ॥ ७२ ॥

अन्वयः— स्निग्धभिन्नाञ्जनाभे त्वयि तटगते [ सति ] वटतरुमतः मण्डलभ्राजितस्य, सद्यःकृत्तद्विरदरदनच्छेदगौरस्य, ग्रसितुमनसा राहुणा आश्रितस्य प्रालेयांशोः इव तस्य अद्रेः शोभां उत्पश्यामि ।

उत्पश्यामीत्यादि । स्निग्धभिन्नाञ्जनाभे मसृणमर्दितकज्जलकान्तौ । स्निग्धं मसृणं । चिक्कणमित्यर्थः । ' स्निग्धं वात्सल्यसम्पन्ने चिक्कणेऽप्यभिधेयवत् ' इति विश्वलोचने । भिन्नं मर्दितं । ' भिन्नं वाच्यवदन्यार्थे दारिते सङ्गते स्फुटम् '

इति विश्वलोचने । स्निग्धं च तद्भिन्नं च स्निग्धभिन्नं । अञ्जनं कज्जलं । स्निग्धभिन्नं च तदञ्जनं च स्निग्धभिन्नाञ्जनं । तस्य आभेव कान्तिरिव आभा यस्य सः । तस्मिन् । 'इवुपमानपूर्वस्य सुखं गतार्थत्वात्' इति सुखम् । त्वयि भवति मेघे तटगते हिमाचलनितम्बदेशं प्राप्ते सति । तटो नितम्बदेशः । गिरिकटकमित्यर्थः । वटतरुमतः न्यग्रोधपादपवतः न्यग्रोधपादपशोभिनो वा । वटतरुर्न्यग्रोधपादपोऽस्मिन्नस्तीति प्रशस्तः वटतरुरस्मिन्नस्तीति वा वटतरुमान् । तस्य । 'तदस्यास्त्यस्मिन्निति मतुः' इत्यस्तिविवक्षायां प्रशंसायां वा मतुः । उक्तं च 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां प्रायो मत्वादयो मताः' इति । मण्डलभ्राजितस्य परिधिगतभूप्रदेशेन भ्राजितस्य राजितस्य । भ्राजमानस्येत्यर्थः । पक्षे मण्डलेन प्रभामण्डलेन भ्राजितस्येत्यर्थः । 'मण्डलं निकुरुम्बेऽपि देशे द्वादशराजके । कुष्ठाहिभेदे परिधौ चक्रवाले च मण्डलम् । मण्डलं स्यान्मण्डलके सारमेये तु मण्डलः' इति विश्वलोचने । सद्यःकृत्तद्विरदरदनच्छेदगौरस्य । द्वौ रदौ बहिर्निर्गतौ दन्तौ यस्य सः द्विरदः । गजः इत्यर्थः । द्विरदस्य रदनः दन्तः द्विरदरदनः । सद्यःकृत्तः प्रत्यग्रखण्डितश्चासौ द्विरदरदनश्च सद्यःकृत्तद्विरदरदनः । तस्य च्छेदः खण्डः इव गौरः शुभ्रवर्णः । तस्य । 'सामान्येनोपमानं' इति सः । प्रत्यग्रखण्डितगजदन्तभङ्गवच्छुभ्रवर्णस्येत्यर्थः । ग्रसितुमनसः । ग्रसितुं कवलीकर्तुं मनः यस्य सः । तस्य । 'सम्तुमोर्मनःकामे' इति मनसि परतस्तुमो मकारस्य खम् । राहुणा स्वर्भानुना आश्रितस्य कृताश्रयस्य । सञ्जातसंयोगस्येत्यर्थः । प्रालेयांशोः हिमांशोः । चन्द्रमसः इत्यर्थः । इव वा । चन्द्रमस्तुल्यस्येत्यर्थः । तस्य अद्रेः तस्य हिमाचलस्य शोभां सौन्दर्यं उत्पश्यामि शोभा भविष्यतीति तर्कयामीति भावः ।

I believe that the mountain, white like a piece of a tusk of an elephant cut off very recently, looking beautiful on account of the surrounding regions (in the case of the moon—pleasing to the eyes owing to her halo), possessing banian trees, would be assuming beauty like that of the moon, resorted to by Rahu desirous of eclipsing, when you, possessing colour like that collyrium mixed with oil and well-crushed, would be resorting to its slopes.

त्वय्यारूढे शिखरमभितोऽधित्यकां तस्य मन्ये  
पार्श्वाग्रे वा पुनरपि दशास्यावतारप्रपञ्चम् ।  
लीलामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-  
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ७४ ॥

अन्वयः— तस्य शिखरं अभितः अधित्यकां त्वयि आरूढे [ सति ] दशास्यावतारप्रपञ्चं मन्ये । पुनः अपि पार्श्वाग्रे वा [ त्वयि आरूढे ] मेचके वाससि अंसन्यस्ते सति हलभृतः इव स्तिमितनयनप्रेक्षणीयां अद्रेः लीलां भवित्रीं [ मन्ये ]

त्वयीत्यादि । तस्य । कैलासस्य **शिखरं** प्रस्थप्रदेशं **अभितः** सर्वतः । 'पर्यभेः सर्वोभये' इति सर्वार्थेऽभेस्तसेस्तस् । 'पर्यभिसर्वोभयैस्तस्त्यैः' इत्यभिना तस्त्यान्तेन योगे इन् । **अधित्यकां** भूधरोर्ध्वभुवं । 'उपत्यकाधित्यके' इति पर्वताध्यारूढप्रदेशार्थे निपातः । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । **त्वयि** भवति । **आरूढे** ऊर्ध्वभूमिं प्राप्ते सति **दशास्यावतारप्रपञ्चं** दशाननाकाराविर्भावनं । दश दशसङ्ख्याकानि आस्यान्याननानि यस्य सः दशास्यः । दशाननः रावणः इत्यर्थः । तस्यावतारो देहाकृतिः । तस्य प्रपञ्चः आविर्भावः । तम् । **मन्ये** जानामि । **पुनः अपि पार्श्वाग्रे वा** पार्श्वोपरिभागे वा । त्वय्यारूढे सतीति शेषः । **मेचके** कृष्णवर्णे । 'मेचकः श्यामले बर्हिचन्द्रे ध्वान्तेऽथ मेचकं । वाच्यवत्कृष्णवर्णे स्यात्' इति विश्वलोचने । **वाससि** वस्त्रे **अंसन्यस्ते** भुजशिरसि न्यस्ते । अंसे भुजशिरसि न्यस्तं स्थापितं अंसन्यस्तं । तस्मिन् । 'स्कन्धो भुजशिरोंऽसोऽस्त्री' इत्यमरः । **सति** । अस्तीति सन् । तस्मिन् । 'वन्द्रावाद्भावगतिः' इति ईप् । **हलभृतः** बलरामस्य । हलं लाङ्गलं बिभर्तीति हलभृत् । क्विप् । 'नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली । सङ्कर्षणः सीरपाणिः कालिन्दीभेदनो बलः' इत्यमरः । **स्तिमितनयनप्रेक्षणीयां** निर्निमेषनयनावलोकनीयां । स्तिमिताभ्यां स्तब्धतां प्राप्ताभ्यां नयनाभ्यां नेत्राभ्यां प्रेक्षणीयाऽवलोकनार्हा । ताम् । 'तृज्व्याश्चार्हे' इत्यर्हार्थे व्यः **अद्रेः** कैलासपर्वतस्य **लीलां** शोभां **भवित्रीं** भविष्यन्तीं । मन्ये इति शेषः । कैलासाचलस्य तादृशी शोभा भविष्यतीति तर्कयामीति शम्बरासुराभिप्रायः ।

I believe that there would be a display of the incarnation of the ten-mouthed one [ i. e, Rāvana ] when you would have ascended the plateau round about the peak of the mountain and that the beauty, worthy of being looked at with steady eyes, of that mountain would be like that of the Plough-bearer [ i. e. Balarām ] with his dark garment placed on his shoulder when you would have ascended the uppermost part of its side.

तस्मिन्हित्वा भुजगवलयं शम्भुना दत्तहस्ता
सम्प्राप्योच्चैर्विरचित इवानीलरत्नस्त्वयीयम् ।

क्रीडाशैले यदि च विहरेत्पादचारेण गौरी
मा स्म स्फूर्जः, सितिफणिभयान्मा स्म सङ्क्लेदिनी भूत् ॥७५॥

अन्वयः— भुजगवलयं तस्मिन् हित्वा शम्भुना दत्तहस्ता इयं गौरी सम्प्राप्य आनीलरत्नैः उच्चैः विरचिते क्रीडाशैले इव त्वयि यदि च पादचारेण विहरेत् सितिफणिभयात् सङ्क्लेदिनी मा स्म भूत् [ इति ] मा स्म स्फूर्जः ।

तस्मिन्नित्यादि। **भुजगवलयं** । भुजगः एव वलयं कटकं भुजगवलयं । यद्वा भुजगः वलयमिव भुजगवलयं । वलयाकारपरिणामितस्वकायमित्यर्थः । 'व्याघ्रादिभिरुपमेयोऽतद्योगे' इत्युपमानभूतवलयशब्देनोपमेयभूतभुजगशब्दस्योपमितसमासाख्यः सः । भुजैर्गच्छतीति भुजगः । 'गमेः खच्खड्डाः' इति डः । डित्वाच्चाभस्यापि टेर्लोपः । **तस्मिन्** कैलासाचले **हित्वा** त्यक्त्वा **शम्भुना** रुद्रतुल्येनेशानदिगीशेन । शम्भुरिव शम्भुः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योस् । **दत्तहस्ता** वितीर्णहस्तावलम्बना । दत्तः वितीर्णः हस्तः करः यस्याः यस्यै वा सा । **इयं** एषा **गौरी** गौरीसदृशी गौराङ्गी वेशानदिगिन्द्रभार्या । गौरीव गौरी । 'देवपथादिभ्यः' इतीवार्थस्य कस्योस् । 'युक्तवद्व्यक्तिवचने लिङ्गसङ्ख्ये' इति स्त्रीलिङ्गनिर्देशः । **सम्प्राप्य** समागत्य । **आनीलरत्नैः** अतिनीलवर्णैः गारुत्मताख्यैर्मणिविशेषैः **उच्चैः** अत्युन्नतकैलासशिखरसमीपव्योमदेशे **विरचिते** कल्पिते **क्रीडाशैले इव त्वयि** क्रीडाद्रिसमाकारे भवति **यदि च** चेत् च **पादचारेण** चरणगमनेन **विहरेत्** सञ्चारं विदध्यात् **सितिफणिभयात्** कालोरगभीतेः । सितिः कालवर्णः । 'सिती धवलमेचकौ' इत्यमरः । सितिश्चासौ फणी च सितिफणी । तस्मात्तस्य वा भयं । तस्माद्धेतोः । **सङ्क्लेदिनी** मानसदुःखवती । सङ्क्लेदः मानसं दुःखमस्या अस्तीति सङ्क्लेदिनी । **मा स्म भूत्** इति न भवत्विति **मा स्म स्फूर्जः** गर्जितध्वनिं मा कुरु । स्फूर्जतेर्लङ्मध्यमपुरुषैकवचनम् । 'स्मे लङ् च' इति लङ् लुङ् च । 'लुङ्लङ्लृङ्क्ष्वमाङ्योगे' इत्यडागमप्रतिषेधः ।

And if, on arriving there, should the white-complexioned one, supported with hand by the lord of the north-east direction resembling Rudra, after throwing off his serpent serving as a bracelet ( or twisted into a circular form ), be moving about on foot on you resembling a pleasure-mountain built up with emeralds high up in the sky, you should not give out a thundering sound so that she should not be distressed through fear of a black-serpent.

इन्द्राणी चेदुपगतवती जैनगेहानुपातं
तस्मिन्निज्यां रचयितुमना देवभक्त्या तदास्याः।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघैः
सोपानत्वं कुरु मणितटारोहणायाग्रचारी ॥ ७६ ॥

अन्वयः— देवभक्त्या इज्यां रचयितुमनाः इन्द्राणी जैनगेहानुपातं उपगतवती चेत् तदा स्तम्भितान्तर्जलौघैः भङ्गीभक्त्या विरचितवपुः अग्रचारी मणितटारोहणाय अस्याः सोपानत्वं कुरु।

इन्द्राणीत्यादि। देवभक्त्या अर्हतः श्रद्धानेन इज्यां अर्हच्चरणसपर्यां। यजनमिज्या। 'व्रज्यजः क्यप्' इति भावे क्यप्। रचयितुमनाः रचयितुं कर्तुं मनः अभिप्रायः यस्याः सा। 'सम्तुमोर्मनःकामे' इति मनसि परतः तुमो मकारस्य खम्। इन्द्राणी पुरन्दरभार्या। 'वरुणभवशर्वरुद्रेन्द्रमृडात्' इति ङी स्त्रियामानुक् च। जैनगेहानुपातं प्रतिजिनेन्द्रमन्दिरमनुपत्य। जैनगेहं जैनगेहं अनुपत्यानुपत्य जैनगेहानुपातं। वीप्सायामाभीक्ष्ण्ये च द्विः। 'विशपत्पदस्कन्दां व्याप्यासेव्ये' इति णम्। उपगतवती चेत् प्राप्तवती चेत् तदा तस्मिन्समये स्तम्भितान्तर्जलौघैः घनीकृतातःसलिलसमूहैः। 'ओघः परम्परायां स्याद्द्रुतनृत्योपदेशयोः। ओघः पाथःप्रवाहे च समूहे च पुमानयम्' इति विश्वलोचने। भङ्गीभक्त्या सोपानाकारविरचनया। विरचितवपुः कल्पितस्वकायः। विरचितं कल्पितं वपुः शरीरं येन सः। अग्रचारी पुरोगः। पुनः पुनः अग्रे चरतीति अग्रचारी। 'व्रताभीक्ष्ण्ये' इति णिन्नाभीक्ष्ण्ये। मणितटारोहणाय रत्नखचिततटमारोढुं। मणीनां तटं मणितटं। तस्य आरोहणं। तस्मै। मणितटारोहणार्थमित्यर्थः। अस्याः इन्द्राण्याः सोपानत्वं सोपानकर्म कुरु विधेहि। सोपानस्य भावः सोपानत्वम्। आरोहावरोहावसरे चरणस्यावकाशप्रदानं सोपानस्य भावः इत्यर्थः। सोपानाकारपरिणामितस्वशरीरावयवे सञ्चरन्त्याः पुरन्दरभार्याया अवकाशं देहीत्यर्थः।

If the wife of Indra, desirous of performing worship with devotion to god, happens to be there while visiting temple after temple dedicated to Jina, at that time, you, moving in front of her, having your body shaped into a flight of steps with your water caused to be constrained inside, should serve as a staircase for her to ascend the jewelled slopes.

अन्तस्तोयोच्चलनसुभगां भाविनीं तामवस्थां
मन्वानास्तास्सुनिभृततरं सानुदेशे निषण्णम् ।
तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ॥ ७७ ॥

अन्वयः— अन्तस्तोयोच्चलनसुभगां तां भाविनीं अवस्थां मन्वानाः ताः सुरयुवतयः सुनिभृततरं तत्र सानुदेशे निषण्णं वलयकुलिशोद्घट्टनोद्गीर्णतोयं त्वां यन्त्रधारागृहत्वं अवश्यं नेष्यन्ति ।

अन्तरित्यादि । **अन्तस्तोयोच्चलनसुभगां** । अन्तस्त्वद्वपुरन्तर्भागे यत्तोयं सलिलं तस्योच्चलनेन बहिर्निर्गमनेन । गलनेनेत्यर्थः । सुभगां मनोहरां । **तां** विशिष्टां **भाविनीं** भविष्यकालसम्भवां । वृष्ट्युत्तरकालसम्भवामित्यर्थः । **अवस्थां** परिणतिं **मन्वानाः** विचारगोचरतां नयन्त्यः **ताः सुरयुवतयः** त्रिदशयोषाः **सुनिभृततरं** सुनिश्चलतरं **तत्र सानुदेशे** कैलासाचलप्रस्थप्रदेशे **निषण्णं** उपविष्टं **वलयकुलिशोद्घट्टनोद्गीर्णतोयं** कङ्कणखचितवज्रप्रहारोद्वान्तसलिलं । वलयानां कङ्कणानां कुलिशानि वज्राणि वलयकुलिशानि । कङ्कणखचिताः वज्रमणयः इत्यर्थः । यद्वा वलयान्येव कुलिशानि वलयकुलिशानि । तैस्तेषां वा उद्घट्टनानि प्रहाराः । तैरुद्गीर्णमुद्वान्तं । उत्सृष्टमित्यर्थः । तोयं सलिलं येन सः । तम् । **त्वां** भवन्तं । **यन्त्रधारागृहत्वं** शिल्पिकल्पितसाधननिःसृताः धाराः आसाराः यन्त्रधाराः । तासां गृहत्वं गेहत्वं । **नेष्यन्ति** गमयिष्यन्ति । उन्मुक्तजलप्रवाहं यन्त्रधारागृहं नीरधारासारसङ्कुलं भवति तथा सुराङ्गनाकङ्कणप्रहारजर्जरितशरीरस्त्वमपि मुक्तधारासारो भवितेति भावः ।

Those heavenly damsels, taking into consideration that future state beautiful on account of the discharge of the internal water, would surely transform you, sitting very silently there on the top of the peak discharging water owing to the strokes of the bracelets beset with diamonds, into a shower-bath.

आकर्षन्त्यो दृतिमिव सरस्तोयपूर्णामधस्तात्
क्रीडिष्यन्ति त्रिदशवनितास्त्वामितश्चामुतश्च ।
ताभ्यो मोक्षो यदि तव सखे धर्मलब्धस्य न स्यात् ।
क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भीषयेस्ताः ॥ ७८ ॥

अन्वयः— अधस्तात् सरस्तोयपूर्णां दृतिं इव इतः च अमुतः च त्वां आकर्षन्त्यः त्रिदशवनिताः क्रीडिष्यन्ति । सखे ! ताभ्यः घर्मलब्धस्य तव मोक्षः यदि न स्यात् ताः क्रीडालोलाः श्रवणपरुषैः गर्जितैः भीषयेः ।

आकर्षन्त्यः इत्यादि । अधस्तात् अवरस्मिन् भागे । 'अस्ताति' इत्यधरशब्दस्याधभावोऽस्ताति परतः । **सरस्तोयपूर्णां** कासाराम्भःसम्भृताम् । सरसः कासारस्य तोयं पानीयं सरस्तोयं । तेन सम्पूर्णा सम्भृता । ताम् । **दृतिं इव** कूपादिजलोन्नयनप्रयोजनं चर्मघटं इव । 'मोट' इति महाराष्ट्र्यां । **इतः च अमुतः च** अत्रामुत्र च । 'सार्वविभक्तिकस्तसिः' इति तसिरत्र ईवर्थे । **त्वां** भवन्तं **आकर्षन्त्यः** नयन्त्यः **त्रिदशवनिताः** सुराङ्गनाः **क्रीडिष्यन्ति** क्रीडां विधास्यन्ति । **सखे !** भो मित्र **ताभ्यः** त्रिदशयोषाभ्यः **घर्मलब्धस्य** औष्ण्याल्लब्धात्मलाभस्य । औष्ण्याल्लब्धजन्मनः इत्यर्थः । घर्मादौष्ण्याल्लब्धं लाभः यस्य सः । तस्य । 'नब्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च । यद्वा घर्मे प्रावृट्कालेऽपि निर्वातावस्थायां यः घर्मः ऊष्मकालः तस्मिन् लब्धः प्राप्तः तस्य तव । **तव** भवतः । **मोक्षः** विमोचनं **यदि न स्यात्** न भवेच्चेत् तदा ताः देवाङ्गनाः क्रीडालोलाः क्रीडासक्ताः । 'लोला जिह्वाश्रियोर्लोलः सतृष्णचलयोस्त्रिषु' इति विश्वलोचने । इव्बहुवचनम् । **श्रवणपरुषैः** कर्णकठोरैः । श्रवणानां कर्णानां परुषाः निष्ठुराः श्रवणपरुषाः । 'परुषं कर्बुरे रूक्षे त्रिषु निष्ठुरवाच्यपि' इति विश्वलोचने । **गर्जितैः** स्तनितध्वनिभिः । **भीषयेः** त्रासयेः । गर्जिध्वनिना तासु भयं जनयेत्यर्थः । 'भाययेः' इति पाठं स्वीचिकीर्षोः 'भीषयेः' इति पाठं च परिजिहीर्षोः 'अत्र हेतुभयाभावादात्मनेपदं षुगागमश्च न' इति मल्लिनाथस्योक्तिश्चिन्त्या, मेघस्य साक्षात्प्रयोजकत्वाभावात् भयकारणत्वाभावादूर्जितध्वनेर्भयकारणत्वाच्च हेतुत्वप्रतिषेधसम्भवेऽपि व्याकरणान्तरेषु 'कुञ्चिकयैनं भीषयति' इति प्रत्युदाहरणेऽपि षुगागमदर्शनात् षुगागमस्य हेतुत्वाभावेऽपि णौ परतः सद्भावात् । अतो 'भीषयेः' इति विधिलिङ्मध्यमपुरुषैकवचनत्यान्तः पाठोऽपि समीचीनः ।

The heavenly damsels, dragging you here and there like a leathern bag (meant for holding water) filled up with water of a lake below, would be diverting themselves. O friend! if there could be no deliverance from them of you, secured by them at the time when there would be excessive heat, you should intimidate them, engaged in sport, by your thundering sounds harsh to the ear.

कृच्छ्रान्मुक्तो विविधकरणैस्तत्र रत्वाऽथ ताभि-
भूयः शैले विहर गमितो वायुनाऽऽप्तव्रणाङ्गम् ।
हेमाम्भोजप्रसवि सलिलं मानसस्याऽऽददानः
कुर्वन्कामं क्षणमुखपटप्रीतिमैरावणस्य ॥ ७९ ॥

अन्वयः— अथ तत्र ताभिः विविधिकरणैः रन्त्वा कृच्छ्रात् मुक्तः वायुना आप्तव्रणाङ्गं गमितः, मानसस्य हेमाम्भोजप्रसवि सलिलं आददानः, ऐरावणस्य क्षणमुखपटप्रीतिं कामं कुर्वन् शैले भूयः विहर ।

कृच्छ्रादित्यादि । अथ अनन्तरं **तत्र** कैलासाचले **ताभिः** त्रिदशयोषाभिः **विविधकरणैः** नानाविधाङ्गहारैः नानाविधसंवेशक्रियाभेदैः वा । 'करणं साधकतमे कार्यकायस्थकर्मसु । क्रियायामिन्द्रिये क्षेत्रे करणं बालवादिषु । गीताङ्गहारसंवेशक्रियाभेदेऽपि चेष्यते' इति विश्वलोचने । **रन्त्वा** क्रीडित्वा **कृच्छ्रात्** कष्टात् । 'स्तोकाल्पकृच्छ्रकतिपयात्करणे का वाऽसत्त्वे' इति का । **मुक्तः** परिहृतप्रतिबन्धः । **वायुना** समीरणेन **आप्तव्रणाङ्गं** प्राप्तव्रणशरीरं । आप्तः व्रणः येन तत् । आप्तव्रणं च तदङ्गं शरीरं च आप्तव्रणाङ्गं । तत् । इप् । 'अङ्गमन्तिके । गात्रोपायाप्रधानेषु प्रतीकेऽप्यङ्गवत्यपि' इति विश्वलोचने । **गमितः** प्रापितः **मानसस्य** मानसाख्यसरसः **हेमाम्भोजप्रसवि** । हेमाम्भोजानि सुवर्णकमलानि प्रसूते इति हेमाम्भोजप्रसवि । 'प्रे सूजोरिन्' इति शीलार्थे इन् । **सलिलं** जलं **आददानः** स्वीकुर्वन् । आगृह्णन्नित्यर्थः । **ऐरावणस्य** अभ्रमुवल्लभस्य । 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः' इत्यमरः । ऐरावताख्यस्येन्द्रगजस्येत्यर्थः । **क्षणमुखपटप्रीतिं** । क्षणं क्षणमात्रकालं यावत् मुखपटेन मुखावरणवस्त्रेण प्रीतिरिव प्रीतिः । ताम् । मुखपटनिबन्धना मुखपटजनिता वा या प्रीतिः तत्सदृशीं प्रीतिमित्यर्थः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योस् । 'युक्तवदुसि लिङ्गसङ्ख्ये' इति उपमानभूतयुक्तवल्लिङ्गसङ्ख्ये । गजेन्द्रमुखाग्रभागे क्षणस्थित्या मुखपटजनितानन्दतुल्यं सुखं जनय, तादृशमुखाग्रभागे स्थिते सति ऐरावणस्य मुखपटभ्रान्तिजनितानन्दसम्भवादिति भावः । **कामं** अत्यर्थं **कुर्वन्** जनयन् **शैले** कैलासाचले **भूयः** पुनः **विहर** सञ्चर ।

Afterwards, having carried out various performances, there, with them, you, having release from them with a great difficulty, reduced by the wind to the state of your body having wounds inflicted, imbibing the water, generating ( producing ) golden lotuses, of the Manasa

( lake ), conferring the pleasure of possessing a face-cloth for a moment on Airavata, should divert yourself again on the mountain.

क्रीडाद्रीणां कनकशिखराण्यावसंस्तत्र पश्यन्
स्वर्गस्त्रीणां निधुवनलतागेहसम्भोगदेशान् ।
धुन्वन्कल्पद्रुमकिसलयान्यंशुकानि स्ववातैः
नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥ ८० ॥

अन्वयः— जलद । क्रीडाद्रीणां कनकशिखराणि आवसन्, तत्र स्वर्गस्त्रीणां निधुवनलतागेहसम्भोगदेशान् पश्यन्, नानाचेष्टैः ललितैः अंशुकानि कल्पद्रुमकिसलयानि धुन्वन् तं नगेन्द्रं निर्विशेः ।

क्रीडाद्रीणामित्यादि । जलद हे मेघ । क्रीडाद्रीणां क्रीडाशैलानां कनकशिखराणि सुवर्णसानूनि आवसन् आरूढवान् । 'वसोऽनूपाध्याङः' इत्याधारे इप् । तत्र कैलासाचले स्वर्गस्त्रीणां त्रिदशयोषितां निधुवनलतागेहसम्भोगदेशान् निधुवनार्थानि लतागेहानि वल्लरीनिर्मितभवनानि निधुवनलतागेहानि । तेषु ये सम्भोगदेशाः सम्भोगार्थं विरचितानि स्थानानि । तान् । पश्यन् अवलोकयन् । नानाचेष्टैः बहुविधक्रीडैः । नाना बहुविधाः चेष्टाः दिग्विदिक्षु वहनादिरूपाः क्रीडाः येषां तैः । ललितैः शरीरप्रियैः । 'ललितं हावभेदे स्यात्त्रिष्वेव ललितेप्सयोः' इति विश्वलोचने । स्ववातैः स्वीयैः समीरणैः । स्वाः स्वीयाः वाताः समीरणाः स्ववाताः । तैः । 'स्वो ज्ञातावात्मनि स्वं तु त्रिष्वात्मीये धनेऽस्त्रियाम्' इति विश्वलोचने । अत्र वातस्य स्वीयत्वं स्वागमनकालजनितत्वादित्यवसेयम् । अंशुकानि सूक्ष्मवस्त्रतुल्यानि । अंशुकानीवांशुकानि । 'देवपथादिभ्यः' इतीवार्थस्य कस्योस् । 'युक्तवद्रुसि लिङ्गसङ्ख्ये' इति कृतेवार्थककोसोंऽशुकशब्दस्य प्रकृतिवल्लिङ्गसङ्ख्ये । 'अंशुकं वस्त्रमात्रे स्यात्परिधानोत्तरीययोः । सूक्ष्मवस्त्रे नातिदीप्तौ' इति शब्दार्णवे । कल्पद्रुमकिसलयानि कल्पवृक्षपल्लवान् । कल्पद्रुमाणां कल्पवृक्षाणां किसलयानि पल्लवाः । तानि । इब्बहुवचनम् । धुन्वन् कम्पयन् । विधूनयन्नित्यर्थः । तं प्रसिद्धं नगेन्द्रं नगाधिराजं निर्विशेः समुपभुङ्क्ष्व । यद्वा नानाचेष्टैः ललितैः क्रीडितैः । 'ना भावभेदे स्त्रीनृत्ये ललितं त्रिषु सुन्दरे । अस्त्रियां प्रमदागारे क्रीडिते जातपल्लवे' इति शब्दार्णवे । तं नगेन्द्रं निर्विशेः ।

O cloud ! you, dwelling on the golden peaks of the pleasure-mountains, beholding, there, the seats of cohabitation existing in the bowers

of creepers meant for the heavenly damsels for coition, shaking off the sprouts, resembling thin silken garments, of the wishfulfilling tree by your breezes, pleasing and possessing various movements, should enjoy that lord of mountains.

विद्युद्दाम्ना वलयिततनुस्तत्र वध्र्येव रुद्धो
दीर्घं स्थित्वा सरति पवने मन्दमन्दं दिनान्ते ।
तस्माद्द्रेरवतर पुरीं स्वेष्टकामो धनीशां
तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलाम् ॥ ८१ ॥

अन्वयः— विद्युद्दाम्ना वलयिततनुः वध्र्या रुद्धः इव तत्र दीर्घं स्थित्वा दिनान्ते पवने मन्दमन्दं सरति तस्मात् अद्रेः प्रणयिनः इव तस्य उत्सङ्गे स्रस्तगङ्गादुकूलां धनीशां पुरीं स्वेष्टकामः अवतर ।

**विद्युदित्यादि** । **विद्युद्दाम्ना** विद्युल्लेखया । विद्युदेव दाम विद्युद्दाम । तेन विद्युद्दाम्ना । **वलयिततनुः** वलयीकृतशरीरः । आवेष्टितकायः इत्यर्थः । वलयिता विरचितवलया तनुः शरीरं यस्य सः । 'मृदो ध्वर्थे णिज्बहुलं' इति णिच् । अत्र हेतौ वा, 'हेतौ सर्वाः प्रायः' इति वचनात् । तेन वलयिततनुत्वादित्यर्थः । **वध्र्या** चर्ममय्या रज्ज्वा । 'वर्धते दीर्घीभवति चर्मरज्जुत्वाद्वध्री' इति क्षीरस्वामी । 'नद्ध्री वध्री वरत्रा स्यात्' इत्यमरः । **रुद्धः इव** प्रतिबद्धः इव **तत्र** कैलासपर्वते **दीर्घं** सुचिरं **स्थित्वा** अवस्थानं विधाय **दिनान्ते** दिनावसानकाले । सायाह्ने इत्यर्थः । **पवने** समीरणे **मन्दमन्दं** मन्दप्रकारेण । मन्दतयेत्यर्थः । मन्दप्रकारः यथा स्यात्तथा मन्दमन्दम् । 'प्रकारे गुणोक्तेर्वा' इति प्रकारेऽर्थे द्विरुक्तिः । **सरति** प्रवहति सति । 'यद्धावाद्धावगतिः' इति ईप् । **तस्मात्** कैलासात् **अद्रेः** पर्वतात् **प्रणयिन इव** प्रियतमस्येव । प्रियतमस्योत्सङ्गेऽङ्के इव **तस्य** कैलासस्य **उत्सङ्गे** ऊर्ध्वतले । 'उत्सङ्गो मुक्तसंयोगे सक्थिन्यूर्ध्वतलेऽपि च' इति मालतीमालायाम् । **स्रस्तगङ्गादुकूलां** विगलितगङ्गारूपशुभ्रवस्त्राम् । स्रस्तं विगलितं शरीरान्निःसृत्य पृथग्भूतं गङ्गा एव दुकूलं शुभ्रवस्त्रं यस्याः सा । ताम् । अत्र गङ्गाजलस्य शुभ्रवर्णत्वात्तस्यां दुकूलत्वमारोपितमित्यवसेयम् । पक्षे स्रस्तं गङ्गेव गङ्गातुल्यं दुकूलं यस्याः सा । ताम् । 'दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके' इति शब्दार्णवे । स्वप्रियतमाङ्कदेशविगलितासितांशुकायाः स्त्रियः उपमानत्वं स्वप्रियतमकैलासाचलोर्ध्वतलगतगङ्गारूपशुभ्रांशुकायाः अलकापुर्याश्चोपमेयत्वमित्यवसेयं। स्वप्रियतमकैलासाचलोत्सङ्गप्रदेशविगलितगङ्गारूपसितांशुकामलकापुरीमित्यर्थः । 'गङ्गा दुकूलं

शुभ्रवस्त्रमिवेत्युपमितसमासः । ... । अन्यत्र तु गङ्गेव दुकूलम्' इति मल्लिनाथवचनं चिन्त्यं, अर्थवैपरीत्यप्रसङ्गात् । अलकापुरीपक्षे उपमितसमासग्रहणे दुकूलोपमानगङ्गायाः एव स्वप्रियतमोत्सङ्गप्रदेशविगलनापत्तिर्न गङ्गारूपांशुकस्य, गंगाया एव प्राधान्यात् । अस्मिन्पक्षे 'गङ्गेव दुकूलं' इतिविग्रहवचनोक्तार्थग्रहणमेव युक्तरूपं, आरोप्यारोपविषययोस्तादात्म्याध्यासादारोपविषयस्यानिह्नवात् । अन्यत्र स्त्रीविषये तु 'गङ्गेव दुकूलं' इतिविग्रहवचनप्रतिपादितार्थग्रहणमप्ययुक्तं, गङ्गायाः स्त्रीवसनत्वासम्भवात् । अतोऽत्र पक्षे 'गङ्गेव दुकूलं' इति विग्रहः एव समीचीनः । गङ्गेव गङ्गा । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । 'युक्तवद्रुसि लिङ्गसङ्ख्ये' इति लुप्तेवार्थककस्य गङ्गाशब्दस्य स्त्रीलिङ्गत्वम् । धनीशां यक्षेश्वराणां । महतां यक्षाणामित्यर्थः । धनिनां यक्षाणां ईशते इति धनीशः । क्विप् । तेषाम् । यद्वा धनी कुबेरः ईट् येषां ते धनीशः । तेषाम् । पुरीं अलकाभिधाननगरीं । स्वेष्टकामः स्वाभिलषितमाप्तुकामः स्वस्य आत्मनः इष्टं आशंसितं स्वेष्टं । 'इष्टो ना यागसंस्कारयोगयोः क्रतुकर्मणि । क्लीबं त्रिषु प्रियतमे पूज्येऽप्याशंसितेऽपि च' इति विश्वलोचने । स्वेष्टं कायमते इति स्वेष्टकामः । 'शीलीक्षिक्षम्काम्याचरभक्षेर्णः' इति कर्मणि वाचि णः । यद्वा स्वेष्टे स्वाभिलषिते स्वप्रिये वा कामः अभिलाषः यस्य सः इति घञन्तेन बसः । अवतर नीचैर्गच्छ ।

You, as if tied down by leathern straps owing to your body being encircled with the rope-like lightning, having stayed there ( on the Kailāsa mountain ) for a long time, should go down from that mountain, with a desire to secure what is expected by you, upon that city ( of Alakā ), the abode of the best of the Yakṣas, with its white garment in the form of the Ganges fallen off on its slopes, as on a lover's lap, when the breezes of wind would be blowing slowly in the evening.

दृष्टाध्यात्मस्थितिरधिगताशेषवेद्यः सविद्यः
योगाभ्यासाद्भुवनमखिलं सञ्चरन्दूरदर्शी ।
लक्ष्म्या सूतिं भुवनविदितां तां पुरीं तत्र साक्षा-
न्न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ॥ ८२ ॥

अन्वयः—कामचारिन् ! योगाभ्यासात् दृष्टाध्यात्मस्थितिः अधिगताशेषवेद्यः सविद्यः अखिलं भुवनं सञ्चरन् दूरदर्शी तत्र लक्ष्म्याः सूतिं भुवनविदितां अलकां पुरीं त्वं पुनः साक्षात् न दृष्ट्वा तां न ज्ञास्यसे ।

दृष्टेत्यादि। कामचारिन् भो यथेच्छविहारिन्। कामं यथेच्छं चरतीति कामचारी। तस्य किः। 'शीलेऽजातौ णिन्' इति शीले णिन्। योगाभ्यासात् पौनःपुन्येन समाचरिताद्ध्यानात्। हेतावत्र का। पुनः पुनः करणमभ्यासः। 'योगः सन्नाहसन्धानसङ्गतिध्यानकर्मणि' इति विश्वलोचने। दृष्टाध्यात्मस्थितिः अनुभूतशुद्धात्मस्वभावः। दृष्टा अनुभूता अध्यात्मं स्थितिः येन सः। आत्मनि अधि अध्यात्मं। आत्मनीत्यर्थः। अधिगताशेषवेद्यः ज्ञातनिखिलज्ञेयार्थः। अधिगतानि ज्ञातानि अशेषाणि निखिलानि वेद्यानि ज्ञेयार्थाः येन सः। विश्वदृश्वेत्यर्थः। सविद्यः सम्पादितकेवलज्ञानः। विद्यया सहितः सविद्यः। 'वा नीचः' इति सहस्य सः। अखिलं सकलं भुवनं भूमण्डलं सञ्चरन् विहरन् दूरदर्शी सूक्ष्मान्तरितदूरार्थानां साक्षाद्द्रष्टा। तत्र हिमशिखरिशिखरे लक्ष्म्याः सम्पदः सूतिं प्रभवस्थानं भुवनविदितां भूमण्डले प्रसिद्धिं गतां अलकापुरीं अलकाभिधानां यक्षनगरीं त्वं भवान् पुनः भूयः साक्षात् प्रत्यक्षतः न दृष्ट्वा अपश्यन्। पश्यतीति दृष्ट्वा। 'मन्वन्क्वनिब्विचः क्वचित्' इति क्वनिप्। तां अलकां न ज्ञास्यसे न वेत्स्यसि। अनुमानबलात्सम्पादितालकापुरीज्ञानोऽपि तत्साक्षाद्दर्शनमन्तरेण तां यथार्थतया विज्ञातुमसमर्थोऽसीति तां साक्षाद्विलोकयेत्यविज्ञाताजिनागमरहस्यशम्बरासुराभिप्रायः।

O wanderer-at-will! You, experiencing the pure nature of the pure soul through repeated practice of concentration (upon the pure nature of the soul), knowing all the knowables, possessing pure knowledge, roaming over the whole of the world, possessing foresight (or knowing all the periodically and spatially remote objects), would not know well the city of Alaka, there, known in the whole world, the source of wealth (or a place where wealth is acquired in abundance), unless you would see it actually.

निर्वाणार्थं तितपसिषवोऽमी स्वयं क्लेशयन्ति
व्यर्थोद्योगा मयि तु वितृषः, किन्तु मत्तोऽधिकं तत्।
इत्याकूताद्विहसितमिवाम्भोमुचामिन्दुशुभ्रं
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना ॥ ८३ ॥

अन्वयः— या उच्चैर्विमाना 'निर्वाणार्थं तितपसिषवः व्यर्थोद्योगाः अमी स्वयं क्लेशयन्ति; मयि तु वितृषः; किंनु तत् मत्तः अधिकम्?' इति आकूतात् वः अम्भोमुचां काले इन्दुशुभ्रं सलिलोद्गारं विहसितं इव वहति।

निर्वाणार्थमित्यादि। या अलकाभिधाना नगरी उच्चैर्विमाना उन्नतसप्तभूमिकप्रासादा। उच्चैः उन्नताः विमानाः सप्तभूमिकाः प्रासादाः यस्यां सा। 'विमानो व्योमयानेऽस्त्री सप्तभूमौ गृहेऽपि च' इति विश्वलोचने। निर्वाणार्थं मोक्षप्राप्त्यर्थम्। 'निर्वाणं निर्वृतौ मोक्षे स्तम्भने गजमज्जने' इति विश्वलोचने। तितपसिषवः तपस्तप्तुमिच्छवः। 'तप सन्तापे' इत्यस्माद्धोः 'तुमीच्छायां धोर्वोप्' इति सनि तदन्तात् 'सन्भिक्षाशंसादुः' इत्युः। व्यर्थोद्योगाः विफलप्रयत्नाः। व्यर्थाः विफलाः उद्योगाः प्रयत्नाः येषां ते। अमी एते पार्श्वादयो योगिनः। स्वयं आत्मना। 'स्वयमात्मना' इत्यमरः। आत्मानं क्लेशयन्ति आयासयन्ति। मयि अलकानगरीविषये तु पुनः वितृपः विगताभिलाषाः। विगता तृट् इच्छा येषां ते। 'इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः' इत्यमरः। सन्तीति शेषः। किन्तु किन्विति प्रश्ने। 'किन्तु प्रश्ने वितर्के च' इति विश्वलोचने। तत् निर्वाणं मत्तः मत्सकाशात् अधिकं उत्कृष्टं। इति एवंविधात् आकूतात् अभिप्रायात्। वः अम्भोमुचां काले युष्माकं मेघानां काले। वर्षाकाले इत्यर्थः। इन्दुशुभ्रं चन्द्रवद्धवलं सलिलोद्गारं जलवर्षं। 'सामान्येनोपमानं' इति सः। सलिलानां जलानां उद्गारः वर्षः। तम्। विहसितमिव उपहासमिव। 'नभावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च। वहति धारयति। 'किं निर्वाणं मत्तोऽप्युत्कृष्टतरं यतोऽमी पार्श्वादयो योगिनो मां विहाय तत्प्राप्त्यर्थं प्रयस्यन्ति!' इत्यभिप्रायं मनसिकृत्य सा नगरीन्दुधवलसलिलासारमिषेण तानुपहसन्तीव त्वदवलोकनविषयतां यास्यतीति शम्बरासुराभिप्रायः।

That city, possessing seven-storied lofty mansions, would give an ironical smile, as white as the moon, in the form of the discharge of water in the days of you, the cloud ( i. e. in the rainy season ), owing to her taking thought: 'These sages, exerting for nothing, desirous of practising penance for the attainment of salvation, are harassing themselves; they have no interest for me; is the abode of the liberated souls superior to me?'

सौधेयाग्रैर्गगनपरिपत्केतुमालावलाकं
रत्नोदग्रद्युतिविरचितेन्द्रायुधं प्रावृषेण्यम्।
धत्ते याऽसौ सजलकणिकासारमभ्रंलिहैः स्वैः
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ८४ ॥

अन्वय :— या असौ मुक्ताजालग्रथितं अलकं कामिनी इव स्वैः अभ्रंलिहैः

सौधेयाग्रैः गगनपरिषत्केतुमालाबलाकं रत्नोदग्रद्युतिविरचितेन्द्रायुधं प्रावृषेण्यं सजलकणिकासारं अभ्रवृन्दं धत्ते।

सौधेयाग्रैरित्यादि। या असौ अलकापुरी मुक्ताजालग्रथितं मुक्ताविरचितानायसन्दब्धं। मुक्तानां मौक्तिकमणीनां जालेन आनायेन ग्रथितं सन्दब्धं। 'मुक्तो मोक्षगतेऽप्युक्तास्त्रिषु मुक्ता तु मौक्तिके' इति 'जालस्तु क्षारकानायगवाक्षे स्तम्भवृक्षयोः' इति च विश्वलोचने। 'ग्रथितं ग्रन्थितं दृब्धं' इत्यमरः। अलकं चूर्णकुन्तलं। जातविकवचनम्। 'कुवेरस्यालकपुर्यामलकश्चूर्णकुन्तले' इति विश्वलोचने। कामिनीव ललनेव। 'ललना कामिनी योषिद्योषा सीमन्तिनी वधूः' इति धनञ्जयः। स्वैः स्वकीयैः अभ्रंलिहैः अभ्रंकषैः। अभ्रं लेढीति अभ्रंलिट्। तैः। 'वहाभ्रे लिहः' इति खश् खित्वान्मुमागमश्च। सौधेयाग्रैः-प्रासादाग्रभागैः। प्रासादशिखरैरित्यर्थः। सौधानामिमानि सौधेयानि। सौधेयानि च तान्यग्राणि सौधेयाग्राणि। 'अग्रं त्रिषु प्रधाने स्यादग्रं मूर्धाधिकादिषु। पुरस्तात् पलमाने च व्रातेऽप्यालम्बनान्तयोः' इति विश्वलोचने। गगनपरिषत्केतुमालाबलाकं। गगने आकाशदेशे परितः सर्वतः सीदन्ति चलन्तीति गगनपरिषन्तः। ते च ते केतवः ध्वजाश्च। तेषां माला पङ्क्तिः एव बलाकाः पक्षिविशेषाः यस्य तत्। रत्नोदग्रद्युतिविरचितेन्द्रायुधं। उद्गतानि अग्राणि कोटयः यासां ताः उदग्राः। उदग्राश्च ताः द्युतयश्च उदग्रद्युतयः। रत्नानां उदग्रद्युतयः रत्नोदग्रद्युतयः। ताभिर्विरचितं इन्द्रायुधं इन्द्रधनुर्यस्मिंस्तत्। प्रावृषेण्यं प्रावृट्कालभवं। 'प्रावृष एण्यः' इति भवार्थे एण्यः। सजलकणिकासारं। जलकणिकाः जलबिन्दवः। तेषां आसारः वर्षः जलकणिकासारः। तेन सहितं। 'वा नीचः' इति सहस्य सः।। अभ्रवृन्दं मेघसमूहं। 'जीमूतोऽभ्रं बलाहकः' इति धनञ्जयः। धत्ते धरति।

That city bears a mass of clouds, discharging showers of drops of water, produced in the rainy season, possessing a rain-bow formed by the ends of the rays of jewels shooting upwards, having cranes in the form of the rows of flags moving in all directions in the sky, with the uppermost parts of her palaces scraping the clouds, like a noble woman [ free from pride, with her ] curly hair encircled with nets of pearls.

यत्रानीलं हरिमणिमयाः क्षुद्रशैला नभोगं
प्रोद्यद्देवद्रुमपरिसरद्धूपधूमानुबन्धाः।

प्रासादाश्च प्रथयितुमलं सर्वदा मेघकालं
विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः ॥ ८५ ॥

अन्वयः— यत्र आनीलं हरिमणिमयाः, नभोगं क्षुद्रशैलाः, विद्युद्वन्तं ललितवनिताः, सेन्द्रचापं सचित्राः, प्रोद्यद्देवद्रुमपरिसरद्धूपधूमानुबन्धाः प्रासादाः मेघकालं सर्वदा प्रथयितुं अलम्।

यत्रेत्यादि। यत्र अलकानगर्यां आनीलं आ समन्तान्नीलं कृष्णवर्णं मेघकालमिति शेषः। हरिमणिमयाः प्राधान्येन नीलमणिविरचिताः। प्रासादाः इति शेषः। 'प्रकृते मयट्' इति मयट्। नभोगं नभसि आकाशे गच्छतीति नभोगः। तम्। आकाशदेशस्थितं मेघकालमित्यर्थः। क्षुद्रशैलाः क्रीडाशैलवन्तः। क्षुद्राः स्वल्पाः शैलाः पर्वताः येषु ते क्षुद्रशैलाः। अत्र 'गङ्गायां घोषः' इत्यादाविव प्रासादोपरिभागस्थितिरूपं मुख्यार्थं बाधित्वा तत्समीपभूप्रदेशस्थितिरूपोऽन्योऽर्थो लक्षणया लभ्यो ग्राह्यः, 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्। अन्योर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया' इति मम्मटवचनात्। विद्युत्वन्तं तडित्वन्तं। अचिरप्रभायुक्तमित्यर्थः। 'मत्वर्थे स्तौ' इति तकारान्तविद्युदभिधानस्य मत्वर्थे त्ये परतः भसञ्ज्ञत्वात्पदसञ्ज्ञत्वाभावात् 'झलो जश् झशि' इति झशि परतोऽपि जश् न भवति। सौदामनीयुक्तं मेघकालमित्यर्थः। ललितवनिताः मनोहराङ्गनाः। ललिताः मनोहराः वनिताः ललनाः येषु ते प्रासादाः। सेन्द्रचापं सेन्द्रायुधं। इन्द्रचापेन सहितः सेन्द्रचापः। तं मेघकालम्। 'तेन सहेति तुल्ययोगे' इति बसः। 'वा नीचः' इति सहस्य सादेशः। सचित्राः सालेख्याः। 'चित्रं तु कर्बुराद्भुतयोस्त्रिषु। चित्रमालेख्यतिलकव्योमसु स्यान्नपुंसकम्' इति विश्वलोचने। सह चित्रैः सचित्राः प्रासादाः। प्रोद्यद्देवद्रुमपरिसरद्धूपधूमानुबन्धाः। देवद्रुमाः देवदारुद्रुमाः। तेभ्यः परितः सर्वतः सरन् निर्गच्छन् देवद्रुमपरिसरन्। स चासौ धूपधूमश्च। तस्य अनुबन्धाः आनुपूर्व्यः राजयः वा। प्रोद्यन्तः उद्गच्छन्तः देवद्रुमपरिसरद्धूपधूमानुबन्धाः येभ्यः ते। प्रासादपरिसरोद्भूतदेवद्रुमाणामत्र ग्रहणं लक्षणया कर्तव्यं प्रासादाग्रे द्रुमोत्पत्त्यसम्भवात्। प्रासादाः हर्म्याणि सर्वदा सर्वकालं प्रथयितुं प्रकटयितुं। अलं सामर्थ्यसम्पन्नाः। भवन्तीति शेषः। 'अलं भूषणपर्याप्तिशक्तिवारणनिष्फले' इति विश्वलोचने।

Wherein the mansions, constructed by putting emeralds especially, possessing pleasure-mountains in their vicinity, having beautiful women, with multicoloured pictures, having rising volumes of smoke of incense

coming out of the groves of Pine trees and spreading on all sides, are quite competent to display always the rainy season, looking dark on all sides, pervading the sky, possessing flashes of lightning (and) decorated with rain-bows.

प्रोच्चैः केकारवमुखरितान्नर्तयन्तो मयूरान्
हंसानुद्यत्करुणविरुतान्मानसे म्लानयन्तः ।
यत्राऽकाले विदधतितरां देवधिष्ण्येषु सन्ध्या-
सङ्गीताय प्रहतमुरजाः स्निग्धपर्जन्यघोषम् ॥ ८६ ॥

अन्वयः— यत्र केकारवमुखरितान् मयूरान् प्रोच्चैः नर्तयन्तः, उद्यत्करुण-विरुतान् हंसान् मानसे म्लानयन्तः देवधिष्ण्येषु सन्ध्यासङ्गीताय प्रहतमुरजाः स्निग्ध-पर्जन्यघोषं अकाले विदधातितराम् ।

प्रोच्चैरित्यादि । यत्र यस्यामलकापुर्यां **केकारवमुखरितान्** केकाध्वनिवाचा-लितान् । 'केका वाणी मयूरस्य' इत्यमरः । केकाः एव आरवाः ध्वनयः केकारवाः । तैः मुखरितान् मुखरीकृतान् । वाचालितानित्यर्थः । 'मृदो ध्वर्थे णिज्बहुलं' इति णिच् । णिचि क्तश्च । **मयूरान्** केकिनः । **प्रोच्चैः** अत्यर्थं **नर्तयन्तः** नाटयन्तः । **उद्यत्करुण-विरुतान्** उच्चरत्करुणारवान् । करुणानि करुणाजनकानि च तानि विरुतानि कूजितानि च करुणविरुतानि । उद्यन्ति करुणविरुतानि येभ्यः ते उद्यत्करुणविरुताः । तान् । **हंसान्** मरालान् **मानसे** मानससरोवरार्थं **म्लानयन्तः** उत्कण्ठाजनितदुःखवतः कुर्वाणाः **देवधिष्णेषु** देवमन्दिरेषु । 'धिष्ण्यं सद्मनि नक्षत्रे स्थाने शक्तौ च न द्वयोः' इति विश्व-लोचने । **सन्ध्यासङ्गीताय** सन्ध्यासमयविधीयमानसङ्गीतार्थं । सन्ध्यासु विधीयमानं सङ्गीतं सन्ध्यासङ्गीतं । तस्मै । तदर्थमित्यर्थः । **प्रहतमुरजाः** ताडितमृदङ्गाः । प्रहताः ताडिताश्च ते मुरजाः मृदङ्गाश्च प्रहतमुरजाः । **स्निग्धपर्जन्यघोषं** गम्भीरमेघध्वनितुल्य-ध्वानम् । स्निग्धः गम्भीरः पर्जन्यः मेघध्वनिः स्निग्धपर्जन्यः । 'पर्जन्यो वासवे मेघ-ध्वनौ च ध्वनदम्बुदे' इति विश्वलोचने । स्निग्धपर्जन्यः इव स्निग्धपर्जन्यः । स्निग्ध-मेघध्वनितुल्यः इत्यर्थः । 'देवपथादिभ्यः' इतीवार्थस्य कस्लोप् । स्निग्धपर्जन्य-श्चासौ घोषः ध्वनिश्च । तं । **अकाले** वर्षाकालाद्भिन्नकाले । तदन्यार्थे नञत्र विज्ञेयः । **विदधतितरां** अतिशयेन कुर्वन्ति । 'द्विविभज्ये तरः' इति ङे तदन्तान्मिङः 'क्येन्मिङ्किझादामद्रव्ये' इत्याम् ।

Wherein the drums, beaten in the temples for the purpose of the evening musical performance, causing the peacocks, noisy with their cracklings, to dance, making the swans, giving out notes exciting pity, distressed by their earnest desire for the Mānasa ( lake ), make, in all the seasons other than the monsoon, a noise, resembling the deep thundering of clouds, excessively.

**यत्राकीर्णं विततशिखराः, सानका मन्द्रघोषं**
**विद्युद्भासा विरचिततनुं रत्नदीपानुयाताः ।**
**सौधाभोगास्तुलयितुमलं शश्वदोघं घनाना-**
**मन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः ॥ ८७ ॥**

अन्वयः— यत्र आकीर्णं विततशिखराः, मन्द्रघोषं सानकाः, विद्युद्भासा विरचिततनुं रत्नदीपानुयाताः, अन्तस्तोयं मणिमयभुवः, तुङ्गं अभ्रंलिहाग्राः, घनानां ओघं शश्वत् तुलयितुं सौधाभोगाः अलम् ।

यत्रेत्यादि । यत्र अलकानगर्यां आकीर्णं प्रावृषि समन्तात् प्रसृतं मेघवृन्दं । आ समन्तात् कीर्णं प्रसृतं आकीर्णम् । **विततशिखराः** विस्तृताग्रभागाः । विततानि विस्तृतानि शिखराणि अग्रभागाः येषां ते सौधाभोगाः । 'विततं तु मतं व्याप्ते विस्तृतेऽप्यभिधेयवत्' इति विश्वलोचने । शिखा चूडा वलभी अस्यास्तीति शिखरं । **मन्द्रघोषं** गम्भीरगर्जितध्वनिं । मन्द्रः गम्भीरः घोषः गर्जितध्वनिः यस्य सः मेघौघः । तम् । 'घोषः कांस्येऽम्बुदध्वनौ । घोषः स्याद्गोपकाभीरनिस्वनाभीरपल्लिषु' इति विश्वलोचने । 'मन्द्रस्तु गम्भीरे' इत्यमरः । **सानकाः** समृदङ्गध्वनयः सौधाभोगाः । 'मन्द्रघोषं' इति घनौघविशेषणदर्शनात्सानकशब्दस्य समृदङ्गध्वनयः इति लाक्षणिकोऽर्थोऽत्र ग्राह्यः । 'आनकः पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे' इति विश्वलोचने । **विद्युद्भासा** विद्युदातपेन। विद्युतः तडितः भाः आतपः विद्युद्भाः । तया । **विरचिततनुं** अलङ्कृतशरीरं । विरचिता अलङ्कृता तनुः शरीरं यस्य सः । तं घनौघम् । **रत्नदीपानुयाताः** रत्नरूपदीपानुगताः रत्नमयदीपानुगताः वा । तादृशदीपसहिताः । **अन्तस्तोयं** अन्तर्गतजलं घनौघं । **मणिमयभुवः** मणिप्रकृतभूमयः । मणिभिः प्राधान्येन कृताः भुवः भूमयः येषां ते सौधाभोगाः । 'प्रकृते मयट्' इति मयट् । **तुङ्गं** उन्नताकाशप्रदेशस्थितं घनौघं **अभ्रंलिहाग्राः** अभ्रङ्कषाग्रभागाः सौधाभोगाः । अभ्रं मेघं लिहन्ति कषन्ति स्पृशन्ति वेति अभ्रंलिहानि । अभ्रंलिहान्यग्राणि अग्रभागाः येषां ते । 'वहाभ्रे लिहः' इति खश् । खित्वात् 'मुमचः'

इति सुमागमः । घनानां मेघानां ओघं समूहं । 'ओघः पाथःप्रवाहे च समूहे च पुमानयम्' इति विश्वलोचने । शश्वत् सततं तुलयितुं समीकर्तुं सौधाभोगाः सौधविस्ताराः । महान्तः सौधाः इत्यर्थः । अलं पर्याप्ताः समर्थाः । भवन्तीति शेषः ।

Wherein the expansive mansions, having their uppermost parts expansive, with beatings of drums, possessing lamps in the form of jewels ( or possessing jewels serving as lamps or jewel-lamps ), having floors studded with jewels prominently, having their uppermost parts scraping ( or touching ) the clouds, are always quite competent to stand comparison with an assemblage of clouds scattered in all directions, giving out deep thunders, with their forms decorated with the lustre of lightnings, possessing water inside and lofty ( respectively ).

कूटोच्छ्रायैस्तुहिनविशदैः शारदानम्बुदौघान्
मन्द्रातोद्यध्वनिभिरुदधीनुच्चलद्वारिवेलान् ।
रत्नोदंशुप्रसररुचिरैर्भित्तिभागैः कुलाद्रीन्
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ ८८ ॥

अन्वयः— यत्र तुहिनविशदैः कूटोच्छ्रायैः शारदान् अम्बुदौघान्, मन्द्रातोद्यध्वनिभिः उच्चलद्वारिवेलान् उदधीन्, रत्नोदंशुप्रसररुचिरैः भित्तिभागैः कुलाद्रीन्, तैः तैः विशेषैः त्वां तुलयितुं प्रासादाः अलम् ।

कूटेत्यादि । यत्र अलकापुर्यां तुहिनविशदैः प्रालेयतुल्यधावल्यैः । तुहिनं प्रालेयमिव विशदाः धवलाः । तैः । 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमं । प्रालेयं मिहिका च' इत्यमरः । 'विशदः पाण्डरे व्यक्ते' इति विश्वलोचने । कूटोच्छ्रायैः शिखरोत्सेधैः । 'नगाद्यारोह उच्छ्रायः उत्सेधश्चोच्छ्रयश्च सः' इत्यमरः । कूटानामुच्छ्रायाः उत्सेधाः कूटोच्छ्रायाः । तैः । शारदान् शरद्भवान् । शरदि भवन्तीति शारदाः । तान् । 'तत्र भवः' इत्यण् । अम्बुदौघान् मेघसमूहान् । मन्द्रातोद्यध्वनिभिः गम्भीरवाद्यध्वनिभिः । मन्द्राः गम्भीराश्च ते आतोद्यानां तूर्यादिवाद्यानां ध्वनयः आरवाः । तैः । उच्चलद्वारिवेलान् ऊर्ध्वगजलतटान् । उच्चलत् ऊर्ध्वं गत्वा प्रतिघातं कुर्वत् वारि यत्र ताः उच्चलद्वारयः । उच्चलद्वारयः वेलास्तटाः येषां ते । तान् 'जलधिजलविकारे वेला, तटेऽप्युपचारात्, वेल चलने' इति क्षीरस्वामी । यद्वा उच्चलद्विलोलकल्लोलीभवद्वारि यासां ताः । उच्चलद्वारयः वेलाः जलविकाराः येषां ते । तान् । जल-

प्रक्षोभजनितोल्लोलकल्लोलानित्यर्थः । उदधीन् सागरान् । रत्नोदंशुप्रसररुचिरैः रत्नोद्गतकिरणविस्तारमनोहरैः । रत्नेभ्यः उद्गताः अंशवः किरणाः रत्नोदंशवः । तेषां प्रसरेण विस्तारेण रुचिराः कान्तिमन्तस्तेजस्विनः । तैः । भित्तिभागैः भित्तिदेशैः कुलाद्रीन् कुलपर्वतान् तैस्तैः नानाविधैः विशेषैः धर्मैः त्वां भवन्तं तुलयितुं समीकर्तुं प्रासादाः हर्म्याणि अलं पर्याप्ताः । समर्थाः इत्यर्थः । सन्तीति शेषः ।

Wherein the mansions are capable of establishing similarity with masses of autumnal clouds with the lofty parts of their uppermost divisions white like snow, with oceans with their waters dashing against their shores ( or with the oceans with tides, having their waters rising high up ) with the deep sounds of the musical instruments,, with the principal mountains with the parts of their walls shining with the spread *of the rays emitting from the gems* [ *and* ] *with you with their various* special features.

पङ्कीभूताः श्रमजलकणैरार्द्रितप्रस्तरान्ता
बद्धोत्कण्ठस्तनतटपरामृष्टवर्णाविशीर्णाः ।
सम्भोगान्ते श्रममुपचितं सूचयन्त्यङ्गरागाः
यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गितानाम् ॥ ८९ ॥

अन्वयः—यत्र प्रियतमभुजोच्छ्वासितालिङ्गितानां स्त्रीणां श्रमजलकणैः पङ्कीभूताः आर्द्रितप्रस्तरान्ताः बद्धोत्कण्ठस्तनतटपरामृष्टवर्णाविशीर्णाः अङ्गरागाः सम्भोगान्ते उपचितं श्रमं सूचयन्ति ।

पङ्कीभूताः इत्यादि । यत्र अलकापुर्यां प्रियतमभुजोच्छ्वासितालिङ्गितानां स्वप्रियतमबाहुपाशदृढीकृतपरिष्वङ्गाणां । प्रियतमानां भुजाः बाहवः प्रियतमभुजाः । तैः उच्छ्वासितानि आप्यायितानि दृढीकृतानि आलिङ्गितानि आलिङ्गनानि यासां ताः । तासाम् । स्त्रीणां योषितां श्रमजलकणैः श्रमजनितस्वेदजलबिन्दुभिः । अत्र श्रमो निधुवनविधिनिबन्धनः इत्यवसेयम् । पङ्कीभूताः पङ्कभावं गताः । अपङ्काः पङ्काः सम्पन्नाः पङ्कीभूताः । 'कृभ्वस्तियोगेऽतत्तत्त्वे सम्पत्तरि च्विः' इति च्विः । च्वावीत्वम् । आर्द्रितप्रस्तरान्ताः । आर्द्रिताः आर्द्राः कृताः । 'मृदो स्वर्थे णिज्बहुलम्' इति णिच् । क्तश्च । प्रस्तरान्ताः शय्यादेशाः । प्रस्तराणां शय्यानां अन्ताः देशाः प्रस्तरान्ताः । प्रस्तृणातीति प्रस्तरः । शय्येत्यर्थः । 'अन्तो नाशे मनोहरे । स्वरूपेऽन्तं मतं

क्लीवं न स्त्री प्रान्तेऽन्तिके त्रिषु' इति विश्वलोचने। बद्धोत्कण्ठस्तनतटपरामृष्टवर्णोविकार्णाः सम्पीडितोद्गतपार्श्वदेशस्तनतटघृष्टमौक्तिकैः समन्ताद्विकीर्णाः। बद्धौ सम्पीडितौ च तौ उत्कण्ठौ उद्गतसमीपस्थपरिधिप्रदेशौ च बद्धोत्कण्ठौ। तौ च तौ स्तनतटौ च। ताभ्यां परामृष्टाः घृष्टाः वर्णाः स्तनतटद्वयान्तरालस्थितमालामौक्तिकाः। तैः आ समन्ताच्छय्यायां विकीर्णाः प्रसृताः। यद्वा तादृशस्तनटसङ्घर्षजनिताङ्गरागसंश्लेषा वर्णाः मौक्तिकाः यैस्ते। तादृशाभ्यां स्तनतटाभ्यां हेतुभूताभ्यां परामृष्टाः जनितोपदेहीकृताः वर्णाः मौतिकाः यैः ते। विकीर्णा सर्वतः प्रसृताः। अङ्गरागाः प्रसाधनविलेपनानि। 'समालम्भोऽङ्गरागश्च प्रसाधनविलेपनम्' इति धनञ्जयः। सम्भोगान्ते निधुवनविध्यवसाने उपचितं वृद्धिङ्गतं श्रमं आयासं सूचयन्ति पिशुनयन्ति।

The scented cosmetics, scattered ( here and there in their beds ) owing to the pearls rubbing against their breasts having their circumjacent parts raised up owing to their being pressed ( by their husbands embracing them ), turn into mud by the drops of sweat exuding on account of the efforts, moistening interior parts of their beds, suggest the exhaustion, increased at the end of their sexual enjoyment, of the women, closely embraced in the arms of their husbands.

यस्यामिन्दोरनतिचरतो नातिसान्द्रं पतन्तो
गौरीभर्तुर्विरचितजटामौलिभाजो मयूखाः
नेतुं सद्यो विलयममलाः शक्नुयुर्दम्पतीना-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ॥ ९० ॥

अन्वयः— यस्यां गौरीभर्तुः विरचितजटामौलिभाजः अनतिचरतः इन्दोः नातिसान्द्रं पतन्तः अमलाः तन्तुजालावलम्बाः मयूखाः दम्पतीनां सुरतजनितां अङ्गग्लानिं सद्यः विलयं नेतुं शक्नुयुः।

यस्यामित्यादि। यस्यां अलकापुर्यां गौरीभर्तुः निशानाथस्य। 'गौरी तु पार्वतीनग्नकन्ययोर्वरुणस्त्रियां। नदीभिद्यामिनीपिङ्गारोचनीक्ष्माप्रियङ्गुषु' इति विश्वलोचने। यद्वामेदिनीपतितुल्यस्येशानदिगधिपतेः। यद्वा गौरी गौरवर्णेशानदिगिन्द्रपत्नी। तस्याः भर्तुः। 'देवपथादिभ्यः' इतीवार्थस्य कस्योप्। 'युक्तवदुपि लिङ्गसङ्ख्ये'। विरचितजटामौलिभाजः। विशेषेण रचिता निबद्धा चासौ जटा च विरचितजटा। मूर्धोपरिनिबद्धग्रन्थिरित्यर्थः। विरचितजटेव मौलिः किरीटं विरचितजटा-

मौलिः । यद्वा विरचिताः लिखिताः जटाः वृक्षशाखाकारचित्राणि यस्यां सा विरचित-जटा । 'उस् न्यर्चार्थध्वजचित्रे' इति चित्रकर्मण्यभिधेये वर्तमानाज्जटाशब्दात्कस्योस्। "युक्तवद्युसि लिङ्गसङ्ख्ये" इति जटाशब्दप्रकृतिवल्लिङ्गम् । 'पुंवद्यजातीयदेशीये । इति पुंवद्भावाभावः जटाशब्दस्य नित्यस्त्रीलिङ्गत्वादुक्तपुंस्कत्वाभावात् । सा चासौ मौलिः किरीटं च विरचितजटामौलिः । तां भजते इति विरचितजटामौलिभाक् । तस्य । 'भजो ण्विः' इति ण्विः । **अनतिचरतः** स्वमार्गातिक्रममकुर्वतः अनतिशीघ्रयायिनः वा । **इन्दोः** चन्द्रमसः । **नातिसान्द्रं पतन्तः** विरलविरलं प्रसृमराः **अमलाः** शुभ्राः । 'अमला कमलायां स्यादमलं विशदेऽभ्रके' इति विश्वलोचने । **तन्तुजालावलम्बाः** तन्तुजालेन तन्तुविनिर्मितानायद्वारेण प्रविशन्तः. तन्तुजालवदवलम्बमानाः वा । तन्तूनां जालमानायः तन्तुजालं । तेन अवलम्बः प्रवेशः येषां ते । यद्वा तन्तूनां जालं समूहः तन्तुजालम् । तदिव अवलम्बः आलम्बनं तन्तुजालावलम्बः । सोऽस्त्येषामिति तन्तुजालावलम्बाः । 'अभ्रादिभ्यः' इति मत्वर्थीयोऽत्यः । **मयूखाः** किरणाः । 'किरणोऽस्रमयूखांशुगभस्तिघृणिरश्मयः', इत्यमरः । **दम्पतीनां** जायापतीयुगलानां । जायापती दम्पती । राजदन्तादित्वाज्जायाशब्दस्य जंदमित्येतावादेशौ । **सुरतजनितां** निधुवनविधिजनितां **अङ्गग्लानिं** शरीरश्रमं **सद्यः** शीघ्रं **विलयं नेतुं** विनाशयितुं **शक्नुयुः** समर्थाः भवेयुः ।

Wherein the bright rays, penetrating through nets of interlooping threads ( or hanging like a mass of threads ), propagating not very densly, of the moon, going not out of her right way, the lord of night, occupying the crown, put on the head having hair collected like matted hair, of the husband of the white-complexioned lady (i. e. of the lord of the north-east direction ), would be able to remove at once the bodily fatigue of the couples, caused by sexual enjoyment.

**एकाकिन्यो मदनविवशा नीलवासोवगुण्ठाः**
**प्राप्ताकल्पा रमणवसतीर्यातुकामास्तरुण्यः ।**
**यत्रापास्ते तमसि विपणीराश्रयन्त्युत्पथेभ्य-**
**स्त्वत्संरोधापगमविशदैरिन्दुपादैर्निशीथे ॥ ९१ ॥**

अन्वयः— यत्र निशीथे त्वत्संरोधापगमविशदैः इन्दुपादैः तमसि अपास्ते एकाकिन्यः मदनविवशाः नीलवासोवगुण्ठाः प्राप्ताकल्पाः रमणवसतीः यातुकामाः तरुण्यः उत्पथेभ्यः विपणीः आश्रयन्ति ।

एकेत्यादि। यत्र अलकायां निशीथे अर्धरात्रे। 'अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ' इत्यमरः। त्वत्संरोधापगमविशदैः त्वत्कृतप्रतिबन्धविगमनशुभ्रैः। त्वत्संरोधः त्वत्कृतः प्रतिबन्धः। तस्य अपगमः दूरोत्सरणं। तेन विशदैः निर्मलैः शुभ्रैर्वा। इन्दुपादैः चन्द्रकिरणैः। 'पादोऽस्त्री चरणे मूले तुरीयांशेऽपि दीधितौ। शैलप्रत्यन्तशैले ना' इति विश्वलोचने। तमसि तमिस्रे। 'तमिस्रं तिमिरं तमः' इत्यमरः। अपास्ते परिहृते। एकाकिन्यः असहायाः। 'एकादाकिंश्चासहाये' इत्यसहायार्थे एकशब्दादाकिन्। मदनविवशाः कामातुराः। विषयवासनाधीनमनस्काः इत्यर्थः। नीलवासोऽवगुण्ठाः नीलवर्णवस्त्रावगुण्ठितशरीराः। नीलं नीलवर्णं वासः वस्त्रं। नीलवासः एव अवगुण्ठः शरीरावगुण्ठनसाधनं यासां ताः नीलवासोऽवगुण्ठाः। 'वासस्तु वसने ख्यातमोष्ठे दशनपूर्वकं' इति विश्वलोचने। अवगुण्ठ्यतेऽनेनेति अवगुण्ठः। 'पुंसि घः प्रायः' इति करणे घः पुंसि सञ्ज्ञायाम्। प्राप्ताकल्पाः परिहिताभरणाः। प्राप्ताः लब्धाः परिहिताः आकल्पाः आभरणानि याभिः। ताः। 'आकल्पवेशौ नेपथ्यम्' इत्यमरः। रमणवसतीः प्रियतमनिवासस्थानानि। यातुकामाः गन्तुमनसः। 'सम्तुमोर्मनःकामे' इति तुमो मकारस्य लम्। तरुण्यः युवत्यः। उत्पथेभ्यः उन्मार्गेभ्यः। कापथान्विमुच्येत्यर्थः। विपणीः पण्यवीथिकाः। 'विपणिस्तु स्त्रियां पण्यवीथ्यामापणपण्ययोः' इति विश्वलोचने। आश्रयन्ति प्राप्नुवन्ति। प्रविशन्तीत्यर्थः।

When young ladies, desirous of going alone to the abodes of their lovers at midnight, wearing ornaments, concealing by wrapping themselves in black garments, pining with love, would resort to the bazar roads giving up the ways deviating from the right paths when the darkness would be dispelled by the rays of the moon brilliant owing to the removal of the obstruction caused by you.

तासां पाद्यं वितरितुमिवोपह्वरे निष्कुटानां
धौतोपान्ता भवनवलभैरिन्दुपादाभिवर्षात्।
यस्यां रात्रौ श्रममपथके प्रस्तुताः कामुकीनां
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥ ९२ ॥

अन्वयः— यस्यां तासां उपह्वरे पाद्यं वितरितुं इव इन्दुपादाभिवर्षात् स्फुटजल-

लवस्यन्दिनः, निष्कुटानां धौतोपान्ताः, भवनवलभेः प्रस्तुताः चन्द्रकान्ताः रात्रौ अपथके कामुकीनां श्रमं व्यालुम्पन्ति ।

तासामित्यादि । यस्यां अलकानगर्यां तासां युवतीनां उपह्वरे रहसि । 'उपह्वरं समीपे स्याद्रहोमात्रेऽप्युपह्वरम्' इति विश्वलोचने । पाद्यं पादोदकं । पादार्थमुदकं पाद्यं । 'पाद्यार्घ्ये' यत्यान्तो निपातः ये च पादस्य पद्भावाभावाः । 'पाद्यं पादाय वारिणी' इत्यमरः । वितरितुं इव दातुमिव इन्दुपादाभिवर्षात् शीतरश्मिरश्म्यभिवृष्टेः । इन्दोश्चन्द्रमसः पादाः रश्मयः इन्दुपादाः । 'पादोऽस्त्री चरणे मूले तुरीयांशेऽपि दीधितौ । शैलप्रत्यन्तशैले ना' इति विश्वलोचने । तेषां अभिवर्षः वर्षणं । तस्मात् । 'वर्षमस्त्री वर्षणेऽब्दे जम्बूद्वीपे घने पुमान्' इति विश्वलोचने । स्फुटजललवस्यन्दिनः निर्मलसलिलकणवर्षुकाः । स्फुटाः निर्मलाश्च ते जललवाः सलिलकणाः स्फुटजललवाः । तान् स्यन्दन्ते स्रावयन्तीति स्फुटजललवस्यन्दिनः । निष्कुटानां गृहोद्यानानां । 'निष्कुटस्तु गृहोद्याने स्यात्केदारकपाटयोः' इति विश्वलोचने । धौतोपान्ताः प्रक्षालितसमीपदेशाः । धौताः प्रक्षालिताः उपान्ताः समीपदेशाः यैः ते । भवनवलभेः प्रासादोपरिष्ठभागस्य । प्रासादोपरिष्ठभागनिबद्धाः इत्यर्थः । 'गोपानसी तु वलभी छादने वक्रदारुणि' इत्यमरः । प्रस्तुताः प्रशस्ताः चन्द्रकान्ताः चन्द्रकान्तमणिपाषाणाः रात्रौ निशायां अपथके राजमार्गादन्यस्मिञ्जनताज्ञाते पथि । 'चोरवाट' इति महाराष्ट्र्याम् । कामुकीनां जनितनिधुवनसेवनाभिलाषाणां । कामसन्तप्तानामित्यर्थः । 'कुण्डगोणस्थलभाजनागकुशकामुककबरकटात् पात्रावपनाकृत्रिमाश्राणास्थूलायसरिरंसुकेशवेशश्रोणौ' इति कामुकात् स्त्रियां ङी । कामुकी रिरंसुरित्यर्थः । 'वृषस्यन्ती तु कामुकी' इत्यमरः । श्रमं मार्गायासं । व्यालुम्पन्ति परिहरन्ति ।

Where the excellent moon-stones of the roofs of the mansions, exuding pure drops of water owing to the downpour of rays of the moon (and so) washing off the regions in the immediate proximity of the pleasure-gardens near the mansions for as it were offering water for washing feet in secret, destroy completely at night the fatigue of the passionate women on the untrodden path.

संलक्ष्यन्ते चिरयति मनोवल्लभे कामिनीनां
गच्छन्तीनां स्खलितविषमं रात्रिसम्भोगहेतोः ।
सौभाग्याङ्कैरिव विलसितैराततां राजमार्गाः

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः ॥ ९३ ॥

अन्वयः— यत्र मनोवल्लभे चिरयति रात्रिसम्भोगहेतोः स्खलितविषमं गच्छन्तीनां कामिनीनां गत्युत्कम्पात् अलकपतितैः, विलसितैः सौभाग्याङ्कैः इव मन्दारपुष्पैः राजमार्गाः आतताः संलक्ष्यन्ते ।

संलक्ष्यन्ते इत्यादि। यत्र अलकापुर्यां मनोवल्लभे मनःप्रिये। मनसः हृदयस्य वल्लभः। तस्मिन्। प्रियतमे इत्यर्थः। चिरयति कालयापनं कुर्वति। सतीतिशेषः। 'यद्भावाद्भावगतिः' इति ईप्। 'मृदो ध्वर्थे णिज्बहुलं' इति णिच् करोत्यर्थे। चिरं करोति चिरयति। रात्रिसम्भोगहेतोः निशामैथुनोपसेवनार्थम्। रात्रौ क्रियमाणः सम्भोगः निधुवनसेवनं रात्रिसम्भोगः। तस्य हेतोः। तदर्थमित्यर्थः। हेतुशब्दप्रयोगादत्र का। स्खलितविषमं विक्लवगतिविषमं। स्खलितेन विक्लवगत्या विषमं अश्लक्ष्णं यथा स्यात्तथा। गच्छन्तीनां प्रयान्तीनां कामिनीनां रिरंसुस्त्रीणां। वृषस्यन्तीनामित्यर्थः। गत्युत्कम्पात् गतिजनितवेपथोः अलकपतितैः चूर्णकुन्तलगलितैः। 'अलकाश्चूर्णकुन्तलाः' इत्यमरः। विलसितैः विशेषेण शोभमानैः मङ्गलैः वा सौभाग्याङ्कैः इव सुभगत्वचिह्नैः इव। 'अङ्को रेखायां चिह्नलक्ष्मणोः' इति विश्वलोचने। सौभाग्यस्य सुभगत्वस्य अङ्कभूतानि चिह्नभूतानि सौभाग्याङ्कानि। तैः। 'सौभाग्यं सुभगत्वे स्याद्योगभेदे पुमानयम्' इति विश्वलोचने। मन्दारपुष्पैः देवतरुविशेषकुसुमैः। 'पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इत्यमरः। राजमार्गाः नरेन्द्राध्वानः आतताः संस्तृताः। व्याप्ताः इत्यर्थः। संलक्ष्यन्ते सन्दृश्यन्ते।

Wherein the royal roads are found covered over with the beautiful Mandara flowers resembling the signs of the blessed state of wifehood, fallen down from their curely hair owing to the agitation caused by the gait of the love-lorn women going unfairly owing to their frequent stumbles for the sake of nocturnal sexual enjoyment on finding their lovers delaying.

यत्रोद्याने कुसुमितलतामण्डपेषु स्थितानां
शय्योपान्तैर्विततमधुपैरात्तसम्भोगगन्धैः।
नीलोत्तंसैर्निधुवनपदं सूच्यते दम्पतीनां
क्लृप्तच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ॥ ९४ ॥

अन्वयः—यत्र उद्याने कुसुमितलतामण्डपेषु स्थितानां दम्पतीनां विततमधुपैः आत्तसम्भोगगन्धैः नीलोत्तंसैः शय्योपान्तैः कर्णविभ्रंशिभिः क्लृप्तच्छेदैः कनककमलैः च निधुवनपदं सूच्यते ।

यत्रेत्यादि । यत्र अलकानगर्यां उद्याने आरामे कुसुमितलतामण्डपेषु पुष्पितवल्लीविरचितगृहेषु । कुसुमिताः सञ्जातपुष्पाः । 'तदस्य सञ्जातं तारकादिभ्य इतः' इतीतः । कुसुमिताः सञ्जातपुष्पाश्च ताः लताः वल्ल्यश्च कुसुमितलताः । तासां मण्डपाः गृहाणि । तेषु । स्थितानां स्थितिमतां दम्पतीनां । जम्पतीनां । कामुककामुकीयुगलानामित्यर्थः । विततमधुपैः विसृत्वरभ्रमरैः । वितताः विशेषेण तताः विसृत्वराः मधुपाः भ्रमराः यत्र तैः । आत्तसम्भोगगन्धैः गृहीतसम्भोगकालप्रयुक्तगन्धद्रव्यैः । आत्ताः गृहीताः सम्भोगगन्धाः यैः ते । तैः । सम्भोगस्य गन्धाः गन्धद्रव्याणि सम्भोगगन्धाः । सम्भोगकालप्रयुक्तगन्धद्रव्याणीत्यर्थः । नीलोत्तंसैः नीलोत्पलरचितशिरोभूषणैः । नीलाः नीलोत्पलकल्पितत्वान्नीलवर्णाः उत्तंसाः शिरोभूषणानि यत्र । तैः । शय्योपान्तैः शयनीयसमीपप्रदेशैः कर्णविभ्रंशिभिः । कर्णाभ्यां विभ्रश्यन्तीति कर्णविभ्रंशिनः । तैः । क्लृप्तच्छेदैः कृतखण्डैः । क्लृप्ताः कृताः छेदाः खण्डाः येषां ते । तैः । कनककमलैः सुवर्णवर्णसरोजैः । कनकानीव कनकानि । कनकानि सुवर्णवर्णत्वात्तत्तुल्यानि च तानि च कमलानि च कनककमलानि । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । चः समुच्चये । यद्वा कनकविनिर्मितकमलानीव कमलानि कनककमलानि । निधुवनपदं मैथुनोपसेवनस्थानं सूच्यते ज्ञाप्यते ।

Where in the garden, the abode of sexual enjoyment of the couples resting in bowers of flowery creepers is pointed out by the skrits of their beds possessing blue ornaments worn on the crowns of their heads, scented by the perfumes used at the time of sexual enjoyment, having bees spread all over, and by lotuses, possessing gold-like colour slipped off their ears and reduced to pieces.

मन्दाकिन्यास्तटवनमनु क्रीडतां दम्पतीनां
पुष्पास्तीर्णाः पुलिनरचिता यत्र सम्भोगदेशाः ।
संसूच्यन्ते बहुतरफलैः कुङ्कुमारक्तशोभै—
र्मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारैः ॥ ९५ ॥

अन्वयः—यत्र कुङ्कुमारक्तशोभैः बहुतरफलैः, मुक्ताजालैः, स्तनपरिसरच्छि-

न्नसूत्रैः हारैः च मन्दाकिन्याः तटवनं अनु क्रीडतां दम्पतीनां पुष्पास्तीर्णाः पुलिनरचिताः सम्भोगदेशाः संसूच्यन्ते ।

मन्दाकिन्या इत्यादि । यत्र अलकाभिधानायां कुवेरराजधान्यां कुङ्कुमारक्तशोभैः काश्मीरजन्मवद्रक्तकान्तिभिः । कुङ्कुमं काश्मीरजन्म । कुङ्कुमस्य आरक्ता रक्तवर्णा शोभेव शोभा कान्तिर्येषां तैः । बहुतरफलैः विपुलतरफलैः । मुक्ताजालैः मुक्तामणिविरचितैः आनायैः । स्तनपरिसरच्छिन्नसूत्रैः उरोजविस्तारभग्नतन्तुभिः । स्तनयोः उरोजयोः परिसरः विस्तारः स्तनपरिसरः । तेन च्छिन्नानि सूत्राणि तन्तवः येषां ते । तैः । हारैः मौक्तिकसरैः । चः समुच्चये मन्दाकिन्याः गङ्गायाः । 'मन्दाकिनी वियद्गङ्गा' इत्यमरः । तटवनं तटरुहवनं अनु समीपे । अनोः कर्मप्रवचनीयत्वादिप् । 'अनु त्वनुक्रमे हीने पश्चादर्थसहार्थयोः । आयामेऽपि समीपार्थे साहश्ये लक्षणादिषु' इति विश्वलोचने । क्रीडतां विहरतां दम्पतीनां जायापतीनां । जायाया दम्भावः । पुष्पास्तीर्णाः कुसुमाच्छन्नाः । पुष्पैः कुसुमैः आस्तीर्णाः प्रच्छन्नाः । पुलिनरचिताः सिकतासु निर्मिताः । 'तोयोत्थितं तत् पुलिनं' इत्यमरः । सम्भोगदेशाः मैथुनोपसेवनप्रदेशाः । संसूच्यन्ते सुष्ठु ज्ञाप्यन्ते ।

Wherein the abodes of sexual enjoyment of the couples sporting near the forests grown on the banks of the Ganges, constructed on the sandy beaches, scattered over with flowers, are suggested by a large number of fruits assuming lustre red like that of by saffron, by nets of pearls, and by necklaces the strings of which are broken owing to the expanse of the circumjacent regions of their breasts.

गत्यायासाद्गलितकबरीबन्धमुक्तैः सभृङ्गैः
कीर्णैः पुष्पैः कुसुमधनुषो बाणपातायमानैः ।
लाक्षारागैश्चरणनिहितैरप्यधिक्षोणि यस्यां
नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ९६ ॥

अन्वयः— यस्यां गत्यायासात् गलितकबरीबन्धमुक्तैः कीर्णैः सभृङ्गैः कुसुमधनुषः बाणपातायमानैः पुष्पैः अधिक्षोणि चरणनिहितैः लाक्षारागैः अपि कामिनीनां नैशः मार्गः सवितुः उदये सूच्यते ।

गतीत्यादि । यस्यां यक्षाधिपराजधान्यां गत्यायासात् गमनजातश्रमाद्धेतोः

गलितकबरीबन्धमुक्तैः श्लथीभूतकेशवेशमुक्तैः। कबर्याः केशवेशस्य बन्धः विरचना कबरीबन्धः। गलितः श्लथीभूतश्चासौ कबरीबन्धश्च गलितकबरीबन्धः। तस्मात् मुक्तैः गलितैः। कीर्णैः आस्तीर्णैः सभृङ्गैः भ्रमरसहितैः। भ्रमराकीर्णैः इत्यर्थः। कुसुमधनुषः पुष्पधन्वनः कामस्य बाणपातायमानैः शरपातसङ्काशैः। बाणपातः इव आचरतीति बाणपातायते। शानच्। 'क्यङ् च' इति गौणादाचारेऽर्थे क्यङ्। पुष्पैः कुसुमैः। अधिक्षोणि भूमौ। 'क्षिः सुब'– इत्यादिना सुबर्थे हसः। चरणनिहितैः लाक्षारागलित-त्वाच्चरणयुगलैर्भूमौ स्थापितैः। लाक्षारागैः अलक्तकरसरागैः। अपि कामिनीनां रिरंसुनारीणां नैशः निशिभवः मार्गः अध्वा सवितुः भानोः उदये उदयसमये सूच्यते प्रकटीक्रियते।

Wherein the path, ( traversed ) at night, of love-lorn ladies is indicated at the time of the rise of the sun by flowers scattered here and there owing to their being dropped down from the braided hair, slackened owing to their being tossed by their gait, possessing bees, imitating the discharged arrows of the flower-arrowed god ( i. e. of the god of love ) and by the lac-dyes deposited on the ground by their feet.

मन्ये यस्या जगति सकलेऽप्यस्ति नौपम्यमन्य—
त्सर्वौपम्यप्रणिहितधिया वेधसा निर्मितायाः।
यामध्यास्ते कमलनिलया सम्पदश्च प्रजाना—
मानन्दोत्थं नयनसलिलं यत्र नाऽन्यैर्निमित्तैः॥ ९७॥

अन्वयः— सर्वौपम्यप्रणिहितधिया वेधसा निर्मितायाः यस्याः सकले अपि जगति अन्यत् औपम्यं नास्ति [ इति ] मन्ये। यां कमलनिलया अध्यास्ते। [ यां ] च प्रजानां सम्पदः [ अध्यासते ]। यत्र नयनसलिलं आनन्दोत्थं, न अन्यैः निमित्तैः।

मन्ये इत्यादि। सर्वौपम्यप्रणिहितधिया सर्वोपमानदत्तावधानधिषणेन। सर्वाणि च तानि औपम्यानि उपमानानि च सर्वौपम्यानि। तेषु प्रणिहिता दत्तवधाना धीः शेमुषी यस्य सः। तेन। वेधसा ब्रह्मणा। निर्मितायाः प्रादुर्भावितायाः। अत्र वेधसा निर्मितत्वं कविसमयमनुसृत्योक्तं, न युक्त्यनुशासनमनुसृत्येति मनसि विधेयम्। यस्याः अलकायाः सकले अपि जगति निखिलेऽपि भूमण्डले औपम्यं उपमानार्हं वस्तु। उपमानमित्यर्थः। नास्ति न विद्यते इति मन्ये शम्बरासुरोऽहं जाने। यां यस्यां

अलकायां कमलनिलया कमलालया लक्ष्मीः अध्यास्ते निवसति। 'कर्मेवाधेः शीङ्स्थ.सः' इत्यधिपूर्वस्य शीङः आधारस्य कर्मसंज्ञत्वात् 'कर्मणीप्' इति इप्। यां च यस्यामलकायां च प्रजानां तन्निवासिजनानां सम्पदः श्रियः। अध्यासते इति शेषः। अथवा 'अर्थवशाद्विभक्त्यादिविपरिणामः' इति न्यायेन बहुवचननिर्देशः। यत्र अलकायां नयनसलिलं नेत्राश्रुजलं आनन्दोत्थं आनन्दजनितं न अन्यैः निमित्तैः नान्यनिमित्तजनितं। आनन्दव्यतिरिक्तनिमित्तजनितमश्रु तत्रत्यजननयनाभ्यां न विगलति। तत्रत्याः जनाः अमन्दानन्दकन्दलितस्वान्ता एवेति भावः।

Which, I think, has no other standard of comparison in the whole of the world even owing its being created by the creator having his mind centred on all the standards of comparisons; wherein resides the lotus-aboded one ( i. e. Laxmī ) and wherein the treasures of the subjects exist, wherein tears arise in the eyes on account of joy and not on account of any other causes.

यत्रत्यानां न परपरता चित्तभर्तुः परत्र
नान्यो भङ्गः प्रणयिनि जने मानभंङ्गं विहाय।
नाऽन्यो बन्धः प्रियजनतया सङ्गमाशानुबन्धा—
न्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात्॥ ९८॥

अन्वयः— यत्रत्यानां चित्तभर्तुः परत्र परपरता न, प्रणयिनि जने मानभङ्गं विहाय अन्यः भङ्गः न, प्रियजनतया सङ्गमाशानुबन्धात् अन्यः बन्धः न, इष्टसंयोगसाध्यात् कुसुमशरजात् ( तापात् ) अन्यः तापः न।

यत्रत्यानामित्यादि। यत्रत्यानां अलकापुरीनिवासिनां। यत्र भवः यत्रत्याः। 'क्वामेहाविस्तस्त्रात्यच्' इति त्यच्। चित्तभर्तुः मनोहरात्। चित्तं मनः बिभर्ति आकर्षतीति चित्तभर्ता। मनोहरात् मनोहारिण्याश्चेत्यर्थः। परत्र अन्यत्र। मनोहरं पुरुषं मनोहारिणीं स्त्रियं च विमुच्यान्यत्र। परपरता परवशता न नास्ति। प्रणयिनि जने प्रियतमजनविषये मानभङ्गं अभिमानच्युतिं विहाय विमुच्य, अन्यः परः भङ्गः अभिमानध्वंसः न नास्ति। अलकावासिनां प्रियतमजनकृतः एव मानभङ्गः, नान्यनिमित्तः इत्यर्थः। प्रियजनतया प्रियजनसमूहेन। जनानां समूहः जनता। 'गजग्रामजनबन्धुसहायात्तल्' इति समूहार्थे जनशब्दात्तल्। प्रिया चासौ जनता च

प्रियजनता । तया । सङ्गमाशानुबन्धात् मीलनाशाबन्धात् अन्यः बन्धः अन्यद्बन्धनं न नास्ति । इष्टसंयोगसाध्यात् प्रियसंयोगासिद्धात् । इष्टैः प्रियैः संयोगः सम्बन्धः इष्टसंयोगः । सः साध्यः असिद्धः यस्मिन् तस्मात् । प्रियतमसंयोगस्यासिद्धत्वान्मदनज्वरोत्पत्तेर्जायमानात्तापादित्यर्थः । कुसुमशरजात् मदनाज्जायमानात् तापात् अन्यः भिन्नः तापः न । मदनजन्यतापादन्यस्य तत्रासम्भवः इति भावः ।

The residents of which are subservient to none other than him ( or her ) who overlords her ( or his ) heart, are not distressed by any sort of disappointment other than that arising from humiliation caused by the beloved ones, have no ties other than the one of hope for their union with the assemblage of their beloved ones, have no torments other than the one arising from the flower-arrowed one ( i. e. the god of love ) brought about by the union yet to be effected with their beloved ones ( or by the absence of their union with their beloved ones ).

यत्राकल्पान्निधिपु सकलानेव सम्पादयत्सु
नार्थी कश्चिन्न खलु कृपणो नापि निःस्वो जनोऽस्ति ।
धर्मः साक्षान्निवसति सतीं यामलङ्कृत्य यस्मा-
न्नाप्यन्यत्र प्रणयकलहाद्विप्रयोगोपपत्तिः ॥ ९९ ॥

अन्वयः— यत्र निधिपु सकलान् एव आकल्पान् सम्पादयत्सु कश्चित् जनः अर्थी नास्ति, न खलु [ कश्चित् ] कृपणः अस्ति, नाऽपि [ कश्चित् ] निःस्वः [ अस्ति ]; यस्मात् यां सतीं अलङ्कृत्य धर्मः साक्षात् निवसति [ तस्मात् तत्र ] प्रणयकलहात् अन्यत्र विप्रयोगोपपत्तिः अपि नाऽस्ति ।

यत्रेत्यादि । यत्र अलकायां निधिपु नवसङ्ख्याकेपु निधानेपु सकलानेव निखिलानेव आकल्पान् सङ्कल्पान् । अभिलाषानित्यर्थः । सम्पादयत्सु पूरयत्सु कश्चिज्जनः कश्चन जनः अर्थी मार्गणः । याचकः इत्यर्थः । नास्ति न विद्यते । न खलु न हि कश्चिज्जनः कृपणः दीनः अस्ति विद्यते । नाऽपि नैव कश्चिज्जनः निःस्वः निर्धनः । 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः । अस्ति विद्यते । यस्मात् यतः कारणात् यां अलकां सतीं शोभनां अलङ्कृत्य भूषयित्वा धर्मः नीतिधर्मः साक्षात् प्रत्यक्षेण निवसति आवसति तस्मात् कारणात् तत्र पुर्यां

प्रणयकलहादन्यत्र प्रेमकलहं विमुच्यान्यस्मिन्विषये विप्रयोगोपपत्तिः अपि विरहप्राप्तिरपि नाऽस्ति न विद्यते ।

Wherein not a single man indeed is found begging, wretched and deprived of wealth owing to the existence of the [ nine ] treasures [ of Kubera ] fulfilling all desires; also there is no possibility of any separation except in cases of love-quarrels, as righteousness, having decorated her, the beautiful one, actually inhabits her.

यस्यै शक्रः स्पृहयतितरामिष्टसर्वर्द्धिभाजे
यत्रासीनाः शतमखपुरीं विस्मरन्त्येव सद्यः ।
नान्यच्चिन्त्यं विहरणभयाद्यत्र मृत्युञ्जयानां
वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥ १०० ॥

अन्वयः— इष्टसर्वर्द्धिभाजे यस्यै शक्रः स्पृहयतितरां; यत्र आसीनाः सद्यः एव शतमखपुरीं विस्मरन्ति; यत्र विहरणभयात् अन्यत् न चिन्त्यं; यत्र मृत्युंजयानां वित्तेशानां यौवनात् अन्यत् वयः न खलु अस्ति ।

यस्यामित्यादि । इष्टसर्वर्द्धिभाजे अभिलषितनिखिलैश्वर्ययुक्तायै । सर्वाश्च ताः ऋद्धयश्च सर्वर्द्धयः । इष्टाः अभिलषिताः प्रियाः वा च ताः सर्वर्द्धयश्च इष्टसर्वर्द्धयः । ताः भजति इति इष्टसर्वर्द्धिभाक् । तस्यै । 'भजो ण्विः' इति ण्विः । यस्यै अलकायै । 'स्पृहेर्वेप्सितः' इति स्पृहेः कर्मणः वैकल्पिकी सम्प्रदानसञ्ज्ञा । सम्प्रदानत्वाच्चाप् । शक्रः इन्द्रः । 'जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः । सुत्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा' इत्यमरः । स्पृहयतितरां अत्यर्थमभीप्सति । 'इयेन्मिङ्क्रिज्ञा-दामद्रव्ये' इति ज्ञान्तान्मिङः आम् । अत्र प्रकृष्टार्थे ज्ञः । यत्र अलकायां आसीनाः स्थितिमन्तः जनाः सद्यः एव शीघ्रमेव शतमखपुरीं इन्द्रनगरीं । शतमखस्येन्द्रस्य पुरी शतमखपुरी अमरावती । ताम् । विस्मरन्ति स्मृतिविषयादपनयन्ति । लुप्तत-त्स्मृतयः भवन्तीत्यर्थः । यत्र अलकायां विहरणभयात् अलकां विहायान्यत्रानभि-लषिताद्गमनाज्जायमानाद्भयात् विहरणं अलकां विहायान्यत्र गमनं । तस्माद्यद्भयं तस्मात् । यद्वा विह्रियतेऽत्रेति विहरणं । मार्गः इत्यर्थः । तत्र यद्भयं भयस्थानं तस्मात् 'करणाधारे चानट्' इत्याधारार्थेऽनट् । विभ्यतेऽत्रेति भयं । भयस्थानमित्यर्थः । 'पुंसो घः प्रायः' इत्याधारार्थे घः । विहरणाद् भयं विहरणभयं । तस्मात् । एनाम-

लकां विहायान्यत्रालकावत्सुखाभावान्नान्यत्र गमनं तत्रत्यैर्जनैरभिलषितं। अतस्ततोऽन्यत्र गमने सुखवञ्चितत्वप्रसङ्गादन्यत्र गमनात्तेषां भयं जायते। तस्माद्भयादित्यर्थः। अन्यत् किञ्चित् न चिन्त्यं न चिन्तार्हं। न चित्तोद्वेगजनकमित्यर्थः। चिन्तयितुं योग्यं चिन्त्यं। 'तृज्याश्चार्हे' इत्यर्हार्थे व्यः। यत्र अलकायां मृत्युञ्जयानां मृत्युनिरोधकानां। मृत्युं जयति निरुणद्धीति मृत्युञ्जयः। 'भृतॄवृजिधारिदम्तप्सहः खौ' इति खच्। 'मुमचः' इति मुमागमः। वित्तेशानां यक्षाणां। 'वित्ताधिपः कुबेरः स्यात्प्रभौ धनिकयक्षयोः' इति शब्दार्णवे। यौवनात् तारुण्यात् अन्यत् भिन्नं वार्धक्यादिकं वयः अवस्थाविशेषः। 'वयस्तु यौवने बाल्यप्रभृतौ विहगे वयाः' इति विश्वलोचने। न खलु अस्ति नैव विद्यते।

For which, possessing all prosperities aspired after, Indra desires very much; the residents of which immediately forget the city of Indra (i. e. Amaravati, the capital of Indra); in which nothing other than the fear of departure (from her) provokes anxiety, and wherein indeed no age other than youth exists in the case of the lords of wealth (i. e. Yaksas), the conquerors of death.

नूनं कल्पद्रुमसहचरास्तत्सधर्माण एते
सञ्जाताः स्युः षड्ऋतुकुसुमान्येकशो यत्प्रदद्युः।
अक्षीणर्द्धिं ध्रुवमुपगताः पल्लवोल्लासिता ये
यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पाः ॥ १०१ ॥

अन्वय— यत्र अक्षीणर्द्धिं ध्रुवं उपगताः पल्लवोल्लासिताः उन्मत्तभ्रमरमुखराः नित्यपुष्पाः ये पादपाः यत् षड्ऋतुकुसुमानि एकशः प्रदद्युः (तत्) एते कल्पद्रुमसहचराः नूनं तत्सधर्माणः सञ्जाताः स्युः।

नूनमित्यादि। यत्र अलकापुर्यां अक्षीणर्द्धिं क्षयविकलां समृद्धिं ध्रुवं निश्चयेन उपगताः प्राप्ताः पल्लवोल्लासिताः किसलयैः समुपजातसौन्दर्याः। पल्लवैः किसलयैः उल्लासिताः सञ्जातशोभाः उन्मत्तभ्रमरमुखराः पुष्परससेवनजनितानन्दभ्रमरवाचालिताः। उन्मत्ताः मधुरसपानमत्ताश्च ते भ्रमराः मधुलिहश्च उन्मत्तभ्रमराः। तैः मुखराः वाचालिताः। उन्मत्तभ्रमरनिकराः इति पाठसङ्ग्रहे तु उन्मत्ताः मधुरसपानसंतुष्टाः भ्रमराणां निकराः समूहाः यत्र तैः इति विग्रहः। नित्यपुष्पाः सदाकुसुमाः। नित्यं पुष्पाणि येषां ते नित्यपुष्पाः। ये पादपाः ये वृक्षाः। यत् यस्मात् कारणात्

षड्ऋतुकुसुमानि वसन्तादिषड्ऋतुसञ्जातानि पुष्पाणि। षट्सु वसन्तादिषु ऋतुषु जातानि कुसुमानि षड्ऋतुकुसुमानि । एकशः एककालं । युगपदित्यर्थः । प्रदद्युः वितरेयुः । तत् तस्मात् कारणात् । एते पादपाः कल्पद्रुमसहचराः कल्पवृक्षसहवासिनः । सह चरन्तीति सहचराः। कल्पद्रुमाणां सहचराः कल्पद्रुमसहचराः। कल्पद्रुमसहचारित्वादित्यर्थः। 'हेतौ सर्वाः प्रायाः' इति हेतौ वा । नूनं तर्के । संभावये इत्यर्थः । 'नूनं तर्के तु विख्यातं नूनं स्यादर्थनिश्चये' इति विश्वलोचने। तत्सधर्माणः कल्पद्रुमतुल्यस्वभावाः कल्पद्रुमतुल्याचाराः वा । तेषां कल्पद्रुमाणां सधर्माणः समानाचाराः समानस्वभावाः वा 'समानस्य धर्मादिषु' इति समानस्य सः । 'धर्मात्केवलादन्' इत्यन् । 'धर्मः स्यादस्त्रियां पुण्ये धर्मो न्यायस्वभावयोः । उपमायां यमाचारवेदान्तेऽपि धनुष्यपि । यागे योगेऽप्यहिंसायां सोमपेऽपि क्वचिन्मतः' इति विश्वलोचने । सञ्जाताः सम्भूताः स्युः भवेयुः । सर्वर्तुजायमानकुसुमप्रदानात्तत्सहचारित्वाच्चैते पादपाः तत्तुल्याचाराः तत्तुल्यस्वभावा वा जाता इति तर्कयामीति भावः ।

As the trees, wherein, ever-flowering, noisy owing to the intoxicated bees, beautified by the sprouts, attained to prosperity, free from deterioration, give flowers blossoming in all the six seasons simultaneously, they, owing to their co-existence with wish-fulfilling trees, I think, possess properties similar to those of the wish-fulfilling trees.

तत्सान्निध्यादिव वनलताः शिक्षितास्तन्नियोगं
नानाभेदं वितरितुमलं ताश्च दिव्यं प्रसूनम् ॥
ताभिः स्पर्धामिव च गमिता यत्र भृङ्गोपगीता
हंसश्रेणीरचितरशना नित्यपद्मा नलिन्यः ॥ १०२ ॥

अन्वयः—यत्र तत्सान्निध्यात् तन्नियोगं शिक्षिताः इव ताः च वनलताः नानाभेदं दिव्यं प्रसूनं वितरितुं अलम् । यत्र च भृङ्गोपगीताः हंसश्रेणीरचितरशनाः नित्यपद्माः नलिन्यः ताभिः स्पर्धां इव गमिताः ।

तदित्यादि । यत्र अलकाभिधानयक्षराजराजधान्यां तत्सान्निध्यात् कल्पवृक्षसामीप्यात् । तेषां कल्पवृक्षाणां सान्निध्यं सामीप्यं तत्सान्निध्यं । तस्मात् । कल्पवृक्षसामीप्याद्धेतोरित्यर्थः । तन्नियोगं कल्पवृक्षविधेयं । अभिलषितप्रदानरूपं विधेयं कर्तव्य-

मित्यर्थः । तेषां कल्पवृक्षाणां नियोगः कर्तव्यं तन्नियोगः । तम् । शिक्षतेः कर्मत्वादिवत्रेत्यवधेयम् । शिक्षिताः इव पाठिताः इव । ताश्च आलिङ्गितकल्पद्रुमाः वनलताः वनोद्भवाः वल्लयः । नानाभेदं बहुप्रकारम् । नाना बहवः भेदाः प्रकाराः यस्य तत् । दिव्यं दिविभवम् । दिविभवत्वादतिसुन्दरमित्यर्थः । 'दिव्यं तु शपथे वाले लवङ्गकुसुमेऽपि च । दिव्याऽमलक्यां दिव्यं तु वल्गौ दिविभवेऽन्यवत्' इति विश्वलोचने । प्रसूनं कुसुमम् । जातावेकवचनम् । तेन कुसुमानीत्यर्थः । वितरितुं प्रदातुं । विवरितुमिति पाठस्यासमञ्जसत्वात् वनलतानां कल्पवृक्षनियोगे शिक्षितत्वादभिलषितप्रदातृत्वस्याभिप्रेतत्वाद्वितरितुमितिपाठपरिवर्तनं कृतमिति विज्ञेयं सुधीभिः । अलं समर्थाः । 'अलं भूषणपर्याप्तिशक्तिवारणनिष्फले' इति विश्वलोचने । यत्र च यस्यामलकायां च भृङ्गोपगीताः भृङ्गैः गुञ्जारवैरुपश्लोकिता हंसश्रेणीरचितरशनाः मरालमालाकल्पितमेखलाकलापाः । हंसपङ्क्त्या रचितपरिमण्डलाकाररचना इत्यर्थः । 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्यमरः । हंसानां मरालानां श्रेण्यः पङ्क्तयः हंसश्रेण्यः । ताभिः रचिताः कृताः रशनाः मण्डलाकाररचनाः यासु ताः । नित्यपद्माः नित्यं सततं पद्मानि कमलानि यासां ताः । यद्वा नित्या क्षयविकला पद्मा लक्ष्मीः शोभा यासां ताः । नलिन्यः पद्मिन्यः । ताभिः वनलताभिः नानाविधदिव्यकुसुमप्रदाभिः स्पर्धामिव तुल्यबलविरोधरूपविप्रतिषेधमिव । तुल्यबलविरोधः विप्रतिषेधाख्यः स्पर्धा । ताम् । गमिताः प्रापिताः । यथा नानाभेददिव्यकुसुमवितरणक्षमाः वनलतास्तथैता नलिन्योऽपीति भावः । हंसश्रेणीरचितरचनाः इति पाठे तु हंसश्रेणीभिः रचिताः विहिताः रचनाः नानाविधा आकृतयो यत्र ताः इत्यर्थो ग्राह्यः ।

Wherein the forest-creepers, taught as if the duty of those (wish-fulfilling trees) owing to their being in the proximity of those (trees), are able to offer various beautiful flowers, and wherein the lotus-creepers, bearing lotuses always having girdle-like circular figures formed by the rows of swans, eulogised by bees, are made to stand comparison with those (creepers).

यस्यां नित्यप्रहतमुरवाम्भोदनादैः प्रतीता
नृत्यन्त्युच्चैर्विरचितलयं ताण्डवैश्चित्रपिच्छाः ।
नानारत्नैरिव च निधयो निर्मिता जङ्गमास्ते
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापाः ॥ १०३ ॥

अन्वयः— यस्यां नित्यप्रहतमुरवाम्भोदनादैः प्रतीताः, चित्रपिच्छाः, नानारत्नैः निर्मिताः जङ्गमाः निधयः इव च ते नित्यभास्वत्कलापाः केकोत्कण्ठाः भवनशिखिनः ताण्डवैः विरचितलयं उच्चैः नृत्यन्ति ।

यस्यामित्यादि । यस्यां अलकानगर्यां शम्बरासुरनिवासस्थानभूतायां नित्यप्रहतमुरवाम्भोदनादैः सतताभिहतमुरजानां अम्भोदनादसङ्काशनादैः । नित्यं प्रहताः अभिहताः नित्यप्रहता । नित्यप्रहताश्च ते मुरवाः मुरजाश्च नित्यप्रहतमुरवः । तेषां अम्भोदानां मेघानां नादाः गर्जितध्वनयः इव नादाः ध्वनयः । तैः । अम्भोदानां नादा इव नादाः । प्रतीताः प्रहृष्टाः । 'प्रतीतः सादरे ख्याते हृष्टे दृष्टे विरक्षणे । प्रतीत एते ज्ञाते च' इति विश्वलोचने । चित्रपिच्छाः मनोहरबर्हभाराः विविधवर्णबर्हभाराः वा । 'चित्रं तु कर्बुराद्भुतयोस्त्रिषु' इति विश्वलोचने । चित्राणि अद्भुतानि पिच्छानि कलापाः येषां ते चित्रपिच्छाः । नानारत्नैः बहुप्रकारै रत्नैः निर्मिताः विहिताः जङ्गमाः सञ्चारिणः निधयः इव शेवधिरिव । 'निधिर्ना शेवधिः' इत्यमरः । च । चोऽत्र समुच्चये । ते भवनशिखिनः । नित्यभास्वत्कलापाः सततप्रकाशमानबर्हभाराः । नित्यं सततं भास्वन्तः प्रकाशयुक्ताः कलापाः बर्हाणि येषां ते । केकोत्कण्ठाः केकाध्वन्युच्चारणार्थं उन्नमितकन्धराः । केकाभिः उद्गतः उन्नतिं प्राप्तः कण्ठः येषां ते । भवनशिखिनः गृहसहसानाः गृहमयूरा इत्यर्थः । ताण्डवैः नृत्यैः । 'ताण्डवं तृणनृत्ययोः' इति विश्वलोचने । विरचितलयं । विरचितः लयः नृत्यादिसाम्यं यस्मिन् कर्मणि यथा स्यात्तथा । 'लयो नृत्यादिसाम्ये स्याद्विनाशाश्लेषयोर्लयः' इति विश्वलोचने । उच्चैः अत्यर्थं नृत्यन्ति नर्तनं कुर्वन्ति ।

Wherein the domestic peacocks, highly pleased with the sounds, resembling the thunderings of clouds, of the drums beaten always, having multi-coloured (or wonderful) plumages, resembling the moveable treasures produced by means of various jewels, possessing evershining plumages, having their necks raised up for the sake of giving out crackling notes, play Tandava dances very much in accordance with the time of music.

ज्योत्स्नंमन्येष्वमरवसतिं व्याहसत्सु स्वभूत्या
हर्म्येषूद्यद्वलभिषु सुधापङ्कधौतेषु यस्याः ।
निर्विश्यन्ते निधिभुगधिपैः स्त्रीसहायैर्वितन्व—

न्नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥ १०४ ॥

अन्वयः— सुधापङ्कधौतेषु ज्योत्स्नंमन्येषु स्वभूत्या अमरवसतिं व्याहसत्सु उद्यद्वलभिषु यस्याः हर्म्येषु वितन्वन्नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः प्रदोषाः स्त्रीसहायैः निधिभुगधिपैः निर्विश्यन्ते ।

ज्योत्स्नम्मन्येष्वित्यादि । सुधापङ्कधौतेषु सुधासधर्मखनिजद्रव्यजानितशुभ्रवर्णरागविशेषविनिर्मापितजम्बालधवलीकृतेषु । सुधेव सुधा । 'देवपथादिभ्यः' इतीवार्थस्य कस्योस् । 'युक्तवदुसि लिङ्गसङ्ख्ये' इति युक्तवाल्लिङ्गम् । तस्याः पङ्केन जम्बालेन कर्दमेन धौताः धवलीकृताः । तेषु । ज्योत्स्नम्मन्येषु । ज्योत्स्नामात्मानं मन्यन्ते इति ज्योत्स्नम्मन्याः । तेषु । 'खश् स्वस्य' इति स्वस्य सुपि वाचि मन्यतेः खश् तस्य खित्वात् 'खित्यङ्घेः कृति' इति ज्योत्स्नाशब्दस्यान्त्यस्याऽऽतः प्रत्वं 'मुमचः' इति मुमागमश्च । शीतकिरणकिरणकलापायमानेष्वित्यर्थः । स्वभूत्या स्वैश्वर्येण । 'भूतिर्मातङ्गशृङ्गारे भस्मसम्पत्तिजन्मसु' इति विश्वलोचने । स्वस्याऽऽत्मनः भूतिः सम्पत्तिः स्वभूतिः । तया । अमरवसतिं निर्जरनिवासं । स्वर्गभुवमित्यर्थः । व्याहसत्सु तदुपहासं कुर्वत्सु । उद्यद्वलभिषु प्रोन्नततदुपरिष्ठभागेषु । यस्याः अलकानगर्याः । हर्म्येषु प्रासादेषु । धनिनां गृहेष्वित्यर्थः । वितन्वन्नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः प्रसरणशीलसार्वकालिककौमुदीप्रतिबद्धान्धतमसप्रवृत्तिसुभगाः । नित्या सार्वकालिकी चासौ ज्योत्स्ना कौमुदी च नित्यज्योत्स्ना । नितन्वती प्रसरणशीला चासौ नित्यज्योत्स्ना च वितन्वन्नित्यज्योत्स्ना । तया प्रतिहता प्रतिबद्धा तमोवृत्तिः अन्धकारप्रवृत्तिः तया रम्याः मनोहारिण्यः । अत्र ज्योत्स्नाया नित्यत्वमलकाया अमरवसतिनिर्विशेषत्वादित्यवसेयम् । प्रदोषाः रजनीमुखसमयाः । 'प्रदोषो रजनीमुखम्' इत्यमरः । स्त्रीसहायैः नारीसहचरैः । स्त्रियः नार्यः सहायाः सहचर्यः येषां ते । निधिभुगधिपैः यक्षाधिपतिभिः । निधीन् नवसङ्ख्याकान् भुञ्जन्तीति निधिभुजः । क्विप् । निधिभुजां अधिपाः अधिपतयः निधिभुगधिपाः । तैः । यद्वा निधिभुक् अधिपः येषां ते निधिभुगधिपाः । तैः यक्षैरित्यर्थः । निर्विश्यन्ते अनुभवगोचरतां नीयन्ते ।

In the mansions of which, white owing to their being covered with sticking plaster, considering themselves to be the moonlight (incarnate), laughing at the abode of gods with their prosperity, possessing topmost parts raised high up, the evenings, charming owing to the obstruction of the course of darkness by constantly spreading moonlight, are enjoyed by the lords of Yakṣas along with their beloveds.

दृष्ट्वा यस्याः प्रकृतिचतुरामाकृतिं सुन्दरीणां
त्रैलोक्येऽपि प्रथमगणनामीयुषीं जातलज्जा ।
मन्ये लक्ष्मीः सपदि विसृजेदेव संलुच्य केशान्
हस्ते लीलाकमलमलके बालकुन्दानुविद्धम् ॥ १०५ ॥

अन्वयः— यस्याः त्रैलोक्ये अपि प्रथमगणनां ईयुषीं सुन्दरीणां प्रकृतिचतुरां आकृतिं दृष्ट्वा जातलज्जा लक्ष्मीः केशान् संलुच्य हस्ते लीलाकमलं, अलके बालकुन्दानुविद्धं सपदि विसृजेत् एव ( इति ) मन्ये ।

दृष्ट्वेत्यादि । यस्याः अलकापुर्याः त्रैलोक्ये अपि लोकत्रये अपि । त्रयो लोकाः एव त्रैलोक्यं । 'भेषजादिभ्यष्ट्यण्' इति स्वार्थे ट्यण् । प्रथमगणनां । प्रथमा उत्कृष्टा इति गणना प्रथमगणना । ताम् । ईयुषीं गतवतीम् । 'वस्सदिण्श्रोः क्वसुः' इतीणः लिटः क्वसुः । क्रादिनियमादिटि द्वित्वम् । धुरूपस्य 'यणिणः' इति यणादेशः । चस्य 'कितीणो दीः' इति दीत्वम् । क्वसोरुगित्त्वात् 'ङ्युगिदन्नञ्चोः' इति स्त्रियां ङी । सुन्दरीणां अङ्गनानां प्रकृतिचतुरां स्वभावसुन्दरीं । अकृत्रिमसौन्दर्ययुक्तामित्यर्थः । प्रकृत्या स्वभावेन चतुरा मनोहारिणी प्रकृतिचतुरा । ताम् । 'प्रकृतिस्तु सत्त्वरजस्तमसां साम्यमात्रके । स्वभावामात्यपौरेषु लिङ्गे योनौ तथाऽऽत्मनि' इति विश्वलोचने । आकृतिः रूपं शरीरं वा । 'आकृतिः कायरूपयोः' इति विश्वलोचने । दृष्ट्वा विलोक्य । जातलज्जा सञ्जातव्रीडा । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' इत्यमरः । जाता समुत्पन्ना लज्जा ह्रीः यस्याः सा । लक्ष्मीः पद्मा कमलालया । श्रीरित्यर्थः । 'अवी-तन्त्री-तरी-लक्ष्मी-धी-ह्री-श्रीणामुणादिषु । अपि स्त्रीलिङ्गजातीनां सिलोपो न कदाचन' इति शर्ववर्मविरचितकौमारव्याकरणटीकायामुक्तम् । केशान् शिरोरुहान् संलुच्य उत्पाट्य हस्ते हस्ताग्रे धृतं लीलाकमलं क्रीडाकोकनदं शोभायुक्तमरविन्दं वा । लीला क्रीडा शोभा वा । 'लीला हावान्तरे स्त्रीणां केलौ खेलाविलासयोः' इति विश्वलोचने । लीलार्थं क्रीडार्थं स्वसौन्दर्याभिवृद्ध्यर्थं वा कमलं पद्मं लीलाकमलम् । यद्वा लीलया शोभयोपलक्षितं कमलं लीलाकमलम् । अलके चूर्णकुन्तले । 'अलकश्चूर्णकुन्तले' इति विश्वलोचने । बालकुन्दानुविद्धम् अर्धोन्मीलितमाघ्यकुसुमविरचितरचनाविशेषं, कुन्दकुसुमहीरैराचितरचनाविशेषं वा । अनुविद्धं अनुवेधः । 'नब्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च । कुन्दः माघ्यकुसुमवल्लरी । 'कुन्दो माघ्ये पुमांश्चक्रे भ्रमौ निधिसुरद्विषोः' इति विश्व-

लोचने। कुन्दकुसुमं कुन्दं। 'पुष्पमूलेषु बहुलमुप्' इति पुष्पत्ययस्योप्। बालान्यर्धोन्मीलितानि च तानि कुन्दानि कुन्दकुसुमानि च बालकुन्दानि। तेषामनुविद्धमनुवेधः विरचनाविशेषः। तत्। यद्वा बालकुन्दयोरनुविद्धम्। 'बालः पुंसि शिशौ केशे वाजिवारणबालधौ। मूर्खेऽपि बालो बालं तु ह्रीवेरे पुंनपुंसकम्' इति विश्वलोचने। बालं ह्रीवेरं च कुन्दं कुन्दकुसुमं च बालकुन्दे। प्रत्येकशोऽत्र जातावेकवचनम्। तयोरनुविद्धं रचनाविशेषः। तत्। सपदि शीघ्रं। 'द्राङ् मङ्क्षु सपदि द्रुते' इत्यमरः। विसृजेदेव परित्यजेदेव। इति मन्ये जाने।

I think that Laxmi ( the goddess of beauty ) flushed with shame on seeing the bodies, naturally beautiful, regarded as most excellent in all the three worlds, of the belles of which, would certainly throw off immediately the lotus-flower held in the hand as a play-thing, remove the particular construction of semi-blossomed Kunda flowers beset in her curly hair after uprooting her hair.

**यत्र स्त्रीणां स्मितरुचिलसज्ज्योत्स्नयाऽऽबद्धशोभा**<br>
**प्रालेयांशोः श्रियमुपहसत्यस्तदोषाऽकलङ्का।**<br>
**भूयो लक्ष्मीं हिममहिमजां मानयन्तीभिराभि-**<br>
**र्नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः॥ १०६॥**

अन्वयः—यत्र स्मितरुचिलसज्ज्योत्स्नया आबद्धशोभा, अस्तदोषा, अकलङ्का, हिममहिमजां लक्ष्मीं मानयन्तीभिः आभिः लोध्रप्रसवरजसा भूयः पाण्डुतां नीता, स्त्रीणां आननश्रीः प्रालेयांशोः श्रियं उपहसति।

यत्रेत्यादि। यत्र अलकायां स्मितरुचिलसज्ज्योत्स्नया मृदुहासकान्तिरूपप्रकाशमानेन्दुचन्द्रिकया। स्मितं मृदुहास्यं। तस्य रुचिः कान्तिः स्मितरुचिः। सैव लसन्ती शोभमाना प्रकाशमाना वा ज्योत्स्ना चन्द्रप्रकाशः। तया। आबद्धशोभा विरचितसौन्दर्या। आबद्धा विरचिता शोभा सौन्दर्यं यस्याः सा। आननश्रियो विशेषणमेतत्। स्मितरुचौ लसज्ज्योत्स्नारोपः स्मितरुचिधावल्यनिबन्धनः, धावल्यस्य स्मितरुचिचन्द्रिकयोः साधारणत्वात्। अस्तदोषा परित्यक्तोपरागास्तंगमनादिदोषा, स्वोत्पत्तौ रात्रिसंबन्धविकला वा। ज्योत्स्ना तु अस्तदोषा न सम्भवत्येव, दोषामन्तरेण तदुत्पत्त्यसम्भवात् सूर्याचन्द्रमःप्रकाशयोः सहभावासम्भवदर्शनात् च। अतो ज्योत्स्नायाः दोषाश्रितजीवनात् आननश्रियश्च दोषानाश्रितत्वादाननश्रियस्तस्याः आधिक्यात्तत्कृतचन्द्रिकोपहाससामञ्जस्यं

घटत एवेति भावः। अस्ताः परिहृताः दोषाः यया सा। पक्षे अस्ता परिहृता दोषा रात्रिः यया सा अस्तदोषा। अकलङ्का निष्कलङ्का। ज्योत्स्नायाः सकलङ्कयोनित्वा-त्सकलङ्कत्वात्तस्याः आननश्रियः आधिक्यं सिद्धम्। अतः आननश्रीसम्पादितः ज्योत्स्नो-पहासः सामञ्जस्यमर्हति। हिममहिमजां हेमन्तर्तुसामर्थ्यजनितां। हिमस्य शीतर्तोः महिम्ना प्रकर्षेण जाता हिममहिमजा। ताम्। लक्ष्मीं शोभां। 'लक्ष्मीः श्रीरिव सम्पत्तौ पद्माशोभाप्रियङ्गुषु' इति विश्वलोचने। वनोपवनशोभामित्यर्थः। मानयन्तीभिः सत्कुर्वन्तीभिः आभिः तत्रत्यस्त्रीभिः लोध्रप्रसवरजसा। लोध्राल्लोध्रकुसुमात् प्रसवः उत्पत्तिर्यस्य तल्लोध्रप्रसवं। तच्च तद्रजश्च। तेन। लोध्रकुसुमप्रभवपरागसाधनेनेत्यर्थः। 'गालवः शाबरो लोध्रः' इति 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इति चाऽमरः। 'प्रसवो गर्भमोक्षे स्याद्वृक्षाणां फलपुष्पयोः। परम्पराप्रसङ्गे च लोकोत्पादे च पुत्रयोः' इति 'रजः परागे रेणौ तु रजवद्दृश्यते रजः' इति च विश्वलोचने। भूयः पुनः पुनः। 'भूयस्तु स्यात् पुनःपुनः। अनव्ययं प्रभूतार्थे' इति विश्वलोचने। पाण्डुतां शौक्ल्यं नीता प्रापिता स्त्रीणां योषितां आननश्रीः मुखसौन्दर्यं प्रालेयांशोः शीतांशोः। चन्द्र-मसः इत्यर्थः। श्रियं शोभां। ज्योत्स्नामित्यर्थः। उपहसति परिहसति।

Wherein the beauty of the faces of the women [ residing in that city ], rendered white with the pollens of the Lodhra-flowers by themselves again and again, highly appreciating the beauty manifested by the glory of winter-season, made elegant by glittering moon-light in the form of the white lustre of smiles ( of the women ), free from all drawbacks, spotless, would laugh at the beauty of the moon.

यत्राकल्पे स्वरुचिरचिते कल्पवृक्षप्रसूते<br>सत्येव स्यात्प्रियमभिनवप्रीतिमादत्य किञ्चित्।<br>यक्षस्त्रीणां यदुपनिहितं ताभिरात्तानुरागं<br>चूडापाशे नवकुरबकं चारु कर्णे शिरीषम्॥ १०७॥

अन्वयः– यत्र स्वरुचिरचिते कल्पवृक्षप्रसूते आकल्पे सति एव ताभिः चूडापाशे आत्तानुरागं नवकुरबकं, कर्णे चारु शिरीषं यत् उपनिहितं तत् यक्षस्त्रीणां अभिनव-प्रीतिं आदत्य किञ्चित् प्रियं स्यात्।

यत्रेत्यादि। यत्र अलकायां स्वरुचिराचिते स्वच्छन्दानतिक्रमेण विहिते। स्वस्य आत्मनः रुचिः इच्छा स्वरुचिः। 'रुचिरिच्छा रुचा रुक्ता शोभा-

भिष्वङ्गयोरपि ' इति विश्वलोचने। तया तदानुकूल्येन रचिते विहिते। कल्पवृक्षप्रसूते कल्पवृक्षाज्जाते। कल्पवृक्षात् कल्पपादपात् प्रसूतः जातः कल्पवृक्षप्रसूतः। तस्मिन्। आकल्पे भूषणे। यद्वा स्वरुचिरचिते आकल्पे कल्पवृक्षप्रसूते सत्येवेत्यन्वयः। सत्येव सत्यपि ताभिः तत्रत्याभिः स्त्रीभिः। यक्षस्त्रीभिरित्यर्थः। चूडापाशे केशबन्धे। 'चूडावलयभेदे स्याच्छिखायां वलभावपि' इति 'पाशः पक्षादिबन्धे स्याच्चार्थस्तु कचात्परः। छात्राद्यन्ते च निन्दार्थः कर्णान्ते शोभनार्थकः' इति च विश्वलोचने। आत्तानुरागं गृहीतलौहित्यं नवकुरवकं प्रत्यग्रकुरवककुसुमं। 'तत्र शोणे कुरवकम्' इत्यमरः। कुरवकं वसन्तर्तुसम्भवः पुष्पविशेषः। नवं प्रत्यग्रं च तत् कुरवकं च नवकुरवकम्। कर्णे कर्णपाशे चारु मनोहरं शिरीषं सुकुमारपुष्पविशेषं। 'शिरीषस्तु कपीतनः' इत्यमरः। शिरीषं ग्रीष्मर्तुसम्भवः पुष्पविशेषः। यत् यस्मात् कारणात् उपनिहितं स्थापितं तत् तस्मात् कारणात् यक्षस्त्रीणां यक्षयोषितां अभिनवप्रीतिं आदृत्य। अभिनवप्रीत्यपेक्षयेत्यर्थः। अभिनवे प्रीतिः रुचिः अभिनवप्रीतिः। ताम्। आदृत्य अपेक्ष्य। किञ्चित् तुच्छं वस्तु प्रियं प्रियंकरं स्यात् भवेत्। कल्पपादपप्रदत्तेऽनर्घ्याभरणे सत्यपि तासां यक्षस्त्रीणामभिप्रियत्वात्तुच्छान्यपि शिरीषकुरवकादीनि पुष्पाणि प्रियंकराणि तत्र भवेयुरिति भावः।

As the female Yakṣas wherein have put fresh Kadamba flower in their luxuriant hair on the head, and the charming Sirīsa on the ear even when there are ornaments prepared to their liking, brought forth by the wish-fulfilling trees, any insignificant thing must have been dear to them owing to their being attached to the love for novelties.

पाणौ पद्मं कुरवकयुतं स्वोचिते धाम्नि कुन्दं
लौध्रो रेणुः स्तनपरिसरे हारि कर्णे शिरीषम्।
व्यक्तिव्यक्तं व्यतिकरमहो तत्र षण्णामृतूनां
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ १०८ ॥

अन्वयः— यत्र वधूनां पाणौ पद्मं, स्वोचिते धाम्नि कुरवकयुतं कुन्दं, स्तनपरिसरे लौध्रो रेणुः, कर्णे हारि शिरीषं, सीमन्ते च त्वदुपगमजं नीपं, तत्र षण्णां ऋतूनां व्यतिकरमहः व्यक्तिव्यक्तम्।

पाणावित्यादि । यत्र यस्यामलकायां **वधूनां** सीमन्तिनीनां 'योषा सीमन्तिनी वधूः' इति धनञ्जयः । **पाणौ** हस्ते **पद्मं** कमलं । 'कमलं नलिनं पद्मं सरोजं सरसीरुहं' इति धनञ्जयः । 'पञ्चशाखः शयः पाणिः' इत्यमरः । पद्मानां शरदिजत्वाच्छरल्लिङ्गमेतत् । **स्वोचिते** स्वयोग्ये । कुन्दकुसुमसंस्थापनयोग्ये इत्यर्थः । **धाम्नि** स्थाने । केशकलापे इत्यर्थः । 'धाम रश्मौ गृहे देहे प्रभावस्थानजन्मसु' इति विश्वलोचने । **कुरबकयुतं** लोहितमहासहासुमनस्सहितं । 'तांबडी सेवंती' इति महाराष्ट्र्याम् । 'कुरबकः पुंसि शोणझिण्टिकाऽम्लानभेदयोः' इति विश्वलोचने । 'अम्लानस्तु महासहा ।... तत्र शोणे कुरबकं' इत्यमरः । **कुन्दं** माघ्यकुसुमं । 'कुन्दो माघ्ये पुमांश्चक्रे भ्रमौ निधिसुरद्विषोः' इति विश्वलोचने । कुन्दस्य कुसुमं कुन्दं । 'पुष्पमूलेषु बहुलं' इति पुष्पप्रत्ययस्योप् । **स्तनपरिसरे** उरोजप्रदेशे । 'भवेत्परिसरो दैवोपान्ते मृत्युप्रदेशयोः' इति विश्वलोचने । **लौध्रः** लोध्रकुसुमजः । लोध्रे लोध्रकुसुमे जातः लौध्रः । 'तत्र जातः' इत्यण् । **रेणुः** धूल्यणुः । परागः इत्यर्थः । जातावेकवचनमिति परागाः इत्यर्थः । 'रेणुर्धूल्यणुपर्पटे' इति विश्वलोचने । 'कुन्दो माघ्ये' इति वचनात्कुन्दानां माघोद्भवत्वाच्छैशिरत्वाच्छिशिरलिङ्गत्वम् । लौध्रकुसुमानां हेमन्तर्तुप्रभवत्वाद्धैमनत्वाद्धेमन्तलिङ्गत्वम् । अत्र प्रमाणं 'नवप्रवालोद्गमसस्यरम्यः प्रफुल्ललोध्रः परिपक्वशालिः । विलीनपद्मः प्रपतत्तुषारो हेमन्तकालः समुपागतः प्रिये ॥' इति । **कर्णे** कर्णपाशे । श्रोत्रप्रदेशे इत्यर्थः । **हारि** सौन्दर्यसम्पन्नं **शिरीषं** शिरीषपुष्पं । शिरीषसुमनसां ग्रीष्मर्तूद्भवत्वाद्ग्रैष्मत्वाद्ग्रीष्मलिङ्गत्वम् । **सीमन्ते च** केशवेशे च । शिरोरुहपद्धतावित्यर्थः । 'सीमन्तः केशे' इति सीम्नोऽन्ते परे पररूपम्निपातः । **त्वदुपगमजं** भवदुपगमने जातं । प्रावट्कालोद्भवमित्यर्थः । **नीपं** कदम्बकुसुमम् 'अथ स्थलकदम्बके । नीपः स्यात्पुलकः श्रीमान्प्रावृषेण्यो हलिप्रियः' इति शब्दार्णवे । नीपकुसुमानां प्रावृट्कालोद्भवत्वात्प्रावृषेण्यत्वात्प्रावृट्काललिङ्गत्वम् । कुरबकयुतमित्युक्तेः कुरबककुसुमानां वसन्तलिङ्गत्वाद्वसन्तर्तोरपि ग्रहणं कर्तव्यम् । **तत्र** अलकायां **षण्णामृतूनां** वसन्तादीनां षण्णामृतूनां **व्यतिकरमहः** अन्योन्यानुप्रवेशजनितः उत्सवः आनंदः । व्यतिकरः व्यतिषङ्गः अन्योन्यानुप्रवेशः । तस्य महः उत्सवः व्यतिकरमहः । 'भवेद्व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः' इति 'महस्तूत्सवतेजसोः' इति च विश्वलोचने । **व्यक्तिव्यक्तं** व्यक्त्या पृथगात्मतया स्पष्टतया वा व्यक्तं प्रकटीभूतम् ।

Where there are lotuses in the hands of ladies, Kunda flowers associated with Kurabaka flowers are put in their proper places, the pollens of Lodhra flowers are applied to the expansive breasts, beautiful

Sirisa flowers are put on the ears, and the Nipa flowers, put forth at the time of your advent, are placed at the parting lines of their hair, there the beauty ( or pleasure ) generated by the combination of the six seasons is clearly manifested.

शक्रम्मन्याः परिणतशरच्चन्द्रिकानिर्मलानि
प्रोत्तुङ्गानि प्रणयविवशाः स्वापतेयोष्मवन्ति ।
आक्रीडन्ते प्रिययुवतिभिः सर्वकामाभितृप्ता
यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि ॥१०९॥

अन्वयः— यस्यां शक्रम्मन्याः यक्षाः परिणतशरच्चद्रिकानिर्मलानि, प्रणयविवशाः प्रिययुवतिभिः प्रोत्तुङ्गानि स्वापतेयोष्मवन्ति, सर्वकामाभितृप्ताः सितमणिमयानि हर्म्यस्थलानि एत्य आक्रीडन्ते ।

शक्रमित्यादि । यस्यां अलकायां शक्रम्मन्याः शक्रमानिनः । शक्रमात्मानं मन्यन्ते इति शक्रम्मन्याः । 'खश्स्वस्य' इति स्वस्य सुपि वाचि मन्यतेः खश्, तस्य खित्वाच्च 'मुमचः' इति मुमागमः । यक्षाः गुह्यः परिणतशरच्चन्द्रिकानिर्मलानि सकलकलशारदकलानिधिकौमुदीविमलानि । परिणता पूर्णतां प्राप्ता शरच्चन्द्रिका शरत्कालोदितसम्पूर्णचन्द्रचन्द्रिका परिणतशरच्चन्द्रिका । सेव निर्मलानि विशदानि । अदभ्रशुभ्रवर्णानीत्यर्थः । हार्यस्थलान्येत्येति शेषः । प्रणयविवशाः मदयित्नुमदनमथितमनस्कारत्वाद्विनष्टसञ्ज्ञाः । विषयाशावशाधीनाः इत्यर्थः । प्रणयेन विवशाः प्रणयस्य वा विवशाः प्रणयविवशाः । प्रिययुवतिभिः प्रियाङ्गनाभिः सह प्रोत्तुङ्गानि उन्नततमानि स्वापतेयोष्मवन्ति धनोष्मसम्पन्नानि । स्वापतेयं धनं । स्वपतौ साधु स्वापतेयं । 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति साध्वर्थे स्वपतिशब्दाड्ढञ् । स्वापतेयस्योष्मा स्वापतेयोष्मा । स प्रशस्तः नित्यं वा एषामस्तीति स्वापतेयोष्मवन्ति । प्रशंसायां नित्ययोगे वा मतुः । दारिद्र्यशीतकदंशजनितार्तिविकलानि धनजनितसुखसाधनसम्पन्नानीत्यर्थः । सर्वकामाभितृप्ताः सफलीकृतसकलाभिलाषाः । सर्वे च ते कामाः अभिलाषाश्च सर्वकामाः । अभितृप्ताः सर्वकामाः येषां ते । वाहिताग्न्यादित्वात्सः । सितमणिमयानि स्फटिकमणिपाषाणविनिर्मितानि । विकारे प्राचुर्ये वा मयट् । हर्म्यस्थलानि प्रासादभूमीः एत्य सम्प्राप्य आक्रीडन्ते क्रीडां कुर्वान्त ।

Wherein those Yaksas, who fancy themselves to be Indras, having

gone to the mansions resplendent like fully developed autumnal moonlight, those who have lost control over themselves owing to their being love-lorn having gone with their yonng beloveds to the lofty ones endowed with the warmth of wealth, those who have all the longings fulfilled, having gone to the mansions of crystal, amuse themselves.

यत्र ज्योत्स्नाविमलिततलान्याश्रिताः कुट्टिमानि
प्रासादानां हरिमणिमयान्यासवामोदवन्ति ।
रंरम्यन्ते द्रविणपतयः पूर्णकामा निकामं
ज्योतिश्छायाकुसुमरचनान्युत्तमस्त्रीसहायाः ॥ ११० ॥

अन्वयः— यत्र ज्योत्स्नाविमलिततलानि हरिमणिमयानि आसवामोदवन्ति ज्योतिश्छायाकुसुमरचनानि प्रासादानां कुट्टिमानि आश्रिताः पूर्णकामाः उत्तमस्त्रीसहायाः द्रविणपतयः निकामं रंरम्यन्ते ।

यत्रेत्यादि । यत्र अलकानगर्यां ज्योत्स्नाविमलिततलानि कौमुदीशुक्लीकृतपृष्ठप्रदेशानि । ज्योत्स्नया कौमुद्या विमलितानि शुक्लीकृतानि ज्योत्स्नाविमलितानि । 'मृदो ण्यर्थे णिज्बहुलं' इति करोत्यर्थे णिज् । णिजन्ताच्च भूतार्थे क्तः । ज्योत्स्नाविमलितानि तलानि पृष्ठप्रदेशाः येषां तानि । हरिमणिमयानि इन्द्रनीलमणिनिर्मितानि । विकारार्थेऽत्र मयट् । आसवामोदवन्ति उत्तेजनसुगन्धिद्रव्यवन्ति । आसवाः उत्तेजनाश्च ते आमोदाः सुदन्धिद्रव्याणि च आसवामोदाः । यद्वा आसवामोदः मद्यसौगन्ध्यं । सोऽस्त्येषामित्यासवामोदवन्ति । 'सुगन्धिमुदि वामोदः' इति विश्वलोचने । ज्योतिश्छायाकुसुमरचनानि तारकानिकरप्रतिबिम्बकुसुमालङ्कृतानि । ज्योतिषां ग्रहनक्षत्रप्रकीर्णकतारकाणां छायाः प्रतिबिम्बानि ज्योतिश्छायाः । 'ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वरात्मसु' इति वैजयन्ती । 'छाया स्यादातपाभावे सत्कान्त्युत्कोचकान्तिषु । प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने । ज्योतिश्छाया एव कुसुमरचनानि यत्र । कुसुमानां रचनानि कुसुमरचनानि । प्रासादानां हर्म्याणां कुट्टिमानि अङ्गणस्थानि कान्तोपलघटितानि कुट्टिमानि आश्रिताः संश्रिताः पूर्णकामाः वृद्धिंगतकामवासनाः उत्तमस्त्रीसहायाः सललितललनाः द्रविणपतयः यक्षाः निकामं यथेच्छं रंरम्यन्ते अत्यर्थं रमन्ते । अत्यर्थं रतिक्रीडानिरताः भवन्तीत्यर्थः ।

Wherein the Yaksas [ lit. the lords of wealth ] associated with their most beautiful wives, with their passions intensified, resorted to

the courtyards, covered with pavements of sapphire, of the mansions, decorated with flowers in the form of reflected luminaries, giving enlivening pleasure ( or emitting fragrance of liquor ), with their surfaces whitened by moonlight, have sexual enjoyment again to their full satisfaction.

लोलापाङ्गाः सुरसरसिकाः प्रोन्नतभ्रूविकाराः
प्राणेशानां रहसि मदनाचार्यकं कर्तुमीशाः ।
स्वाधीनेऽर्थे विफलमिति वा वामनेत्रा न यस्या-
मासेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतम् ॥ १११ ॥

अन्वयः— यस्यां लोलापाङ्गाः सुरसरसिकाः प्रोन्नतभ्रूविकाराः रहसि प्राणेशानां मदनाचार्यकं कर्तुं ईशाः वामनेत्राः 'अर्थे स्वाधीने [सति मदनाचार्यकं] विफलं' इति वा कल्पवृक्षप्रसूतं रतिफलं मधु न आसेवन्ते ।

लोलापाङ्गा इत्यादि । यस्यां अलकाभिधानायामैलविलनगर्यां लोलापाङ्गाः सतृष्णनेत्रान्ताः तरलनयनान्तप्रदेशाः वा । लोलाः सतृष्णाः चलाः वा अपाङ्गाः नेत्रान्ताः यासां ताः । 'लोला जिह्वाश्रियोर्लोलः सतृष्णचलयोस्त्रिषु' इति 'अपाङ्गस्त्वङ्गविकले नेत्रान्ते तिलके पुमान्' इति च विश्वलोचने । सुरसरसिकाः सम्भोगशृङ्गाररसाभिज्ञाः । सुरसः शृङ्गाररसः । तस्य रसः स्वादः अनुभवः सुरसरसः । सोऽस्त्यस्याः सा सुरसरसिका । 'अतोनेकाचः' इति ठन् । 'रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे । पारदे धातुवीर्याम्बुरागे गन्धरसे तनौ । रसो घृतादावाहारपरिणामोद्भवेऽपि च' इति विश्वलोचने । प्रोन्नतभ्रूविकाराः वृद्धिंगतभ्रूभङ्गाः। प्रोन्नताः उन्नतिं प्राप्ताः । वृद्धिङ्गताः इत्यर्थः । भ्रुवोर्भ्रुकुट्योः विकाराः भ्रूविकाराः । प्रोन्नताः भ्रूविकाराः यासां ताः । रहसि विविक्ते रतिक्रीडार्थं वा । 'तत्त्वे गुह्ये रते रहः' इति विश्वलोचने । प्राणेशानां प्राणनाथानाम् । प्राणानामीशते इति प्राणेशाः । तेषाम् । मदनाचार्यकं मान्मथमाचार्यकम् । मदयति मदं कामोद्रेकं जनयति इति मदनः । 'मृदा ध्वर्थे णिज्बहुलम्' इति णिच् । 'ल्यानड् बहुलम्' इति कर्तर्यनट् । मदनः एव आचार्यः मदनाचार्यः । तस्य भावः कर्म वा मदनाचार्यकम् । 'योङ्को रूपोत्तमाद्वुञ्' इति वुञ् । मदनाचार्यवत्कामोद्रेकजननकर्मेत्यर्थः । कर्तुं विधातुं ईशाः समर्थाः वामनेत्राः कामुक्यः । वामे सुन्दरे नेत्रे यस्याः सा वामनेत्रा । 'नितम्बिन्यबला बाला कामुकी वामलोचना । भामा तनूदरी रामा सुन्दरी युवती चला' इति धनञ्जयः । अर्थे प्रयोजने निधुवनसेवनरूपे फले ।

'अर्थः प्रयोजने चित्ते हेत्वभिप्रायवस्तुषु । शब्दाभिधेये विषये स्यान्निवृत्तिप्रकारयोः' इति विश्वलोचने । स्वाधीने स्वायत्ते सति । स्वस्यात्मनः अधीनं आयत्तं स्वाधीनं । तस्मिन् । इच्छोद्बोधमात्रेण कल्पवृक्षात्तत्प्रसूतेः फलस्य स्वाधीनत्वमिति भावः । विफलं निष्फलं । मदनाचार्यकमिति पदमध्याहार्यम् । तेन मदनाचार्यकं विफलमिति भावः । इति वा इत्यस्माद्धेतोरेव कल्पवृक्षप्रसूतं कल्पपादपप्रभवं रतिफलं स्मरोद्दीपनं । रतिः मैथुनोपसेवनं फलं परिणामः यस्य तत् । 'तालक्षीरसितामृतामलगुडोन्मत्तास्थि-कालाह्वयदार्विन्द्रद्रुममोरटेक्षुकदलीगुल्मप्रसूनैर्युतम् । इत्थं चेन्मधु पुष्पभङ्ग्युपचितं पुष्पद्रुमूलावृतं क्वाथेन स्मरदीपनं रतिफलाख्यं स्वादुशीतं मधु' इति रतिफलाख्यम-धुलक्षणं मदिरार्णवाख्यग्रन्थादुध्दृतं मल्लिनाथेन मेघदूतटीकायाम् । मधु मैरेयं । 'मधु पुष्परसे क्षौद्रे मद्यक्षीराऽप्सु न द्वयोः । मधुर्मधूके सुरभौ चैत्रे दैत्यान्तरे पुमान् । जीवा-शाके स्त्रियामेवं मधुशब्दः प्रयुज्यते' इति विश्वलोचने । न आसेवन्ते न पिबन्ति ।

Where the beautiful-eyed ones, with the corners of their eyes manifesting passion, taking delight in sexual intercourse, manifesting knittings of eyebrows in excess, able to act the part of a preceptor teaching the secrets of sexual enjoyment to their lovers in privacy, do not enjoy wine, coming forth from the wish-fulfilling trees, leading on to sexual intercourse, as if on account of the futility of the preceptor-ship when the desired object is in one's own possession.

**गेहे गेहे धनदसचिवैर्यत्र धर्मानुरागात्**
**दिव्यैर्गन्धैः सुरभिकुसुमैः साक्षतैर्धूपदीपैः ।**
**सङ्गीताद्यैरपि जिनमहो वर्त्यते पुण्यकामै-**
**स्त्वद्गम्भीरध्वनिषु मधुरं पुष्करेष्वाहतेषु ॥ ११२ ॥**

अन्वयः— यत्र गेहे गेहे धर्मानुरागात् पुण्यकामैः धनदसचिवैः त्वद्गम्भीर-ध्वनिषु पुष्करेषु मधुरं आहतेषु दिव्यैः गन्धैः सुरभिकुसुमैः साक्षतैः धूपदीपैः सङ्गीताद्यैः अपि जिनमहः वर्त्यते ।

गेहे इत्यादि । यत्र धनदराजधान्यां गेहे गेहे प्रतिगेहं धर्मानुरागात् धर्मभक्त्या । धर्मे परापरनिःश्रेयससम्पादके रत्नत्रयधर्मे अनुरागः भक्तिः । तस्माद्धेतोः। पुण्यकामैः पुण्याभिलाषवाद्भिः । पुण्यं कामयन्ते इति पुण्यकामाः । तैः । धनदसचिवैः कुबेरस्य भृत्यैर्मन्त्रिभिश्च । धनदस्य कुबेरस्य सचिवाः भृत्याः मन्त्रिणश्च । तैः। 'सचिवो

भृत्यमन्त्रिणोः ' इति विश्वलोचने। त्वद्गम्भीरध्वनिषु त्वन्मन्द्रगर्जितध्वानिनिभध्वानेषु। गम्भीरः मन्द्रश्चासौ ध्वनिर्ध्वानः गम्भीरध्वनिः। तव गम्भीरध्वनिरिव गम्भीरध्वनिः यस्य सः। तेषु। 'इबुपमानपूर्वस्य लुक्तं गतार्थत्वात्'. इति सः। पुष्करेषु वाद्यभाण्डमुखेषु। 'पुष्करं व्योम्नि पानीये हस्तिहस्ताग्रपद्मयोः। रोगोरगौषधिद्वीपतीर्थभेदेऽपि सारसे। काण्डे खड्गफले वाद्यभाण्डवक्त्रे च पुष्करम्' इति विश्वलोचने। मधुरं श्रुतिमनोहरं यथा स्यात्तथा। आहतेषु प्रताडितेषु सत्सु। 'यद्भावाद्भावगतिः' इति ईप्। दिव्यैः वल्गुभिः दिविभवैर्वा 'दिव्यं तु वल्गौ। दिविभवेऽन्यवत्' इति विश्वलोचने।-गन्धैः घृष्टमलयजचन्दनविशेषैः सुरभिकुसुमैः सौगन्ध्यवन्धुरैः सुमनोभिः साक्षतैः सहतण्डुलैः धूपदीपैः सङ्गीताद्यैः अपि नृत्यगीतवादित्रादिभिश्च जिनमहः जिनेन्द्रपूजोत्सवः। 'महस्तूत्सवतेजसोः' इति विश्वलोचने। वर्त्यते विधीयते।

Wherein in every house a festival in honour of Jina is celebrated by the subjects of Kubera, desirous of attaining religious merit (or cherishing desires for happiness), through love for religion, with heavenly (or charming) pounded sandal-wood, rice, fragrant flowers, incense and light in company with songs sung by many voices etc., while kettle-drums, producing deep noise like that of you, are being gently beaten.

वासः क्षौमं जिगलिषु शनैर्नूनमादेष्टुकामं
यूनां कामप्रसवभवनं हारि नाभेरधस्तात्।
काञ्चीदाम्ना किमपि विधृतं लक्ष्यते कामिनीनां
नीवीवन्धोच्छ्वसितशिथिलं यत्र विम्बाधराणाम् ॥ ११२ ॥

अन्वयः— यत्र विम्बाधराणां कामिनीनां नीवीवन्धोच्छ्वसितशिथिलं, यूनां हारि कामप्रसवभवनं नूनं आदेष्टुकामं नाभेः अधस्तात् शनैः जिगलिषु क्षौमं वासः काञ्चीदाम्ना किमपि विधृतं लक्ष्यते।

वास इत्यादि। यत्र अलकाभिधानायां वैश्रवणनगर्यां विम्बाधराणां पक्वविम्बिकाफलतुल्यरक्तवर्णाधराणां कामिनीनां कामाभितप्तानां योषितां नीवीवन्धोच्छ्वासतशिथिलं जघनवसनग्रन्थिविश्लेषश्लथीभूतं। नीव्याः जघनवसनस्य गुणीकृतस्य वन्धः ग्रन्थिः नीवीवन्धः। 'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि' इति विश्वः। तस्य उच्छ्वसितमुच्छ्वासः विश्लेषः तेन शिथिलं श्लथीभूतं। 'नञ्भावे क्तोऽभ्यादिभ्यः'

इति भावे क्तः। यूनां तरुणानां हारि मनोहरम्। 'हृद्यं हारि मनोहरं च रुचिरं' इति हलायुधः। कामप्रसवभवनं कामोत्पत्तिस्थानम्। कामस्य निधुवनसेवनाभिलाषस्य प्रसवः उत्पत्तिः। तस्य स्थानम्। नूनं निश्चयेन। आदेष्टुकामं प्रदर्शयितुकामं। आदेष्टुं प्रदर्शयितुं कामः अभिलाषः यस्य तत्। 'सम्तुमो मनःकामे' इति तुमो मकारस्य खम्। नाभेः अधस्तात् नाभेरधोभागे शनैः मन्दं मन्दं जिगलिषु गलितुमिच्छु। 'तुमीच्छायां धोर्वोप्' इति सन्। 'सन्भिक्षाशंसादुः' इत्युः। क्षौमं दुकूलं। 'क्षौमं स्यादतसीवस्त्रे क्षौममट्टदुकूलयोः' इति विश्वलोचने। वासः वस्त्रं काञ्चीदाम्ना रशनया किमपि कथमपि विधृतं जघनादधः पतनात् रक्षितं लक्ष्यते दृश्यते।

Where the beautiful garments of the beautiful women, with their lower lips red like the Bimba fruit, loosened owing to the untying of the knots tying together the ends of the garments worn by them round their buttocks, wishing to slip slowly down the navel with a desire to show the youths the abode of the origination of passion ( or the abode provoking passion ), is seen as if sustained anyhow by the string-like girdle.

यस्यां कामद्विपमुखपटच्छायमास्रस्तनीवि
श्रीमच्छ्रोणीपुलिनवरणं वारि काञ्चीविभङ्गम्।
पूर्वं लज्जा विगलति ततो घर्मतोयं वधूनां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ॥ ११४ ॥

अन्वयः— यस्यां कामद्विपमुखपटच्छायं, आस्रस्तनीवि श्रीमत् श्रोणीपुलिनवरणं काञ्चीविभङ्गं वारि, क्षौमं अनिभृतकरेषु प्रियेषु रागात् आक्षिपत्सु वधूनां लज्जा पूर्वं विगलति, ततः घर्मतोयम्।

यस्यामित्यादि। यस्यां अलकाभिख्यायामेकपिङ्गलनगर्यां कामद्विपमुखपटच्छायं मदनद्विरदनमुखवस्त्रकान्ति। कामस्य मदनस्य द्विपः गजः कामद्विपः। तस्य मुखपटः मुखालङ्कारभूतः पटः। तस्य च्छायेव च्छाया कान्तिः शोभा यस्य तत्। यद्वा द्विपस्य मुखपटः द्विपमुखपटः। कामः काम्यः। मनोहरः इत्यर्थः। 'कामः स्मरेच्छयोः काम्ये कामं रेतोनिकामयोः' इति विश्वलोचने। कामश्चासौ द्विपमुखपटश्च कामद्विपमुखपटः। तस्य च्छायेव च्छाया शोभा यस्य तत्। आस्रस्तनीवि श्लथी-

भूतनीवि। आस्रस्ता श्लथीभूता नीवी स्त्रीकटीवस्त्रग्रन्थिः यस्य तत्। 'नीवी तु स्त्रीकटीवस्त्रग्रन्थौ मूलधने स्त्रियाम्' इति विश्वलोचने। श्रीमत् प्रचुरशोभायुक्तं। अत्र प्राचुर्ये मतुः। श्रोणीपुलिनवरणं उन्नतत्वात्पुलिनतुल्यश्रोणीप्रावरणं। श्रोणी जघनं पुलिनं सैकतमिव श्रोणीपुलिनं। 'व्याघ्रादिभिरुपमेयोऽतद्योगे' इति सः। 'कटिर्नितम्बं श्रोणी च जघनं' इति धनञ्जयः। पक्षे श्रोणीव पुलिनं श्रोणीपुलिनं। श्रोणीपुलिनयोरौन्नत्यसाधर्म्याच्छ्रोण्या उपमानत्वमवसेयम्। श्रोणीव श्रोणी। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। 'युक्तवदुषि लिङ्गसङ्ख्ये' इति युक्तवाल्लिङ्गम्। तस्य वरणं आवरकं। वृणोतीति वरणम्। 'व्यानड्वहुलम्' इति कर्तर्यनट्। कटितटाकारपुलिनावरकमित्यर्थः। काञ्चीविभङ्गं रशनाविरचनं। काञ्च्याः रशनायाः विभङ्गः विरचना यत्र तत्। जलपक्षे काञ्चीसध्रीचीनविविधतरङ्गं। विविधाः भङ्गाः तरङ्गाः विभङ्गाः। काञ्च्यः इव काञ्च्यः। 'देवपथादिभ्यः' इति इवार्थस्य कस्योस्। कोसि च युक्तवल्लिङ्गम्। काञ्च्याकारसदृग्वर्तुलाकाराविविधरङ्गत्तरङ्गमित्यर्थः। वारि वारीव वारि। सलिलतुल्यमित्यर्थ। क्षौमं दुकूलं। अनिभृतकरेषु सकम्पहस्तेषु। अनिभृताः मदनमदजनितवेपथुक्रान्ताः कराः हस्ताः येषां तेषु। प्रियेषु प्रियतमेषु रागात् निधुवनसेवनाभिलाषसम्पादनार्थं आक्षिपत्सु दूरमुत्सारयत्सु वधूनां कामिनीनां लज्जा ह्रीः पूर्वं प्रथमं विगलति विलयं याति ततः तदनन्तरं घर्मतोयं स्वेदसलिलं। विगलति निपतीति शेषः।

Wherein, shame of women gets dislodged first and then the drops of perspiration drop down when their lovers snatch away passionately with their tremulous hands the beautiful silken garments resembling water, possessing waves ( ripples ) circular like girdles, covering sandy beaches resembling the proturberent hips, owing to their being encircled by zones, covering hips resembling the sandy beaches, with their knots tying the ends of the garments loosened ( relaxed ) and possessing beauty similar to that of the beautiful face-cloth of an elephant.

आक्षिप्तेषु प्रियतमकरैरंशुकेषु प्रमोहा-
दन्तर्लीलातरलितदृशो यत्र नाऽलं नवोढाः।
शय्योत्थायं वदनमरुताऽपासितुं धावमाना
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्॥ ११५॥

अन्वयः— यत्र प्रियतमकरैः प्रमोहात् अंशुकेषु आक्षिप्तेषु अन्तर्लीलातरलित-

दृशः नवोढाः शय्योत्थायं धावमानाः अर्चिस्तुङ्गान् रत्नप्रदीपान् अभिमुखं प्राप्य अपि ( तान् ) वदनमरुता अपासितुं न अलम् ।

आक्षिप्तेष्वित्यादि । यत्र राजराजराजधान्यामलकायां प्रियतमकरैः प्राणेशशयैः । प्राणनाथहस्तैरित्यर्थः । प्रमोहात् कामवासनोदयोद्रेकजनितप्रकृष्टभ्रान्तेः । प्रमोदादिति पाठान्तरे तु रतिसुखानुभूतिहेतोरित्यर्थः। अंशुकेषु अम्बरेषु । 'चेलं निवसनं वासश्चीरमम्बरमंशुकम्' इति धनञ्जयः । आक्षिप्तेषु परिहृतेषु सत्सु । अन्तर्लीलातरलितदृशः । लीलया तरलिताः सञ्जातचाञ्चल्याः लीलातरलिताः । अन्तः लीलातरलिताः दृशः यासां ताः । नवोढाः नवपरिणीताः वध्वः शय्योत्थायं धावमानाः शय्यायाः उत्थाय प्रियकरकराक्षिप्तनिवसनपरिधानमङ्गानङ्गस्तनजघनादिस्मरसन्दीपनावयवपिधानप्रयोजनमवश्यकार्यमकृत्वा सत्वरं प्रपलायमानाः । 'त्वर्यपादाने' इति त्वरायां घोर्णमपादाने वाचि । अर्चिस्तुङ्गान् अल्पत्वेऽपि स्वमयूखैस्तुङ्गत्वं प्राप्तान् । आर्चिर्भिर्मयूखैः तुङ्गाः अर्चिस्तुङ्गाः । तान् । रत्नप्रदीपान् रत्नरूपान् प्रदीपान् । रत्नान्येव प्रदीपाः रत्नप्रदीपाः । तान् । अभिमुखं सम्मुखं प्राप्य अपि गत्वा अपि तान् वदनमरुता मुखसमीरणेन अपासितुं निर्वापयितुं न अलं न समर्थाः ।

Where, the newly married ones ( i .e. brides ), with their eyes turning inside sportively when their garments are snatched away by their lovers with their hands through excessive passion, running after having got up from their beds, (and) having even reached near jewel-lamps, possessing height owing to the rays ( emanating from them ), are unable to extinguish them with the wind breathed out of their mouths.

**वस्त्रापाये जघनभभितो दृष्टिपातं निरोद्धुं**
**यूनां क्लृप्ता सुरभिरचिता यत्र मुग्धाङ्गनानाम् ।**
**कम्पायत्तात्करकिसलयादन्तराले निपत्य**
**ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ११६ ॥**

अन्वयः— यत्र वस्त्रापाये ह्रीमूढानां मुग्धाङ्गनानां जघनं अभितः यूनां दृष्टिपातं निरोद्धुं क्लृप्ता सुरभिरचिता चूर्णमुष्टिः कम्पायत्तात् करकिसलयात् अन्तराले निपत्य विफलप्रेरणा भवति ।

वस्त्रापाये इत्यादि । यत्र वैश्रवणनगर्यामलकायां वस्त्रापाये कटीवस्त्रापगमे

ह्रीमूढानां लज्जाविकलीकृतहेयोपादेयत्यागोपादानज्ञानशक्तीनां मुग्धाङ्गनानां सुन्दरीणां । 'सुन्दरे वाच्यवन्मुग्धो मुग्धो मूढेऽपि वाच्यवत्' इति विश्वलोचने। जघनं अभितः कटिप्रदेशं सर्वतः। 'पर्यभिसर्वोभयैस्तस्त्यैः' इत्यभिना तस्त्यान्तेन योगे इप्। यूनां तारुण्यतरलात्मनां पुरुषाणां दृष्टिपातं कटाक्षनिक्षेपं निरोद्धुं प्रतिबद्धुं क्लप्ता निक्षिप्ता सुरभिरचिता सौगन्ध्यबन्धुरद्रव्याविनिर्मिता। चूर्णमुष्टिः क्षुण्णद्रव्यमुष्टिः स्पायत्तात् वेपथुमतः। 'अधीनो निघ्न आयत्तः' इत्यमरः। कटिवस्त्रापहरणजनितव्रीडाप्रभववेपथोः इत्यर्थः। कराकिसलयात् किसलयकोमलकरात्। करः किसलयः इव करकिसलयः। तस्मात्। अन्तराले कररत्नदीपयोरन्तरालप्रदेशे निपत्य पतित्वा विफलप्रेरणा युवकटाक्षनिक्षेपनिरोधलक्षणफलविकलप्रक्षेपव्यापारा। विफला दृष्टिनिरोधफलविकला प्रेरणा प्रक्षेपक्रिया यस्याः सा। भवति जायते।

Where the handfuls of powder, consisting of the ingredients of perfumes, scattered for obstructing the glances of the youths cast on all sides of the buttocks of the beautiful women, bewildered on account of their being flushed with shame, have their hurls rendered futile, on account of their having fallen from their tremulons sprout-like hands in the intermediate region.

प्रत्यासन्नैः शिखरखचितैरुन्मयूखैर्विचित्रै-
श्चित्रा रत्नैर्नभसि वितताः शक्रचापानुकारैः।
बिभ्रत्युच्चैः सजलजलदा सद्वितानस्य लीलां
नेत्रा नीताः सततगतिना यद्विमानाग्रभूमीः ॥ ११७॥

अन्वयः— नेत्रा सततगतिना यद्विमानाग्रभूमीः नीताः, शिखरखचितैः प्रत्यासन्नैः शक्रचापानुकारैः रत्नैः विचित्रैः उन्मयूखैः वितताः चित्राः सजलजलदाः नभसि सद्वितानस्य लीलां बिभ्रति।

प्रत्यासन्नैरित्यादि। नेत्रा प्रेरकेण। नयति प्रेरयतीति नेता। तेन। सततगतिना सदागतिना। वायुनेत्यर्थः। 'पवनः पवमानश्च वायुर्वातोऽनिलो मरुत्। समीरणो गन्धवाहः श्वसनश्च सदागतिः॥ नभस्वान् मातरिश्वा च चरण्युर्जवनस्तथा। प्रभञ्जनः' इति धनञ्जयः। यद्विमानाग्रभूमीः अलकानगरीसप्तभूमिकगृहाग्रभागभूमीः। यस्याः अलकायाः विमानाः सप्तभूमिकानि गृहाणि यद्विमानाः। 'विमानो व्योमयानेऽस्त्री

सप्तभूमौ गृहेऽपि च ' इति विश्वलोचने । तेषां अग्रभूमयः उपरिष्ठाः भूमयः । ताः । नीताः प्रापिताः शिखरखचितैः हर्म्याग्रभागभूनिबद्धैः । शिखरेषु गृहाग्रभागेषु खचितानि निबद्धानि शिखरखचितानि । तैः । ' शिखरं शैलवृक्षाग्रे कटापुलककोटिषु ' इति विश्वलोचने । प्रत्यासन्नैः सप्तभूमिकगृहाग्रभागभाग्भूमिखचितत्वात्तदग्रभागभाग्भूम्युपरितनाकाशप्रदेशगामिजलदसन्निधौ स्थितैः शक्रचापानुकारैः आखण्डलधनुःकाण्डानुकारैः । शक्रस्येन्द्रस्य चापः धनुःकाण्डं शक्रचापः । तमनुकरोतीति शक्रचापानुकारः । तैः । ' कर्मण्यण् ' इति कर्मणि वाचि कृञोऽनुपूर्वादण् । रत्नैः मणिभिः विचित्रैः कर्बुरैः। विविधवर्णैरित्यर्थः । ' चित्रं तु कर्बुराद्भुतयोस्त्रिषु ' इति विश्वलोचने। उन्मयूखैः उद्गतैः मयूखैः। उद्गताः रत्नेभ्यः उत्क्रान्ताः मयूखाः उन्मयूखाः । तैः । करणभूतैरित्यर्थः । ' प्रात्यवपरिनिःप्रत्यादयः गतक्रान्तक्रुष्टग्लानक्रान्तस्थितादिषु ' इति षसः । वितताः व्याप्ताः । अतः एव चित्राः विविधवर्णाक्रान्तवपुषः सजलजलदाः जलसहिताः मेघाः नभसि आकाशदेशे सद्वितानस्य समीचीनस्योल्लोचस्य । ' वितानं रिक्तमन्दयोः । त्रिषु न स्त्री वितानं स्याद्विस्तारोल्लोचयोर्मखे ' इति विश्वलोचने । लीलां शोभां बिभ्रति धारयन्ति ।

The clouds, loaded with water, carried to the uppermost parts of the seven-storeyed mansions of which (i. e. of the city of Alakā) by the propelling wind, variegated owing to their being spread over with the multi-coloured rays by the jewels, imitating the bow of god Indra, having their existence in the vicinity ( of the clouds ) on account of their being beset within the floors of the uppermost parts of the mansions, assume in abundance the beauty of, a beautiful canopy in the sky.

अध्यासीना भवनवलभिं शारदी मेघमाला
यत्राऽऽमुक्तप्रतनुविसरच्छीकरासारधारा ।
भीत्वेवाऽलं व्रजति विलयं पश्यतामेव साक्षात्
आलेख्यानां स्वजलकणिकादोषमुत्पाद्य सद्यः ॥ ११८ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचितमेघदूतवेष्टिते पार्श्वाभ्युदये भगवत्कैवल्यवर्णनं नाम द्वितीयः सर्गः ।

अन्वयः— यत्र भवनवलभिं अध्यासीना आमुक्तप्रतनुविसरच्छीकरासारधारा

शारदी मेघमाला साक्षात् पश्यतां एव आलेख्यानां स्वजलकणिकादोषं उत्पाद्य अलं भीत्वा इव सद्यः विलयं व्रजति ।

अध्यासीनेत्यादि । यत्र धनदनगर्यामलकायां **भवनवलभिं** गृहाच्छादनोपरिष्ठभागं । 'वलभी छदिराधारो' इति हेमचन्द्रः । **अध्यासीना** अधिष्ठिता । 'कर्मैवाधेः शीङ्स्थासः' इत्यधिपूर्वस्य शीङः आधारस्य कर्मसंज्ञा । 'कर्मणीप्' इति इप् । **आमुक्तप्रतनुविसरच्छीकरासारधारा** । प्रतनवः स्वल्पपरिमाणाश्च ते विसरन्तश्च प्रतनुविसरन्तः । ते च ते शीकराः वातेरिताः अम्बुकणाः । तेषां आसारः सन्ततं पतनं । तस्य धाराः । आमुक्ताः प्रतनुविसरच्छीकरासारधाराः यया सा । 'शीकरोऽम्बुकणाः स्मृताः' इत्यमरः । 'वातास्तं वारि शीकरः' इति कात्यः । 'धारासम्पात आसारः' इत्यमरः । **शारदी** शरत्कालसम्भवा । **मेघमाला** मेघपङ्क्तिः । **साक्षात्** प्रत्यक्षं **पश्यतां** एव अवलोकयतां एव । साक्षात् पश्यतो जनाननादृत्येत्यर्थः । 'ता चाऽनादरे' इत्यनादरे ता । **आलेख्यानां** तद्भवनभित्तिलिखितसच्चित्राणां । 'चित्रं लिखितरूपाद्यं स्यादालेख्यं तु यत्नतः' इति शब्दार्णवे । **स्वजलकणिकादोषं** स्वसलिलबिन्दुकृतवर्णमिश्रणादिदोषं **उत्पाद्य** विनिर्माय **अलं** अत्यर्थं **भीत्वा इव** भयमाश्रित्येव **सद्यः** शीघ्रं **विलयं** विनाशं **व्रजति** प्राप्नोति ।

**इति श्रीपार्श्वाभ्युदये मुक्तेन्दुवर्मविरचितायां बालप्रबोधिन्याख्यायां व्याख्यायां शठकमठकृतभगवदुपसर्गवर्णनं नाम द्वितीयः सर्गः ।**

Where the assemblage of autumnal clouds, resorting to the uppermost parts of the mansions, discharging thin lines of spreading sprays in large quantities, being as if frightened on account of their causing damage to the paintings with drops of water in the very presence of the people looking at it, immediately disappears.

---

# अथ तृतीयः सर्गः

वेगादन्तर्भवनवलभेः सम्प्रविष्टाः कथञ्चित्
सूक्ष्मीभूताः सुरतरसिकौ दम्पती तत्र दृष्ट्वा ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यत्र जालै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ १ ॥

अन्वयः—यत्र वेगात् भवनवलभेः अन्तः सम्प्रविष्टाः कथञ्चित् सूक्ष्मीभूताः धूमोद्गारानुकृतिनिपुणाः तत्र (भवनवलभौ) सुरतरसिकौ दम्पती दृष्ट्वा शङ्कास्पृष्टाः इव त्वादृशाः जलमुचः जालैः जर्जराः (सन्तः) निष्पतन्ति ।

वेगादित्यादि । यत्र अलकाभिधायां वैश्रवणराजधान्यां वेगात् रभसात् शीघ्रतयेत्यर्थः । भवनवलभेः गृहोपरिष्ठसाच्छादनगृहस्य । भवनस्य प्रासादस्य वलभिः साच्छादनमुपरिष्ठं गृहं। तस्याः । अन्तः अन्तर्भागे सम्प्रविष्टाः लब्धप्रवेशाः कथञ्चित् येन केनाऽपि प्रकारेण सूक्ष्मीभूताः शरीराकारविस्तारं परित्यज्य परिगृहीतदेहलाघवाः धूमोद्गारानुकृतिनिपुणाः जालोद्गीर्णधूमाकारानुकरणनदीष्णाताः । धूमस्य उद्गारः जालमुखेन वहिर्निःसरणं धूमोद्गारः । तस्य अनुकृतिः अनुकरणं । तत्र निपुणाः कुशलाः धूमोद्गारानुकृतिनिपुणाः । तत्र भवनवलभौ सुरतरसिकौ निधुवनक्रीडाजनितामन्दानन्दनिमग्नौ । रसः आनन्दः अस्य अस्तीति रसिकः । 'अतोऽनेकाच' इति ठन्। सुरते निधुवनक्रीडायां रसिकौ सुरतरसिकौ । यद्वा सुरतस्य रसः सुरतरसः । सोऽस्यास्तीति सुरतरसिकः । तौ । अनेकाच्त्वात् ठन् । दम्पती जम्पती । जायापती इत्यर्थः । दृष्ट्वा नयनातिथितां नीत्वा । विलोक्येत्यर्थः । शङ्कास्पृष्टाः भयाकुलाः । शङ्कया भीत्या स्पृष्टाः जनितस्पर्शाः । 'शङ्का त्रासे वितर्के च' इति 'मणिदोषे भये त्रासः' इति च विश्वलोचने । इव वा त्वादृशाः त्वत्सदृशाः । त्वमिव दृश्यते त्वादृशः । 'कर्मणीवे त्यदाद्यन्यसमाने दृशष्टक् सक् च' इति टक् । जलमुचः मेघाः । जलं मुञ्चतीति जलमुक् । 'क्विप्' इति क्विप् । जालैः गवाक्षैः । गवाक्षेभ्यः इत्यर्थः । 'जालस्तु क्षारकानायगवाक्षे दम्भवृक्षयोः' इति विश्वलोचने । जर्जराः शकलीकृतकायाः सन्तः निष्पतन्ति भवनवलभेः वहिः गच्छन्ति ।

Where, clouds like you, owing to their high speed, entered into the interior of the uppermost roofed terraces, turned somehow into

smaller shapes ( or forms ), skilled in imitating the eruption of the volumes of smoke, fall out shattered into pieces through windows as though having their fears roused at the sight of the couples there, engrossed in taking great pleasure in sexual enjoyment.

स्त्रीभिः सार्धं कनककदलीषण्डभाजामुपान्ते
क्रीडाद्रीणां निधिभुगधिपा यत्र दीव्यन्त्यभीक्ष्णं ।
मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भिः
मन्दाराणां तटवनरुहां छायया वारितोष्णाः ॥ २ ॥

अन्वयः— यत्र मन्दाकिन्याः सलिलशिशिरैः मरुद्भिः सेव्यमानाः, तटवनरुहां मन्दाराणां छायया वारितोष्णाः, निधिभुगधिपाः स्त्रीभिः सार्धं कनककदलीषण्डभाजां क्रीडाद्रीणां उपान्ते अभीक्ष्णं दीव्यन्ति ।

**स्त्रीभिरित्यादि** । **यत्र** अलकानामनगर्यां **मन्दाकिन्याः** गङ्गायाः । अवश्यं मन्दं अकति कुटिलगत्या गच्छतीति मन्दाकिनी । 'आवश्यकाधमर्ण्ये णिन्' इति आवश्यकस्य गम्यमानत्वाण्णिन् । ततश्च ङी । यद्वा मन्दं अकिनी मन्दाकिनी । मयूरव्यंसकादित्वात्सविधिः । **सलिलशिशिरैः** जलशीतलैः । सलिलेन जलेन शिशिराः शीतलाः सलिलशिशिराः । तैः । **मरुद्भिः** समीरणैः । वायुभिरित्यर्थः । **सेव्यमानाः** विहितशुश्रूषाः । सेव्यन्ते इति सेव्यमानाः । **तटवनरुहां** तीरदेशस्थवनरोहिणां । तटे तीरे वनानि तटवनानि । तत्र रोहन्तीति तटवनरुहः । तेषां । 'क्विप्' इति क्विप् । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इत्यमरः । **मन्दाराणां** सौरद्रुमाणां मधुद्रुमाणां वा । 'मन्दारः पारिजातकः' इति 'पञ्चैते देवतरवः मन्दारः पारिजातकः' इति चाऽमरः । 'मन्दारः सिन्धुरे धूर्ते मधुद्रौ धूर्तकामिनोः' इति विश्वलोचने । **छायया** अनातपेन । छ्यति छिनत्ति सन्तापं छाया । छो छेदने । 'छाया स्यादातपाभावे सत्कान्त्युत्कोचकान्तिषु । प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने । **वारितोष्णाः** दूरीकृतोष्णाः । छिन्नातपाः इत्यर्थः । **निधिभुगधिपाः** यक्षाः । निधीन् नवसङ्ख्याकान् भुनक्तीति निधिभुक् । कुबेरः इत्यर्थः । 'क्विप्' इति क्विप् । निधिभुक् अधिपः येषां ते निधिभुगधिपाः । राजराजानुचराः इत्यर्थः । **स्त्रीभिः** योषिद्भिः **सार्धं** साकं **कनककदलीषण्डभाजां** सुवर्णवर्णाभकदलीवृन्दयुक्तानां । कनककदलीनां षण्डः वृन्दः चयः वा कनककदलीषण्डः । तान् भजते इति । तेषाम् । 'भजो ण्विः । 'पद्मादिवृन्दे षण्डोऽस्त्री षण्डः स्याद्गोपतौ चये' इति विश्वलोचने । कदली मोचा । 'कदली वारणबुसा रम्भा मोचाऽ-

शुमंत्फला' इत्यमरः। क्रीडाद्रीणां क्रीडाप्रयोजनविषयविषया निर्मितानां पर्वतोन्नतमूर्त्तिकोत्कराणां । कृतकाचलानामित्यर्थः । उपान्ते समीपप्रदेशे अभीक्ष्णं सततं। सर्वकालमित्यर्थः। दीव्यन्ति क्रीडान्ति । क्रीडां कुर्वन्तीति भावः ।

Where the Yaksas ( lit. those who have Kubera for their king or ruler ), attended upon by the breezes rendered cool by the waters of the Mandakini, having their heat warded off by the shadows of the Mandara trees grown in the forests grown along the banks, are, along with their better-halves, always interested in sporting in the vicinity of the pleasure-mountains ( or of the mountains serving as an abode of pleasure ), possessing groves of plantain-trees, coloured like gold.

सौन्दर्यस्य प्रथमकलिकां स्त्रीमयीं सृष्टिमन्यां
व्यातन्वाना जयकदलिका मीनकेतोर्जिगीषोः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
सङ्क्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ३ ॥

अन्वयः— यत्र सौन्दर्यस्य प्रथमकलिकां स्त्रीमयीं अन्यां सृष्टिं व्यातन्वानाः, जिगीषोः मीनकेतोः जयकदलिकाः, अमरप्रार्थिताः कन्याः कनकसिकतामुष्टिनिक्षेपगूढैः अन्वेष्टव्यैः मणिभिः सङ्क्रीडन्ते ।

सौन्दर्यस्येत्यादि । यत्र अलकापुर्यां सौन्दर्यस्य सुभगत्वस्य। मनोहरत्वस्येत्यर्थः । प्रथमकलिकां अनुपमेयकोरकरूपां स्त्रीमयीं स्त्रीप्रधानां स्त्रीबहुलां वा । 'अस्मिन्' इति 'समूहवच्च बहुषु तयोः' इति वा मयट् । स्त्रियः प्रधानाः प्रचुराः वा अस्यामिति स्त्रीमयी । ताम् । टित्वात् ङी स्त्रियाम् । अन्यां विद्यमानाज्जगतो भिन्नां । अदृष्टपूर्वामित्यर्थः । व्यातन्वानाः कुर्वाणाः । व्यातन्वन्तीति व्यातन्वानाः । प्रकटीकुर्वन्त्य इत्यर्थः । जिगीषोः जेतुमिच्छोः । 'तुमीच्छायां धोर्वाप्' इति सन् 'सन्भिक्षाशंसादुः' इति सन्नन्तादुश्च । मीनकेतोः मकरध्वजस्य । कामदेवस्येत्यर्थः । जयकदलिकाः जयपताकिकाः । 'कदलीभपताकायां पताकायां मृगान्तरे । रम्भायां चाऽथ कदली पृश्न्यां डिम्भ्यां च शाल्मलौ' इति विश्वलोचने । अमरप्रार्थिताः निर्जराभिलषिताः । अमरैः निर्जरैः प्रार्थिताः अभिलषिताः । अनेन तासां सौन्दर्यातिशयो ध्वन्यते, देवाङ्गनाभ्योऽपि तासां सुन्दरतरत्वमन्तरेण देवैः प्रार्थितत्वासम्भवात् । कन्याः

यक्षाणां कुमारिकाः । 'कन्या कुमारिकानार्यो राशिभेदौषधीभिदोः' इति विश्वलोचने । कनकसिकतामुष्टिनिक्षेपगूढैः कनकवतीनां सिकतानां वालुकानां याः मुष्टयः तासां निक्षेपैः गूढाः संवृताः । तैः सौवर्णसिकतामुष्टिप्रक्षेपनिगूहितैरित्यर्थः । अतः एवं अन्वेष्टव्यैः अन्वेषणार्हैः । 'तृव्याश्चार्हे' इत्यर्हार्थे व्यः । मणिभिः रत्नैः सङ्क्रीडन्ते क्रीडां कुर्वन्ति । 'समोऽकूजे' इति सम्पूर्वात् क्रीडः दः तस्य कूजनार्थवैकल्यात् । गूढमण्याभिधया देशिक्या क्रीडया सम्यक् क्रीडां कुर्वन्तीत्यर्थः । 'रत्नादिभिर्वालुकादौ गुप्तैर्द्रष्टव्यकर्मभिः । कुमारिभिः कृता क्रीडा नाम्ना गुप्तमणिः स्मृता ॥ रासक्रीडा गूढमणिर्गुप्तकेलिस्तु लायनं । पिच्छकन्दुकदण्डाद्यैः स्मृता देशिककेलयः ॥' इति शब्दार्णवे ।

Where maidens, bringing into existence another womanly world ( or world abounding in women ), the excellent bud of beauty, the triumphal banners of the fish-bannered god desirous of conquering, courted by the gods, play with gems, worthy of being searched for, being concealed by throwing handfuls of golden sands.

इष्टान् कामानुपनयति यः प्राक्तनं पुण्यपाकं
तं शंसन्ति स्फुटमनुचरा राजराजस्य तृप्ताः ।
अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्धम् ॥ ४ ॥

अन्वयः— यत्र अक्षय्यान्तर्भवननिधयः तृप्ताः राजराजस्य अनुचराः रक्तकण्ठैः धनपतियशः उद्गायद्भिः किन्नरैः सार्धं यः इष्टान् कामान् उपनयति तं प्राक्तनं पुण्यपाकं स्फुटं शंसन्ति ।

इष्टानित्यादि । यत्र अलकानगर्यां अक्षय्यान्तर्भवननिधयः अशक्यानुष्ठानक्षयभवनान्तर्गतनवनिधानाः । क्षेतुं शक्याः क्षय्याः । 'क्षिज्योः शक्तौ' इति शक्त्यर्थे क्षेरेचोऽय् । न क्षय्याः अक्षय्याः । भवनस्य अन्तः अन्तर्भवनं । 'पारेमध्येऽन्तस्तया' इति हसः । भवनान्तर्भागे इत्यर्थः । अक्षय्याः अन्तर्भवनं निधयः येषां ते अक्षय्यान्तर्भवननिधयः । तृप्ताः जातसन्तोषाः । राजराजस्य कुबेरस्य । राज्ञां यक्षाणां राजा राजराजः । 'राजाहःसखेष्टः' इति टः सान्तः । 'कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः । मनुष्यधर्मा धनदो राजराजो धनाधिपः' इत्यमरः । अनुचराः सेवकाः रक्तकण्ठैः मधुरस्वरैः । रक्तः मधुरः कण्ठः कंठध्वनिः येषां ते । तैः । धनपतियशः कौबेरीं कीर्तिं । धनपतेः कुबेरस्य यशः कीर्तिः धनपतियशः । तत् । उद्गायद्भिः उच्चैः

गायद्भिः । 'देवगानस्य गान्धारग्रामत्वात्तारतरं गायद्भिरित्यर्थः ' इति मेघदूतटीकायां मल्लिनाथः । किन्नरैः कविसमयप्रसिद्धैः गायकैर्देवविशेषैः सार्धं सार्कं । सहेत्यर्थः । यः पुण्यपाकः इष्टान् अभिलषितान् कामान् कामभोगान् उपनयाति जनयति प्रापयति वा तं प्राक्तनं प्राग्भवे समुत्पन्नं पुण्यपाकं पुण्यफलं । प्राग्भवोपार्जितपुण्यकर्मफलमित्यर्थः। स्फुटं प्रव्यक्तं यथा शंसन्ति स्तुतिविषयतां नयन्ति ।

Where the attendants of Kubera, possessing inexhaustible treasures in their houses ( i. e. mansions ), having nothing left to be satisfied with (or resting satisfied), along with the Kinnaras, possessing sweet voice, singing loudly the glory of Kubera, announce ( declare ) clearly the maturity of the Karmans ( offering objects agreeable to desire ), bound with soul on account of the meritorious acts done intentionally in former births.

यस्यां मन्द्रानकपटुरवैर्बोधिता वित्तभर्तु-
भृत्या भृङ्गैः सममुपहितप्रीतयः कामदायि ।
वैभ्राजाख्यं विबुधवनितावारमुख्यासहायाः
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥ ५ ॥

अन्वयः— यस्यां मन्द्रानकपटुरवैः बोधिताः, भृङ्गैः समं उपहितप्रीतयः, विबुधवनितावारमुख्यासहायाः, बद्धालापाः, कामिनः, वित्तभर्तुः भृत्याः वैभ्राजाख्यं कामदायि बहिरुपवनं निर्विशन्ति ।

यस्यामित्यादि । यस्यां वैश्रवणनगर्यामलकायां मन्द्रानकपटुरवैः गम्भीरपटुपटहरवैः । मन्द्राः गम्भीराः । 'मन्द्रस्तु गम्भीरे ' इत्यमरः । पटवः तीक्ष्णाश्च ते रवाः ध्वनयश्च पटुरवाः । 'पटुर्वाग्मिनि नीरोगे तीक्ष्णे दक्षे स्फुटे त्रिषु । पटुः पुंसि पटोले स्त्री छत्रायां लवणे पटु ' इति विश्वलोचने । आनकस्य पटहस्य पटुरवाः आनकपटुरवाः । मन्द्राः आनकपटुरवाः मन्द्रानकपटुरवाः । 'आनकः पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे ' इति विश्वलोचने । बोधिताः विद्रावितनिद्राः भृङ्गैः षट्पदैः समं सह उपहितप्रीतयः मित्रत्वमुपगताः । जनितमित्रभावाः इत्यर्थः । विबुधवनितावारमुख्यासहायाः देवाङ्गनावारस्त्रीसहगामिनीकाः । विबुधाः देवाः । 'अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ' इत्यमरः । तेषां वनिताः स्त्रियः । 'स्त्री नारी वनिता मुग्धा ' इति धनञ्जयः । अप्सरसः इत्यर्थः । ताः एव वारमुख्याः वारस्त्रियः । 'वारस्त्री गणिका वेश्या रूपाजी-

वाऽथ सा जनैः । सत्कृता वारमुख्या स्यात् कुट्टनी शम्भली समे ' इत्यमरः । ताः सहायाः सहगामिन्यः येषां ते । यद्वा ताभिः सह अयः गमनं येषां ते । बद्धालापाः विरचितसंलापाः विरचितगोष्ठयः वा । कामिनः प्रादुर्भूतकामवासनाः वित्तभर्तुः धनदस्य भृत्याः अनुचराः वैभ्राजाख्यं वैभ्राजनामधेयं । चैत्ररथस्य कुबेरोद्यानस्य नामान्तरमिदम् । कामदायि कामवासनोद्भावकं अभिलषितप्रदानेन सन्तोषजनकं वा । बहिरुपवनं बाह्योद्यानं निर्विशन्ति अनुभूतिगोचरतां नयन्ति ।

Where the passionate attendants of Kubera, awakened by the shrill and deep sounds of tabor, possessing love for bees (fond of bees), accompained by celestial women playing the harlot, engaged in conversation, enjoy the outer garden, exciting passion (or fulfilling desires), known as Vaibhrāja.

यस्मिन् कल्पद्रुमपरिकरः सर्वलोकोपभोग्या-
निष्टान्भोगान्सुकृतिनि जने शम्फलान्पम्फुलीति ।
वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पम् ॥ ६ ॥

अन्वयः— यस्मिन् कल्पद्रुमपरिकरः चित्रं वासः, नयनयोः विभ्रमादेशदक्षं मधु, किसलयैः सह पुष्पोद्भेदं, भूषणानां विकल्पं, इष्टान् सर्वकालोपभोग्यान् शम्फलान् भोगान् सुकृतिनि जने पम्फुलीति ।

यस्मिन्नित्यादि । यस्मिन् वैभ्राजाख्यवनप्रदेशे कल्पद्रुमपरिकरः देवद्रुमप्रचयः । कल्पद्रुमाणां परिकरः समूहः । ' समूहारम्भयोः प्रगाढगात्रिकाबन्धे च परिकरः ' इति क्षीरस्वाम्यमरटीकायाम् । तथा चोक्तं—' वृन्दप्राभवयोश्चैव पर्यङ्कपरिवारयोः । आरम्भे च परिस्तारे भवे परिकरस्तथा ॥ ' चित्रं मनोहरं नानावर्णं वा । वासः वस्त्रं । नयनयोः नेत्रयोः विभ्रमादेशदक्षं कटाक्षोपदेशदाने चतुरं । विभ्रमाणां कटाक्षाणां नेत्रपरिवर्तनविधीनां वा आदेशः उपदेशः अनुशासनं वा । तत्र दक्षं निपुणं विभ्रमादेशदक्षं । मधु मद्याङ्गाभिधानकल्पवृक्षप्रदत्तः अनुत्पन्नजन्तुराशी रसविशेषः । स एव मध्वभिधानं धत्ते । किसलयैः पल्लवैः सह समं पुष्पोद्भेदं पुष्पप्रसूतिं भूषणानां अलङ्काराणां विकल्पं विशेषं इष्टान् अभिकाङ्क्षितान् सर्वकालोपभोग्यान् सर्वर्तूपभोगार्हान् । सर्वेषु कालेषूपभोग्यान् उपभोक्तुं योग्यान् । शम्फलान्

सुखजनकान् । शं सुखं फलंति निष्पादयन्तीति शम्फलाः । शमि वाचि खुत्वाभावाद् घोरट्ल्यः । 'शम्यस्थो धोः खौ' इति प्राप्तोऽल्यः प्रतिषिद्धः । भोगान् भोगविषयान्। भोग्यार्थानित्यर्थः । सुकृतिनि जने पुण्यभाग्जनार्थे । सुकृतं पुण्यं अस्य अस्तीति सुकृती । 'अतोऽनेकाचः' इति इन्। 'इतो सर्वाः प्रायः' इति ईप्। पम्फुलीति अत्यर्थं निष्पादयति । फल्धोर्द्दलि पिति गे 'यङ् तुरुस्तोर्वहुलं' इति पितो गस्य ईडागमः । 'चर्फलामुचातः' इति चस्य नुगागमो धोरुढोऽतश्चोत्वम्। 'नश्चापदान्ते झलि' इति नुकोऽनुस्वारः । अत्यर्थं फलति निष्पादयतीत्यर्थः । पम्फलीतीति पाठो भ्रान्तः, यङि यङ्लुपि च धोरुढोऽत उत्त्वस्य विधानात् ।

In which the grove of wishfulfilling trees procreate in abundance for the righteous beautiful (or multi-coloured) garments, liquor capable of giving instructions to the eyes in connection with charming movements, the blossoming of flowers along with sprouts, a variety of ornaments, the longed-for objects of enjoyment worthy of being enjoyed for all times ( and ) producing happiness.

रुच्याहारं रसमभिमतं स्रग्विकल्पं विपञ्ची-
माहार्याणि स्वरुचिरचितान्यंशुकान्यङ्गरागम् ।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्मिन्
एकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ ७ ॥

अन्वयः— यस्मिन् एकः कल्पवृक्षः रुच्याहारं, अभिमतं रसं, स्रग्विकल्पं, विपञ्चीं, स्वरुचिरचितानि आहार्याणि अंशुकानि, अंगरागं, चरणकमलन्यासयोग्यं लाक्षारागं सकलं च अबलामण्डनं सूते ।

रुच्याहारमित्यादि । यस्मिन् चैत्ररथापराभिधाने वैभ्राजाख्यवनप्रदेशे एकः कल्पवृक्षः एकः देवद्रुमः रुच्याहारं स्वाद्यमाहारं । रुच्यः स्वाद्यश्चासौ आहारः भोजनं च रुच्याहारः । तम् । अभिमतं अभीष्टं रसं रसविशेषं स्रग्विकल्पं मालाप्रकारं विपञ्चीं वल्लकीं । 'वीणा तु वल्लकी । विपञ्ची, सा तु तन्त्रीभिः सप्तभिः परिवादिनी । ततं वीणादिकं वाद्यं' इत्यमरः । स्वरुचिरचितानि स्वेच्छानिर्मितानि । स्वा स्वीया रुचिः इच्छा स्वरुचिः । 'रुचिरिच्छा रुचा रुक्ता शोभाभिष्वङ्गयोरपि' इति विश्वलोचने । आहार्याणि मनोहारीणि अंशुकानि वस्त्राणि अङ्गरागं सौगन्ध्यबन्धुरं विलेपनं चरणकमलन्यासयोग्यं कमलोपमचरणविनिक्षेपार्हं । चरणे कमले

प्रत्यादिष्टाः प्रत्याख्याता आभरणस्य रुचयः इच्छाः याभिस्ताः। संयुगे युद्धे। रणभूमावित्यर्थः। प्रतिदशमुखं दशमुखप्रतिपन्थिपक्षे। दश मुखानि यस्य सः दशमुखः रावणः। दशमुखं प्रति अभिमुखं प्रतिदशमुखं। 'लक्षणेनाभिमुख्येऽभिप्रती' इति आभिमुख्येऽर्थे प्रतिशब्दस्य लक्षणवाचिना सह इसः। तस्थिवांसः पूर्वकाले स्थिताः। तस्थुरिति तस्थिवांसः। कसुः। अमी ते योधाग्रण्यः युयुधानाग्रेसराः। योधानां अग्रण्यः योधाग्रण्यः। अग्रे नयतीति अग्रणीः। 'क्विप्' इति क्विप्। 'ग्रामाग्रान्नीः' इति नीनकारस्य णः। के कियन्तः। यत्र धीधनमुनयोऽपि कामवासनाव्याकुलीभूतमनसः भवन्ति तत्राप्रत्याख्यातकषायाणां योधाग्रेसराणां का कथा ! ते तत्र अवश्यं स्मरपरवशाः भवेयुरिति भावः।

Of what account would there be the foremost warriors, come into antagonism with the ten-mouthed one ( i. e. Rāvaṇa ) in the battle ( lit. stood against the ten-mouthed one in the battle ), repudiating desire for ornaments owing to the scars of wounds inflicted (upon them) by swords ( or by the Chandrahāsa ), where other sages, possessing wealth in the form of knowledge like you, are under a spell of love on account of their being pierced through by the arrows in the form of the glances cast by the love-lorn ladies ?

**कामस्यैवं प्रजननभुवं तां पुरीं पश्य गत्वा**
**मिथ्या लोको वदति जडधीर्नन्विदं लोकमूढम् ।**
**मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं**
**प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ॥ १० ॥**

अन्वयः— यत्र धनपतिसखं देवं साक्षात् वसन्तं मत्वा भयात् मन्मथः षट्पदज्यं चापं प्रायः न वहति ( इति ) लोकः मिथ्या वदति। ननु इदं लोकमूढम्। एवं कामस्य प्रजननभुवं तां पुरीं गत्वा पश्य।

कामस्येत्यादि। यत्र कौबेर्यां राजधान्यां धनपतिसखं कुबेरमित्रं। धनपतेः कुबेरस्य सखा धनपतिसखः। तम्। 'राजाहःसखिभ्यः' इति षात् टः। देवं त्रिनयनं रुद्रं साक्षात् प्रत्यक्षेण। 'साक्षात् प्रत्यक्षतुल्ययोः' इत्यमरः। वसन्तं स्थितिमन्तं मत्वा ज्ञात्वा भयात् रुद्राद्भीतेः मन्मथः कामदेवः। मननं मत्। चेतनेत्यर्थः। 'ह्रस्वमन्यमन्नमृगम्वनतितनादेर्डखं झलि' इति डखे तुक्

मथ्नातीति मथः । मतः मनसः मथः मन्मथः ।' मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः। कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः ' इत्यमरः । षट्पदज्यं भ्रमरमौर्वीकं । षट्पदाः भ्रमराः एव ज्या मौर्वी यस्य सः । तम् । ' षट्पदभ्रमरालयः ' इति ' मौर्वी ज्या शिञ्जिनी गुणः ' इति चाऽमरः । चापं कोदण्डं प्रायः बाहुल्येन न वहति न धारयति इति लोकः जनः [ प्रायः बाहुल्येन ] मिथ्या असत्यं वदति कथयति । ननु निश्चयेन । ' ननु प्रश्नेऽवधारणे ' इति विश्वलोचने । इदं अलकावासिनः रुद्रस्य भयात् कामः कुसुमकोदण्डं न धारयतीतीदं लोकमूढं लोकानां भ्रमः प्रमादः वा । ' नञ्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च । तेन मौढ्यमित्यर्थः । एवं प्रोक्तप्रकारेण कामस्य कामवासनायाः प्रजननभुवं उत्पत्तिस्थानभूतां तां पुरीं अलकाख्यां तां प्रसिद्धां नगरीं गत्वा प्राप्य पश्य प्रत्यक्षेण विलोकय ।

Visit and see that city, a place where feelings of love are excited. The statement 'It is a place where god of love, generally, does not wield a bow having bees for its string through fear provoked on knowing the god, the friend of the lord of wealth, dwelling actually there,' is falsely made by the people. This is silliness, indeed, of the people.

**स्याद्वा सत्यं कुकविरचितं काव्यधर्मानुरोधात्**
**सत्यप्येवं सकलमुदितं जाघटीत्येव यस्मात् ।**
**सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-**
**स्तस्याऽऽरम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ ११ ॥**

अन्वयः— वा सभ्रूभङ्गप्रहितनयनैः, कामिलक्ष्येषु अमोघैः चतुरवनिताविभ्रमैः एव तस्य आरम्भः सिद्धः इति एवं अपि यस्मात् कुकविरचितं सकलं उदितं काव्यधर्मानुरोधात् जाघटीति एव ( तस्मात् तत् ) सत्यं स्यात् ।

स्यादित्यादि । वा अथवा सभ्रूभङ्गप्रहितनयनैः सभ्रकुटिविरचनप्रयुक्तदृष्टिभिः । भ्रुवः भ्रकुट्याः भङ्गः विरचना भ्रूभङ्गः । तेन सहितं यथा स्यात् तथा सभ्रूभङ्गम् । ' ज्ञिः सुव्- ' इत्यादिना यौगपद्ये हसः । सभ्रूभङ्गं प्रहितानि प्रयुक्तानि नयनानि दृष्टयः येषु तैः । कामिलक्ष्येषु । कामिनः कामाकुलाः एव लक्ष्याणि कामिलक्ष्याणि । तेषु । अमोघैः सफलप्रक्षेपैः चतुरवनिताविभ्रमैः एव चतुरकामिनीजनदृगन्तविलासैः । चतुराः कुशलाश्च ताः वनिताश्च चतुरवनिताः । तासां विभ्रमाः

इव चरणकमले । तत्र न्यासः निक्षेपः । तस्य योग्यः । तम् । लाक्षारागं अलक्तकरसरूपं रञ्जनद्रव्यं । रज्यते अनेन इति रागः । रञ्जनद्रव्यमित्यर्थः । लाक्षा अलक्तकः एव रागः रञ्जनद्रव्यं लाक्षारागः । तम् । 'लाक्षा राक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः' इत्यमरः । सकलं च समस्तमेव अबलामण्डनं योषितां प्रसाधनसाधनं सूते जनयति । आहारादिकं प्राणधार्यं, मालादिकं कण्ठधार्यं, वल्लकीं कर्णाकर्णनीयां, अंशुकानि कटिधार्याणि, अङ्गरागं देहधार्यं, लाक्षारागं चरणधार्यं कल्पवृक्षः एकः एव यतः जनयति ततस्तस्य सकलाबलालङ्कारजनकत्वं प्रसिध्यतीति भावः । 'कचधार्यं देहधार्यं परिधेयं विलेपनं । चतुर्धा भूषणं प्राहुः स्त्रीणामन्यच्च दैशिकम्' इति रत्नाकरे ।

Wherein the wish-fulfilling tree alone generates the complete decoration of women, delicious food, juice agreeable to taste, a variety of garlands, a lute, beautiful garments so prepared as to agree with one's natural taste, a scented cosmic, lac-dye worthy of being applied to the lotus-like feet.

**भूमिं स्प्रष्टुं द्रुतमुखखुरा गह्लमाना इवाऽमी**
**पत्रश्यामा दिनकरहयस्पर्धिनो यत्र वाहाः ।**
**मन्दाक्रान्ता दिगिभविभुभिः स्पर्धमाना इवोच्चैः**
**शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रभेदात् ॥ ८ ॥**

अन्वयः— यत्र द्रुतमुखखुराः भूमिं स्प्रष्टुं गह्लमानाः इव पत्रश्यामाः अमी वाहाः दिनकरहयस्पर्धिनः, प्रभेदात् त्वं इव वृष्टिमन्तः शैलोदग्राः मन्दाक्रान्ताः करिणः दिगिभविभुभिः उच्चैः स्पर्धमानाः इव ।

भूमिमित्यादि । यत्र अलकापुर्यां द्रुतमुखखुराः प्रचलत्पूर्वकायाः वेगवच्छफाश्च । द्रुतमुखाश्च ते द्रुतखुराश्च द्रुतमुखखुराः । गतिमत्त्वाच्चलपूर्वकायाः वेगवत्खुराश्चेत्यर्थः । भूमिं भुवं स्प्रष्टुं स्पर्शनाय गह्लमानाः इव गर्हमाणाः इव । 'गह्लादीनां बहुलम्' इति बाहुलकस्य विधानात् सम्प्रदानस्याप्रवृत्तौ 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायां' इति तुम् । पत्रश्यामाः पलाशवद्धरितवर्णाः अमी ते वाहाः अश्वाः । 'वाहोऽश्वस्तुरगो वाजी' इति धनञ्जयः । दिनकरहयस्पर्धिनः दिनकरतुरगसदृशाः । दिनकरस्य सूर्यस्य हयाः तुरगाः दिनकरहयाः । तैः स्पर्धन्ते समतां यान्तीति दिनकरहयस्पर्धिनः । व्योमसञ्चाराद्यपेक्षयोक्तिरियम् । प्रभेदात् अन्योन्यप्रतिघातात्, पक्षे मदोद्भेदजनितस्रावात् । त्वं इव भवानिव वृष्टिमन्तः जनितवृष्टयः । यथाऽन्योन्यप्रतिघातात् मेघाः

वृष्टिं जनयन्ति तथा मदोद्भेदात्करिणोऽपि मदवृष्टिं जनयन्तीति भावः। शैलोदग्राः शैलवदुन्नतशरीराः। शैलवदुदग्राः उन्नताः शैलोदग्राः। मन्दाक्रान्ताः मन्दमन्दगतयः। मन्दं आक्रान्तं आक्रमणं गमनं येषां ते मन्दाक्रान्ताः। 'नब्भावे क्तोऽम्यादिभ्यः' इति भावे नप्। करिणः गजाः दिगिभविभुभिः दिग्गजश्रेष्ठैः। दिगिभाः दिग्गजाः एव विभवः दिगिभविभवः। तैः। उच्चैः अत्यर्थं स्पर्धमानाः स्पर्धां कुर्वन्तः। सन्तीति शेषः। तुल्यबलादिभिर्विरोधः स्पर्धा।

Where the horses, with their foreparts moving and the hoops attaining a high speed ( at full speed ), having as if dislike for touching the earth, dark-green like leaves, claim to be as good as the horses of the sun, and the elephants, resembling you pouring showers of rain on account of your being dashed against the others, owing to their rut flowing down on acconnt of their being in rut, lofty like mountains, slow of pace, rival as if very much with the lords of elephants presiding over the quarters.

मन्ये तेऽपि स्मरपरवशाः कामिनीदृष्टिबाणै-
र्जायेरन्ये त्वमिव मुनयो धीधना यत्र केऽमी।
योधाग्रण्यः प्रतिदशमुखं संयुगे तस्थिवांसः
प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः ॥ ९ ॥

अन्वयः— यत्र अन्ये मुनयः ये त्वं इव धीधनाः ते अमी कामिनीदृष्टिबाणैः स्मरपरवशाः जायेरन् ( तत्र ) चन्द्रहासव्रणाङ्कैः प्रत्यादिष्टाभरणरुचयः संयुगे प्रतिदशमुखं तस्थिवांसः अमी योधाग्रण्यः के ?

मन्ये इत्यादि। यत्र वैश्रवणराजधान्यामलकापुर्यां अन्ये इतरे मुनयः तपोधनाः ये त्वं इव भवानिव धीधनाः ज्ञानसम्पदः। धीः ज्ञानमेव धनं येषां ते धीधनाः। ते अमी कामिनीदृष्टिबाणैः कामिनीकटाक्षबाणैः। कामिनीनां कामाकुलानां स्त्रीणां दृष्टयः कटाक्षा कामिनीदृष्टयः। ताः एव बाणाः इव वस्तैः। स्मरपरवशाः कामाकुलचित्ताः। स्मरस्य कामस्य परवशाः वशंगताः। जायेरन् भवेयुः तत्र चन्द्रहासव्रणाङ्कैः दशमुखखड्गकृतव्रणचिह्नितैः। चन्द्रहासस्य रावणस्वामिकखड्गस्य खड्गसामान्यस्य व्रणाः चन्द्रहासव्रणाः। ते एव अङ्काः चिह्नानि येषां ते। तैः। 'चन्द्रहासो दशग्रीवखड्गे खड्गे च दृश्यते' इति विश्वलोचने। प्रत्यादिष्टाभरणरुचयः परित्यक्तालङ्कारकाङ्क्षाः।

दृगन्तजातकटाक्षादिरूपा विलासाः । तैः एव । 'विभ्रमस्तु विलासे स्याद्विभ्रमो भ्रान्ति-हावयोः ' इति विश्वलोचने । ' हावः शृङ्गारभावाप्तौ रम्योक्तिस्मितवीक्षितं ' इति नाट्यशास्त्रे । ' कटाक्षं केकरापाङ्गं विभ्रमस्तस्य वैकृतं ' इति धनञ्जयः । ' हावो मुख-विकारः स्यात् भावश्चित्तसमुद्भवः । विलासो नेत्रजो ज्ञेयो विभ्रमोऽत्र दृगन्तयोः ' इति धनञ्जयनाममालाभाष्ये । तस्य मदनस्य आरम्भः कामिजनवेधनव्यापारः सिद्धः सिद्धिं प्राप्तः । सफलतामितः इत्यर्थः । इति एवं सति अपि अलकायां कामिजनवेधन-व्यापारवति कामे सत्यपि यस्मात् यतः कारणात् कुकविरचितं । अल्पज्ञाः कवयः कुकवयः, कोरीषदर्थत्वात् । कविसमयवित्त्वेऽपि याथार्थ्याविदित्वात्कवीनामत्र कुकवित्वमध्य-वसेयम् । अतोऽत्र कवेः कुत्सितत्वं न ग्राह्यं, अपि तु अल्पज्ञत्वमेव, कविकुलगुरुकालि-दासविरचितमेघदूताख्यकाव्यस्य अपदोषत्वस्य विधानेन विरोधापत्तेः । ' मत्वा देवं ' इत्यादि यत् कालिदासेनोक्तं तत् कविसमयानुरोधादेवेत्यवसेयम् । कथं आलंबनविभावा-भावे नेत्रकटाक्षविक्षेपाद्युद्दीपनविभावाभावे च मदनोऽमोघायुधाघातः स्यात् ? कथं वा कामदेवस्य कामिलक्ष्यवेधनक्रियाभावे सत्यपि आलम्बनविभावे नेत्रकटाक्षादीनां कामि-लक्ष्येष्वमोघत्वं सम्भवेत् ? कथं च पुरुषाणां कामाभावे कामित्वं सम्भवेत् ? अतः नालकायां मदनानावासः सम्भवति । अतः पूर्वश्लोकोक्तोऽभिप्रायो जनानां मिथ्यैवेति भावः । कुक-विना रचितं कल्पितं कुकविरचितम् । सकलं उदितं सकलं वर्णनं । उदितं उक्तिः । 'नञ्भावे क्तोऽम्यादिभ्यः' इति क्तः नप् च । काव्यधर्मानुरोधात् काव्यशास्त्रोक्तनियमा-नुकूल्येन जाघटीति एव भृशं घटत एव । 'धोर्यङ् भृशाभीक्ष्ण्येऽशुभ्रुचेः' इति भृशार्थे यङ् । 'हलो यः' इति यङः यकारस्य खं । 'यङुपोरेप् च्यकिदाहाकः' इति चस्य दीः । 'यङ्तु-रुस्तोर्बहुलम् ' इति ईडागमः । तस्मात् तत् मन्मथाभावस्य प्रतिपादनं सत्यं स्यात् कथञ्चित् सत्यं भवेत्, न सर्वथा । अलकायां यः मदनाभावः उक्तः स काव्यशास्त्र-सिद्धान्तापेक्षया यथार्थः स्यात्, परमार्थसत्त्वापेक्षया तु न तथेति भावः । 'मत्वा देवं' इत्यादिश्लोकटीकायां ' यदनर्थकरं पाक्षिकफलं च तत्प्रयोगाद्वरं निश्चितसाधनप्रयोगः इति भावः ' इति यन्मल्लिनाथेनोक्तं तद्विज्ञातुं अहं न समर्थः । किं मदनप्रक्षितानां बाणानां नार्थक्रियाकारित्वम् ? किं तेषां स्वल्पफलदायित्वमेव ? मदनस्य भयाकुलस्य निष्क्रियत्वे कामिनीकटाक्षप्रक्षेपः कथं साध्यसिद्धिनिबन्धनम् ? अतो मल्लिनाथोक्तिः श्लोकार्थं विशदीकर्तुं नालमिति मे मतिः ।

Though it is so ( i. e. incorrect ) on account of his ( i. e. of the god of love ) job being done by the ( graceful movements of the limbs themselves of clever women ) glances, themselves, of the clever women,

not missing their mark (or not wide of their mark), the lustful persons, with their eyes turned straight (to the lovers) with the knittings of their eyebrows, it may possibly be correct as the whole of the description given by the poets, not informed (or not knowing the facts), is quite possible owing to its being in conformity with the pattern proposed by poetics.

स्यादारेका बहुनिगदितं कस्तवेदं प्रतीयात्
सद्वाऽसद्वा तदिति ननु भोः प्रत्ययं ते करोमि ।
तत्रागारं धनपतिगृहादुत्तरेणाऽस्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ॥ १२ ॥

अन्वयः— 'इदं तव बहुनिगदितं कः प्रतीयात्? तत् सत् वा असत् वा?' इति आरेका स्यात् । ननु भोः ते प्रत्ययं करोमि । तत्र सुरपतिधनुश्चारुणा उत्तरेण तोरणेन धनिपतिगृहात् दूरात् लक्ष्यं अस्मदीयं अगारं (वर्तते)।

स्यादित्यादि । इदं पूर्ववर्णितं तव भवतः बहुनिगदितं बाहुल्येन प्रतिपादनं कः प्रतीयात् विस्रम्भेत? न कोऽपीत्यर्थः । तत् बहुनिगदितं सत् वा सत्यं वा असत् वा मिथ्या वा इति एवंविधा आरेका सन्देहः स्यात् भवन्मनसि उत्पद्येत । ननु निश्चयेन भोः मुने ते भवतः प्रत्ययं विस्रम्भं करोमि निष्पादयामि । तत्र अलकापुर्यां सुरपतिधनुश्चारुणा इन्द्रधनुस्सुन्दरेण । सुराणां देवानां पतिः सुरपतिः इन्द्रः । तस्य धनुः कोदण्डं इव चारु मनोहरं । तेन । यद्वा सुरपतिधनुषा हेतुभूतेन चारु । तेन । तोरणद्वारखचितमणिकिरणोत्करोत्सर्गजनितेन कोदण्डाकारेण मनोहरेण । उत्तरेण उन्नततरेण तोरणेन बहिर्द्वारेण धनपतिगृहात् वैश्रवणप्रासादात् दूरात् दूरदेशात् लक्ष्यं दृश्यं अस्मदीयं अस्मत्स्वामिकं । अस्माकमित्यर्थः । 'दोश्छः' इति छः, अस्मच्छब्दस्य 'त्यदादि' इति दुसञ्ज्ञत्वात् । अगारं गृहं वर्तते इति शेषः । उत्तरेण इति पाठस्य 'वैनोऽदूरेऽकायाः' इतिसूत्रोक्तैनत्यान्तत्वग्रहणे 'इप् चैनेन' इति सूत्रानुसारेण 'धनपतिगृहात्' इति पाठस्य स्थाने 'धनपतिगृहान्' इति इबन्तेन पाठेन भाव्यं, अन्यथा कान्तपाठस्यानार्यत्वप्रसङ्गात् । कान्तोऽयं पाठः बहुषु प्राक्तनप्रतिषु दृक्पथमवतरति । अत्र विषये "कथं तर्हि 'तत्रागारं धनपतिगृहादुत्तरेणाऽस्मदीयम्' इति? उत्तरेणेत्येतद् 'दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन' इति तोरणसमानाधिकरणं तृतीयान्तं, न त्वेनबन्तमित्याहुः" इति तत्त्वबोधिन्यामुक्तम् ।

'उत्तरेण' इति भान्तस्य 'तोरणेन' इति 'भान्तपदेन सामानाधिकरण्ये न काऽपि क्षतिः, तोरणस्य दूराल्लक्ष्यत्वे तदुन्नतेर्हेतुभूतत्वात्। अतोऽत्र निरङ्कुशाः कवयः' इत्युक्तिर्न समाश्रयणीया।

If you have a doubt 'who can believe in this, the description given at length by you? Is it correct or otherwise?' O sir! I shall verily settle your belief. Our ancestral palatial building, discernible from a long distance from the palace of the lord of wealth on account of the lofty archway looking beautiful owing to the Indra's bow (formed by the rays emanating from the jewels inlaid in the door).

पुष्पोद्गन्धिर्मृदुकिसलयो भृङ्गसङ्गीतहारी
सान्द्रच्छायः सलिलधरणोपान्तपुस्तैणशावः।
यस्योद्याने कृतकतनयो वर्द्धितः कान्तया मे
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः ॥ १३ ॥

अन्वयः— यस्य उद्याने पुष्पोद्गन्धिः, मृदुकिसलयः, भृङ्गसङ्गीतहारी, सान्द्रच्छायः, सलिलधरणोपान्तपुस्तैणशावः, मे कान्तया वर्धितः कृतकतनयः, हस्तप्राप्यस्तवकनमितः बालमन्दारवृक्षः (अस्ति)।

पुष्पोद्गन्धिरित्यादि। यस्य अस्माकीनगृहस्य उद्याने आरामे पुष्पोद्गन्धिः। उद्गतः गन्धः यस्य स उद्गन्धिः। 'सुपूत्युत्सुरभेर्गुणस्य गन्धस्येः' इति वसत्वाद्गन्धस्येः सान्तः। पुष्पैः उद्गन्धिः पुष्पोद्गन्धिः। सञ्जातपुष्पत्वात्प्रादुर्भूतसौरभः इत्यर्थः। मृदुकिसलयः कोमलपल्लवः। मृदूनि सुकुमाराणि किसलयानि पल्लवानि यस्य सः। 'पल्लवोऽस्त्री किसलय' इत्यमरः। भृङ्गसङ्गीतहारी। भृङ्गाः भ्रमराः। तेषां सङ्गीतं गुञ्जारवः सङ्गीतोपमः। भृङ्गगुञ्जारवस्य मनोहारित्वात्सङ्गीतोपमत्वमत्रावसेयम्। सङ्गीतमिव सङ्गीतम्। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस् 'युक्तवद्गुसि लिङ्गसङ्ख्ये' इति नपुंसकत्वम्। तेन हारी मनोहरः भृङ्गसङ्गीतहारी। सान्द्रच्छायः निविडच्छायः। सान्द्रा निविडा च्छाया यस्य सः। सलिलधरणोपान्तपुस्तैणशावः। सलिलं धरति ध्रियते वानेन इति सलिलधरणं। 'व्यानड्बहुलं' इति कर्तरि करणे वाऽनट्। आलवालमित्यर्थः। पुस्यते अभिमृद्यते मृदत्र पुस्तं। लेप्यकर्मेत्यर्थः। 'पुस्तं तु पुस्तके क्लीबं विज्ञाने लेप्यकर्मणि' इति विश्वलोचने। पुस्तं लेप्यकर्म अस्य अस्तीति पुस्तः। 'ओऽभ्रादिभ्यः' इत्यः। लेप्यकर्मविनिर्मितः इत्यर्थः। एणशावः मृगशिशुः।

'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः । गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः' इत्यमरः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । सलिलधरणस्य उपान्तः सलिलधरणोपान्तः । तत्र पुस्तः एणशावः यस्य सः सलिलधरणोपान्तपुस्तैणशावः । एणस्य शावः पृथुकः एणशावः । पुस्तश्चासौ एणशावश्च पुस्तैणशावः । आलोवालोपान्तप्रदेशस्थितलेप्यकर्मनिर्मितमृगशिशुरित्यर्थः । मे मम कान्तया वल्लभया वर्द्धितः वृद्धिं नीतः । जलखलविगलितगोमयादिप्रदानेन वृद्धिं नीतः इत्यर्थः । कृतकतनयः पुत्रीकृतः हस्तप्राप्यस्तवकनमितः हस्तापनेयगुच्छभारनम्रीकृतः । हस्तेन प्राप्याः अपचेयाः हस्तप्राप्याः । ते च ते स्तवकाः गुच्छाश्च । तैः नमितः नम्रीकृतः । बालमन्दारवृक्षः तरुणः कल्पतरुः । अस्तीति शेषः ।

In the garden of which there stands a young Mandāra tree, giving out fragrance of flowers, having delicate foliage, possessing charm owing to the songs sung by bees, having pleasant shadow, possessing in the vicinity of its basin a mould of a fawn made by plastering, reared up by my wife as an adopted son, bent down owing to the clusters (of flowers) worthy of being plucked by hand (i. e. within reach of hand).

नाऽहं दैत्यो न खलु दिविजः किन्नरः पन्नगो वा
वास्तव्योऽहं धनदनगरे गुह्यकोऽयं मदीया ।
वापी चाऽस्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैः स्फीता विकचकमलैर्दीर्घवैदूर्यनालैः ॥ १४ ॥

अन्वयः—अहं न दैत्यः, न खलु दिविजः, किन्नरः पन्नगः वा; अयं अहं धनदनगरे वास्तव्यः गुह्यकः । अस्मिन् च मरकतशिलाबद्धसोपानमार्गा, दीर्घवैदूर्यनालैः हैमैः विकचकमलैः स्फीता मदीया वापी [ अस्ति ]।

नेत्यादि । अहं न दैत्यः असुरः। न खलु नैव दिविजः देवः । किन्नरः देवयोनिविशेषः पन्नगः वा नागदेवः वा । नास्मीति शेषः । अयं अहं एषोऽहं धनदनगरे कुबेरराजधान्यां अलकायां वास्तव्यः निवसन् । कृतनिवासः इत्यर्थः। 'व्यानड्बहुलम्' इति कर्तरि व्यः । गुह्यकः यक्षः । अस्मिन् च अस्मदीयगृहोद्याने च मरकतशिलाबद्धसोपानमार्गा गारुत्मतशिलाविरचितसोपानपरम्परा । मरकतः गारुत्मतः । तस्य शिलाभिः पाषाणैः आबद्धानि सोपानान्येव मार्गः यस्याः सा । 'गारुत्मतं मरकतं'

इत्यमरः । दीर्घवैदूर्यनालैः । वैदूर्याणि च तानि नालानि च वैदूर्यनालानि । दीर्घाणि वैदूर्यनालानि येषां तानि दीर्घवैदूर्यनालानि । तैः । विदूरात् पर्वतात् प्रभवतीति वैदूर्यो मणिः। 'वैदूर्यः' इति पर्वतवाचिनः विदूरशब्दाद्‌ञ्यः निपातितः । 'वैडूर्यः' इति पाठः भ्रान्तः । " ततः प्रभवतीति अनुवर्तते । विदूरशब्दाञ्ञ्यो भवति । अणोपवादः । विदूरात् प्रभवति वैदूर्यो मणिः । यदि प्रथमं भवति प्रभवतीत्युच्यते वालवायाद्रेरसौ प्रभवति, न विदूरान्नगरात् । कथं ततस्त्योपत्तिः ? एवं तर्हि – 'वालवायो विदूरं च प्रकृत्यन्तरमेव वा । नैवं तत्रेति चेद् ब्रूयात् जित्वरीवदुपाचरेत् ।' वालवायस्त्यं लभते विदूरमादेशं च । यथा शिवादिषु विश्रवःशब्दो विश्रवणरवणादेशौ अणं च लभते । प्रकृत्यन्तरमेव वा वायवायस्य विदूरशब्दः । अव्याविकन्यायेन विदूरादेव त्यः । नैवं तत्रेति चेद् ब्रूयात् जित्वरीवदुपाचरेत् । यथा वाणिजाः वाराणसीं जित्वरीति मङ्गलार्थमुपाचरन्ति एवं वालवायोऽपि उपचाराद्विदूरशब्देनोक्तः । अथवा विदूरादेव मणित्वेन प्रभवति ।" इत्युक्तं जैनेन्द्रमहावृत्तौ । तत्त्वबोधिनीकारैरपि "वैदूर्य इति **दन्त्यमध्योऽयं शाद्वलवत्, न तु नड्वलवन्मूर्धन्यमध्यः** । नन्वत्रार्थासङ्गतिः । वालवायपर्वतादसौ प्रभवति, विदूरनगरे तु संस्क्रियते । सत्यम् । अत एव समाहितं भाष्ये । 'वालवायो विदूरं च प्रकृत्यन्तरमेव वा । न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत्' इति । अस्याऽर्थः । वालवायशब्दः प्रत्ययं लभते विदूर-( रा )-देशं च, सूत्रे पठितेनादेशानुरूपः स्थानी वालवायशब्दः आक्षिप्यते । यथा शिवादिषु पठिताभ्यां विश्रवणरवणादेशाभ्यां अनुरूपः स्थानी विश्रवस्शब्दः आक्षिप्यते, यथा वा 'पद्दन्-' इत्यादौ पदाद्यादेशानुरूपः स्थानी पाददन्तादिराक्षिप्यते तद्वत् ॥ प्रकृत्यन्तरमेवेति । विदूरशब्दो नगरस्येव पर्वतस्याऽपि वाचकोऽस्तीत्यर्थः । एवं चाऽस्मिन्पक्षे 'वालवायात्प्रभवति' इति विग्रहे विदूरशब्दप्रत्ययः इति व्याख्यानक्लेशो नेति भावः । न वा इति । वैशब्दोऽक्षमां द्योतयति । तत्र पर्वते विदूरशब्दोऽप्रसिद्धः इति चेद्ब्रूयाज्जित्वरीवद्व्यवहरेत् । नियतपुरुषापेक्षो हि व्यवहारो दृश्यते, यथा वणिज एव वाराणसीं जित्वरीति व्यवहरन्ति एवं वैयाकरणा एवाद्रिं विदूर इति " इति उक्तं । उक्तं चान्येनाऽपि केनाचित् " विडूरग्रामे ह्ययं संस्क्रियमाणो मणितया ततः प्रथमं प्रभवति । वालवायात्तु पर्वतादसौ प्रभवन्न मणिः, किन्तु पाषाणः । यदा तु जायमानतार्थः प्रभवशब्दः तदा वालवायशब्दस्य ञ्यः । तत्सन्नियोगे विडूरादेशश्चनिपात्यते । वालवायपर्याय एव विडूरशब्दः । प्रतिनियतविषयाश्च रूढयः इति वैयाकरणानामेव प्रसिद्धिः" इति । वैदूर्यस्य विकारः वैदूर्यं । वैदूर्यं इव वैदूर्यं. । वैदूर्यविकारोऽत्र वैदूर्यमणिरचिताः अलङ्काराः । वैदूर्यमणिजनितालङ्करणानीव नालानि वैदूर्यनालानि । अत्र वैदूर्यनालयोः सारूप्यं सावर्ण्यादित्यवसेयम् । शब्दार्णवशाकटायनयोः 'वैडूर्यः' इत्येव

सूत्रितं । हैमैः सुवर्णसवर्णैः । हेम्नः विकारः अवयवो वा हैमं । हैममिव हैमं । 'हेमादिभ्योऽञ्' इत्यञ् । विकचकमलैः विकसितसरसीरुहैः । स्फीता व्याप्ता मदीया मामकीना । 'दोश्छः' इति छः । वापी दीर्घिका । अस्तीति शेषः ।

I am neither a demon nor verily a god; neither a Kinnara nor a Pannaga. I, this person, am the Guhyaka, a resident of the city of Kubera. In it (i. e. in the garden), there is a tank, having flight of steps built of emerald slabs, abounding in full-blown lotuses resembling those made of gold and having long stocks resembling those made of Vaidurya ( gems ), owned by me.

**तां जानीयाः कमलरजसा ध्वस्ततापां ततापां**
**मत्पुण्यानां सृतिमिव सतीं वापिकां विस्तृतोर्मिम् ।**
**तस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं**
**नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ १५ ॥**

अन्वयः—यस्याः तोये कृतवसतयः व्यपगतशुचः हंसाः त्वां प्रेक्ष्य अपि सन्निकृष्टं मानसं न अध्यास्यन्ति, तां कमलरजसा ध्वस्ततापां ततापां विस्तृतोर्मिं सतीं वापिकां मत्पुण्यानां सृतिं इव जानीयाः ।

तामित्यादि । यस्याः दीर्घिकायाः तोये सलिले कृतवसतयः विहिताधिवासाः । कृता विहिता वसतिः अधिवासः यैः ते । व्यपगतशुचः वीतशोकाः । व्यपगताः विगलिताः शुच शोकाः व्यपगतशुचः। 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । हंसाः मरालाः त्वां भवन्तं प्रेक्ष्य अपि विलोक्यापि सन्निकृष्टं समीपदेशस्थितं । अध्वश्रममन्तरेण प्राप्यमित्यर्थः । मानसं मानसाभिधानं सरः न अध्यास्यन्ति नोत्कण्ठया स्मरिष्यन्ति ।" 'आध्यानमुत्कण्ठापूर्वकं स्मरणम्' इति काशिकायाम्" इति मल्लिनाथेनोक्तम् । तां वापिकां कमलरजसा सरोजरजसा ध्वस्ततापां नष्टग्रीष्मातपां । ध्वस्तः नष्टः तापः ग्रीष्मातपः यस्याः सा । ताम् । ततापां विस्तृतसलिलां । ताः विस्तारं प्राप्ताः आपः यस्याः सा । ताम् । विस्तृतोर्मिं विशालकल्लोलमालाकुलां । विस्तृताः ऊर्मयः यस्याः सा । ताम् । सतीं शोभनां वापिकां दीर्घिकां मत्पुण्यानां मम सुकृतानां सृतिः इव सरणिमिव । 'सृति स्त्री गमने मार्गे कुपूर्वा निकृतौ सृतिः' इति विश्वलोचने । जानीयाः जानीहि ।

Take the beautiful tank, neutralizing ( nullifying ) heat with the pollens of lotuses, having water spreading wide, possessing ample waves, the swans having fixed their residence in the waters of which with their distress dispelled do not anxiously call to their mind the Mānasa lake ( though ) near at hand even on seeing you, to be the divulgence of my Karman ( bound with my soul through good acts done by me in my former births. )

अन्यच्चास्मिन्नुपवनघने मद्गृहोपान्तदेशे
स्यादाख्येयं मयकि सुतरां प्रत्ययो येन ते स्यात् ।
तस्यास्तीरे विहितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ॥ १६ ॥

अन्वयः— अस्मिन् उपवनघने मद्गृहोपान्तदेशे अन्यत् च आख्येयं स्यात् येन मयकि ते सुतरां प्रत्ययः स्यात् । तस्याः तीरे पेशलैः इन्द्रनीलैः विहितशिखरः कनककदलीवेष्टनप्रेक्षणीयः क्रीडाशैलः ( अस्ति ) ।

अन्यदित्यादि । अस्मिन् एतस्मिन् उपवनघने कृत्रिमैः वृक्षसमूहैः निरन्तरे । उपवनं कृत्रिमः वृक्षसमूहः । तैः घनः निरन्तरः उपवनघनः । तस्मिन् । 'आरामः स्यादुपवनं कृत्रिमं वनमेव तत्' इत्यमरः । 'करणेन निर्वृत्तः कृत्रिमः वृक्षसमूहः । समीपं वनस्य उपवनम्, तुल्यत्वेन नैवस्यात्' इति क्षीरस्वामी । 'काठिन्ये चाऽथ कठिने सान्द्रेऽपि च घनस्त्रिषु' इति विश्वलोचने । मद्गृहोपान्तदेशे आस्माकीनगृहसमीपप्रदेशे । मम गृहं मद्गृहं । तस्य उपान्तदेशः । तस्मिन् । अन्यत् च अपरं अपि आख्येयं वर्णनार्हं स्यात् अस्ति येन वर्णनार्हेण मयकि अज्ञाते मयि ते तव सुतरां अत्यर्थं प्रत्ययः विस्रम्भः स्यात् भवेत् । तस्याः दीर्घिकायाः तीरे तीरप्रदेशे पेशलैः मनोहरैः । सौन्दर्ययुक्तैरित्यर्थः । 'पेशलो रुचिरे दक्षे चारुशीलेऽपि वाच्यवत्' इति विश्वलोचने । इन्द्रनीलैः इन्द्रनीलमणिविशेषैः विहितशिखरः रचितसानुः । विहितं रचितं शिखरं शृङ्गं यस्य सः । कनककदलीवेष्टनप्रेक्षणीयः सुवर्णसवर्णरम्भारव्धावरणदर्शनीयः । कनककदलीनां वेष्टनेनावरणेन प्रेक्षणीयः दर्शनीयः । क्रीडाशैलः क्रीडाप्रयोजनः पर्वतः । अस्तीति शेषः ।

In the adjoining region, crowded with groves of trees, of my mansion, there is something else worthy of being described, whereby

you will repose much more confidence in me, not known to you, and that is a pleasure-hill on its bank, with its peak built with beautiful sapphires, worthy of being looked at owing to the golden plantain trees forming its hedge.

रत्याधारो रतिकर इवोत्तुङ्गमूर्तिर्विनीलः
शैलो मूले कनकपरिधिर्मे मनोऽद्याऽनुशासत् ।
मद्गेहिन्या प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥ १७ ॥

अन्वयः— सखे ! उपान्तस्फुरिततडितं त्वां प्रेक्ष्य ( यः ) रत्याधारः रतिकरः इव उत्तुङ्गमूर्तिः, विनीलः, मूले कनकपरिधिः, मे मनः अद्य अनुशासत् तं एव मद्गेहिन्याः प्रियः इति कातरेण चेतसा स्मरामि ।

रत्याधार इत्यादि । सखे भो मित्र ! उपान्तस्फुरिततडितं प्रान्तप्रदेशप्रकटितक्षणरुचिं । उपान्ते प्रान्तप्रदेशे स्फुरिता चकासिता तडित् सौदामनी यस्य सः । तम् । त्वां भवन्तं प्रेक्ष्य विलोक्य यः रत्याधारः रतिक्रीडास्थानं । रतिकरः इव रतिकरधराधरः इव उत्तुङ्गमूर्तिः अत्युन्नतकायः । उत्तुङ्गा अत्युन्नता मूर्तिः शरीरं यस्य सः । 'मूर्तिः कायेऽपि काठिन्ये मृत्युयाचितयोर्मतम्' इति विश्वलोचने । विनीलः विशेषेण नीलवर्णः। मूले पर्वतोपासन्नदेशे । उपत्यकायामित्यर्थः । कनकपरिधिः किंशुकचंपकनागकेसरादिवृक्षपरिवेष्टितः सौवर्णपरिधिर्वा । मे मनः मम मनः अद्य अनुशासत् आकर्षन् । तं एव क्रीडाशैलं एव मद्गेहिन्याः अस्मदीयगृहिण्याः प्रियः इति अभिमतोऽस्तीति हेतोः कातरेण प्रकम्पितेन चेतसा मनसा स्मरामि स्मृतिविषयतां नयामि ।

Oh friend ! on seeing you, with lightning emitting sudden transitory blaze in your sides, I remember that very pleasure-hill, the abode of sexual enjoyment, possessing a form lofty like that of the Ratikara mountain, dark-blue, having a golden enclosure at its foot, dominating over my mind today, with a tremulous heart, as it was a favourite of my beloved.

तन्मे वाक्यादपगतभयस्त्वं व्यवस्याऽऽत्मनीनं
तीर्थं ध्वाङ्क्ष स्थितमपनुदन्स्याः स्थिरात्मा मदुक्ते ।

**तत्रैवाऽऽस्ते तव च दयिता लप्स्यते लब्धजन्मा**
**तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी ॥ १८ ॥**

अन्वयः—तत् मे वाक्यात् अपगतभयः त्वं आत्मनीनं व्यवस्य तीर्थे स्थितं ध्वाङ्क्षं अपनुदन् मदुक्ते स्थिरात्मा स्याः। तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी तव दयिता तत्र एव आस्ते (त्वया तत्र एव सा) लप्स्यते च।

तदित्यादि। तत् तस्मात् कारणात् मे मम वाक्यात् वचनात् हेतुभूतात् **अपगतभयः** वीतभीतिः। अपगतं अपक्रान्तं भयं यस्य सः। **त्वं आत्मनीनं व्यवस्य** आत्महितङ्करं निश्चित्य। आत्मने हितं आत्मनीनं। 'भोगद्यात्मन्भ्यां खः' इति खः। **तीर्थे** पुण्यक्षेत्रवत्पवित्रे मनसि। तीर्थं पुण्यक्षेत्रं। तीर्थमिव तीर्थम्। 'तीर्थं शास्त्रावतारयोः। पुण्यक्षेत्रमहापात्रोपायोपाध्यायदर्शने' इति विश्वलोचने। **स्थितं** स्थितिमन्तं। विद्यमानमित्यर्थः। **ध्वाङ्क्षं** काकतुल्यं संशयं। काकस्य संशयात्मत्वात्संशयस्यात्र ध्वाङ्क्षत्वेनाभिधानं। संशयमित्यर्थः। **अपनुदन्** परिहरन् **मदुक्ते** मदीयवचने **स्थिरात्मा** व्यपगतसंशयमनस्कः। स्थिरः विपरीतोभयकोट्योरदोलायमानः आत्मा मनः यस्य सः। 'आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु' इति विश्वलोचने। **स्याः** भवेः। मद्वचने सन्देहं मा कार्षीरिति भावः। **तन्वी** कोमलाङ्गी कृशाङ्गी वा। 'गुणोक्तेरुतोऽखरुस्फोडः' इत्युकारान्तात्तनुशब्दाङ्ङी गुणवचनत्वात् तस्य। **श्यामा** अप्रसूता स्त्री। अपरित्यक्तकन्याभावेत्यर्थः। 'अप्रसूताङ्गनायां च श्यामा सोमलतौषधे' इति विश्वलोचने। यद्वा यौवनमध्यस्थेत्यर्थः। 'श्यामा यौवनमध्यस्था' इत्युत्पलमालायाम्। **शिखरिदशना**। शिखराणि कोट्यः एषां सन्तीति शिखरिणः। 'अतोऽनेकाचः' इति इन्। शिखरिणः कोटिमन्तः दशना दन्ताः यस्याः सा शिखरिदशना। 'शिखरं शैलवृक्षाग्रे कक्षापुलककोटिषु। पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च' इति विश्वलोचने। एतेनास्याः सौभाग्यं स्वपत्युरायुष्करत्वं विभाव्यते। उक्तं च सामुद्रिके —'स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लिष्टाः। दन्ता भवन्ति यासां तासां पादे जगत्सर्वम्॥ ताम्बूलरसरक्तेऽपि स्फुटभासः समोदवाः। दन्ताः शिखरिणो यस्याः दीर्घं जीवति तत्प्रियः॥' इति। **पक्वबिम्बाधरोष्ठी** परिणतबिम्बिकाफलतुल्याधरौष्ठी। पक्वं परिणतं च तत् बिम्बं बिम्बिकाफलं च पक्वबिम्बं। पक्वं बिम्बिकाफलं रक्तवर्णं भवति। तदिव अधरोष्ठः यस्याः सा पक्वबिम्बाधरौष्ठी। 'ओत्वोष्ठयोर्वा से पररूपम्' इति पररूपस्य वैकल्पिकत्वात्प्रकृतः 'पक्वबिम्बाधरौष्ठी' इति पाठोऽपि साधीयान्। 'नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात्' इति ङी। **तव** भवतः **दयिता**

प्रिया तव एव अलकापुर्यामेव आस्ते विद्यते। त्वया तत्रैव सा लप्स्यते च प्राप्स्यते एव।

You, therefore, with your fear dispelled ( or apprehension subsided ) by my words, having decided what is benificial to yourself, scaring away the crow settling upon a holy bathing place ( i. e. dispelling doubt from your holy and pure mind ), should have your mind firmly fixed upon my words. Your beloved ( i. e. Vasundharā ), slenderly built, youthful, having pointed teeth, possessing lower lips red like ripe Bimba fruit, is in that very city ; you will find her there.

**यस्या हेतोस्तव च मम च प्राग्भवेऽभूद्विरोधः**
**तत्रोत्पन्ना निवसति सती साऽधुना किन्नराणाम् ।**
**दृष्टा सौम्यं सजलनयना त्वां स्मरन्ती स्मरार्ता**
**मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ॥ १९ ॥**

अन्वयः— प्राग्भवे यस्याः हेतोः तव च मम च विरोधः अभूत् सा अधुना किन्नराणां सती उत्पन्ना तत्र निवसति। मध्ये क्षामा, चकितहरिणीप्रेक्षणा, निम्ननाभिः, स्मरार्ता सौम्यं त्वां स्मरन्ती सा सजलनयना दृष्टा।

**यस्या** इत्यादि। **प्राग्भवे** प्राक्तनजन्मनि **यस्याः** वसुन्धराचर्याः **हेतोः** कारणात् **तव च मम च** आवयोः **विरोधः** शात्रवं **अभूत्** भवति स्म **सा** वसुन्धराचरी **अधुना** इदानीन्तनकाले **किन्नराणां सती उत्पन्ना** किन्नरदेवजातौ लब्धप्रादुर्भूतिः. **तत्र** अलकानगर्यां निवसति। **मध्ये** अवलग्नके। कटीप्रदेशे इत्यर्थः। **क्षामा** क्षीणा। कृशीभूता इत्यर्थः। 'क्षो मः' इति क्षायतेस्ततकारस्य मादेशः। मध्येक्षामा' इति पाठे तु 'घे कति बहुलम्' इति ईपोऽनुप् **चकितहरिणीप्रेक्षणा** भीतिप्रकम्पितमृगीनयना। चकिता भयप्रकम्पिता चासौ हरिणी मृगी च चकितहरिणी। तस्याः प्रेक्षणे इव नयने यस्याः सा। तन्वीत्यादिविशेषणैरस्याः पद्मिनीत्वं संसूच्यते। तदुक्तं रतिमञ्जर्या—'भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा, अविरलकुचयुग्मा चारुकेशी कृशाङ्गी। मृदुवचनसुशीला गीतवाद्यानुरक्ता, सकलतनुसुवेशा पद्मिनी पद्मगन्धा' इति। तथैव चोक्तं रतिरहस्ये 'चकितमृगदृशाभे प्रान्तरक्ते च नेत्रे' इति। **निम्ननाभिः** गम्भीरनाभिः। अनेन नाभिगाम्भीर्यान्नारीणां मदनोद्रेकः संसूच्यते। **स्मरार्ता** कामपीडिता **सौम्यं** मनोहराकारं **त्वां**

भवन्तं स्मरन्ती स्मृतिविषयतां नयन्ती सा वसुन्धराचरी किन्नरी सजलनयना अश्रुजलाविलनयना दृष्टा मया विलोकिता ।

She, for the sake of whom we both of us had come into antagonism with each other in the former birth, sprung from a Kinnara family ( or born as one belonging to the race of Kinnaras ), now dwells there. She, of a thin waist ( or thin in the middle ), having eyes resembling those of a frightened deer, possessing a deep navel, pining with love, remembering you, a noble ( or a beautiful ) one, was found by me with her eyes become full with tears ( i. e. was found in tears ).

दृष्टा भूयः स्मरपरवशा चन्द्रकान्तोपलान्ते
ध्यायन्ती त्वां सहसहचरं सन्दिदृक्षुर्लिखित्वा ।
यान्ती तस्मान्नयनसलिलैर्दृष्टिमार्गे निरुद्धे ।
श्रोणिभारादलसगमना स्तोकनम्रा स्तनाभ्याम् ॥ २० ॥

अन्वयः— श्रोणीभारात् अलसगमना, स्तनाभ्यां स्तोकनम्रा, स्मरपरवशा, सहसहचरं त्वां सन्दिदृक्षुः चन्द्रकान्तोपलान्ते लिखित्वा ध्यायन्ती नयनसलिलैः दृष्टिमार्गे निरुद्धे तस्मात् यान्ती ( सा ) भूयः दृष्टा ।

दृष्टेत्यादि । श्रोणीभारात् नितम्बगौरवजनितभारात् अलसगमना मन्दमन्दगतिः । अलसं मन्दं गमनं यस्याः सा । स्तनाभ्यां उरोजाभ्यां । अविरलकुचाभ्यामित्यर्थः । स्तोकनम्रा ईषदवनतपूर्वकाया । स्तोकमीषत् नम्रा नतपूर्वकाया स्तोकनम्रा । स्मरपरवशा निधुवनसेवनाद्यावशा । स्मरस्य कामस्य परवशा अधीना स्मरपरवशा । कामवासनाधीनचेतस्का इत्यर्थः । सहसहचरं समित्रं । सहचरेण सहितः सहसहचरः । तम् । 'वा नीचः' इति सकारादेशस्य वैकल्पिकत्वात् सहशब्दश्रवणं यथापूर्वम् । त्वां भवन्तं सन्दिदृक्षुः सन्द्रष्टुमिच्छुः । 'तुमीच्छायां धोर्वोप्' इति सनि 'सन्भिक्षाशंसादुः' इत्युः । चन्द्रकान्तोपलान्ते चन्द्रकान्तोपलपृष्ठे । लिखित्वा रेखाभिः त्वदाकारं निर्माप्य ध्यायन्ती विलोकयन्ती नयनसलिलैः विरहदुःखजनितनयनाश्रुजलैः दृष्टिमार्गे दृक्पथे निरुद्धे संवृते सति । 'यद्भावाद्भावगतिः' इति ईप् । तस्मात् चन्द्रकान्तपाषाणात् यान्ती निष्क्रामन्ती सा भूयः दृष्टा सा वसुन्धराचरी किन्नरी वारंवारं मया नयनातिथितां नीता ।

Brought into subjection by the god of love ( or subdued by passion ), she, with her speed slowed down owing to the weight of her buttocks, bent down a little owing to her breasts, was seen oft-times going away from there ( i. e. the place where the moon-stone-slab was lying ), when her eyesight was obstructed by the tears gathered in her eyes at the time when she was engrossed in meditating upon you represented in drawing with a desire to look at you with your friend, upon a moon-stone-slab.

**कामावस्थामिति बहुतिथीं धारयन्ती त्वयाऽसौ**
**ज्ञेया साक्षाद्रतिरिव मनोहारिणी तत्र गत्वा ।**
**नानावेषे बहुविलसिते किन्नरस्त्रीसमाजे**
**या तत्र स्याद्युवतिविषया सृष्टिराद्येव धातुः ॥२१॥**

अन्वयः— तत्र नानावेषे बहुविलसिते किन्नरस्त्रीसमाजे या धातुः युवतिविषया आद्या सृष्टिः इव स्यात् सा असौ इति बहुतिथीं कामावस्थां धारयन्ती साक्षात् रतिः इव मनोहारिणी तत्र गत्वा त्वया ज्ञेया ।

**कामावस्थामित्यादि** । तत्र अलकानगर्यां **नानावेषे** बहुविधनेपथ्यभूषिते । नाना बहुविधाः वेषाः वस्त्रालङ्कारादयः यस्य तस्मिन् । **बहुविलसिते** अनेकविधरम्योक्तिस्मितवीक्षिते । बहूनि बहुविधानि विलसितानि हावाः यस्य तस्मिन् । विलसितं विलासः । 'नपुंसके भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च । 'विलासो हावलीलयोः' इति विश्वलोचने । 'हावः शृङ्गारभावाप्तौ रम्योक्तिस्मितवीक्षितं । शृङ्गारप्रौढिमा हेला हेवाको यौवने हि यः ।' 'प्रियस्यानुकृतिर्लीला श्लिष्टा वाग्वेषचेष्टितैः' इति नाट्यशास्त्रे भरतमुनिः । **किन्नरस्त्रीसमाजे** यक्षस्त्रीसमवाये या वसुन्धराचरी धातुः वेधसः । कविसमयानुकूलेयमुक्तिर्न सिद्धान्तपद्धतिमनुसृत्य । **युवतिविषया** युवतिसम्बन्धिनी । युवतिस्तरुणी । सा विषयः गोचरः यस्याः सा युवतिविषया । 'विषयो गोचरे देशे इन्द्रियार्थेऽपि नीवृति' इति विश्वलोचने । आद्या प्रथमभूता **सृष्टिः** उत्पत्तिः इव **स्यात्** भवेत् **सा असौ** सा एषा इति एतस्माद्धेतोः **बहुतिथीं** भूयिष्ठाम् । अत्युद्रिक्तामित्यर्थः । 'बहुपूगगणसङ्घस्य तिथुक्' इति वैपुल्यपूरणेऽर्थे डटि तिथुक् । 'टिड्ढाणञ्-' इति टित्वात् ङी । बहुशब्दोऽत्र वैपुल्यार्थवचनः, न सङ्ख्यार्थवचनः । बहोर्वैपुल्यस्य पूरणी बहुतिथी । ताम् । **कामावस्थां** कामवासनाजनितामवस्थां । कामस्य अवस्था दशाविशेषः ।

मय्यायाते करकिसलयन्यस्तवक्त्रेन्दुमुग्धा
त्वामेवाहर्निशमभिमनाश्चिन्तयन्ती वियोगात् ।
याता नूनं बत तव दशामाशु मर्तव्यशेषां
गाढोत्कण्ठागुरुषु दिवसेष्वेषु गच्छत्सु बाला ॥ २४ ॥

अन्वयः— मयि आयाते एषु गाढोत्कण्ठागुरुषु दिवसेषु गच्छत्सु करकिसलयन्यस्तवक्त्रेन्दुमुग्धा, अभिमनाः त्वां एव अहर्निशं चिन्तयन्ती बाला तव वियोगात् बत मर्तव्यशेषां दशां नूनं याता [ भवेत् ] ।

मयीत्यादि । मयि शम्बराभिधाने गुह्यके आयाते अलकां विमुच्याऽत्रागते एषु एतेषु । गाढोत्कण्ठागुरुषु तीव्रया उत्कण्ठया दीर्घीभूतेषु । दिवसेषु दिनेषु गच्छत्सु व्यतीयमानेषु करकिसलयन्यस्तवक्त्रेन्दुमुग्धा किसलयकोमलकरतलनिहितचन्द्रोपममुखमनोहरा । करः किसलयः इव करकिसलयः । 'सामान्येनोपमानं' इति सः । तत्र न्यस्तः वक्त्रेन्दुः करकिसलयन्यस्तवक्त्रेन्दुः । वक्त्रमेवेन्दुः वक्त्रेन्दुः । तेन मुग्धा मनोहरा । अभिमनाः सोत्कण्ठमनाः त्वां एव भवन्तं एव अहर्निशं दिवानिशं चिन्तयन्ती ध्यानविषयतां नयन्ती बाला तरुणी तव भवतः वियोगात् विरहात् । विरहजनितदुःखेनेत्यर्थः । बत हन्त । 'बत खेदे । 'कृपानिन्दासन्तोषाऽऽमन्त्रणाद्भुते' इति विश्वलोचने । मर्तव्यशेषाम् मरणावशिष्टां । नवमीमित्यर्थः । मर्तव्यं मरणं शेषं यस्याः सा । ताम् । दशां अवस्थां नूनं निश्चयेन याता प्राप्ता । भवेदिति शेषः ।

On my coming ( here ), the young one, looking beautiful owing to her moonlike face reposed in her sprout-like hand, meditatiug upon you alone day and night owing to her desire ( or attachment ) for you, might have surely attained to the state in which death alone is left out owing to your separation ( from her ), when these days, become long owing to her being love-sick, are passing away.

तस्याः पीनस्तनतटभरात्सामिनम्राग्रभागा
निश्वासोष्णप्रदवितमुखाम्भोजकान्तिर्विरूक्षा ।
चिन्तावेशात्तनुरपचिता सालसापाङ्गवीक्षा
जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥ २५ ॥

अन्वयः— पीनस्तनतटभरात् सामिनम्राग्रभागा, निश्वासोष्णप्रदवितमुखाम्भोज-

कान्तिः, चिन्तावेशात् अपचिता, सालसापाङ्गवीक्षा विरूक्षा तस्याः तनुः शिशिरमथिता पद्मिनी इव अन्यरूपा जाता ( भवेत् इति ) मन्ये ।

तस्या इत्यादि । **पीनस्तनतटभरात्** मांसलोरोजतटभरात् । पीनौ मांसलौ च तौ स्तनतटौ च पीनस्तनतटौ । तयोः भरः भारः पीनस्तनतटभरः । तस्मात् । हेतावत्र का । 'भरस्त्वतिशये भारे' इति विश्वलोचने । **सामिनम्राग्रभागा** ईषद्विनतोर्ध्वभागा । सामि ईषत् नम्रः नतः अग्रभागः ऊर्ध्वभागः यस्याः सा । ईषदवनतपूर्वकायेत्यर्थः । 'नम्रकम्पिस्म्यजस्कमहिंसदीपो रः' इति रः । **निश्वासोष्णप्रदवितमुखाम्भोजकान्तिः** निश्वासोष्मजनितग्लानिमुखकमलशोभा । निश्वासस्य उष्णः ऊष्मा निश्वासोष्णः । तेन प्रदविता सञ्जातप्रदवा मुखाम्भोजकान्तिः यस्याः सा । प्रदवः ग्लानिः दाहः वा सञ्जातः अस्याः सा । 'तदस्य सञ्जातं तारकादिभ्यः इतः' इतीतः । प्रदूयतेऽनेनेति प्रदवः । 'पुंसौ घः प्रायः' इति करणे घः । मुखमम्भोजं कमलमिव मुखाम्भोजं । तस्य कान्तिः शोभा तेजः वा । 'सामान्येनोपमानं' इति सः । यद्वा मुखमेवाम्भोजमिति विग्रहः । **चिन्तावेशात्** चिन्तानिमज्जनात् । चिन्तायां आवेशः निमज्जनं चिन्तायाः आवेशः आक्रमणं वा चिन्तावेशः । तस्मात् । **अपचिता** कृशीभूततनुः । **सालसापाङ्गवीक्षा** सालसकटाक्षनिक्षेपा । अपाङ्गेन नेत्रान्तेन वीक्षा दर्शनं अपाङ्गवीक्षा । कटाक्षः इत्यर्थः । 'अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने' इत्यमरः । अलसेन सहिता सालसा । सहस्य सादेशः । सालसा अपाङ्गवीक्षा यस्याः सा सालसापाङ्गवीक्षा । **विरूक्षा** गलितसौन्दर्या विगलितानन्दा वा । विशेषेण रूक्षा गलितसौन्दर्या विरूक्षा । 'रूक्षस्त्वप्रेम्ण्यचिक्कणे' इत्यमरः । **तस्याः** धृतकिन्नरीरूपायाः वसुन्धराचर्याः । **तनुः** शरीरं **शिशिरमथिता** शिशिरर्तुपीडिता तुषारपीडिता वा **पद्मिनी इव** कमलिनी इव । कमलवल्लरीव । **अन्यरूपा** परिणतपूर्वाकृतिः । अन्यत् रूपं शरीराकारः यस्याः सा । 'रूपमाकारसौन्दर्यस्वभावश्लोकनाणके । नाटकादौ मृगे ग्रन्थावृत्तौ च पशुशब्दयोः' इति विश्वलोचने । **जाता** सम्भूता । भवेत् इति **मन्ये** तर्कयामि ।

I think that her body, with its upper part bent down a little owing to the burden of her corpulent breasts, having the beauty of her lotus-like face spoiled by the heat of the puffs of breath, emaciated on account of the mental disturbance caused by anxiety, casting dull side-glances, deprived of pleasure, might have become changed in form like a lotus-creeper afflicted ( blighted ) by frost.

ताम्। धारयन्ती बिभ्राणा साक्षात् रतिः इव प्रत्यक्षभूता रतिदेवीव मनोहारिणी सौन्दर्यसम्पन्ना तत्र अलकानगरीं गत्वा प्राप्य त्वया भवता ज्ञेया नेत्रेन्द्रियप्रत्यक्षेण ज्ञातव्या ।

Having gone there, she, the first-rate of the Creator's creations of young women in the whole class of the Kinnara-women, wearing diverse constumes [ and ] manifesting various feminine gestures indicative of amorous sentiments, attractive like Rati herself, reduced to the state bringing her into subjection to the strong emotion of love, should be ascertained by you.

साध्वीं चित्ते विधिनियमितामन्यपौंस्ने निराशां
कन्यावस्थां त्वदुपगमने बद्धकामां सखीनाम् ।
भ्रातुर्वाक्यात्प्रणयविवशां त्वं वितर्क्यान्यथाऽलं
तां जानीयाः परिमितकथां जीवितं मे द्वितीयम् ॥ २२ ॥
सख्यानीतैः सरसकदलीगर्भपत्रोपवीज्यैः
लब्धाश्वासां किमपि किमपि श्लिष्टवर्णं लपन्तीम् ।
शीर्णप्रायां विरहविधुरामावयोर्बद्धसाम्या-
द्दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ॥ २३ ॥

अन्वयः— साध्वीं चित्ते विधिनियमितां, अन्यपौंस्ने निराशां, सखीनां कन्यावस्थां, त्वदुपगमने बद्धकामां, प्रणयविवशां, परिमितकथां, सख्यानीतैः सरसकदलीगर्भपत्रोपवीज्यैः लब्धाश्वासां, किमपि किमपि श्लिष्टवर्णं लपन्तीं, शीर्णप्रायां, आवयोः बद्धसाम्यात् सहचरे दूरीभूते एकां चक्रवाकीं इव मयि दूरीभूते विरहविधुरां एकां तां त्वं जानीयाः। 'जीवितं मे द्वितीयं' इति भ्रातुः वाक्यात् अन्यथा वितर्क्य अलम्।

साध्वीमित्यादि श्लोकद्वयम्। साध्वीं अक्षतशीलसम्पन्नामत एवैकपत्नीमित्यर्थः। 'सती पतिव्रता साध्वी पतिवत्न्येकपत्न्यपि' इति धनञ्जयः। चित्ते मनसि विधिनियमितां शास्त्रोक्तव्रतविधिनियन्त्रितविकारां। शास्त्रोक्तव्रताद्याचरणनियन्त्रितशृङ्गाररसजमनोविकारामित्यर्थः। अन्यपौंस्ने स्वपतिभिन्नपुरुषे। पुंसः भावः पौंस्नं। 'त्वे वा' इति त्वत्वे विषये नण्। पौंस्नं पुरुषत्वं अस्य अस्तीति पौंस्नः। 'ओऽभ्रादिभ्यः' इत्यत्यः। अन्यः पौंस्नः अन्यपौंस्नः। तस्मिन्। निराशां आशावशातीतां सखीनां सखीषु। निर्धारणे ता। कन्यावस्थां कुमार्यवस्थाम्। त्वदुपगमने भवदा-

गमने बद्धकामां साभिलाषां। बद्धः कामः अभिलाषः यया सा। ताम्। प्रणयविवशां कामवासनया हेतुभूतया अगतिकां। प्रणयात् प्रणयेन वा विवशा अगतिका प्रणयविवशा। ताम्। परिमितकथां नियमितवाचं। वाचंयमामित्यर्थः। सख्यानीतैः सखीभिरानीतैः सरसकदलीगर्भपत्रोपवीज्यैः प्रत्यग्ररम्भान्तर्गतपत्रवीजनैः। सरसा प्रत्यग्रा चासौ कदली रम्भा च सरसकदली। तस्याः गर्भपत्राणि एव उपवीज्यानि। तैः। उपवीज्यते अनेन इति उपवीज्यं। 'व्यानड्वहुलं' इति करणे व्यः। उपवीजैरिति पाठोऽपि समीचीनः। उपवीज्यतेऽनेनेति उपवीजः। तैरुपवीजैः। 'पुंसि घः प्रायः' इति करणे घः। लब्धाश्वासां विच्छिन्नक्लमां प्रत्यागतचैतन्यां वा। लब्धः पुनः प्राप्तः आश्वासः चैतन्यं यया सा। किमपि किमपि असम्बद्धं म्लिष्टवर्णं अव्यक्तवर्णं। म्लिष्टाः वर्णाः यथा स्युः तथा। म्लिष्टाः अव्यक्ताः इत्यर्थः। 'म्लिष्टं स्याद्वाच्यवन्माने म्लिष्टमव्यक्तभाषणे' इति विश्वलोचने। व्यक्तार्थत्वादस्मत्परिवर्तितोऽयं पाठः। मुद्रितपाठस्तु श्लिष्टवर्णमित्यासीत्। तस्य संयुक्तवर्णमित्यर्थः। पदस्थसंयुक्तसर्ववर्णोच्चारणमव्यक्तं यथा भवति तथेति भावः। लपन्तीं ब्रुवाणां। शीर्णप्रायां अपचितप्रायगात्रयष्टिं आवयोः तव मम च बद्धसाम्यात् जन्मजनिताकारसादृश्यात् सहचरे प्रियकरे दूरीभूते प्रोषिते एकां एकाकिनीं। अद्वितीयामित्यर्थः। चक्रवाकीं इव चक्रवाककान्तामिव सहचरे सहचरतुल्ये। सहचरः इव सहचरः। तस्मिन्। दूरीभूते प्रोषिते मयि शम्बरासुरे विरहविधुरां विरहदुःखितां एकां एकाकिनीं त्वं जानीयाः जानीहि। 'जीवितं मे द्वितीयं' इति भ्रातुः बन्धोः वाक्यात् अन्यथा अन्यप्रकारेण वितर्क्य सञ्चिन्त्य अलं पर्याप्तम्। 'जीवितं मे द्वितीयं' इति भ्रातुर्मम वचनात् सा वसुन्धराचरी किन्नरीत्वरिक्तेति मा मंस्थाः इति भावः।

You should identify her, a faithful one having her mind restrained through vows, having no enthusiasm for a person other than you, attained to the age of maidenhood amongst her female friends, cherishing a strong desire for your arrival, reduced to helplessness through passion, having a curb put upon her speech, brought to her senses by the fans in the form of tender leaves of the fresh plantain trees brought by her female friends, speaking at random indistincty, standing on the verge of death, the lonely one, subjected to severe strain owing to the separation caused by being far away by me who am just like you, her beloved, owing to our mutual resemblance, like the lonely female Cakrawaka owing to her beloved being far away. On the authority of your brother's utterances '(she is) my second soul,' you should not think otherwise of her (lit. enough of thinking otherwise of her).

निद्रापायाद्रजनिषु मुहुस्तावकं सम्प्रयोगं
दिध्यासोः स्याद्वदनमपरं त्विन्दुबिम्बानुकारि।
नूनं तस्याः प्रबलरुदितोच्छूननेत्रं बहूनां
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ॥ २६ ॥

अन्वयः– रजनिषु मुहुः तावकं सम्प्रयोगं दिध्यासोः निद्रापायात् इन्दुबिम्बानुकारि, प्रबलरुदितोच्छूननेत्रं, बहूनां निश्वासानां अशिशिरतया भिन्नवर्णाधरोष्ठं तु तस्याः वदनं नूनं अपरं स्यात्।

निद्रापायादित्यादि। रजनिषु निशासु मुहुः पुनः पुनः। पौनःपुन्येनेत्यर्थः। तावकं त्वदीयं। तव अयं तावकः। तम्। 'तवकममकमेकार्थे' इत्यञ् अकञ्चादेशश्च। सम्प्रयोगं संयोगं। सङ्गममित्यर्थः। दिध्यासोः ध्यातुमिच्छोः। 'तुमीच्छायां धोर्वोप्' इति सन्। 'सन्भिक्षाशंसादुः' इत्युः। निद्रापायात् स्वापापगमात्। निद्रायाः स्वापस्य अपायः अपगमः निद्रापायः। तस्माद्धेतोः। हेतावत्र का। रिरंसायाः हेतोः तस्याः वृपस्यन्त्याः त्वयामा मुहुर्मुहुः संयोगमभिलपन्त्याः निशासु निद्रायाः विद्रवाद्धेतोरित्यर्थः। कामिनां कामिनीनां वा कामवासनाकुलस्वान्तानां विद्राणावस्था जायते इति जनप्रसिद्धम्। इन्दुबिम्बानुकारि चन्द्रबिम्बसदृशं। इन्दोश्चन्द्रमसः बिम्बं मण्डलं इन्दुबिम्बं। तदनुकरोतीति इन्दुबिम्बानुकारि। 'शीलेऽजातौ णिन्' इति णिन्। प्रबलरुदितोच्छूननेत्रं प्रबलरोदनजनितशोथनयनं। प्रबलं बहुलं च तद्रुदितं रोदनं च प्रबलरुदितं। तेन उच्छूने जनितशोथे नेत्रे नयने यस्य तत्। 'टुओश्वि गतिवृद्ध्योः' इत्यस्माद्धोरोदित्त्वात्क्तस्य तकारस्य 'ओदितः' इति नः। श्वयतेर्यजादित्वाद्यणः इकि पूर्वरूपे च 'ह्लो यणिकः' इति यणिगन्तस्य दीः। बहूनां विपुलानां निश्वासानां उच्छ्वासानां अशिशिरतया औष्ण्येन। कामाभिलाषजनितान्तस्तापोष्मणेत्यर्थः। भिन्नवर्णाधरोष्ठं विच्छायाधरोत्तरोष्ठं। भिन्नः विकृतिं प्राप्तः वर्णः च्छाया ययोः तौ भिन्नवर्णौ। विकृतरक्तवर्णावित्यर्थः। अधरश्चौष्ठश्चाधरौष्ठौ। ओष्ठशब्दोऽत्रोत्तरोष्ठार्थवचनः, अधरशब्दसान्निध्यात्। (ओष्ठशब्दः) 'अधरसान्निध्यादुत्तरोष्ठेऽत्र वर्तते' इत्यमरटीकायां क्षीरस्वामी। भिन्नवर्णौ अधरौष्ठौ यस्य तद्भिन्नवर्णाधरोष्ठम्। 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः। तु पादपूरणे। 'तु पादपूरणे भेदावधारणसमुच्चये। पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे' इति विश्वलोचने। तस्याः वसुन्धराचर्याः किन्नर्याः वदनं मुखं नूनं निश्चयेन अपरं रूपपरिणतेः पूर्वस्माद्रूपाद्रूपान्तरतां प्राप्तं स्यात् भवेत्।

Her face, imitating the disc of the moon, with eyes swollen owing to her crying bitterly, with lower and upper lips having their colour changed owing to the hotness of the multiplicity of sighs, might have been changed owing to the sleep of hers, thinking constantly upon a union with you for many nights, being broken.

त्वां ध्यायन्त्या विरहशयनाभोगमुक्ताखिलाङ्ग्याः
शङ्के तस्या मृदुतलमवष्टभ्य गण्डोपधानम् ।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा—
दिन्दोर्दैन्यं त्वदुपसरणक्लिष्टकान्तेर्बिभर्ति ॥ २७ ॥

अन्वयः—विरहशयनाभोगमुक्ताखिलाङ्ग्याः मृदुतलं गण्डोपधानं अवष्टभ्य त्वां ध्यायन्त्याः तस्याः लम्बालकत्वात् असकलव्यक्ति हस्तन्यस्तं मुखं त्वदुपसरणक्लिष्टकान्तेः इन्दोः दैन्यं बिभर्ति [ इति ] शङ्के ।

त्वामित्यादि । **विरहशयनाभोगमुक्ताखिलाङ्ग्याः** विरहसंवेदनजनितदुःखेन शय्याविस्तारे न्यस्तनिखिलगात्रायाः ।शयनस्य शय्यायाः आभोगः प्रसरः शयनाभोगः। तत्र मुक्तानि न्यासीकृतानि शयनाभोगमुक्तानि । अखिलानि च तानि अङ्गानि अवयवाः चाखिलाङ्गानि । विरहेण शयनाभोगे मुक्तानि विरहशयनाभोगमुक्तानि । तानि तादृशानि अखिलाङ्गानि यया सा । तस्याः । विरहशयनं दम्पतीद्वन्द्वशयनानर्हं शयनं । विरहशयनस्याभोगः प्रसरः विरहशयनाभोगः । तत्र मुक्तानि न्यस्तानि अखिलान्यङ्गानि यया सा तस्याः । **मृदुतलं** सुखस्पर्शपृष्ठभागं । मृदु सुखस्पर्शं तलं पृष्ठभागः यस्य तत् । इवेकवचनम् । **गण्डोपधानं** कपोलोपधानीयम् । गण्डस्य कपोलस्य उपधानं स्थापनाधारः गण्डोपधानम् । उपबर्हमित्यर्थः । **अवष्टभ्य** गाढमालिङ्ग्य **त्वां** भवन्तं **ध्यायन्त्याः** ध्यानविषयतां नयन्त्याः **तस्याः** वसुन्धराचर्याः किन्नरकन्यकायाः **लम्बालकत्वात्** स्नेहाभ्यञ्जनादिसंस्काराभावेन लम्बमानालकत्वात् । **असकलव्यक्ति** असम्पूर्णाभिव्यक्ति । न सकला सम्पूर्णा असकला । असम्पूर्णेत्यर्थः । असकला व्यक्तिः अभिव्यक्तिः प्रकाशः यस्य तत् । **हस्तन्यस्तं** करकमलनिक्षिप्तं । हस्ते न्यस्तं न्यासीकृतं हस्तन्यस्तं **मुखं** वदनम् । **त्वदुपसरणक्लिष्टकान्तेः** भवदीयेन उपसरणेन शिशिरकिरणकिरणप्रसरणमार्गोपरोधेन म्लानच्छायस्य । तव उपसरणं त्वदुपसरणं । तेन क्लिष्टा म्लाना कान्तिः उद्योतः ज्योत्स्ना वा यस्य सः । तस्य । **इन्दोः** चन्द्रमसः **दैन्यं** दुर्दशां । दुर्दर्शनत्वमित्यर्थः । **बिभर्ति** धारयति इति शङ्के सम्भावयामि ।

The face, reposed in her hands, not fully discernible owing to the tresses of her hair dangling [ about her face ], of hers, meditating upon you on closely embracing a pillow with soft surface, having all her limbs let loose on the expansive bed on account of [ her ] separation [ from you ], I think, might be in a state gloomy like that of the moon having her lustre spoiled by your approach near her.

तस्याः पीडां रहयितुमलं तौ च मन्ये मृगाक्ष्याः
मद्गेहिन्याः सह सहचरी सेवते यौ द्वितीया।
रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य ॥ २८ ॥

अन्वयः—अत्र चलकिसलयः रक्ताशोकः, कान्तः केसरः च [ इति ] यौ कुरवकवृतेः माधवीमण्डपस्य प्रत्यासन्नौ मद्गेहिन्याः सहचरी [ तत्र च ] द्वितीया सह सेवते तौ च तस्याः मृगाक्ष्याः पीडां रहयितुं अलं [ इति ] मन्ये।

तस्या इत्यादि। अत्र गृहोद्याने चलकिसलयः प्रचलत्पल्लवः रक्ताशोकः रक्तवर्णप्रसवप्रसूः स्मरवर्धनः अशोकः। लोहितवर्णप्रसूनप्रसविताऽशोकः स्मरवर्धनः इत्युक्तमशोककल्पे।" 'प्रसूनैरशोकस्तु श्वेतो रक्त इति द्विधा। बहुसिद्धिकरः श्वेतो रक्तोऽत्र स्मरवर्धनः' इत्यशोककल्पे दर्शनात्" इति सञ्जीवन्यां मल्लिनाथः। कान्तः मनोहरः। 'कान्तो रम्ये प्रिये त्रिषु' इति विश्वलोचने। केसरः च बकुलश्च। 'केसरो बकुले सिंहच्छटायां नागकेसरे। पुन्नागेऽस्त्री तु किञ्जल्के स्यात्तु हिंगुनि केसरम्' इति विश्वलोचने। इति यौ अशोककेसरौ। कुरवकवृतेः अरुणपुष्पझिण्टिकावेष्टनस्य। कुरवक एव वृतिः वेष्टनं यस्य। तस्य। 'कुरवकः पुंसि शोणझिण्टिकाऽम्लानभेदयोः' इति 'वृतिर्विवरणे वाटे वेष्टिते वरणे वृतम्' इति च विश्वलोचने। माधवीमण्डपस्य वासन्तीलतामण्डपस्य। मधौ वसन्ते भवा माधवी। 'तत्र भवः' इत्यण्। 'इड्ढिड्ढाण' इति स्त्रियां ङी। उक्तं च– 'अतिमुक्ता माधवी च सुवसन्तो वनाश्रयः। अतिमुक्तः कामुकश्च मण्डको भ्रमरोत्सवः'। इति। 'अतिमुक्तः पुण्ड्रकः स्याद् वासन्ती माधवीलता' इत्यमरः। 'माधवी। मधूत्थशर्करामद्यकुट्टनीष्वतिमुक्तके' इति विश्वलोचने। प्रत्यासन्नौ समीपवर्तिनौ मद्गेहिन्याः मम कलत्रस्य। 'भार्या जाया जनिः कुल्या कलत्रं गेहिनी गृहम्' इति धनञ्जयः। सहचरी वयस्या। 'वयस्याली सहचरी सध्रीची सवयाः सखी' इति धनञ्जयः। सह चरतीति सहचरी। 'चरोऽट्' इत्यट्।

टित्वात्स्त्रियां ङीं । तव च द्वितीया वसुन्धराचरी पत्नी । 'द्वितीया तिथिभित्पल्योः पूरणेऽपि द्वयोस्त्रिपु ' इति विश्वलोचने । सह समं । युगपदित्यर्थः । 'सहशब्दस्तु साकल्ययौगपद्यसमृद्धिपु । सादृश्ये विद्यमानेऽपि सम्बन्धेऽपि सह स्मृतम् ' इति विश्वलोचने । सेवते उपचरति । तौ च अशोककेसरौ च तस्याः तव भार्याया वसुन्धराचर्याः मृगाक्ष्याः मृगनयनायाः । मृगस्येव अक्षिणी यस्य सः मृगाक्षः । 'स्वाङ्गाद्र्वेऽक्षिसक्थ्नः' इति टः । टित्वात्स्त्रियां ङी । मृगाक्षी । तस्याः । पीडां विप्रलम्भजनितदुःखं रहयितुं परिहर्तुं अलं समर्थौ इति मन्ये सम्भावये ।

And I think both the red Āsoka, with its foliage swinging with to-and-fro motion, and the beautiful Kesara ( Bakula ), standing close by the bower of Mādhavī creepers surrounded with the hedge of Kurbaka ( plants ), upon which your beloved ( of the former birth ), my wife's associate, attends simultaneously, are able to dispel the distress of that fawn-eyed one.

कामस्यैकं प्रसवभवनं विद्धि तौ मन्निवेशे
मद्गेहिन्या विरचिततलौ सेवनीयौ प्रियायाः ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दौहृदच्छद्मनाऽस्याः ॥ २९ ॥

अन्वयः— मन्निवेशे मया सह मद्गेहिन्या विरचिततलौ, तव प्रियायाः सख्याः सेवनीयौ तौ कामस्य एकं प्रसवभवनं विद्धि । [ तयोः ] एकः दौहृदच्छद्मना अस्याः वामपादाभिलाषी, अन्यः [ अस्याः ] वदनमदिरां काङ्क्षति ।

कामस्येत्यादि । मन्निवेशे मद्गृहोपवनप्रदेशे मद्विवाहसमये वा । मम निवेशः मन्निवेशः । तस्मिन् । अत्र लक्षणया गृहोद्यानदेशे इत्यर्थः ग्राह्यः, गङ्गायां घोषः इत्यस्य गङ्गातीरे इत्यर्थवत्, गृहदेशे तलविरचनायाः असम्भवात् । यद्वा निवेशशब्दः विवाहार्थवचनः । 'निवेशः शिबिरे पुंसि तथोद्वाहविनाशयोः ' इति विश्वलोचने । मया सह मया शम्बरयक्षेण समं मद्गेहिन्या मम भार्यया विरचिततलौ विरचिताधारौ । विरचितालवालौ विरचितवेदिकौ वेत्यर्थः । 'स्वरूपाधारयोस्तलम् ' इति विश्वलोचने । विरचिते तले ययोः तौ विरचिततलौ । तव भवतः प्रियायाः प्रेयस्याः सख्याः सहचारिण्याः सेवनीयौ उपचरणीयौ । 'व्यस्य वा कर्तरि ' इति कर्तरि ता । तव प्रियया सख्या सेवनीयावित्यर्थः। तौ अशोककेसरौ कामस्य कामवासनायाः। रिरंसायाः

इत्यर्थः । एकं अद्वितीयं । अनुपमेयमित्यर्थः । यद्वा मुख्यमित्यर्थः । ' एके मुख्यान्य-केवलाः ' इत्यमरः । प्रसवभवनं उत्पत्तिस्थानम् । ' प्रसवो गर्भमोक्षे स्याद्वृक्षाणां फलपुष्पयोः । परम्पराप्रसङ्गे च लोकोत्पादे च पुत्रयोः ' इति ' भवनं भावसद्मनोः ' इति च विश्वलोचने । विद्धि जानीहि । तयोः अशोककेसरयोः एकः रक्ताशोकः । अशोक-केसरयोरन्यतरः रक्ताशोकः एवैकशब्देन ग्राह्यः, तस्यैव नारीचरणाघाताभिलाषित्वात् । दोहृदच्छद्मना दोहदव्याजेन । दौहृदस्य दोहदस्य छद्म व्याजः दौहृदच्छद्म । तेन । दोहदं वृक्षादीनां पुष्पोत्पत्तिनिमित्तं संस्कारकद्रव्यम् । ' तरुगुल्मलतादीनामकाले कुशलैः कृतं । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रिया ' इति शब्दार्णवे । ' कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे ' इत्यमरः । अस्याः वसुन्धराचर्याः किन्नरकन्यकायाः वामपादाभिलाषी सव्यचरणाभिघाताभिलाषुकः । वामः सव्यश्चासौ पादश्चरणश्च वामपादः । तमभिलषतीत्यभिलाषी । ' शीलेऽजातौ णिन् ' इति णिन् । अन्यः इतरः । केसरः इत्यर्थः । अस्याः वदनमदिरां आस्योपात्तवृष्यरसगण्डूषसेकं काङ्क्षति अभिल-षति । स्त्रीवामपादाभ्याघातः अशोपुष्पप्रसवनिमित्तं वृष्यरसगण्डूषसेकश्च केसरकुसुमप्रभव-हेतुरिति कविसमयप्रसिद्धम् । उक्तं च – ' स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति वकुलः सीधुगण्डूषसेकात् । पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् ॥ मन्दारो नर्मवाक्यात् पटुमृदुहसनाच्चम्पको वक्त्रवातात् । चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात् कर्णिकारः ॥ ' अलकायामशोककेसरवृक्षबाहुल्यसम्भवेऽपि यत्राऽप्रसूतकुसुमौ तौ तदेवास्मदीयमगारमिति शम्बरासुराभिप्रायः ।

You should take those, standing in the garden attached to my house, with their basins formed by my beloved ( or wife ) in company with me, ( and ) attended upon by your ( former ) associate, ( very ) dear to you, to be the only source generating ( exciting ) passion. One ( of the trees referred-to above ), under the pretext of longing, longs for a kick given by her left foot, ( and ) the other for the wine in her mouth.

मूलं वोच्चैर्मनसि निहितं लक्ष्यते त्वद्वियोगा-
त्तस्या साद्याध्यवसितमृतेर्बर्हिणाधिष्ठिताग्रा ।
तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ॥ २० ॥

अन्वयः—तन्मध्ये च [ या ] त्वद्वियोगात् तस्याः मनसि अद्य उच्चैः

निहितं अध्यवसितमृतेः मूलं वा सा अनतिप्रौढवंशप्रकाशैः मणिभिः मूले बद्धा, बर्हिणा अधिष्ठिताग्रा स्फटिकफलका काञ्चनी वासयष्टिः लक्ष्यते ।

मूलमित्यादि । तन्मध्ये च तयोः अशोककेसरवृक्षयोः मध्यभागे । तयोः अशोककेसरयोः मध्यं मध्यभागस्थितः प्रदेशः तन्मध्यं । तत्र । 'मध्यं न्याय्येऽवकाशे च मध्यं मध्यस्थिते त्रिषु । लग्नकेऽप्यधमे मध्यमस्त्रियामवलग्नके' इति विश्वलोचने । या त्वद्वियोगात् त्वत्तः तव वा वियोगाद्धेतोः तस्याः वसुन्धराचर्याः किन्नरकन्यकायाः मनसि हृदये अद्य इदनीन्तनकाले उच्चैः अत्यर्थं निहितं निखातं अध्यवसितमृतेः निश्चितस्य मरणस्य । अध्यवसिता निश्चिता चाऽसौ मृतिर्मरणं च अध्यवसितमृतिः । तस्याः । मूलं कारणं शिफा वा । वा इव सा काञ्चनी वासयष्टिः अनतिप्रौढवंशप्रकाशैः अनतिवृद्धिमत्कीचकप्रकाशसंकाशच्छायैः । वहन्ति स्म ऊढाः । प्रकर्षेण ऊढाः प्रौढाः । वृद्धिं प्राप्ताः इत्यर्थः । प्रादूढे परतः 'प्रादूहोढोढ्येषैष्ये' इत्यूतः ऐप् । अतिशयेन प्रौढाः अतिप्रौढाः । न अतिप्रौढाः अनतिप्रौढाः । ईषद्वृद्धिमन्तः इत्यर्थः । अनतिप्रौढाश्च ते वंशाः कीचकाश्च अनतिप्रौढवंशाः । तेषां प्रकाशः इव प्रकाशः येषां ते । तैः । 'ईवुपमानपूर्वस्य द्युखं गतार्थत्वात्' इति द्युखम् । मणिभिः गारुत्मतमणिशिलाभिः मूले निखन्यमानयष्टिपर्यन्तदेशे वद्धा परितः रचितवेदिका बर्हिणा मयूरेण । बर्हः कलापः अस्य अस्तीति बर्ही । तेन । अधिष्ठिताग्रा अधिष्ठितोर्ध्वभागा । अधिष्ठितं व्याप्तं अग्रं उपरिष्ठः अन्तः यस्याः सा । स्फटिकफलका स्फटिकमणिमयाधिष्ठानफलका । स्फटिकं स्फाटिकमणिबहुलं फलकं अस्ति यस्याः सा । बहवः स्फटिकाः सितमणयः सन्त्यस्येति स्फटिकम् । 'ओभ्रादिभ्यः' इत्येवात्यः मत्वर्थीयः । काञ्चनी सुवर्णघटिता । काञ्चनस्य विकारः काञ्चनं । 'तस्य विकारः' इत्यण् । 'इञ्टिड्ढाणञ्–' इति स्त्रियां ङी । वासयष्टिः निवासस्थानभूतः दण्डः । लक्ष्यते दृग्गोचरतां याति । दृश्यते इत्यर्थः ।

Moreover, a golden roosting perch, the root, firmly fixed in her mind, as if of death decided [ by her ] to be brought about on account of her being separated from you, inlaid at the bottom with jewels having lustre like that of the bamboos not ripened very much [ not very mature ], having its top occupied by a peacock, with a crystal slab, is seen standing between them.

तां कामिन्यः कुसुमधनुषो वैजयन्तीमिवैकां
मत्वार्चन्ति प्रबलरुदिता सापि साध्वी त्वदाप्त्यै ।

तालैः शिञ्जावलयसुभगैः कान्तया नर्तितो मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ ३१ ॥

अन्वयः — मे कान्तया शिञ्जावलयसुभगैः तालैः नर्तितः वः सुहृद् नीलकण्ठः दिवसविगमे यां अध्यास्ते तां कुसुमधनुषः एकां वैजयन्तीं इव मत्वा कामिन्यः अर्चन्ति । प्रबलरुदिता सा साध्वी अपि त्वदाप्त्यै [ तां अर्चति ] ।

तामित्यादि । **मे** मम **कान्तया** दयितया । 'वल्लभा प्रेयसी प्रेष्ठा रमणी दयिता प्रिया । इष्टा च प्रमदा कान्ता चण्डी प्रणयिनी तथा' इति धनञ्जयः । **शिञ्जावलयसुभगैः** शिञ्जावद्वलयमनोहरैः । शिञ्जावन्ति वलयानि शिञ्जावलयानि । शाखावृक्षवत्समासः । शिञ्जा भूषणध्वनिः । 'भूषणानां तु शिञ्जितं' इत्यमरः । 'षिद्भिदादिभ्योऽङ्' इति भावेऽकर्तर्यङ् । यद्वा शिञ्जाप्रधानानि वलयानि इति विग्रहः । तैः सुभगाः मनोहराः । तैः । 'शिञ्जि अव्यक्ते शब्दे' इत्यस्य धातोरात्मनेपादित्वात्ततः शतृप्रत्ययस्यासम्भावात् 'शिञ्जद्वलयसुभगैः' इति पाठः न साधुतामावहति । **तालैः** करतलकृतास्फोटैः गानकालक्रियामानैर्वा । गानकालस्य क्रियया आवापनिष्क्रमादिकया मानं परिच्छेदकं प्रतिष्ठाहेतुस्तालः । गानक्रियायाः कालनियमहेतुर्वा तालः । 'गीतकालक्रियामाने तालः खड्गादिमुष्टिषु । तालः स्यात्कांस्यरचितवाद्यभाण्डान्तरे तथा । करास्फारे करतले तालं तु हरितालके' इति विश्वलोचने । **नर्तितः** नाटितः **वः** भवतः **सुहृत्** प्राग्भवसम्बन्धि मित्रं **नीलकण्ठः** शिखण्डी । 'मयूरो बर्हिणः केकी शिखी प्रावृषिकस्तथा । नीलकण्ठः कलापी च शिखण्डी' इति धनञ्जयः । नीलः कण्ठः यस्य सः नीलकण्ठः । **दिवसविगमे** दिनावसाने । सायाह्ने इत्यर्थः । **यां** वासयष्टिं **अध्यास्ते** अधितिष्ठति । 'कर्मैवाधेः शीङ्स्थासः' इत्याधारस्य कर्मसञ्ज्ञत्वात् 'कर्मणीप्' इति इप् । **तां** वासयष्टिं **कुसुमधनुषः** पुष्पधन्वनः कामस्य । **एकां** अद्वितीयां मुख्यां वा **वैजयन्तीं इव** पताकामिव । 'ध्वजं पताका केतुश्च चिह्नं तद्वैजन्त्यपि' इति धनञ्जयः । **मत्वा** विज्ञाय **कामिन्यः** कामाकुलाः योषितः । 'ललना कामिनी योषिद्योषा सीमन्तिनी वधूः' इति धनञ्जयः । **अर्चन्ति** सपर्यां कुर्वन्ति । **प्रबलरुदिता** प्रबलं रुदन्ती । प्रबलं रुदितं रोदनं यस्याः सा । **सा** वसुन्धराचरी किन्नरकन्यका । **साध्वी** अपि एकपत्नी अपि । पतिव्रतेत्यर्थः । अनेन तस्याः शीलभ्रंशाभावः प्रकटीकृतः । 'सती पतिव्रता साध्वी पतिवत्न्येकपत्न्यपि । मनस्विनी भवत्यार्या' इति धनञ्जयः । **त्वदाप्त्यै** भवत्सम्प्राप्त्यर्थं तां वासयष्टिमर्चतीति शेषः । 'अर्थवशाद्विभक्तिविपरिणामः' इति न्यायादर्चन्तीत्यस्य अर्चतीति परिणमनं वा ।

Taking for a matchless banner as if of the flower-arrowed god the roosting perch on which, at the time of sunset, roosts the peacock, your friend ( of the former birth ), made to dance by my wife keeping time with the clappings of the hands, rendered charming by her jingling bracelets, love-sick ladies worship it; also that faithful spinster, crying very much, worships it with a desire to secure you.

प्रीतिस्तस्या मम च युवतेर्निर्विवेका; ततोऽहं
जानाम्येनां व्यसनपतितां मद्गृहे; तच्चरोऽहम् ।
एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ॥ ३२ ॥

अन्वयः— तस्याः मम च युवतेः निर्विवेका प्रीतिः [ अस्ति ]; ततः अहं एनां मद्गृहे व्यसनपतितां जानामि; तच्चरः अहम् । [ ततः भो ] साधो एभिः हृदयनिहितैः लक्षणैः, द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ दृष्ट्वा च [ मद्गृहं ] लक्षयेथाः ।

प्रीतिरित्यादि । तस्याः वसुन्धराचर्याः किन्नरकन्यकायाः मम च मदीयायाश्च युवतेः तरुण्याः । मम भार्यायाश्चेत्यर्थः । ‘ यूनस्तिः ’ इति तिः । ‘ तरुणी युवतिः समे ’ इत्यमरः । ‘ नितम्बिन्यत्रला वाला कामुकी वामलोचना । भामा तनूदरी रामा सुन्दरी युवती चला ’ इति धनञ्जयः । निर्विवेका अवियोज्या । विवेकाद्वियोगान्निष्क्रान्ता निर्गता निर्विवेका । प्रीतिः मैत्री । अस्तीति शेषः । ततः यस्मात्कारणात् मद्भार्या-किन्नरकन्यकयोरविभेद्या मैत्री तस्मात्कारणात् । अहं एनां वसुन्धराचरीं किन्नरकन्यकां मद्गृहे मामकीनेऽगारे व्यसनपतितां दैवानिष्टफले दुःखे विपत्तौ वा निमग्नां । व्यसने दैवानिष्टफले विपत्तौ वा पतिता निमग्ना व्यसनपतिता । ताम् । ‘ व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पाके विपत्तौ विफलोद्यमे ॥ सक्तिमात्रे सुचरितादभ्रंशे कोपजदूषणे ’ इति विश्वलोचने । जानामि अवैमि । यतः तच्चरः अहम् तद्गृहचरोऽहम् । यतोऽहं मद्गृहवास्तव्यः ततोऽहं सा व्यसनपतितेति मद्गृहिणीमुखेन जानामि । तच्च तस्याः दुःखं त्वद्विप्रलम्भजनितम् । अतस्तत्र त्वयाऽवश्यं गन्तव्यमिति कमठचरशम्बरासुराभिप्रायः । ततः भो साधो मेघाकारपरिणतस्वकायमुने । ‘ तपस्वी संयमी योगी वर्णी साधुश्च ’ इति धनञ्जयः । एभिः पूर्ववर्णितैः हृदयनिहितैः मनसिकृतैः । पूर्वोक्तानि तोरणादीनि प्रत्यभिज्ञानसाधनानि मनसिकृत्येत्यर्थः । लक्षणैः अलकास्थितान्यगृहासाधारणैरभिज्ञानलिङ्गैः द्वारोपान्ते द्वारपार्श्वयोः लिखितवपुषौ

पिष्टकादिवर्णलिखितरेखाजनिताकृती। लिखिते रेखाजनिते वपुषी आकृती ययोः तौ। शङ्खपद्मौ शङ्खपद्माभिधानौ निधिविशेषौ। 'शङ्खः कम्बुललाटास्थिनखीनिधिषु न स्त्रियाम्' इति 'पद्मोऽस्त्री पद्मनालेऽब्जे व्यूहसङ्ख्यान्तरे निधौ। पद्मके नागभेदे ना' इति च विश्वलोचने। दृष्ट्वा च अवलोक्य च मद्गृहं लक्षयेथाः अभिजानीहि।

Between her and my young lady there exists a relation of inseparable friendship; I therefrom have come to know that, in my house, she is involved in distress; I am a right resident in that (house of mine). O sage! by means of these distinctive marks, therefore, committed to memory (lit. stored up in your heart) and on seeing the figures of S̄amkha and Padma represented by drawing lines on the sides of the door, you would find out my house.

तस्या दुःखप्रशमनविधौ व्यापृते मत्कलत्रे
मूकीभूतेऽप्यनुचरजने मन्दमन्दायमाने।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम्॥ ३२॥

अन्वयः—मत्कलत्रे तस्याः दुःखप्रशमनविधौ व्यापृते, मन्दमन्दायमाने अनुचरजने अपि मूकीभूते अधुना भवनं मद्वियोगेन नूनं क्षामच्छायं [स्यात्]; सूर्यापाये कमलं स्वां अभिख्यां न खलु पुष्यति।

तस्या इत्यादि। मत्कलत्रे मद्गेहिन्यां। मम कलत्रं गेहिनी मत्कलत्रं। तस्मिन्। 'भार्या जाया जनिः कुल्या कलत्रं गेहिनी गृहम्' इति धनञ्जयः। तस्या वसुन्धराचर्याः किन्नरकन्यकायाः दुःखप्रशमनविधौ त्वद्वियोगजनितदुःखोपशमनक्रियायां। दुःखस्य त्वद्वियोगजनिताधेः प्रशमनमुपशमनं दुःखोपशमनं। तस्य विधिः क्रिया दुःखप्रशमनविधिः। तस्मिन्। 'विधिर्वेधसि काले ना विधाने नियतौ स्त्रियाम्' इति विश्वलोचने। व्यापृते निमग्ने। मन्दमन्दायमाने मन्दप्रकारोद्यमे। मन्दप्रकारः मन्दमन्दः। मन्दसदृशः इत्यर्थः। 'प्रकारे गुणोक्तेर्वा' इति द्वित्वम्। मन्दमन्दः शीतकः इव आचरतीति मन्दमन्दायमानः। तस्मिन्। 'क्यङ् च' इत्याचारेऽर्थे कर्तुः क्यङ्। शीतकाचारे इत्यर्थः। अनुचरजने अपि सेवकजने अपि मूकीभूते वाचंयमत्वं प्राप्ते। अमूकाः मूकाः सम्पन्नाः मूकीभूताः। च्विः। अधुना साम्प्रतकाले। 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा' इत्यमरः। भवनं मदीयमगारं मद्वियोगेन मत्प्रवासजनितवि-

योजनेन नूनं सम्भावनायामत्र। 'नूनं तर्केऽर्थनिश्चये' इत्यमरः। क्षामच्छायं स्यादिति सम्भावये इत्यर्थः। क्षामच्छायं क्षीणशोभं। मत्प्रवासेन प्रमोदापायात्क्षीणशोभमित्यर्थः। स्यादिति शेषः। यत्र गृहिणीजनः दुःखापनयनक्रियायां व्यापृतः अनुचरजनश्च मन्दोद्यमः जातः, यच्च क्षीणशोभं तदेव मे गृहमिति निश्चिनुयाः इति भावः। सूर्यापाये मरीचिमालिन्यस्तंगते सति कमलं पद्मं स्वां स्वकीयां अभिख्यां शोभां। 'अभिख्या तु यशःकीर्तिशोभाविख्यातिनामसु' इति विश्वलोचने। न खलु पुष्यति न खलूपचिनोति। द्युमणिविगमे कमलमिव पतिविरहितमगारं लीलाविकलं जायते इत्यर्थः।

Under the present circumstances, I think that my house would not surely have maintained its charm on account of my separation, as my wife ( by this time ) would have been engrossed in getting rid of her distress ( and my ) servants even, very slow in doing their jobs, would have been abstaining from speech; surely, on setting of the sun, the lotus does not continue to have its beauty ( as it does before sunset ).

पश्यामुष्यामुपवनभुवि प्रेयसीं तां दधाना-
माधिं त्वत्तो विरहविधुरां मद्वचःप्रत्ययेन।
गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः॥ ३४॥

अन्वयः— शीघ्रसम्पातहेतोः सद्यः कलभतनुतां गत्वा प्रथमकथिते रम्यसानौ क्रीडाशैले निषण्णः विरहविधुरां त्वत्तः आधिं दधानां तां प्रेयसीं मद्वचःप्रत्ययेन अमुष्यां उपवनभुवि पश्य।

पश्येत्यादि। शीघ्रसम्पातहेतोः त्वरितगमननिमित्तं। शीघ्रस्त्वरितश्चासौ सम्पातो गमनं च शीघ्रसम्पातः। तस्य हेतुः शीघ्रसम्पातहेतुः। तस्मात् तस्य वा। 'हेतौ सर्वाः प्रायः' इति हेतुशब्दप्रयोगे का ता वा। 'सम्पातः पतने वेगे प्रवेशे चेदसंविदे' इति शब्दार्णवे। सद्यः त्वरितं। झटितीत्यर्थः। कलभतनुतां करिपोतवत्स्वल्पशरीराकारतां। यथा गजराजापेक्षया गजपोतस्य स्वल्पशरीराकारता तथा तनुतरशरीराकारता या तामित्यर्थः। कलभस्य द्विपपोतस्य तनुरिव तनुर्यस्य सः। तस्य भावः। ताम्। यद्वा कलभस्येव तनुता स्वल्पशरीराकारता। ताम्। गत्वा प्राप्य। प्रथमकथिते पूर्वोक्तेन 'अन्यच्चास्मिन्' इत्यादिना श्लोकेन वर्णिते रम्यसानौ मनोहर-

शिखरे क्रीडार्हप्रस्थे सचम्पकपादपशृङ्गे वा। रम्यः मनोहरः क्रीडार्हः सचम्पकपादपः वा सानुः शृङ्गं यस्य सः। तस्मिन्। रम्यः मनोहरः रतिक्रीडार्हः वा। 'रम क्रीडायां' इत्यस्माद्धोरर्हार्थे 'तृज्याश्चार्हे' इति व्यत्यः। रम्याः चम्पकपादपाः सन्त्यस्येति रम्यः। 'ओऽभ्रादिभ्यः' इत्यत्यः मत्वर्थीयः। 'रम्यं त्रिपु मनोरमे। रम्या विभावरी रम्यः पुंसि चम्पकपादपे' इति विश्वलोचने। 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः। 'सानुः शृङ्गे बुधेऽरण्ये वात्यायां पल्लवे पथि' इति विश्वलोचने। क्रीडाशैले क्रीडाहेतौः पर्वते निषण्णः उपविष्टः सन्। 'षद्लृ विशरणगत्यवसादनेषु' इत्यस्माद्धोस्ततकारे परतः 'द्रात्तस्य तो नोऽमत्पूमूर्च्छो' इति ततकारस्य पूर्वस्य च दस्य नत्वं। 'सदोऽप्रतेः' इतीणन्ताद्रेः परस्य सदेः सकारस्य षत्वं। 'ष्रो नो णोऽभिन्ने' इति नस्य णत्वम्। **विरहविधुरां** वियोगजनितदुःखां। 'विधुरं विकलेऽन्यवत्' इति विश्वलोचने। **त्वत्तः** त्वयि विषये। त्वमधिकृत्येत्यर्थः। 'सार्वविभक्तिकस्तसिः' इति तसिरत्र विषयसप्तम्यर्थे। **आधिं** मानसीं पीडां। 'पुंस्याधिश्चित्तपीडायां प्रत्याशायां च बन्धके। व्यसने चाप्यधिष्ठाने' इति विश्वलोचने। **दधानां** धारयन्तीं। **तां प्रेयसीं** प्रकर्षेण प्रियां तां किन्नरकन्यकां **मद्वचःप्रत्ययेन** मद्वचने विश्वस्य। मम वचः वचनं मद्वचः। तस्मिन् प्रत्ययः विश्वासः। तेन। **अमुष्यां** अस्यां **उपवनभुवि** उद्यानभूमौ **पश्य** प्रेक्षस्व।

Believing in my words, you, having quickly assumed the form like that of the cub of an elephant for the sake of moving rapidly, seated on the aforesaid pleasure-mountain with a beautiful peak [ or with a peak having Champaka-trees grown on it or with a peak serving as a pleasure-abode ], should have a look, in that garden, at that beloved one, involved in mental anguish with reference to you, overwhelmed with grief provoked by separation ( from you ).

**नो चेदन्तर्गृहमधिवसेत्सा दशामुद्वहन्ती**
**गूढं द्रष्टुं समभिलषितां तां तदा तत्स्थ एव।**
**अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं**
**खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम्॥ ३५॥**

अन्वयः— नो चेत्, तदा दशां उद्वहन्ती सा अन्तर्गृहं अधिवसेत्। समभिलषितां तां गूढं द्रष्टुं तत्स्थः एव अल्पाल्पभासं खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिं अन्तर्भवनपतितां कर्तुं अर्हसि।

नो चेदित्यादि। नो चेत् उपवनभुवि सा न भवेच्चेत् तदा तर्हि दशां विरहवैधुर्यवतीमवस्थां उद्वहन्ती धारयन्ती सा वसुन्धराचरी किन्नरकन्यका अन्तर्गृहं उद्यानान्तर्गतं गृहं, गृहान्तर्गतं गृहं मध्येगृहं वा। अन्तर्गतं गृहं अन्तर्गृहं। यद्वा गृहस्यान्तः अन्तर्गृहम्। 'पारेमध्येऽन्तस्तया' इति हसः। नायं तासः, तासे तान्तस्य पूर्वे निपातनात् अत्र च तस्योत्तरत्र निपातदर्शनात्। सुत्रर्थेऽयं हसः। तेन तस्य 'गृहे' इत्यर्थः। आधारस्य कर्मसञ्ज्ञाप्राप्तौ तु 'अन्तर्गतं गृहं' इत्येष एव सः, न हसः। अधिवसेत् तिष्ठेत्। 'वसोऽनूपाध्याङः' इत्यधिपूर्वस्य वसतेराधारस्य कर्मसञ्ज्ञा। ततश्च 'कर्मणीप्' इति इप्। समभिलषितां अभिकाङ्क्षितां। अभीष्टामित्यर्थः। तां किन्नरकन्यकां गूढं प्रच्छन्नं। अप्रकाशमित्यर्थः। द्रष्टुं विलोकयितुं तत्स्थ एव क्रीडाशैले स्थितः एव अल्पाल्पभासं अल्पजातीयप्रकाशां। अल्पाल्पा अल्पप्रकारा भाः प्रकाशः यस्याः सा। ताम्। अल्पाल्पा अल्पजातीया इत्यर्थः। 'प्रकारेगुणोक्तेर्वा' इति द्वैधीभावः। खद्योतालीविलसितनिभां ज्योतिरिङ्गणपङ्क्तिप्रकाशसङ्काशां। खद्योताः ज्योतिरिङ्गणाः। 'खद्योतो ज्योतिरिङ्गणः' इत्यमरः। इन्द्रगोपको ज्योतिर्माली कीटमणिश्चेति खद्योतस्य नामान्तराणि। खद्योतानामाली पङ्क्तिः खद्योताली। 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी' इत्यमरः। तस्याः विलसितं विलासः प्रकाशः। 'नञ्भावे क्तोऽभ्यादिभ्यः' इति क्तो नप् च। तेन निभां सदृशीं। 'वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक्। साधारणः समानश्च स्युरुत्तरपदे त्वमी। निभसङ्काशनीकाशप्रतीकाशोपमादयः' इत्यमरः। विद्युदुन्मेषदृष्टिं विद्युद्विलासदृष्टिं। विद्युतः क्षणरुचेः उन्मेषः क्षणद्युतिः विद्युदुन्मेषः। स एव दृष्टिः ईक्षणं विद्युदुन्मेषदृष्टिः। ताम्। अन्तर्भवनपतितां अन्तर्गृहे पतितां। अन्तर्गतं उपवनान्तर्गतं भवनं गृहं अन्तर्भवनम्। तत्र पतिता लब्धप्रवेशा अन्तर्भवनपतिता। ताम्। कर्तुं विधातुं अर्हसि योग्यो भवसि। क्रीडाशिखरिशिखरस्थः एव अन्तर्गृहनिवासां तां किन्नरकन्यकां द्रष्टुकामः तस्मिन्नन्तर्गृहे मन्दोद्योतवतीं विद्युदुन्मेषरूपां स्वदृष्टिं निक्षिपतादिति भावः।

If she would not be found there, she, reduced to that state, would be dwelling in the inner apartment [ of the house standing in the interior part of the garden ]. To see her, who is longed-for, secretly, it would deserve you to let your glance in the form of the flash of lightning, possessing very scanty brilliance, bearing resemblance to the gleaming of a row of fire-flies, enter the house.

आलोके ते निपतति पुरा सा बलिव्याकुला वा

त्वत्सम्प्राप्त्यै विहितनियमान् देवताभ्यो भजन्ती।

बुद्ध्यारूढं चिरपरिचितं त्वद्गतं ज्ञातपूर्वं
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ॥ ३६ ॥
आलिख्याऽतो भवदनुकृतिं चक्षुरुन्मील्य कृच्छ्रा-
त्पश्यन्ती वा सजलनयनं, प्राक्तनीं मन्यमाना ।
पृच्छन्ती वा मधुरवचनं सारिकां पञ्जरस्थां
काच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥ ३७ ॥
उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
गाढोत्कण्ठं करुणविरुतं विप्रलापायमानम् ।
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा
त्वामुद्दिश्य प्रचलदलकं मूर्च्छनां भावयन्ती ॥ ३८ ॥
तन्त्रीरार्द्रा नयनसलिलैः सारयित्वा कथञ्चित्
स्वाङ्गुल्यग्रैः कुसुममृदुभिर्वल्लकीमास्पृशन्ती ।
ध्यायं ध्यायं त्वदुपगमनं शून्यचिन्तानुकण्ठी
भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥ ३९ ॥
शेषान्मासान्विरहदिवसस्थापितस्याऽवधेर्वा
जन्मान्यत्वेऽप्यधिगतिमितान् देवभावानुभावात् ।
विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः
स्मृत्यारूढान् स्फुटयितुमिव स्वात्मनो मृत्युसन्धीन् ॥४०॥
बुद्ध्यभ्यासात् स्वपन इव विस्पष्टभूयं त्वयाऽमा
सम्भोगं वा हृदयरचितारम्भमास्वादयन्ती ।
मूर्च्छासुप्ता सभयमथवाऽऽश्वास्यमाना सखीभिः
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ ४१ ॥

[ षड्भिः कुलकम् ]

अन्वयः—सौम्य ! बलिव्याकुला, त्वत्सम्प्राप्त्यै देवताभ्यः विहितनियमान् भजन्ती वा, बुद्ध्यारूढं चिरपरिचितं ज्ञातपूर्वं त्वद्गतं विरहतनु भावगम्यं मत्सादृश्यं लिखन्ती वा, अतः भवदनुकृतिं आलिख्य चक्षुः उन्मील्य सजलनयनं पश्यन्ती वा, पञ्जरस्थां सारिकां प्राक्तनीं मन्यमाना 'रसिके ! भर्तुः कच्चित् स्मरसि, त्वं हि तस्य प्रिया' इति मधुरवचनं पृच्छन्ती वा, मलिनवसने उत्सङ्गे वीणां निक्षिप्य गाढोत्कण्ठं करुणविरुतं

विप्रलापायमानं विरचितपदं गेयं मद्गोत्राङ्कं त्वां उद्दिश्य उद्गातुकामा मूर्च्छनां प्रचलदलकं भावयन्ती, कुसुममृदुभिः स्वाङ्गुल्यग्रे नयनसलिलैः आर्द्राः तन्त्रीः कथञ्चित् सारयित्वा वल्लकीं आस्पृशन्ती, त्वदुपगमनं ध्यायं ध्यायं शून्यचिन्तानुकण्ठी स्वयं कृतां अपि मूर्च्छनां भूयः भूयः विस्मरन्ती, देवभावानुभावात् जन्मान्यत्वे अपि अधिगतिं इतान् विरहदिवसस्थापितस्य अवधेः शेषान् मासान् स्मृत्यारूढान् स्वात्मनः मृत्युसन्धीन् स्फुटयितुं इव देहलीमुक्तपुष्पैः गणनया भुवि विन्यस्यन्ती वा, स्वपने हृदयरचितारम्भं सम्भोगं बुद्ध्यध्यासात् त्वया अमा विस्पष्टभूयं इव आस्वादयन्ती वा, अथवा मूर्च्छासुप्ता सखीभिः सभयं आश्वास्यमाना पुरा ते आलोके निपतति। रमणविरहेषु अङ्गनानां प्रायेण एते विनोदाः।

आलोके इत्यादि सौम्य शान्तान्तरङ्ग साधो। 'बुधे सौम्योऽथ वाच्यवत्। बौद्धे मनोरमेऽनुग्रे पामरे सोमदेवते' इति विश्वलोचने। 'कसोमाट्ट्यण्' इति देवतार्थे सोमशब्दाट्ट्यण्। सुन्दराद्यर्थेषूपचाराट्ट्यण्। बलिव्याकुला प्रोषितभर्तृप्रत्यागमनार्थं पूजोपहारेषु देवताराधनेषु वा व्यापृता। बलिषु व्याकुला व्यापृता बलिव्याकुला। 'बलिश्चामरदण्डेऽपि करपूजोपहारयोः। सैन्धवेऽपि बलिः स्त्री तु जरसा श्लथचर्मणि। कुक्षिभागविशेषे च गृहकाष्ठान्तरे द्वयोः' इति विश्वलोचने। त्वत्सम्प्राप्त्यै भवत्सम्प्राप्त्यर्थं। भवन्तं प्राप्तुमित्यर्थः। 'ध्वर्थवाचोऽर्थात्कर्मणि' इत्यप्। देवताभ्यः देवताः प्राप्य। 'ण्यखे कर्माधारे' इति ण्यखे कर्मणि का। भगवत्प्रतिमापादमूलं सम्प्राप्येत्यर्थः। यद्वा देवताः इव देवताः। 'देवपथादिभ्य' इतीवार्थस्य कस्योस्। 'युक्तवद्वुसि लिङ्गसङ्ख्ये' इति प्रकृतिवल्लिङ्गसङ्ख्ये। जिनेन्द्रादिदेवतुल्याः ये गुरुजनाः तेभ्यः। तादृग्गुरुजनसकाशादित्यर्थः। विहितनियमान् शास्त्रोक्तानि व्रतानीत्यर्थः। विहिताः शास्त्रकारैः प्रतिपादिताः नियमाः व्रतानि। 'नियमो निश्चये बन्धे यन्त्रणे संविदि व्रते' इति विश्वलोचने। भजन्ती वा सेवमाना वा। बुद्ध्यारूढं मनसि कृतसंस्कारं। बुद्धौ मनसि आरूढं कृतारोहणं। मनसिकृतमित्यर्थः। चिरपरिचितं चिरात् प्राप्तपरिचयं। सुचिरमभ्यस्तमित्यर्थः। ज्ञातपूर्वं पूर्वमेव ज्ञानविषयतां प्रापितं। पूर्वं ज्ञातं ज्ञातपूर्वं। 'क्तः' इति क्तान्तस्य पूर्वं प्रयोगः वसत्वात्। त्वद्गतं त्वां गतं। भवद्विषयकमित्यर्थः। 'इतश्रिकृतादिभिः' इति गतेन सह षसः। विरहतनु विप्रलम्भजनिततानवं। विरहेण त्वत्तः वियोगेन तनु जनिततानवं। भावगम्यं अभिप्रायज्ञेयं। तस्याः त्वत्तः विरहस्य दीर्घकालभावित्वात्त्वत्कार्श्यस्य सम्प्रति तद्दृग्गोचरतामगतत्वात्सम्भावनमात्रेण त्वत्कार्श्यस्योत्प्रेक्ष्यत्वमित्यर्थः। ये ये गत्यर्थास्ते ते ज्ञानार्थाः इति न्यायेन गम्यमित्यस्य ज्ञेयमित्यर्थो ज्ञेयः। 'भावः स्वभावचेष्टाऽभिप्रायसत्त्वात्मजन्मनि। भावः क्रियायां लीलायां पदार्थेऽभिनयान्तरे। जन्तौ बुधे विभूतौ च नाट्योक्त्या

कण्ठः कण्ठोत्पन्नः स्वरः यस्याः सा । ‘ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ’ इति स्त्रियां ङी । स्वयं आत्मना कृतामपि विरचितामपि मूर्च्छनां आरोहादिक्रमविशेषस्थापितस्वरां गीतिकां भूयो भूयः पुनः पुनः विस्मरन्ती मूर्च्छनाविरचनाकालजनितस्मृत्युद्बोधकसंस्कारोद्बोधं त्वदुपगमनचिन्तननिमग्नमनस्कतयाऽकुर्वन्ती । देवभावानुभावात् देवत्वजनितमाहात्म्यात् । देवस्य भावः देवभावः । देवत्वमित्यर्थः । तस्य अनुभावः माहात्म्यं । तस्मात् । ‘ अनुभावः प्रभावे स्यान्निश्चये भावसूचके ’ इति विश्वलोचने । देवत्वजनितप्रभावादित्यर्थः । जन्मान्यत्वे अपि जन्मान्तरत्वेऽपि । जन्मनः भवस्य अन्यत्वं भिन्नत्वं जन्मान्यत्वं । तस्मिन् । अनेकजन्मभिरन्तरितत्वेऽपि अधिगतिं इतान् प्रमितिं प्राप्तान् । फलभूतज्ञानावस्थां प्राप्तानत एव परिगणितानिति भावः । विरहदिवसस्थापितस्य वियोगदिनबलान्निश्चितस्य । विरहस्य वियोगस्य दिवसः विरहदिवसः । तेन तस्माद्वा स्थापितस्य निश्चितस्य अवधेः अन्तस्य । विरहारम्भान्तयोरन्तरालवर्तिनः विप्रयोगकालप्रमाणस्येत्यर्थः । शेषान् मासान् गतावशिष्टान्मासान् स्मृत्यारूढान् बुद्ध्यारूढान् । स्मृतिः बुद्धिः । ‘ स्मृतिस्तु धर्मशास्त्रे स्यात् स्मरणे धीच्छयोरपि ’ इति विश्वलोचने । तत्र आरूढाः कृतसंस्काराः स्मृत्यारूढाः । तान् । बुद्धिकृतधारणानित्यर्थः । स्वात्मनः स्वदेहस्य । स्वस्य आत्मा देहः स्वात्मा । तस्य । ‘ आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु ’ इति विश्वलोचने । मृत्युसन्धीन् मरणकालान् । ‘ सन्धिः पुंसि सुरङ्गायां रन्ध्रसङ्घट्टने भगे । सन्धिर्भागेऽवकाशेऽपि वाटसञ्ज्ञेऽपि पुंस्ययम् ’ इति विश्वलोचने । स्फुटायितुं इव प्रकटीकर्तुमिव । देहलीमुक्तपुष्पैः बुध्नोदुम्बरन्यासीकृतकुसुमैः । देहल्यां बुध्नोदुम्बरे मुक्तानि न्यासीकृतानि देहलीमुक्तानि । तानि च तानि पुष्पाणि देहलीमुक्तपुष्पाणि । तैः । ‘ गृहावग्रहणी देहली ’ इत्यमरः । “ बुध्नोदुम्बरामिति सम्योऽर्थः ” इति क्षीरस्वामी । गणनया एकद्व्यादिपरिसंख्यानेन हेतुभूतेन । परिगणनार्थमित्यर्थः । भुवि भूतले विन्यस्यन्ती वा निक्षिपन्ती वा । स्वपने स्वापदर्शने । ‘ स्वप्नः स्वापधीदर्शने ’ इति विश्वलोचने । हृदयरचितारम्भं मनःसङ्कल्पविहितोपक्रमं । हृदये मनसि रचितः सङ्कल्पविहितः आरम्भः उपक्रमः यस्य सः । तम् । यद्वा मनोव्यापारजनितालिङ्गनचुम्बनादिव्यापारमित्यर्थः । सम्भोगं निधुवनक्रियां । ‘ रते भोगे च सम्भोगः सम्भोगो जिनशासने ’ इति विश्वलोचने । बुद्ध्यध्यासात् बुद्धिजनितभ्रान्तेः । स्वप्ने यथार्थसम्भोगाभावेऽपि बुद्ध्या तत्सद्भावप्रकल्पनात् इत्यर्थः । त्वया अमा भवता समं विस्पष्टभूयमिव स्पष्टतरत्वेनेव । विशेषेण स्पष्टं विस्पष्टं । विस्पष्टभवनं विस्पष्टभूयं । विशेषेण स्पष्टा क्रिया यथा स्यात्तथेति भावः । साक्षान्मैथुनोपसेवनमिवेत्यर्थः । आस्वादयन्ती वा

अनुभवविषयतां नयन्ती वा । 'भूयहत्याग्निचित्या भावे' इति भावे भूयनिपातः । अथवा किंवा मूर्च्छासुप्ता मूर्च्छया निद्राणा । मूर्च्छया मोहेन सुप्ता निद्राणा मूर्च्छासुप्ता । मोहनिद्रावशंगता मोहेन निद्रामुद्रितलोचना वेत्यर्थः । सखीभिः आलीभिः सभयं भीत्या । भयेन सहितं यथा तथा सभयं । तन्मरणभयादित्यर्थः । आश्वास्यमाना विधीयमानविस्रम्भा पुरा यदा त्वमलकां भविष्यति प्राप्स्यसि तदा प्रथमं आलोके दर्शने निपतति पतिष्यति । त्वन्नयनगोचरतां यास्यतीति भावः । 'पुरायावतोर्लट्' इति वत्स्र्यत्यर्थे लट् । कथमेता उक्ता अवस्थाः भवेयुरिति सम्भावितमित्यारेकामर्थान्तरन्यासेन परिहरति रमणविरहेषु कान्तवियोगेषु । रमणाद्विरहः रमणविरहः । तेषु । अङ्गनानां ललनानां । 'स्त्री नारी वनिता मुग्धा भामिनी भीरुरङ्गना' इति धनञ्जयः । अङ्गानि कल्याणान्यस्याः सन्ति अङ्गना । 'लक्ष्मणाविषुणाङ्गनाः' इति निपातः । प्रायेण बाहुल्येन एते पूर्वोक्ताः विनोदाः विरहजनितदुःखापनयनोपायाः । एतैरासक्तिसङ्कल्पमूर्च्छाद्या अवस्थाः उक्ताः ।

O gentle one ! she, engaged in worshipping, on having attained to the idols of Gods taking vows prescribed [ by the codes compiled by sages ] for the sake of attaining you or portraying a resemblance of me found in you, manifesting emaciation caused by separation [ from her ], conceived by fancy, familiar to her since long, impressed on her mind, and known formerly or drawing a likeness of you afterwards, and looking with her eyes, opened, moistened with tears, with a great difficulty or asking the encaged Sārikā, taken by her to be one belonging to the period prior to the present one, in a sweet voice 'I hope, O beautiful one ! do you remember your master, for you were his pet [ or I hope, you, your master's pet, remember him ]', or having laid a lute on her lap with an unclean garment, muttering, with her hair tossing about, a melody, with a disire to sing, with reference to you, assuming the hereditary appellation of my family, a song, having words arranged in a particular order, sung in a mournful ( elegiac ) strain, displayed in a voice whipping up emotion [ or feelings of compassion ] ( and ) expressing deep anxiety or stroking gently the lute with the ends of her fingers delicate like flowers on wiping off anyhow the strings moistened with tears from her eyes or forgetting time and again the melody though constructed by herself on account of the display of vain anxiety caused by her repeated meditation upon your arrival or drawing figures on the ground by means of the flowers placed at the

पण्डितेऽपि च' इति विश्वलोचने। **मत्सादृश्यं** मदीयप्रतिकृतितुल्यां त्वदीयां प्रतिकृतिं। मम सादृश्यं प्रतिच्छन्दकमिव सादृश्यं मत्सादृश्यं। 'देवपथादिभ्यः' इतीवार्थस्य कस्योप्। 'युक्तवद्लुपि लिङ्गसङ्ख्ये' इति प्रकृतिवल्लिङ्गसङ्ख्ये। "यद्यपि सादृश्यं नाम प्रसिद्ध-वस्त्वन्तरगतं आकारसाम्यं तथापि प्रतिकृतित्वेन विवक्षितं, इतरथा आलेख्यत्वासम्भवात्। अक्षय्यकोशे 'आलेख्येऽपि च सादृश्यं' इत्यभिधानात्" इति मेघदूतटीकायां मल्लिनाथः। एतद्व्याख्यानं 'आलिख्याऽतो भवदनुकृतिं' इत्युक्तिमनुसृत्य कृतमित्यवसेयं सुधीभिः। **लिखन्ती वा** क्वचित्फलकादौ विरचयन्ती वा। विरहजनितदुःखविनोदनोपायत्वात् प्रोषितभर्तृप्रतिच्छन्दकस्य तत्क्वचित्फलकादौ विरचयन्ती वसुन्धराचरी प्रोषितभर्तृकत्वात्सा वियोगिनी किन्नरकन्यकेति भावः। अतः अनन्तरं **भवदनुकृतिं** त्वदीयप्रतिच्छन्दकं। भवतः तव अनुकृतिः अनुकारः सादृश्यं भवदनुकृतिः। ताम्। **आलिख्य** क्वचित् फलके विन्यस्य **चक्षुः** नयनं **उन्मील्य** उद्घाट्य **सजलनयनं** साश्रुनेत्रम्। बाष्पाकुल-चक्षुषेत्यर्थः। जलेनाश्रुणा सहिते सजले। 'वा नीचः' इति सहस्य सभावः। सजले नयने यस्मिन्कर्मणि यथा स्यातां तथा। **पश्यन्ती वा** अवलोकयन्ती वा। **पञ्जरस्थां** पक्षिबन्धनगृहस्थाम्। श्येनादिहिंस्रेभ्यः संरक्षणार्थं पक्षिबन्धनगृहे स्थापितामित्यर्थः। **सारिकां** पक्षिणीविशेषाम्। **प्राक्तनीं** वसुन्धराच-रीकालभाविनीं। प्राक् मरुभूतिभार्यावसुन्धराकाले जाता भवा वा प्राक्तनी। ताम्। 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यः' इति जातार्थे भवार्थे वा तनट्। टित्वात्स्त्रियां ङी। **मन्यमाना** प्रत्यभिजानती। मन्यते इति मन्यमाना। **रसिके** सौन्दर्यवति ज्ञानवति वा। रसः सौन्दर्यं ज्ञानं वाऽस्त्यस्याः रसिका। **भर्तुः** पत्युः स्वामिनः वा **कच्चित् स्मरसि** स्मृतिविषयतां नयसि कच्चित्। त्वं मे भ्रातरं ते स्वामिनं च मरुभूतिं स्मरसीति मेऽभिप्रायः। 'कच्चित् कामप्रवेदने' इत्यमरः। 'कामप्रवेदनमिष्टपरिप्रश्नः' इति क्षीरस्वामी। अत्रोदाहरणं-'कच्चिज्जीवति मे माता कच्चिज्जीवति मे पिता। माराविद त्वां पृच्छामि कच्चिज्जीवति पार्वती॥' इति। 'स्मृत्यर्थदयेशां कर्मणि' इति ता। **त्वं** भवती हि यतः हेतोः **तस्य** मम भर्तुः **प्रिया** अभिमता **इति** अमुना प्रकारेण **मधुर-वचनं** मधुरोक्त्या। मधुरं वचनं यथा स्यात्तथा। **पृच्छन्ती वा** अनुयुञ्जाना वा। **मलिनवसने** मलदूषितवासोऽवगुण्ठिते। मलिनं मलीमसं मलदूषितं वसनं वासः यस्य। तस्मिन्। 'मलादीमसश्च' इति मलान्मत्वर्थे इनः। कच्चरचीवरपरिधानं किन्नरकन्यकाया विरहनिबन्धनमिति ख्यापनार्थं मलिनवसने इति विशेषणम्। **उत्सङ्गे** अङ्के। 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः। **वीणां** वल्लकीं **निक्षिप्य** निधाय **गाढोत्कण्ठं** अत्यधिकचित्तोद्वेगं। गाढा अत्यधिका तीव्रा वा उत्कण्ठा चित्तोद्वेगः यस्मिन्। तत्।

तीव्रचित्तोद्वेगव्यञ्जकमित्यर्थः। **करुणविरुतं** हृदयग्राहिस्वरं। करुणानि हृदयग्राहीणि विरुतानि स्वराः यस्य तत्। विरुतानि विरावाः। 'नञ्भावे क्तोऽभ्यादिभ्यः' इति क्तः नप् च। करुणाव्यञ्जकस्वरमित्यर्थः। **विप्रलापायमानं** करुणरसप्रधानगीतायमानं। विप्रलापः इवाचरतीति विप्रलापायते। 'क्यङ् च' इति आचारे क्यङ्। विप्रलापायते इति विप्रलापायमानम्। **विरचितपदं** सुम्मिङादिपदरचनाविशेषयुक्तं। विशेषेण रचितानि पदानि यस्य तत्। **गेयं** गीतं **मद्गोत्राङ्कं** मदीयकुलभूषणं। मम गोत्रं कुलं मद्गोत्रं। 'गोत्रः क्षोणीधरे गोत्रं कुले क्षेत्रे च नाम्नि च। सम्भावनीयन्बोधेऽपि वित्ते वर्त्मनि कानने' इति विश्वलोचने। तस्य अङ्कः भूषणं मद्गोत्राङ्कः। तम्। 'अङ्को रेखायां चिह्नलक्ष्मणोः। नाटकादिपरिच्छेदोत्सङ्गयोरपि रूपके। चित्रयुद्धेऽन्तिके मन्तौ स्थानभूषणयोरपि' इति विश्वलोचने। यद्वा गोत्रस्य कुलस्य अङ्कः लक्ष्म नामधेयं गोत्राङ्कः। मम गोत्राङ्कः इव गोत्राङ्कः यस्य सः। तम्। 'ईबुपमानपूर्वस्य खुखं, गतार्थत्वात्' इति ध्रुभूतगोत्राङ्कपदस्य खम्। **त्वां** भवन्तं **उद्दिश्य** लक्षीकृत्य **उद्गातुकामा** उच्चैर्गातुमभिलषन्ती। उच्चैः तारस्वरेण गातुं कामः अभिलाषः यस्याः सा। 'सम्तुमोर्मनःकामे' इति कामे परतः तुमो मकारस्य खम्। **मूर्च्छनां** आरोहावरोहक्रमाविशेषस्थापितस्वरां गीतिकां। मूर्च्छनालक्षणं यथा– 'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणं। सा मूर्च्छेत्युच्यते ग्रामस्था एताः सप्त सप्त च' इति। **प्रचलदलकं** सालकचलनं। प्रकर्षेण चलन्तः विलोलाः अलकाः कुन्तलाः यस्मिन्कर्मणि यथा स्युस्तथा। **भावयन्ती** अन्तर्जल्पन्ती। देवयोनिसम्भूतत्वाद्गान्धारग्राममन्तर्जल्पन्तीत्यर्थः। तदुक्तं– 'षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः। न तु गान्धारनामानं स लभ्यो देवयोनिभिः' इति। **कुसुममृदुभिः** कुसुमसममार्दवैः। कुसुमानीव मृदूनि कुसुममृदूनि। तैः। 'सामान्येनोपमानं' इति बसः। **स्वाङ्गुल्यग्रैः** स्वाङ्गुल्यग्रभागैः। स्वाः स्वीयाः अङ्गुल्यः स्वाङ्गुल्यः। तासामग्राणि स्वाङ्गुल्यग्राणि। तैः स्वाङ्गुल्यग्रैः। **नयनसलिलैः** नेत्राम्बुकणैः। नयनयोः नेत्रयोः सलिलानि अश्रुबिन्दवः नयनसलिलानि। तैः। 'पाथोऽर्णः सलिलं जलं' इति धनञ्जयः। **आर्द्राः** क्लिन्नाः। 'आर्द्रं सार्द्रं क्लिन्नं तिमितं स्तिमितं समुन्नमुत्तं च' इत्यमरः। **तन्त्रीः** वीणातन्तून्। 'तन्त्री स्याद्वल्लकीगुणे' इति विश्वलोचने। **कथञ्चित्** केनापि प्रकारेण। कृच्छ्रेणेत्यर्थः। **सारयित्वा** प्रमृज्य **वल्लकीं** वीणां। 'वीणा तु वल्लकी। विपञ्ची, सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः। **आस्पृशन्ती** ईषत्स्पृशन्ती **त्वदुपगमनं** तवागमनं **ध्यायं ध्यायं** अभीक्ष्णं ध्यात्वा। 'पूर्वाग्रेप्रथमाभीक्ष्ण्ये खमुञ्' इत्याभीक्ष्ण्यार्थे खमुञ्। **शून्यचिन्तानुकण्ठी** निःसारमनस्तापानुगतकण्ठस्वरवती। शून्या असारा चाऽसौ चिन्ता मनस्तापश्च शून्यचिन्ता। तया अनुगतः

threshold for counting the remaining months, become calculable even in the regeneration owing to the intrinsic power attained through godhood so as to display as if the occasions of her deaths committed to memory or enjoying in a dream the pleasure of sexual connexion, realised as though in action, with you, the working of which is portrayed in mind, owing to the feelings ( of sexual intercourse ) being implanted in her mind or being pacified by her friends through fear roused by her being unconscious, will fall within the range of your eyesight first—these are mostly the means of alleviating miseries adopted by ladies during the period of separation from their lovers.

**सख्यालापैः सुखविरुतिभिस्तद्विनोदैस्तथाऽन्यैः**
**सव्यापारामहानि न तथा पीडयेद्विप्रयोगः ।**
**स्वापापायाद्धृदयनिहितं त्वामजस्रं स्मरन्ती**
**शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ॥ ४२ ॥**

अन्वयः— [ यथा ] रात्रौ स्वापापायात् हृदयनिहितं त्वां अजस्रं स्मरन्तीं गुरुतरशुचं निर्विनोदां ते सखीं [ विप्रयोगः पीडयेत् ] तथा अहानि सुखविरुतिभिः सख्यालापैः तथा अन्यैः तद्विनोदैः सव्यापारां विप्रयोगः न पीडयेत् [ इति ] शङ्के ।

**सख्यालापैरित्यादि** । यथा रात्रौ निशायां **स्वापापायात्** निद्राविगमात् । स्वापः निद्रा । तस्य अपायः अपगमः । तस्मात् । हेतावत्र का । **हृदयनिहितं** हृदये स्थापितं । हृदये मनसि निहितः स्थापितः हृदयनिहितः । तम् । **त्वां** भवन्तं । **अजस्रं** अनवरतं । 'नित्यानवरताजस्रं' इत्यमरः । **स्मरन्तीं** स्मृतिविषयतां नयन्तीं । ध्यायन्तीमित्यर्थः । **गुरुतरशुचं** तीव्रतरदुःखसंवेदनां । अतिशयेन गुर्वी गुरुतरा । गुरुतरा शुक् शोकः यस्याः सा । ताम् । गुरुशब्दस्योक्तपुंस्कत्वात् 'तसादौ' इति पुंवद्भावः । **निर्विनोदां** विरहजनितदुःखापनयनविनोदव्यापाररहितां ते भवतः **सखीं** प्रेयसीं वसुन्धराचरीं किन्नरकन्यकां वि योगः वियोगः पीडयेत् बाधेत **तथा** तेन प्रकारेण **अहानि** दिने **सुखविरुतिभिः** सुखोत्पादकशब्दैः । शोभनानि खानीन्द्रियाण्यस्मिन् सुखयति वा सुखम् । सुखाः सुखावहाः विरुतयः शब्दाः येषां ते । तैः । **सख्यालापैः** आलीनामाभाषणैः । 'स्यादाभाषणमालापः' इत्यमरः । **तथा** अपि च । 'तथा साहृश्यनिर्देशनिश्चयेषु समुच्चये' इति विश्वलोचने । **अन्यैः** सख्यालापेभ्यो भिन्नैः **तद्विनोदैः** विरहजनितदुःखापनयनोपायैः **सव्यापारां** विरहजनितदुःखापनयनविनोदव्यापारनिमग्नां

विप्रयोगः विप्रलम्भः न पीडयेत् न बाधेत इति शङ्के सम्भावयेऽहं कमठचरः शम्बरासुरः ।

Being engaged owing to the conversations with her female friends consisting in pleasant words and other things, forming the means of mitigating mental worries, I think that the separation would not be distressing her with mental sufferings by day as much as it would be afflicting her, your beloved, having no pastime, afflicted far too heavily, continuously remembering you, deposited[ by her] in [ other ] heart, owing to her sleep being dispelled.

एवम्प्रायैस्त्वयि सुभगतां व्यञ्जयद्भिर्यथार्थै-
मत्सन्देशैः सुखयितुमतः पश्य साध्वीं निशीथे।
पर्यस्ताङ्गीं कुसुमशयने निस्सुखामाधिरुद्धां
तामुन्निद्रामवनिशयनां सद्मवातायनस्थः ॥ ४३ ॥

चित्रन्यस्तामिव सवपुषं मन्मथीयामवस्था-
माधिक्षामां, विरहशयने सन्निषण्णैकपार्श्वाम् ।
तापापास्त्यै हृदयनिहितां हारयष्टिं दधानां,
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ॥ ४४ ॥

मत्कामिन्या प्रणयरसिकैः सन्निधौ त्वत्प्रियाया
नीता रात्रिः क्षणमिव मया सार्धमिच्छारतैर्या ।
निद्राद्विड्भिर्मुहुरुपचितैः पक्ष्मरुद्भिर्गलद्भि-
स्तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ ४५ ॥

अन्तस्तापं प्रपिशुनयता स्वं कवोष्णेन भूयो
निःश्वासेनाऽधरकिसलयक्लेशिना विक्षिपन्तीम्
शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बं
विश्लिष्टं वा हरिणरचितं लाञ्छनं तन्मुखेन्दोः ॥ ४६ ॥

मद्विश्लेषादुपहितशुचो दूरदेशस्थितस्य
प्राणेशस्य स्वयमनुचितानङ्गबाधस्य जातु
मत्संयोगः कथमुपनमेत् स्वप्नजोऽपीति निद्रा-
माकाङ्क्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम् ॥ ४७ ॥

आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा
जन्मन्यस्माद्‌व्यवहिततरे वेणिका स्मर्यमाणा
शापस्याऽन्ते विगलितशुचा तां मयोद्वेष्टनीयां
स्वां निन्दन्तीं विरहवपुषां सङ्गमं वा विहाय ॥४८॥
तां वक्त्रेन्दुग्रसनरसिकां राहुमूर्तिं श्रितां वा,
व्योमच्छायां मदनशिखिनो धूमयष्टीयमानाम्
स्पर्शक्लिष्टामयमितनखेनाऽसकृत्सारयन्तीं
गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥ ४९ ॥
पादानिन्दोरमृतशिशिराञ्जालमार्गप्रविष्टा-
निष्टान्बन्धूनिव मृगयितुं संश्रितान् सङ्ग्रहीतुम् ।
पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव
प्रत्याहृत्य स्वनयनयुगं चेतसा धूयमानाम् ॥ ५० ॥
भूयोभूयः शिशिरकिरणे स्वान्कराञ्जालमार्गै-
रातन्वाने पुनरपि गताभ्यागतैः क्रियमानम् ।
खेदाच्चक्षुः सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं
साभ्रेऽह्नीव स्थलकमलिनीं नप्रबुद्धां नसुप्ताम् ॥ ५१ ॥

[ नवाभिः कुलकम् । ]

अन्वयः— अतः पर्यस्ताङ्गीं, कुसुमशयने निःसुखां, आधिरुद्धां, अवनिशयनां, चित्रन्यस्तां इव, मन्मथीयां सवपुषं अवस्थां, आधिक्षामां, विरहशयने सन्निषण्णैकपार्श्वां, प्राचीमूले हिमांशोः कलामात्रशेषां तनुं इव, तापापास्त्यै हृदयनिहितां हारयष्टिं दधानां, त्वत्प्रियायाः सन्निधौ मया सार्धं प्रणयरसिकैः इच्छारतैः या रात्रिः मत्कामिन्या क्षणं इव नीता तां एव विरहमतीं [ रात्रिं ] निद्राद्विड्भिः मुहुः उपचितैः पक्ष्मरुद्भिः गलद्भिः उष्णैः अश्रुभिः यापयन्तीं, स्वं अन्तस्तापं प्रपिशुनयता कवोष्णेन अधरकिसलयक्लेशिना निःश्वासेन तन्मुखेन्दोः हरिणरचितं विश्लिष्टं लाञ्छनं वा शुद्धस्नानात् परुषं आगण्डलम्बं अलकं नूनं भूयः विक्षिपन्तीं, मद्विश्लेषाद् उपहितशुचः दूरदेशस्थितस्य अनुचितानङ्गबाधस्य प्राणेशस्य स्वप्नजः अपि मत्संयोगः कथं जातु स्वयं उपनमेत् इति नयनसलिलोत्पीडरुद्धावकाशां निद्रां आकाङ्क्षन्तीं, या अस्मात् व्यवहिततरे जन्मनि आद्ये विरहदिवसे दाम हित्वा वेणिका शिखा बद्धा ( इति ) मया स्मर्यमाणा तां स्वां शापस्य अन्ते विरहवपुषां वः सङ्गमं विधाय विगलितशुचा (त्वया)

उद्वेष्टनीयां निन्दन्तीं; वक्त्रेन्दुग्रसनरसिकां श्रितां राहूमूर्तिं वा, व्योमच्छायां, मदनशिखिनः धूमयष्टीयमानां, स्पर्शक्लिष्टां, कठिनविषमां तां एकवेणीं अयमितनखेन करेण गण्डाभोगात् असकृत् सारयन्तीं; संश्रितान् इष्टान् बन्धून् मृगयितुं इव जालमार्गप्रविष्टान् अमृतशिशिरान् इन्दोः पादान् पूर्वप्रीत्या सङ्ग्रहीतुं अभिमुखं गतं तथैव निवृत्तं सत् स्वनयनयुगं प्रत्याहृत्य चेतसा धूयमानां, शिशिरकिरणे स्वान् करान् जालमार्गैः भूयोभूयः आतन्वाने गताभ्यागतैः खेदात् पुनः अपि क्लिश्यमानं चक्षुः सलिलगुरुभिः पक्ष्मभिः छादयन्तीं [ अतः एव ] साभ्रे अह्नि स्थलकमलिनीं इव नप्रबुद्धां नसुप्तां तां साध्वीं एवम्प्रायैः त्वयि सुभगतां व्यञ्जयद्भिः यथार्थैः मत्सन्देशैः सुखयितुं निशीथे सन्नवातायनस्थः पश्य ।

**एवम्प्रायैरि**त्यादि । अतः अस्मात् कारणात् । रात्रौ विरहजनितदुःखापनयनोपायाभावादित्यर्थः । **पर्यस्ताङ्गीं** व्यत्यस्तावयवां । पर्यस्तानि इतस्ततोऽक्रमविन्यस्तानि अङ्गान्यवयवाः यस्याः सा । ताम् । विरहजनितदुःखाकुलितत्वाद् व्यत्यस्तावयवामित्यर्थः । **कुसुमशयने** पुष्पशय्यायां **निस्सुखां** सौख्यविकलां । कुसुमशय्यायाः कामोद्दीपकत्वात्तज्जनितदुःखापनयनोपायाभावाच्च तत्राऽप्यलब्धशारीरमानससुखामित्यर्थः । **आधिरुद्धां** दुःखाक्रान्तमनस्कां । आधिना मानस्या व्यथया रुद्धां परिवृतां आधिरुद्धां । ' बन्धकं व्यसनं चेतःपीडाऽधिष्ठानमाधयः ' इत्यमरः । **अवनिशयनां** भूमिशायिनीं । अवनिः भूमिः एव शयनं शय्या शयनस्थानं वा यस्याः सा । ताम् । अवनौ शेते इति अवनिशयना । ताम् । ' धरा वसुमती धात्री क्षमा विश्वम्भराऽवनिः ' इति धनञ्जयः । शय्यायां शयने स्वपतिस्मृतिजनितविरहव्यथासम्भूतिभीत्या परित्यक्ततूलकल्पितानल्पतल्पामित्यर्थः । शीयतेऽत्रेति शयनं । ' करणाधारे चाऽनट् ' इत्याधारेऽनट् । तेन शयनमित्यस्य शयनीयमित्यर्थः । **चित्रन्यस्तां इव** चित्रलिखितामिव । प्रयुक्तस्वमतिकौशलचित्रकारालिखितनयनाभिरामालेख्यमिव नयनाभिराममूर्तिमित्यर्थः । **मन्मथीयां** मदनस्य । मन्मथस्येयं मन्मथीया । ताम् । ' दोश्छः ' इति छः । **सवपुषां** सशरीरां । वपुषा सहितां सवपुषां । **अवस्थां** दशां । साक्षादुपात्तशरीरां कामावस्थामिति वाच्यार्थः । प्रवृद्धकामवासनामिति तात्पर्यार्थः । **आधिक्षामां** दुःखाक्रान्तमनस्कतया कृशीभूतशरीरां । आधिना मानसिक्या व्यथया क्षामा क्षीणशरीरा । ताम् । ' क्षो मः ' इति क्षायतेस्ततकारस्य मादेशः । **विरहशयने** विरहशय्यायां । विरहे विरहकाले शीयतेऽत्रेति विरहशयनम् । तस्मिन् । **सन्निषण्णैकपार्श्वां** समाश्रितस्वशरीरैकभागां । सन्निषण्णः समाश्रितः एकः पार्श्वः शरीरावयवविशेषः यस्याः सा । ताम् । विरहशय्यासमाश्रितशरीरैकाव-

यवामित्यर्थः। पञ्चबाणत्राणायमानत्वात्कामोद्रेकजनितदेहदाहप्रशमनाभिलापविनिर्मित-कुसुमशयनस्यापघनैकदेशेन समाश्रिततदेकदेशमात्रामिति भावोऽत्र समाश्रणीयः। **प्राचीमूले** उदयशिखरिशिखरप्रान्तप्रदेशे। प्राच्यां पूर्वस्यां दिशि मूलं उत्पत्तिस्थान-मिति प्राच्याः पूर्वस्याः दिशो मूलमिति वा प्राचीमूलम्। तस्मिन्। **हिमांशोः** चन्द्र-मसः। हिमाः शीतलाः अंशवः रश्मयः यस्य सः हिमांशुः। तस्य। हिमरश्मेश्चन्द्र-मसः इत्यर्थः। **कलामात्रशेषां**। कलामात्रं कलैव शेषः अवशिष्टो भागः यस्याः सा। ताम्। कृष्णपक्षे विगलितपञ्चदशकलत्वादवशिष्टैककलामित्यर्थः। **तनुं इव** शरीरसदृशीं। कृष्णपक्षे विगलितपञ्चदशकलोऽवशिष्टैकमात्रकलश्चन्द्रमाः प्रत्यूषे उदया-चलप्रस्थपृष्ठभागं समाश्रितः सन्यथा आसन्नसूर्योदयत्वान्निरस्ततेजस्कस्तथा विरहदाहद-ग्धत्वात्तेजोवैकल्यमाश्रितामित्यभिप्रायः। 'कलामात्रशेषां' इत्यत्र मात्रट्प्रत्ययः प्रमा-णार्थकः। **तापापास्त्यै** तापापनुत्तये। तापस्य विरहजनितदेहदाहस्यापास्तिः अपनयनं तापापास्तिः। तस्यै। तापमपासितुमित्यर्थः। 'ध्वर्थवाचोऽर्थात्कर्मणि' इत्यप्। **हृदयनिहितां** हृत्प्रदेशे स्थापितां। हृदये वक्षोदेशे निहिता न्यासीकृता हृदयनिहिता। तां। **हारयष्टिं** हारं। यष्टिशब्दपरोऽपि हारशब्दो हारार्थ एव। 'यष्टिः शस्त्रान्तरे हारे हारे हारात्परेऽपि च। भार्ङ्ग्यां च मधुपर्ण्यां च ध्वजदण्डे तु पुंस्ययम्।' इति विश्वलोचने। **दधानां** धारयन्तीं। विरहदहनजनितदाहोपशमनम्भवेदित्यभिप्रायेण स्ववक्षोदेशे धृत-हारामित्यर्थः। **त्वत्प्रियायाः**। मरुभूतिचरस्य पार्श्वस्य तव प्रिया प्रेयसी त्वत्प्रिया तस्याः। **सन्निधौ** समीपे। सामीप्ये सतीत्यर्थः। **मया** कमठचरेण शम्बरासुरेण मया। **सार्धं** समं। **प्रणयरसिकैः** प्रेमरसयुक्तैः। प्रेमजनितानन्दानुभवसहितैः। 'प्रणयः प्रेमविश्रम्भप्रश्रयप्रसरेऽर्थने' इति विश्वलोचने। **इच्छारतैः** यथाकामं निधुवनसेवनैः। इच्छया इच्छानुकूल्येन कृतानि रतानि मैथुनसेवनानि इच्छारतानि। तैः। शाक-पार्थिवादित्वात्सः मध्यमपदलोपदर्शनात्। रतं रतिः। 'नब्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तो नप् च। **या रात्रिः** या निशा **मत्कामिन्या** मम शम्बरासुरगुह्यकस्य कामिन्या कामाकुलचित्तया भार्यया **क्षणं इव** समयमात्रकालः इव। क्षणशब्दः उभयलिङ्गः। **नीता** यापिता। **तां एव** या निधुवनसेवनाप्ररूढामन्दानन्दस्यन्दिनी रात्रिः शम्बरासुरपत्न्या समयमात्रकाल इव शीघ्रतमं यापिता तामेव। **विरहमहतीं** लघ्वीमपि विरहेण हेतुभूतेन महत्त्वेन दीर्घत्वेन प्रतीयमानाम्। विरहेण महती विरह-महती। ताम्। रात्रिं **निद्राद्विड्भिः** निद्राद्वेष्टृभिः। निद्रां द्वेष्टीति निद्राद्विड्। तैः। 'क्विप्' इति क्विप्। **मुहुः** वारंवारं **उपचितैः** उत्पद्य वृद्धिंगतैः **पक्ष्मरुद्भिः** पक्ष्माणि

रोधयद्भिः । पक्ष्माणि पक्ष्मलोमानि रुन्धन्तीति पक्ष्मरुधः । तैः । क्विप् । 'पक्ष्म लोचनलोमनि । पक्ष्म सूत्रादिसूक्ष्मांशे पक्ष्म स्यात्केशरेऽपि च' इति विश्वलोचने । **गलद्भिः** स्रवद्भिः **उष्णैः** उष्णीभूतैः **अश्रुभिः** अस्रैः । 'नेत्राम्बु रोदनं चास्रमश्रु च' इत्यमरः । **यापयन्तीं** गमयन्तीं । यातेर्ण्यन्ताच्छतृत्यः । 'ह्रीव्लीरीक्नूय्यर्त्तिक्ष्माय्यातां पुग्णावेप्' इति णौ परे पुगेप् च । **स्वं** स्वकीयं । 'स्वो ज्ञातावात्मनि स्वं तु त्रिष्वात्मीये धनेऽस्त्रियाम्' इति विश्वलोचने । **अन्तस्तापं** हृदयगतं विरहानलजनितं तापं । अन्तर्गतस्तापोऽन्तस्तापः । तम् । **प्रपिशुनयता** प्रकर्षेण सूचयता । 'पिशुनो नारदे पुंसि खलसूचकयोस्त्रिषु' इति विश्वलोचने । पिशुनं सूचकमनुकरोतीति पिशुनयति । सूचयतीत्यर्थः । 'मृदो ऽस्वर्थे णिज्वहुलं' इति णिच् 'कण्ड्वादेर्यक्' इति यग्वा कण्ड्वादेराकृतिगणत्वात् । ततः शतृत्यः । **कवोष्णेन** ईषदुष्णेन । 'कवं चोष्णे' इत्यल्पार्थे कोः कवादेशः उष्णशब्दे परे । 'कोष्णं कवोष्णं मन्दोष्णं' इत्यमरः । **अधरकिसलयक्लेशिना** पल्लवोपमाधरोष्ठप्रबाधनेन । अधरः अधरोष्ठः किसलयः इव अधरकिसलयः । 'सामान्येनोपमानं' इति सः । अधरकिसलयं क्लेशयति क्लिश्नातीति वा अधरकिसलयक्लेशी । तेन । ऊष्मवत्त्वात् पल्लवतुल्याधरोष्ठक्लेशजनकत्वं निःश्वासस्येति भावः । क्लिश्यतेर्ण्यन्तात्क्लिश्नातेरण्यन्ताद्वा 'शीलेऽजातौ णिन्' इति शीलार्थे णिन् । **निःश्वासेन** निःश्वसितेन **तन्मुखेन्दोः** तस्याः वसुन्धराचर्याः किन्नरकन्यकायाः आननचन्द्रमसः । मुखमेवेन्दुश्चन्द्रमाः मुखेन्दुः । तस्याः मुखेन्दुः तन्मुखेन्दुः । तस्य । **हरिणरचितं** हरिणशरीराकाररचनाविशेषं । रचितं रचना । 'नभावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च । हरिणस्य रचितं रचनाविशेषः हरिणरचितं । हरिणरचितमिव रचितं यस्य सः हरिणरचितः । तम् 'ईवुपमानपूर्वस्य खुखं गतार्थत्वात्' इति खुखम् । हरिणशरीराकारसदृशरचनाविशेषमित्यर्थः । **विश्लिष्टं** पृथक्तयाऽवस्थितं । तन्मुखेन्द्वङ्कतामप्राप्तमित्यर्थः । **लाञ्छनं वा** अङ्कः इव । **शुद्धस्नानात्** तैलाभ्यञ्जनविकलात्स्नानाद्धेतोः । विरहिण्यास्तैलाभ्यञ्जनादेः प्रतिषिद्धत्वात्तद्विकलस्नानस्य शुद्धत्वमुक्तम् । **परुषं** मृदुस्पर्शशून्यं । कठिनस्पर्शमित्यर्थः । 'चरबट' इति महाराष्ट्र्याम् । **आगण्डलम्बं** कपोलमभिव्याप्य लम्बमानं । आगण्डमाकपोलम् । कपोलमभिव्याप्येत्यर्थः, आङोऽभिविध्यर्थत्वात् 'आङ्मर्यादाभिविध्योः' इति । लम्बते इति लम्बः । 'पचादिभ्योऽच्' इत्यच् पचादेराकृतिगणत्वात् । आगण्डं लम्बः आगण्डलम्बः । 'सुप् सुपा' इति सः । **अलकं** चूर्णकुन्तलान् । जातावेकवचनम् । 'अलकश्चूर्णकुन्तले' इति विश्वलोचने । **नूनं** अवश्यं । 'नूनं तर्के तु विख्यातं नूनं स्यादर्थनिश्चये' इति विश्वलोचने । **भूयः** पुनः पुनः । **विक्षिपन्तीं** दूरमुत्सारयन्तीं । **मद्विश्लेषात्** मद्वियोगात् । मत्तः

वसुन्धराचर्याः किन्नरकन्यकायाः विश्लेषः वियोगः मद्विश्लेषः । तस्माद्धेतोः । **उपहित-शुचः** संरूढदुःखस्य । उपहिता संरूढा शुक् यस्य सः । तस्य **दूरदेशस्थितस्य** अनासन्नदेशस्थितिकस्य । **अनुचितानङ्गबाधस्य** अप्रशस्तकामवासनोद्रेकजनित-पीडस्य । अनुचिता अप्रशस्ता तीव्रतरत्वाद् अनङ्गस्य कामस्य मदनस्य बाधा पीडा यस्य सः । तस्य **प्राणेशस्य** प्राणनाथस्य । प्राणानामीष्टे इति प्राणेशः । तस्य **स्वप्नजः अपि** स्वप्नावस्थायां जायमानः अपि । अनासन्नदेशस्थायित्वात्प्रियकरस्य मिथुनी-भावमन्तरेण साक्षात्सम्भोगासम्भवाच्च 'स्वप्नजः अपि' इत्युक्तम् । **मत्संयोगः** मया समं संयोगः मिथुनीभवनरूपः **कथं** केन प्रकारेण **जातु उपनमेत्** सम्पन्नो भवेत् **इति** अस्माद्धेतोः **नयनसलिलोत्पीडरुद्धावकाशां** नयनजलोत्पतन-प्रतिषिद्धावसराम् । नयनयोः सलिलं नयनसलिलं । नयनसलिलस्योत्पीडः उत्पतनं निस्सरणं नयनसलिलोत्पीडः । तेन रुद्धः प्रतिबद्धः अवकाशः अवसरः यस्याः सा । ताम् । नयनयोः सलिलोत्पततेन जातप्रतिबन्धामित्यर्थः । **निद्रां** स्वापं **आकाङ्क्षन्तीं** अभिलषन्तीम् । विरहजनितदुःखोत्पादितसलिलसमाक्रान्तत्वान्नयनयोः ततः प्रपलाय-मानां निद्रामाकाक्षन्तीमित्यर्थः । दुःखविनिःसृतसलिलनयनस्य मुद्रितनयनत्वेऽपि निद्रा विद्राविता भवतीति सर्वजनप्रसिद्धम् । **या** शिखा **अस्मात्** एतस्माद्दिवसात् **व्यवहिततरे** अन्तरिततरे **जन्मनि** प्राक्तने भवे **आद्ये** प्रथमे **विरहदिवसे** वियोगदिने । यस्मिन्विरहो जातस्तस्मिन्दिने इत्यर्थः । **दाम** वेणिभूषणभूतां मालां **हित्वा** परित्यज्य **वेणिका** एकवेणीसदृशी । एकवेण्याकारेत्यर्थः । 'इवे खुप्रति-कृत्योः कः' इति स्वाविवार्थे कः । **शिखा** चूडा **बद्धा** विरचितेति **मया** कमठ-चरेण शम्बरासुरेण मया **स्मर्यमाणा** स्मृतिविषयतां नीयमाना **तां स्वां** तां स्वकीया-मेकवेणीभूतां शिखां **शापस्य अन्ते** अरविन्दमहाराजदत्तदण्डभोगकालावसानसमये **विरहवपुषां वः** वियोगमूर्तीना युष्माकम् । वियोगमूर्त्योर्युवयोरित्यर्थः । **सङ्गमं विधाय** संयोगं कृत्वा । संयोगविधेरनन्तरं **विगलितशुचा** वीतशोकेन । त्वयेत्यर्थः । विगलिता विनष्टा शुक् शोकः यस्य सः । तेन विगलितशुचा । **उद्वेष्टनीयां** उन्मोचनार्हां । उद्वेष्टितुमुन्मोचयितुं योग्या उद्वेष्टनीया । ताम् । 'तृव्यावाश्चार्हे' इत्यर्हार्थे व्यः । **निन्दन्तीं** गर्हमाणां । कुत्सयन्तीमित्यर्थः । **वक्त्रेन्दुग्रसन-रसिकां** वदनचन्द्रग्रासीकरणक्रियानैपुण्यवतीं । वक्त्रमेवेन्दुश्चन्द्रमाः वक्त्रेन्दुः । तस्य ग्रसनं ग्रासीकरणं । तत्र रसिकां ज्ञानवतीं सानन्दां वा । **श्रितां** मुखेन्दोः समीपं प्राप्तां **राहुमूर्तिं वा** राहुशरीरं इव आनन्दजनन्याः मुखकान्तेरपहारकत्वाद्राहुशरीरेण तस्या साधर्म्यमित्यभिप्रायः । **व्योमच्छायां** आकाशप्रकाशसंकाशकाशां । व्योम्नः आकाशस्य

च्छायेव च्छाया यस्याः सा। ताम्। 'ईवुपमानपूर्वस्य द्युखं गतार्थत्वात्' इति द्युखम्। **मदनशिखिनः** मदनाग्नेः। मदनः कामः एव शिखी अग्निः मदनशिखी। तस्य। 'शिखी केतुग्रहे वह्नौ मयूरे कुक्कुटे शरे। वलीवर्दे बके वृक्षे व्रतिभेदसचूडयोः' इति विश्वलोचने। **धूमयष्टीयमानां** दण्डाकारधूमरेखाप्रख्याम्। धूमः यष्टिः इव धूमयष्टिः। धूमयष्टिरिवाचरतीति धूमयष्टीयते। धूमयष्टीयते इति धूमयष्टीयमाना। ताम्। 'क्यङ् च' इति कर्तुः क्यङ् गौणादाचारेऽर्थे। **स्पर्शक्लिष्टां** स्पर्शपर्यस्तां। स्पर्शवाहुल्यजनिताव्यवस्थामित्यर्थः। **कठिनविषमां**। कठिना मार्दवविकला चासौ विषमा स्थपुटिता च कठिनविषमा। ताम्। शिखापारुष्यमत्र स्नेहोपदेहाभावनिवन्धनं तद्वैषम्यं च कङ्कतिकाकरणविजटीकरणाभावकारणकमित्यवसेयम्। खञ्जकुब्जादिवत्सः। खञ्जकुब्जः इत्यत्र कुब्जशब्दस्य प्राधान्यविवक्षायां विशेषत्वापत्तौ 'विशेषणं विशेष्येणेति' इति यसः यथा भवति तथा विषमाशब्दस्य प्राधान्यविवक्षायां विशेष्यत्वसम्पत्तेः 'विशेषणं विशेष्येणेति' इति यसः। **तां** विरहप्रथमदिवसे विरचितां **एकवेणीं** एकीभूतां विरहव्यथाव्यञ्जनीं वेणीं केशरनाविशेषं। 'वेणी नदीनां सङ्गे स्यात्केशबन्धान्तरेऽपि च। देवताडेऽपि वेणी स्त्री' इति विश्वलोचने। 'पूर्वकालैकसर्वजरत्पुराणनवकेवलं यश्चैकाश्रये' इति यसः। एका चासौ वेणी चेति तद्विग्रहः। **अयमितनखेन** अकृत्तनखेन। अयमिताः अकृत्ताग्राः नखाः पुनर्भवाः यस्य तेन। **करेण** हस्तेन **गण्डाभोगात्** कपोलविस्तारात्। गण्डस्य कपोलस्य आभोगः विस्तारः परिपूर्णता गण्डाभोगः। तस्मात्। 'आभोगो वारुणच्छत्रे यत्नपूर्णत्वयोरपि' इति 'गण्डस्तु पिटके योगभेदे खड्गिकपोलयोः। वरे प्रवीरे चिह्ने च वाजिभूषणबुद्बुदे'-इति च विश्वलोचने। **असकृत्** वारंवारं। पौनःपुन्येनेत्यर्थः। **सारयन्तीं** दूरीकुर्वाणां। प्रथमयापसारणक्रिययापसृतामप्येकवेणीं कपोलतलस्थितामेव मन्यमाना विरहजनितचित्तविभ्रमेण मुहुर्मुहुरपाकुर्वाणामित्यर्थः। अनेन चेतसो वैकल्यं संसूच्यते। **संश्रितान्** कृतसंश्रयान् **इष्टान्** अभिमतान् **वन्धून्** वान्धवान् **मृगयितुं इव** अन्वेषयितुमिव **जालमार्गप्रविष्टान्** गवाक्षद्वारेण कृतप्रवेशान्। 'जालस्तु क्षारकानायगवाक्षे दम्भवृक्षयोः' इति विश्वविलोचने। **अमृतशिशिरान्** अमृतमिवामृतेन वा शिशिरान् शीतान् **इन्दोः** चन्द्रमसः **पादान्** किरणान्। 'पादोऽस्त्री चरणे मूले तुरीयांशेऽपि दीधितौ। शैलप्रत्यन्तशैले ना' इति विश्वलोचने। **पूर्वप्रीत्या** पूर्वप्रेम्णा। वियोगपूर्वकाले यथाऽऽनन्दकरास्तेऽभवन् तथा विरहकालेऽप्यानन्दनिष्यन्दिनस्ते भवेयुरित्यभिप्रायेणेति भावः। **सङ्ग्रहीतुं** समाजयितुं सेवितुं वा **अभिमुखं** सम्मुखं **गतं** यातं **तथैव** तेनैव प्रकारेण **निवृत्तं**

प्रत्यागतं **सत् स्वनयनयुगं** स्वकीयं नेत्रयोर्युगलं **प्रत्याहृत्य** अपहृत्य । वियोगपूर्वकाले जनितानन्दनिष्यन्दाः शिशिरकरकिरणाः वियोगकालेऽपि पूर्ववदेव नेत्रयोरानन्दं जनयेयुरित्यभिप्रायेणेन्दुपादसङ्ग्रहार्थमभिमुखं गतं नयनयुगलं चन्द्रपादानां दुःखोत्पादकत्वमनुभूय तत्काले एव प्रत्यागतमपहृत्य **चेतसा** मनसा **धूयमानां** कम्पमानाम् । दूयमानामिति पाठेनात्र भाव्यं तस्य च पीड्यमानामित्यर्थो ग्राह्यः । **शिशिरकिरणे** सुधासूतौ । चन्द्रमसीत्यर्थः । शिशिराः शीतलाः किरणाः कराः यस्य सः । तस्मिन् । **स्वान्** स्वकीयान् । 'स्वो ज्ञातावात्मनि स्वं तु त्रिष्वात्मीये धनेऽस्त्रियाम्' इति विश्वलोचने । **करान्** मयूखान् । 'करस्तु पाणिप्रत्यायशुण्डारश्मिघनोपले' इति विश्वलोचने । **जालमार्गैः** गवाक्षविवरद्वारैः । 'जालस्तु क्षारकानायगवाक्षे दम्भवृक्षयोः' इति विश्वलोचने । **भूयोभूयः** पुनः पुनः **आतन्वाने** विस्तार्यमाणे **गताभ्यागतैः** गमनागमनैः । गतं गमनं च अभ्यागतं आगमनं च गताभ्यागतं । तैः । **खेदात्** विषादात् **पुनःअपि क्लिश्यमानं** पुनरपि पीड्यमानं **चक्षुः** नयनं **सलिलगुरुभिः** जलजडैः । सलिलेन अश्रुजलेन गुरूणि जडानि । तैः । **पक्ष्मभिः** लोचनलोमभिः । 'पक्ष्म लोचनलोमानि । पक्ष्म सूत्रादिसूक्ष्मांशे पक्ष्म स्यात्केसरेऽपि च' इति विश्वलोचने । **छादयन्तीं** आवृतां कुर्वाणां अत एव **साभ्रे** मेघसहिते । 'वनाघनो घनो मेघो जीमूतोऽभ्रं वलाहकः' इति धनञ्जयः । **अह्नि** दिने । दुर्दिने इत्यर्थः । **स्थलकमलिनीं इव** स्थलनलिनीमिव **नप्रबुद्धां** अविकासितां । दुर्दिनस्य घनाघनाक्रान्तव्योमप्रदेशत्वात्सूर्यकराक्रान्त्यसम्भवाद्यथा स्थलकमलिनी न विकसति तथा सा न विकसति स्म । न ह्लादत इत्यर्थः । साध्वीपक्षेऽनाह्लादितामिति भावः । **नसुप्तां** असुप्तां । दुर्दिनस्य मेघाच्छादितान्तरिक्षत्वादपि सूर्यापायाभावाद्यथा स्थलपद्मिनी मुकुलभावं नाश्रयति तथा सापि मुकुलभावं नाश्रयति स्म । अश्रुजलजडपक्ष्मभिः अर्धप्रच्छादितनयनायाः अर्धमुकुलितकमलया स्थलकमलिन्या साधर्म्यमत्र प्रदर्शितम् । **तां** वसुन्धराचरीं किन्नरकन्यकां **साध्वीं** सच्छीलसम्पन्नां **एवम्प्रायैः** एवंप्रकारैः । एवंप्रायैरित्यादिकपूर्वगामिश्लोकोक्तप्रकारैरित्यर्थः । **त्वयि** भवद्विषये **सुभगतां** सौभाग्यं व्यञ्जयद्भिः प्रकटीकुर्वद्भिः **यथार्थैः** अर्थगर्भैः **मत्सन्देशैः** मदीयैः वाचिकैः **सुखयितुं** ह्लादयितुं **निशीथे** अर्धरात्रे निशायां वा । 'निशीथस्तु निशामात्रार्धरात्रयोः' इति विश्वलोचने । **सद्मवातायनस्थः** सौधगवाक्षे स्थितः सन् **पश्य** विलोकय । इष्टकथनेन तां सुखयेत्यर्थः । तदुक्तं रत्नाकरे – 'सखी धात्री च पितरौ मित्रदूतशुकादयः । सुखयन्तीष्टकथनसुखोपायैर्वियोगिनीम् ॥' इति ।

For the purpose of consoling her by my messages of such kind, conformable to truth, revealing your sublimity, you, standing by the window of the house, should, at mid-night, direct your eyes towards her, a chaste woman, neither awake nor asleep like a lotus-creeper [ neither blossomed nor having its petals closed ] on a cloudy day, having her limbs lying disorderly, unhappy [ even ] in the flowery bed, afflicted excessively by mental worries, lying on ground-floor, resembling one drawn in a picture, love-begotten passion embodied in human form, emaciated owing to mental distress, resting on one side [ of her body ] on her bed of separation, resembling the form of the moon having only one digit remaining on the Eastern horizon, wearing a beatiful garland placed on the bosom to alleviate misery, passing that very night long owing to the separation from you, with hot tears, dropping down, restraining the eyelashes, gathering again and again, causing sleeplessness [ not allowing to go to sleep ], which [ night ] was passed by my beloved in the presence of your beloved like a moment along with me in enjoyments at will causing delight, throwing aside verily again and again her tress, dangling about her cheeks, coarse owing to her taking simple baths, the spot as if of the moon in the form of her face bearing a form like that of a deer separated [ from the moon in the form of her face ], exhaling lukewarm sighs, afflicting [ her ] sprout-like lower lip, indicative of her internal pangs, desirous of getting sleep the scop for which would be stemmed by a gushing flow of water [ i. e. tears ] from her eyes on account of her thinking ' How could a union with me, though effected in a dream, of my beloved, having his love-sickness intensified, with his misery become violent on account of his being separated from me, residing in a remote country, be effected ( actually ) of its own accord ? ', abusing that [ single ] braid of her hair which has to be untied by you, with your misery alleviated, after effecting a union of you two, the separations incarnate [ or embodied in flesh ] at the end of the period of the outlawry, which hair is being remembered by me to have been tied into a single braid without a garland on the first day of the separation in the birth remotest from the present one, by her hand with its nails unpared pushing aside repeatedly from the region of the cheek that single braid of hair, resembling the resorted bodily form of Rāhu finding pleasure in eclipsing the moon in th- form of her face, possessing darkness [ or colour ] like that of the sky, resembling a line of smoke of fire in the form of the god of love, dishevelled owing to its being

touched, rough and irregular, excited [ or pained ] at heart on withdrawing the couple of her eyes turned in the direction of the rays of the moon, cool like nectar, entered through the window-ways in search as if of the beloved relatives approched [ there ], in order to receive them [ i. e. the rays ] out of previous liking for them and turned back strightway, owing to the eye-lashes being heavy with water [ i. e. tears ] shutting her eyes troubled over and again by fatigue caused by going and coming frequently when the moon would be penetrating her rays through the window-ways.

सा सन्न्यस्ताभरणमबला पेलवं धारयन्ती
वीताहारा नयनसलिलैराप्लुतापाण्डुगण्डम् ।
शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रं
त्वामप्यन्तर्विचलितधृतिं तां दशां नेतुमर्हेत् ॥ ५२ ॥

अन्वयः—वीताहारा, सन्न्यस्ताभरणं, पेलवं, नयनसलिलैः आप्लुतापाण्डुगण्डं, दुःखदुःखेन शय्योत्सङ्गे असकृत् निहितं गात्रं धारयन्ती सा अबला अन्तर्विचलितधृतिं त्वां अपि तां दशां नेतुं अर्हेत् ।

**सेत्यादि** । **वीताहारा** विनष्टभोजना । विशेषेण इतः नष्टः आहारः भोजनं यस्याः सा वीताहारा । 'आहारो भोजने पुंसि स्यादाहरणहारयोः' इति विश्वलोचने । वियोगजनितदुःखाक्रान्तमनस्कत्वात्त्यक्तान्नादिचतुर्विधाहारेत्यर्थः । **सन्न्यस्ताभरणं** परिहृतालङ्कारं । अलङ्कारपरिहारोप्यत्र वियोगजनितदुःखनिबन्धनः एव । **पेलवं** कृशीभूतम् । 'घनं निरन्तरं सान्द्रं, पेलवं विरलं तनु' इत्यमरः । **नयनसलिलैः** नेत्रयुगलगलदस्रजलैः **आप्लुतापाण्डुगण्डं** आर्द्रीकृतेषत्पाण्डुकपोलम् । आ समन्तात्प्लुतौ आर्द्रतां गतौ आपाण्डू ईषत्पाण्डुरिमानौ गण्डौ कपोलौ यस्य तत् । 'गण्डस्तु पिटके योगभेदे खड्गिकपोलयोः । वरे प्रवीरे चिह्ने च वाजिभूषणबुद्बुदे' इति विश्वलोचने । **दुःखदुःखेन** दुःखप्रकारेण । 'प्रकारे गुणोक्तेर्वा' इति प्रकारेऽर्थे द्विः । **शय्योत्सङ्गे** शयनतले । शयनोपरीत्यर्थः । **असकृत्** बहुवारं । शय्यारोहणावरोहणे पूर्वानुभूतरतिस्मृतिनिबन्धने । **निहितं** स्थापितं गात्रं शरीरम् । 'गात्रं गजाग्रजङ्घादिविभागेऽप्यङ्गदेहयोः' इति विश्वलोचने । **धारयन्ती** वहमाना **सा अबला** सा दुर्बला किन्नरकन्यका वसुन्धराचरी **अन्तर्विचलितधृतिं** अन्तःप्रकम्पितधैर्यम् । अन्तः विचलिता प्रकम्पिता धृतिः धैर्यं यस्य सः। तम्। 'धृतिर्धारणसन्तुष्टिधैर्ये योगान्तरेऽ-

ध्वरे' इति विश्वलोचने । **त्वां अपि** भवन्तं योगिनमपि **तां** किन्नरकन्यकादशासदृशीं **दशां** अवस्थां । वीताहारत्वाद्यवस्थामित्यर्थः । **नेतुं** प्रापयितुं **अर्हेत्** समर्था भवेत् ।

That frail woman, rejecting food [ or meal ], bearing an emaciated body, with ornaments discarded, placed repeatedly on the region of the bed with distress, with pale cheeks moistened with water [ tears ] dropping down form the eyes, would be able to occasion you, with your mind's stable equilibrium disturbed, to attain to that state.

**शय्योपान्ते भृशमपसुखा मत्स्यलोलं लुलन्ती**
**बद्धोत्कम्पश्वसितविवशा कामपात्रायिता सा ।**
**त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं**
**प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ५३ ॥**

अन्वयः— भृशं अपसुखा शय्योपान्ते मत्स्यलोलं लुलन्ती बद्धोत्कम्पश्वसितविवशा कामपात्रायिता सा नवजलमयं अस्रं त्वां अपि अवश्यं मोचयिष्यति । करुणावृत्तिः सर्वः प्रायः आर्द्रान्तरात्मा भवति ।

**शय्येत्यादि । भृशं** अत्यर्थं **अपसुखा** सुखवर्जिता । दुःखितेत्यर्थः । अपगतं सुखं यस्याः सा अपसुखा । 'अप स्यादपकृष्टार्थे वर्जनार्थे विपर्यये । वियोगे विकृतौ चौर्ये हर्षनिर्देशयोरपि' इति विश्वलोचने । **शय्योपान्ते** शय्यायाः पार्श्वभागे । **मत्स्यलोलं लुलन्ती** मत्स्य इव लुठन्ती । 'कर्मणि चेवे' इति कर्तरि वाचि णमिवार्थे तस्यैव धोरनुप्रयुक्तत्वात् । **बद्धोत्कम्पश्वासितविवशा** । बद्धः जनितः उत्कम्पः प्रकम्पः यस्यां सा । श्वसितेन श्वासेन विवशा अवश्यमानसा श्वसितविवशा । बद्धोत्कम्पा चासौ श्वसितविवशा च बद्धोत्कम्पश्वसितविवशा । श्वसितविवशेत्यस्य प्राधान्यविवक्षया 'विशेषणं विशेष्येणेति' इति सः । 'पुंवद्यजातीयदेशीये' इति पुंवद्भावः । यद्वा बद्धः जनितः उत्कम्पः यस्य यस्मिन् वा तत् । तेन श्वसितेन विवशा बद्धोत्कम्पश्वासिताविवशा । **कामपात्रायिता** । कामस्य रिरंसायाः पात्रं भाजनं कामपात्रं । कामपात्रमिवाचरति स्म कामपात्रायिता । संजातरिरंसेत्यर्थः । रिरंसासमुत्पत्तेस्तस्या बद्धोत्कम्पश्वसितविवशतेत्यध्यवसेयम् । **सा** वसुन्धराचरी किन्नरकन्यका । **नवजलमयं** नव्यसलिलरूपं **अस्रं** अश्रु । आस्रमिति वा पाठः । 'अस्रमास्रश्च पुल्लिङ्गो क्लेशे च रुधिरेऽश्रुणि' इति वैजयन्ती । **त्वां अपि** भवन्तमपि **मोचयिष्यति** । 'द्विकर्मसु पचादीनामुपसङ्ख्यानम्' इति मुचेः पचादित्वाद्द्विकर्मकत्वम् । **करुणावृत्तिः** दयामयोऽन्तःकरणव्यापारः । करुणाया वृत्तिः व्यापारः यत्र सः करुणावृत्तिः । यद्वा करुणा

वृत्तिः यस्य सः । **सर्वः** सर्वः जनः **प्रायः** बाहुल्येन **आर्द्रान्तरात्मा** सबाष्पान्तःकरणः **भवति** जायते । सकरुणत्वमन्तरेण अन्तरात्मन आर्द्रत्वं न सम्भवति । त्वं आर्द्रान्तरात्मा, अतस्त्वया सकरुणेनावश्यं भाव्यम् । सकरुणत्वात्तस्यास्तां तथाविधामवस्थां दृष्ट्वा तव नयनयोराबद्धधारमश्रु निपतिष्यतीति भावः । ननु महाकविश्चक्षुःप्रीतिसमाख्यामादिमामवस्थामुपेक्ष्य मनःसक्त्याद्यवस्थान्तराण्येव किं वर्ण्यविषयतां निनायेति चेत्, उच्यते । प्रथमदर्शनात्पूर्वमसञ्जातपरस्परदर्शनयोरेव चक्षुःप्रीतिस्सम्भवति, न पुनः पूर्वं जातदर्शनयोः समुत्पन्नप्राग्भवस्मृतेर्वा । वसुन्धराचर्याः किन्नरकन्यकायाः समुपजातप्राग्भवस्मृतित्वात् चक्षुःप्रीत्याख्यप्रथममदनावस्था न सम्भवतीति न साऽत्र वर्णितेति विज्ञेयम् । उक्तं च — 'रत्युल्लाससमुद्भवाः खलु दशावस्थाश्च चक्षुर्मनः— । प्रीत्यासक्तियुगं पुनर्भुवि तथा सङ्कल्पको जागरः ॥ सम्प्रोक्ता तनुता तथा च विषयद्वेषस्त्रपानाशनं । मोहो मूर्च्छनमप्यतो मृतिरिति प्रोक्ता दशा विच्युतैः' ॥ इति ।

She, extremely unhappy, wallowing like a fish near a bed, reduced to the state of helplessnees owing to her tremulous sighs, with passion excited, would surely make you shed tears in the form of fresh water; everyone compassionate by nature, is generally stirred to tears [ or has his inner heart moistened, ].

**बन्धुप्रीतिं गुरुजन इवादृत्य कान्ताद्वितीये**
**जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मात् ।**
**संवासाच्च व्यतिकरमिमं तत्त्वतो वेद्मि तस्मा—**
**दित्थम्भूतां प्रथमविरहे तामहं तर्कयामि ॥ ५४ ॥**

अन्वयः— कान्ताद्वितीये मयि गुरुजने बन्धुप्रीतिं इव आदृत्य तव सख्याः मनः सम्भृतस्नेहं जाने । अस्मात् संवासात् च इमं व्यतिकरं तत्त्वतः वेद्मि; तस्मात् प्रथमविरहे तां अहं इत्थम्भूतां तर्कयामि ।

**बन्धुप्रीति**मित्यादि । **कान्ताद्वितीये** सहजानौ । कान्ता द्वितीया यस्य सः कान्ताद्वितीयः । तस्मिन् । **मयि** कमठचरे शम्बरासुरे मयि **गुरुजने** ज्येष्ठजने । गुरुर्ज्येष्ठश्चासौ जनश्च गुरुजनः । तस्मिन् । **बन्धुप्रीतिं इव** बान्धवानुरागमिव **आदृत्य** विगणय्य तव भवतः **सख्याः** प्रेयस्याः **मनः** अन्तरात्मा **सम्भृतस्नेहं** सञ्चितानुरागं । सम्भृतः सञ्चितः स्नेहः अनुरागः यस्मिंस्तत् । 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ

दोहदः ' इत्यमरः। **जाने** अवैमि । **अस्मात्** स्नेहज्ञानाद्धेतोः **संवासात् च** सहवासाच्च **इमं** एनं **व्यतिकरं** व्यसनं । 'भवेद्व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः ' इति विश्वलोचने । **तत्त्वतः** याथार्थ्येन **वेद्मि** जानामि । **तस्मात्** ततः कारणात् **प्रथमविरहे** अद्वितीये वियोगे । प्रथमः अद्वितीयश्चासौ विरहः वियोगश्च प्रथमविरहः । तस्मिन् । दीर्घकालमनुभूतिविषयत्वादविषह्यदुःखोत्पत्तिनिमित्तत्वाच्च विरहस्य प्राथम्यमत्रावसेयम् । **तां** वसुन्धराचरीं किन्नरकन्यकां **अहं इत्थम्भूतां** पूर्ववर्णितावस्थामापन्नां **तर्कयामि** उत्प्रेक्षे ।

I think that the mind of your female friend is saturated with affection for me, an elderly one, along with my wife [ in company with my beloved ], having regarded it ( affection ) as that for the elderly, relatives; owing to this and to my habitation in company with her [ your beloved ] [ or our cohabitation ], I know the calamity befallan her [ accurately ]; I, therefore, conjecture her to have undergone this state in the period of the incomparable separation.

**तन्मे सत्यं सकलमुदितं निश्चिनु स्वार्थसिद्ध्यै**
**स्निग्धां वृत्तिं मनसि घटयन् येन साध्यानुविद्धम् ।**
**वाचालं मां न खलु सुभगम्मन्यभावः करोति**
**प्रत्यक्षं ते निखिलमचिराद्भ्रातरुक्तं मया यत् ॥ ५५ ॥**

अन्वयः– [ हे ] भ्रातः यत् साध्यानुविद्धं निखिलं मया ते प्रत्यक्षं स्वार्थसिद्ध्यै अचिरात् उक्तं सत् मे सकलं उदितं मनसि स्निग्धां वृत्तिं घटयन् सत्यं निश्चिनु येन खलु सुभगम्मन्यभावः मां वाचालं न करोति ।

तदित्यादि । हे **भ्रातः** भो सहोदर **यत् साध्यानुविद्धं** सिषाधयिषितप्रणुन्नं । साध्येन सिषाधयिषितेन अनुविद्धं प्रणुन्नं साध्यानुविद्धम् । **निखिलं** सकलं **मया** कमठचरेण शम्बरासुरेण **ते** तव **प्रत्यक्षं** समक्षं **स्वार्थसिद्ध्यै** स्वाभिप्रेतप्रयोजनसिद्ध्यर्थं **अचिरात्** सद्यः **उक्तं** कथितं **तत् मे** मम **सकलं** सर्वं **उदितं** कथनं । ' नपुंसके भावे क्तोऽभ्यादिभ्यः ' इति भावे क्तः नप् च । **मनसि** हृदये **स्निग्धां** स्नेहमयीं **वृत्तिं** प्रवृत्तिं **घटयन्** जनयन् विरचयन् वा **सत्यं** अन्यूनमनतिरिक्तं याथातथ्यमविपरीतं निःसन्देहं च **निश्चिनु** अवधारय । **येन** यतः कारणात् **खलु सुभगम्मन्यभावः** सुजनमानित्वं । सुभगमात्मानं मन्यते सुभगम्मन्यः । तस्य भावः सुभगम्मन्यभावः । ' खश् स्वस्य ' इति खश् । खित्वात् ' मुमचः ' इति मुमागमः । **मां वाचालं**

जल्पाकं । 'स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्' इत्यमरः । 'शिप्यालाटौ' इत्यालः । **न करोति** न विदधाति । अहं महानस्मीति कल्पनाशिल्पिकल्पितो भावो मे जल्पाकत्वं प्रतिबध्नाति । मन्माहात्म्यापेक्षया न मे इतोऽधिकं वक्तुमिच्छास्ति, ततो माहात्म्यहानिसम्भवात् । 'भगं तु ज्ञानयोनीच्छायशोमाहात्म्यमुक्तिषु । ऐश्वर्यवीर्यवैराग्यधर्मश्रीरत्नभानुषु' इति विश्वलोचने ।

O brother ! you, with an affectionate mind, should ascertain the whole of my statement, urged by the matter at issue [ or impelled by the object of attaining what is to be attained ], made recently by me in your presence to gain my ends, to be true [ accurate ]; for a thought of self-importance does not allow me to become loquatious.

**भूयः प्रीत्यै भवतु सुदती सा मदाज्ञाकृतस्ते**
**स्निग्धं चक्षुस्त्वयि निदधती दृष्टमात्रे पुरा यत् ।**
**रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं**
**प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ॥ ५६ ॥**

अन्वयः-- त्वयि दृष्टमात्रे पुरा यत् अलकैः रुद्धापाङ्गप्रसरं, अञ्जनस्नेहशून्यं, अपि च मधुनः प्रत्यादेशात् विस्मृतभ्रूविलासं [ तत् ] स्निग्धं चक्षुः निदधती सा सुदती मदाज्ञाकृतः ते भूयः प्रीत्यै भवतु ।

**भूय** इत्यादि । **त्वयि** मरुभूतिचरे त्वयि पार्श्वे **दृष्टमात्रे** आलोकितमात्रे **पुरा** प्रथमं । भविष्यदासन्ने इत्यर्थः । यत् **अलकैः** कुन्तलैः । कुटिलकेशैरित्यर्थः । **रुद्धापाङ्गप्रसरं** प्रतिबद्धनेत्रान्तप्रदेशगमनं । अपाङ्गप्रदेशप्रसरप्रतिरोधात्कटाक्षविक्षेपविकलत्वं ध्वनितमित्यवसेयम् । 'अपाङ्गस्त्वङ्गविकले नेत्रान्ते तिलके पुमान्' इति विश्वलोचने । 'प्रसरस्तु विसर्पणम्' इत्यमरः । **अञ्जनस्नेहशून्यं** अकृताञ्जनसंस्कारं । अञ्जनस्याक्षिकज्जलस्य सौवीरस्य वा स्नेहः देहः अञ्जनस्नेहः । तेन शून्यं विकलम् । 'अञ्जनं तु रसाञ्जने । अक्षिकज्जलसौवीरे गिरिभेदेऽप्यथाञ्जने' इति विश्वलोचने । **अपि च** किञ्च **मधुनः** रतिफलस्य मैरेयाभिधवृष्यरसस्य । 'मधु पुष्परसे क्षौद्रे मद्यक्षीराप्सु न द्वयोः । मधुर्मधूके सुरभौ चैत्रे दैत्यान्तरे पुमान् । जीवाशाके स्त्रियामेवं मधुशब्दः प्रयुज्यते ।' इति विश्वलोचने । **प्रत्यादेशात्** प्रत्याख्यानात् । परित्यागादित्यर्थः । 'प्रत्यादेशो निराकृतिः' इत्यमरः । **विस्मृतभ्रूविलासं** विस्मृतभ्रूभङ्गम् । भ्रुवोर्विलासः भ्रूविलासः । भ्रूभङ्गः इत्यर्थः । विस्मृतः भ्रूविलासः येन तत् । यद्वा

रुद्धापाङ्गप्रसरत्वस्य विरहनिमित्तत्वादलकैरितीत्थम्भूतलक्षणे भा । ततोऽलकैरित्यस्यालकैर्लक्षितमिति भावः । सालकमित्यर्थः । अलकानामकृतसंस्कारत्वान्नेत्रप्रदेशे लम्बमानत्वात् सालकत्वम् । 'येनाङ्गविकारैरित्थम्भावौ' इति भा । तत् **स्निग्धं** वात्सल्यसम्पन्नं । प्रेमव्यक्तियुक्तमित्यर्थः । 'स्निग्धो वात्सल्यसम्पन्ने चिक्कणेऽप्यभिधेयवत्' इति विश्वलोचने । **चक्षुः** नयनं **यत्** यतः **त्वयि** भवति पार्श्वे **निदधती** निश्चलीकुर्वन्ती । 'पुरायावतोर्लट्' इति लट् । तत् ततः **सा** वसुन्धराचरी किन्नरकन्यका **सुदती** । सुजाताः दन्ताः अस्याः सा सुदती । 'वयसि दन्तस्य दतृ' इति दन्तस्य दतृ इत्ययमादेशः, वयसो गम्यमानत्वात् । **मदाज्ञाकृतः** सन्देशहरणविषयिणीं ममाज्ञां कुर्वतः । ममाज्ञा मदाज्ञा । तां करोतीति मदाज्ञाकृत् । तस्य । ते भवतः **भूयः** दीर्घकालोपभोग्यविरहानन्तरं पुनः **प्रीत्यै** प्रेम्णे आनन्दाय वा **भवतु** भूयात् ।

May she, with beautiful teeth [ i. e. in the prime of her life ], first of all fixing her lovely eyes, with their side-glances prevented by the tresses, devoid of application of collyrium, and moreover having the graceful movement [ or the amorous play ] of the eyebrows forgotten owing to her renouncement of intoxicating juice, upon you the very moment she would see you, be for the happiness of you [ or bring happiness to you ], obeying my order.

**मत्प्रामाण्यादसुनिरसने निश्चितात्मा त्वमेनां**
**भोक्तुं याया धनदनगरीं तत्प्रमाणाय सज्जे ।**
**त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या**
**मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥ ५७ ॥**

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचिते मेघदूतवेष्टितवेष्टिते श्रीपार्श्वाभ्युदये भगवत्कैवल्यवर्णनं ( ? ) नाम तृतीयः सर्गः ।

अन्वयः— असुनिरसने निश्चितात्मा त्वं एनां भोक्तुं मत्प्रामाण्यात् धनदनगरीं यायाः; तत्प्रमाणाय सज्जे त्वयि आसन्ने [ सति ] मृगाक्ष्याः उपरिस्पन्दि नयनं मीनक्षोभात् चलकुवलयतुलां एष्यति इति शङ्के ।

**मदित्यादि** । **असुनिरसने** स्वप्राणव्यपरोपणे । असूनां प्राणानां निरसनं निरासः व्यपरोपणं असुनिरसनं । तत्र । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । 'स्यान्निरासे निरसनं वधे निष्ठीवने तथा' इति विश्वलोचने । आत्मवधे इत्यर्थः ।

**निश्चितात्मा** कृतनिश्चयः । निश्चितः निर्णीतः आत्मा मनः यस्य सः । सनिश्चयमनाः इत्यर्थः । 'आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु' इति विश्वलोचने । त्वं मरुभूतिचरः पार्श्वस्त्वं । **एनां** वसुन्धराचरीं किन्नरकन्यकां **भोक्तुं** रत्यनुभूतिविषयतां नेतुं **मत्प्रामाण्यात्** मद्वचनं प्रमाणीकृत्य । मदुक्तौ विश्वस्येत्यर्थः । मम प्रामाण्यं सत्यवादित्वं मत्प्रामाण्यं । तस्मात् । मत्प्रामाण्यमुररीकृत्येत्यर्थः । 'ल्यब्लोपे कर्माधारे' इति ल्यान्तस्य लोपे कर्मणि का । 'प्रमाणमेकतेयत्ताहेतिचन्तृप्रमातृषु । सत्यवादिनि नित्ये च मर्यादाहन्तृशास्त्रयोः' इति विश्वलोचने । **धनदनगरीं** कुबेरराजधानीं अलकाख्यां । धनदस्य कुबेरस्य नगरी धनदनगरी । ताम् । 'धनदो दातरि श्रीदे' इति विश्वलोचने । **यायाः** गच्छेः । **तत्प्रमाणाय** मदुक्तवचनाविसंवादित्वं निर्णेतुम् । तस्य मदुक्तवचनस्य प्रमाणं तत्प्रमाणं । तस्मै । मदुक्तं प्रमाणयितुमित्यर्थः । 'क्यर्थवाचोऽर्थात्कर्मणि' इति अप् कर्मणि । **सज्जे** उपस्थिते सन्नद्धे वा **त्वयि** भवति **आसन्ने** समीपं प्राप्ते सति **मृगाक्ष्याः** हरिणनयनायाः । 'स्वाङ्गान्नीचोऽस्फोडः' इति स्त्रियां ङीत्यस्य वैकल्पिकत्वान्न ङी । मृगस्येवाऽक्षिणी नयने यस्याः सा । तस्याः । **उपरिस्पन्दि** उपरिष्टभागे तिरश्चीनं परिवर्तमानम् । **नयनं** नेत्रं जातावेकवचनत्वान्नेत्रे इत्यर्थः । **मीनक्षोभात्** शफरकृतोद्वर्तनात् । **चलकुवलयश्रीतुलां** सकम्पोत्पलशोभातुल्यतां । 'चलश्चलाचले कम्पे' इति 'तुला राशौ पलशते तुल्यतामानभेदयोः । वन्धाय गृहदारूणां पीठिकायां समाजने ॥' इति च विश्वलोचने । चलानि च तानि कुवलयानि च चलकुवलयानि । तेषां श्रीः शोभा । तया तुला सादृश्यं । ताम् । 'तुल्यार्थैर्भा' इति भा । अत्र सादृश्यवाचित्वात्तुलाशब्दस्य तद्योगेऽपि भासः । **एष्यति इति** गमिष्यतीति शङ्के तर्कयामि ।

इति श्रीपार्श्वाभ्युदये मुक्तेन्दुवर्मविरचितायां बालप्रबोधिन्याख्यायां व्याख्यायां शठकमठकृतभगवदुपसर्गवर्णनं नाम तृतीयः सर्गः ।

You, with your mind determined to dispell [ or destroy ] the soul [ or misery ], should, relying on my truthfulness, visit the city [ capital ] of Kubera to injoy her. I think that the eyes of the fawn-eyed one, moving sideways in the upper parts when you, ready for convincing yourself of it [ of the statement made by me ], would be near, would attain resemblance to the beauty of blue lotuses, set in motion owing to the disturbance of the fish [ i. e. owing to the pretty kettle of the fish ].

---

# अथ चतुर्थः सर्गः ।

सन्दिष्टं च प्रणयमधुरं कान्तया मे द्वितीयैः
प्राणैः प्राणा नवनववरः सन्निति त्वां प्रतीदम् ।
तत्कर्तुं त्वं त्वरय लघु नः किं किमेवं न कुर्या
वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयैः ॥ १ ॥

अन्वयः—मे द्वितीयैः प्राणैः कान्तया '[ त्वं अस्याः ] प्राणाः, नवनववरः, सन्' इति त्वां प्रति इदं प्रणयमधुरं सन्दिष्टं । तत् कर्तुं त्वं त्वरय । मदीयैः कररुहपदैः मुच्यमानः वामः [ त्वं ] नः अस्याः किं किं एवं लघु न कुर्याः १ ।

**सन्दिष्टमित्यादि** । **मे** मम **द्वितीयैः** द्वयोः पूरणैः । 'द्वेस्तीयः' इति स्यिपूरणेऽर्थे द्विशब्दात्तीयः । **प्राणैः** असुभिः । नियतलिङ्गवचनत्वात्पुल्लिङ्गबहुवचनत्यान्तत्वेऽपि प्राणैरितिपदस्य कान्तयेतिस्त्रीलिङ्गैकवचनत्यान्तविशेष्यपदाविशेषणत्वमदोषार्हम् । मद्द्वितीयप्राणभूतया मम कान्तयेत्यर्थः । त्वमस्याः वसुन्धराचर्याः किन्नरकन्यकायाः **प्राणाः** प्राणभूतः । अत्राऽपि विभिन्नलिङ्गवचनयोः विशेष्यविशेषणभावः पूर्ववदेव । **नवनववरः** अभिनवप्रियः । नवनवं नवप्रकारं वरं अभीष्टं यस्य सः । 'प्रकारे गुणोक्तेर्वा' इति प्रकारेऽर्थे गुणोक्तेर्द्वैधीभावः यवच्च कार्यम् । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये' इत्यमरः । यद्वा नवनवं नवप्रकारं वृणोतीति शीलं यस्य सः नवनववरः । 'हेतुशीलानुलोम्येऽशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदे' इति कर्मणि वाचि शीलेऽर्थेऽट् । **सन्** साधुः प्रशस्तः वा । 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमरः । 'सत्साधौ विद्यमानेऽपि प्रशस्ते पूजिते त्रिषु' इति विश्वलोचने । **इति** इति हेतोः । 'इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः । इति प्रकरणेऽपि स्यात्समाप्तौ च निदर्शने' इति विश्वलोचने । **त्वां प्रति** भवन्तमुद्दिश्य । 'मात्रार्थे चाभिमुख्ये च प्रकाशे च स्मृतं प्रति' इति विश्वलोचने । प्रतिशब्दस्य कर्मप्रवचनीयत्वात्त्वामिती द्वितीयाविभक्तिः । **इदं** एतत् **प्रणयमधुरं** प्रणयेन प्रेम्णा मधुरं सुभगं यथा स्यात्तथा । प्रीतिसुभगमित्यर्थः । **सन्दिष्टं** भाषितम् । सन्दिश्यते स्मेति सन्दिष्टं । **तत्** सन्देशद्वारेण कथितं कर्तव्यं **कर्तुं** विधातुं **त्वं** भवान् **त्वरय** त्वरां करोतु । 'मृदो ण्यर्थे णिज्बहुलं' इति

करोत्यर्थे त्वराशब्दाण्णिच् । त्वरयेत्यस्य णिजन्तधातुरूपत्वे 'आत्मानं' इतीवन्तं पदमध्याहार्यम् । **मदीयैः** मामकीनैः । ममेदं मदीयं । तैः । मत्कृतैरित्यर्थः । मच्छब्दस्य त्यदादिषु पाठात् 'त्यदादेः' इति द्धसञ्ज्ञकत्वाद् 'दोऽच्छः' इति छः । **कररुहपदैः** खड्गकृतव्रणाङ्कैः । कररुहः खड्गः । तस्य पदानि चिह्नानि । तैः । खड्गाघातजनितव्रणैरित्यर्थः । **मुच्यमानः** शरीरात्पृथक्क्रियमाणः । खड्गप्रहारजनितव्रण कृतमृतिरित्यर्थः । **वामः** धृतपयोधरशरीराकारः । 'वामः सव्ये हरे कामे घने वित्ते तु न द्वयोः' इति विश्वलोचने । 'वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु' इति मेदिन्याम् । मद्धेतिहतिजनितव्रणकृतमृत्यनन्तरमुपात्तमुदिरशरीराकारो मरुभूतिचरस्त्वं **नः** अस्माकं । अस्मत्सम्बन्धिन्याः इत्यर्थः । **अस्याः** एतत्सम्बन्धि **किं किं** किं किं कार्यं **एवं** प्रोक्तप्रकारेण **लघु** शीघ्रं । 'लघु क्षिप्रमरं द्रुतं' इत्यमरः । **न कुर्याः** न विदध्याः । अपि तु तत्सम्बन्धि सर्वमेव कार्यं कुर्याः एवेति भावः ।

Even by my beloved, my second soul, this has been sent as a message, in a way charming to her affection for you, to you owing to your being second soul of her (of your beloved), owing to your making a choice of whatever is new, [ and ] owing to your being noble; you should hurry up to carry it into effect. What work [ or what is it ] of hers, our relative, which you, [ assuming the form of ] a cloud [ after ] your separation [ from your body ] caused by the wounds inflicted by my sword, would not bring into effect?

**भोभो भिक्षो मयि सहरुपि क्व प्रयास्यस्यवश्यं**
**त्वामुद्धेतिप्रणिपतनकैः सारयिष्ये तदग्रम् ।**
**न प्राणान्स्वान्घटयितुमलं तावको निर्णयो वा**
**मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या ॥ २ ॥**

अन्वयः—भो भो भिक्षो मयि सहरुपि [ सति ] क्व प्रयास्यसि ? उद्धेतिप्रणिपतनकैः तदग्रं त्वां अवश्यं सारयिष्ये । चिरपरिचितं मुक्ताजालं दैवगत्या त्याजितः तावकः निर्णयः स्वान् प्राणान् घटयितुं न वा अलम् ।

**भो भो** इत्यादि । **भो भो भिक्षो** हे योगिन् । आभीक्ष्ण्ये द्विः । भोसिति सकारान्तो निपातः । 'ओदाद्योऽशि' इति रेर्यः । 'हलि' इति अशि हलि परतः यकारस्य खम् । **मयि** शम्बरासुरे मयि **सहरुपि** सकोपे सति । 'यद्भावाद्भावगतिः' इतीप् । 'वा नीचः' इति सहस्य सभावस्य वैकल्पिकत्वादत्र न सभावापत्तिः । क्व

कुत्र **प्रयास्यसि** गमिष्यसि । **उद्धेतिप्रणिपतनकैः** उन्नामितशस्त्रप्रपातैः । उद्गता चासौ हेतिश्च उद्धेतिः । तस्याः प्रणिपतनकैः प्रपातैः । 'हेतिर्ज्वालार्कतेजसोः । स्त्रियां शस्त्रेऽपि' इति विश्वलोचने । **तदग्रं** हेत्यग्रं । शस्त्राग्रमित्यर्थः । **त्वां** भवन्तं **अवश्यं** निश्चयेन **सारयिष्ये** गमयिष्यामि । त्वच्छरीरान्तः प्रवेशं कारयिष्यामीति भावः । सृधातोर्गम्यर्थत्वात् 'ज्ञागम्यद्यर्थदृश्धेः' इति अण्यन्तस्य तस्य कर्तुः तदग्रस्य णौ कर्मसञ्ज्ञा । **चिरपरिचितं** चिरकालं यावदनुभूतिविषयतां नीतं **मुक्ताजालं** मुक्तामणिविरचितमानायाकारं मञ्चकोपरिष्ठात्स्थापनयोग्यं जालकं । 'मोत्याची जाळी' इति महाराष्ट्रयाम् । 'जालस्तु क्षारकानायगवाक्षे दम्भवृन्दयोः' इति विश्वलोचने । अत्र मुक्ताजालमिति पदमुपलक्षणार्थं 'काकेभ्यो दधि रक्ष्यताम्' इत्यादिवत् । तेन राजैश्वर्यस्य ग्रहणम् । राज्ञ ऐश्वर्यमित्यर्थो ग्राह्यः । **दैवगत्या** दैवकृतया गत्याऽवस्थाविशेषेण । कर्मजनितेन विशेषेणेत्यर्थः । प्रत्याख्यानावरणकषायचतुष्कक्षयोपशमजनितेनावस्थाविशेषेणेति जैनाभिमतकर्मसिद्धान्तापेक्षयाऽयमर्थः । 'गतिर्दशायां गमने ज्ञाने यात्राभ्युपाययोः । नाडीव्रणे सरण्यां च गतिर्जन्मान्तरेऽपि च' इति विश्वलोचने । **त्याजितः** परिहारितः । त्यजेर्ण्यन्तात्कर्मकर्तरि क्तः । द्विकर्मसु पचादीनामुपसङ्ख्यानात्त्यजेर्द्विकर्मकत्वम् । **तावकः** त्वदीयः । 'तवकममकमेकार्थे' इत्येकार्थेऽञि परतो युष्मदस्तवकादेशः । **निर्णयः** निश्चयः **स्वान्** स्वकीयान् । 'स्वो ज्ञातावात्मनि स्वं तु त्रिष्वात्मीये धनेऽस्त्रियाम्' इति विश्वलोचने । **प्राणान्** असून् **घटयितुं** तव शरीरे एकत्रावस्थापयितुं **न वा अलं** नैव समर्थः ।

O sage ! where would you get off ( sefely ), when I would have my wrath stirred up ? With strokes of my drawn ( uplifted ) sword I will certainly make its end pass through you. Your decision, made to renounce the net of pearls [ i. e. royal insignia ] familiar since long through the contrivance of fate, is not at all capable of holding your vital airs together.

किं ते वैरिद्विरदघटाकुम्भसम्भेदनेषु
प्राप्तस्थेमा समरविजयी वीरलक्ष्म्याः करोऽयम् ।
नाऽस्मत्खड्गः श्रुतिपथमगाद्रक्तपानोत्सवानां
सम्भोगान्ते मम समुचितो हस्तसंवाहनानाम् ॥ ३ ॥

अन्वयः— वैरिद्विरदघटाकुम्भसम्भेदनेषु प्राप्तस्थेमा, समरविजयी, वीरलक्ष्म्याः

करः, रक्तपानोत्सवानां सम्भोगान्ते मम हस्तसंवाहनानां समुचितः अयं अस्मत्खड्गः ते श्रुतिपथं न अगात् किम् ?

किमित्यादि। **वैरिद्विरदनघटाकुम्भसम्भेदनेषु** द्विपत्कुम्भिकुम्भस्थल-सम्भेदनक्रियासु। वैरं शात्रवमस्त्यस्येति वैरी। 'अतोऽनेकाचः' इति इन्। 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः। द्वौ रदनौ दन्तौ यस्य सः द्विरदनः। गजः इत्यर्थः। वैरिणां सपत्नानां द्विरदनाः गजाः वैरिद्विरदनाः। 'दन्ती दन्तावलो हस्ती द्विरतोऽनेकपो गजः' इत्यमरः। तेषां घटा समूहः। 'करिणां घटना घटा' इत्यमरः। तस्याः कुम्भाः गजमूर्धांशाः। 'कुम्भो राश्य-न्तरे। समाधौ गजमूर्धांशे कुम्भकर्णसुते विटे' इति विश्वलोचने। तेषां सम्भेदनानि विदारणक्रियाः। तेषु। **प्राप्तस्थेमा** लब्धस्थैर्यः। प्राप्तः लब्धः स्थेमा स्थैर्यं येन सः प्राप्तस्थेमा। 'पृथ्वादेर्वेमन्' इति भावे इमनि 'प्रियस्थिरस्फिरायादेरः' इति स्थिर-शब्दावयवभूतस्थेकारादेर्वर्णसङ्घातस्याऽऽस्वम्। **समरविजयी** सङ्ग्रामविजयशीलः। समरं विजेतुं शीलमस्येति समरविजयी। 'परिभूजिदक्षिविश्रीण्वमाव्यथाभ्यमः' इतीन् शीलार्थे। 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः। **वीरलक्ष्म्याः** जयलक्ष्म्याः। वीराणां लक्ष्मीः श्रीः वीरलक्ष्मीः। तस्याः। 'लक्ष्मीः श्रीरिव सम्पत्तौ पद्माशोभाप्रियङ्गुषु' इति विश्वलोचने। समरविजयः एव वीराणां युद्धधुरन्धराणां लक्ष्मीः। **करः** हस्तभूतः। **रक्तपानोत्सवानां** रुधिरपिपासूनाम्। रक्तस्य रुधि-रस्य पानं रक्तपानं। तत्र उत्सवः इच्छाप्रसरः येषां ते। तेषाम्। 'उत्सवो मह उत्सेध इच्छाप्रसरकोपयोः' इति विश्वलोचने। **सम्भोगान्ते** सच्छरीरप्रध्वंसन-क्रियावसाने। समीचीनानां युयुधानशरीराणां नाशक्रियायाः अवसानकाले। समी-चीनः भोगः शरीरं सम्भोगः। सम्भोगानां अन्तः विनाशः सम्भोगान्तः। तस्मिन् काले। सम्भोगविनाशे कृते सतीत्यर्थः। 'अन्तो नाशे मनोहरे' इति विश्वलोचने। **मम** मे **हस्तसंवाहनानां** करकृतमर्दनानां। करकृतखड्गशरीरमर्दनानामित्यर्थः। 'संवाहनं तु भारादेर्वाहनेऽप्यङ्गमर्दने' इति विश्वलोचने। **समुचितः** सुतरां योग्यः। **अयं** हस्ते कृतः **अस्मत्खड्गः** आस्माकीनः करवालः। **ते** तव **श्रुतिपथं** श्रवणगोचरतां। श्रुत्योः श्रवणयोः पन्थाः श्रुतिपथः। तम्। 'ऋक्पूरब्धूः पथोऽत्' इत्यत्सान्तः। **न अगात् किं** नायासीत्किम्। 'अस्मत्करगृहीतकरवालमाहात्म्यं त्वच्छ्रवणगोचरतां न प्राप्तं किम्' इति शम्बरासुरीयः प्रश्नः।

Did not this sword of ours, attained to steadiness [ or become steady or constant ] in the process of rending asunder the frontal

globes on the foreheads of the troops of elephants of enemies, playing the conquerer in battles [ i. e. winning battles ], the arm of the goddess of the brave, deserving gentle rubbings by my hands after the destruction of the strong bodies of those strongly desirous of quaffing blood [ or taking delight in quaffing blood ] is brought about, fall within the range of your ears ?

अस्युद्गीर्णे मयि सुरभटास्तेऽपि विभ्यत्यसभ्यः
कस्त्वं स्थातुं भण मम पुरः किं न जिह्रेषि भिक्षो।
भावत्कोऽयं मदसिविततखण्डनात्तत्पुरस्ताद्-
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥ ४ ॥

अन्वयः— अस्युद्गीर्णे मयि ते सुरभटाः अपि विभ्यति; असभ्यः कः? भिक्षो! भण, मम पुरः स्थातुं त्वं न जिह्रेषि किम्? मदसिविततखण्डनात् अयं सरसकदलीस्तम्भगौरः भावत्कः ऊरुः तत्पुरस्तात् चलत्वं यास्यति।

**अस्युद्गीण** इत्यादि। **अस्युद्गीर्णे** निष्कोशीकृतकरवाले। उद्गीर्णः असिः खड्गः येन सः अस्युद्गीर्णः। 'क्ताचास्त्रे' इति क्तान्तादस्त्रवाचिनोऽसिशब्दस्य पूर्वनिपातः। **मयि** शस्त्रासुरे कोशाद्बहिर्निष्कासिते खड्गे। मया उद्धृते सतीत्यर्थः। **ते** प्रसिद्धाः **सुरभटाः अपि** विबुधयोद्धारोऽपि **विभ्यति** भीतिप्रकम्पिताः भवन्ति। **असभ्यः कः**? निर्वीर्यः कियान्। यत्र अस्युद्गीर्णे मयि विबुधयोद्धारोऽपि भीत्या प्रकम्पन्ते तत्र निर्वीर्यस्य का कथेति भावः। सह भान्ति तेजसा प्रकाशन्ते अस्यामिति सभा। तेजस्विनां समाजः। तत्र साधुः सभ्यः। 'तत्र साधुः' इति साध्वर्थे यः। न सभ्यः असभ्यः। अप्रशस्तः सभ्यः इत्यर्थः। अत्राप्राशस्त्यार्थे नञ्। **भिक्षो** यते **भण** ब्रूहि। भिक्षते इति भिक्षुः। 'सन्भिक्षाशंसाद्भुः' इत्युः। **मम पुरः** ममाग्रे **स्थातुं** अवस्थातुं **न जिह्रेषि किं** न लज्जसे किम्? 'ह्री लज्जायां' इत्यस्माल्लटि रूपम्। **मदसिविततखण्डनात्** मदीयकरवालविधास्यमानखण्डनाद्धेतोः। मम असिः खड्गः मदसिः। तेन विततं विधातुमारब्धं आखण्डनं विदारणं तस्मात् हेतुभूतात्। असावुद्धृते खण्डनक्रियारम्भः प्रकटीभवति, न खण्डनक्रियाभिनिर्वृत्तिः। खण्डनक्रियानभिनिर्वृतावपि तस्याः उपचाराद्भूतकालेन सामानाधिकरण्यं विधाय 'कर्तरि चारम्भे क्तः' इति क्तस्त्योऽत्र विहितः। यद्वा मदसिना कृतात् खण्डनादित्यर्थः। **अयं** एषः **सरसकदलीस्तम्भगौरः** कदलीदलविदलनप्रौढरसाक्ततत्स्तम्भवद्रक्तवर्णः। मदसिकृतखण्डनजनितशोणितेनात्तशोणवर्णस्योरोः स्वरसाक्तत्वाज्जनितशोणवर्णेन कदली-

स्तम्भेनौपम्यमत्रेति भावः। रसेन सहितः सरसः। स्वरसाक्तस्तम्भनिभकायः इत्यर्थः। स चासौ कदलीस्तम्भश्च सरसकदलीस्तम्भः। स इव गौरः रक्तवर्णः सरसकदलीस्तम्भगौरः। 'सामान्येनोपमानं' इति सः। 'गौरः पीतारुणश्वेतविशुद्धेष्वभिधेयवत्' इति विश्वलोचने। **भावत्कः** भवदीयः। 'भवतष्ठण्छसौ' इति ठणि 'दोसिसुसुगदाश्वदकस्मात्तः कः' इति भवतस्तकारान्तत्वाट्ठस्य कः। **ऊरुः** सक्थि। 'सक्थि क्लीबे पुमानूरुः' इत्यमरः। **तत्पुरस्तात्** खड्गाग्रे। तस्य खड्गस्य पुरस्तादग्रे तत्पुरस्तात्। **चलत्वं** सकम्पत्वं **यास्यति** गमिष्यति।

Even those welknown heavenly warriors feel afraid whenever I get my sword unsheathed; what, then, of his who is not heroic ? [ or who is not well-disposed in the meetings of the brave ? ] O sage ! tell [ me ]; don't you feel ashamed of confronting [ or facing ] me in hostility ? This your thigh, resembling the stem of a plantain-tree redish owing to its being annointed withe its [ own ] juice on account of its being red owing to the wounds inflicted by my sword, will tremble in front of it ( i. e. my sword ).

**यस्मिन्पुंसां परिभवकलङ्काङ्कनं स्याद्विपक्षा-**
**द्वीरालापे सति मदवतो वीरगोष्ठीषु वक्त्रम्।**
**विद्वन्मन्यो भणतु स भवानेव मानोन्नतानां**
**तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्यात्॥ ५॥**

अन्वयः—यस्मिन् वीरगोष्ठीषु वीरालापे सति मदवतः विपक्षात् पुंसां वक्त्रं परिभवकलङ्काङ्कनं स्यात् तस्मिन् काले जलद! विद्वन्मन्यः भवान् एव भणतु यदि मानोन्नतानां सा लब्धनिद्रासुखा स्यात्।

**यस्मिन्नि**त्यादि। **यस्मिन्** यस्मिन् काले **वीरगोष्ठीषु** वीरसभासु वीरसम्भाषणेषु वा। वीराणां शूराणां गोष्ठी सभा वीरगोष्ठी। तासु। 'गोष्ठी सभायां संलापे' इति विश्वलोचने। **वीरालापे सति** वीरविषयकायां कथायां सत्यां। वीराणामालापः आभाषणं वीरालापः। तस्मिन् सति। वीरविषयके सम्भाषणे क्रियमाणे सतीत्यर्थः। **मदवतः** स्वसामर्थ्यनिबन्धनाभिमानवतः। मदः मानः अस्य अस्तीति मदवान्। ततः। **विपक्षात्** शत्रोः। विरुद्धः पक्षः विपक्षः। तस्मात्। 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः। **पुंसां** पुरुषाणां **वक्त्रं** मुखं **परिभवकलङ्काङ्कनं** तिरस्कारकलङ्कचिह्नितं। परिभवः तिरस्क्रियैव कलङ्कः परिभवकलङ्कः। सः अङ्कनं चिह्नं यस्य तत्। 'अनादरः परिभवः परीभावस्तिरस्क्रिया'

इत्यमरः । परिभवजनितापवादचिह्नाङ्कितमित्यर्थः । ' कलङ्कोऽङ्के कालायसमले दोषापवादयोः ' इति विश्वलोचने । **स्यात्** भवेत् । **तस्मिन् काले** मुखस्य परिभवकलङ्काङ्कनकाले । हे **जलद** धृतमेघशरीराकार मरुभूतिचर यते । अत्र भाविनैगमनयापेक्षया शम्बरासुरेण भगवतो जलदेति सञ्ज्ञा कृता, राजपुत्रस्य राजाभिधानवदित्यवसेयम् । **विद्वन्मन्यः** विद्वन्मानी । विद्वांसमात्मानं मन्यते इति विद्वन्मन्यः । ' खश् स्वस्य ' इति मन्यतेः खशि ' मुमचः ' इति मुमागमः न प्राप्नोति हलन्तत्वात् । **भवान् एव** त्वमेव **भणतु** ब्रूहि । **यदि** चेत् **मानोन्नतानां** अभिमानजनितचित्तसमुन्नतीनां । मानेन अभिमानेन उन्नताः समुन्नतचित्ताः मानोन्नताः । तेषाम् । **सा** लक्ष्मीः । वीरश्रीः । वीराणामनतिशयं सामर्थ्यमित्यर्थः । ' शक्तौ तु सा स्त्रियाम् ' इति मेदिन्याम् । **लब्धनिद्रासुखा** प्राप्तस्वापसुखा । निद्रायाः स्वापस्य सुखं निद्रासुखं । लब्धं प्राप्तं निद्रासुखं यया सा लब्धनिद्रासुखा । **स्यात्** भवेत् । वीरश्रिया विराजितानां परस्परालापे परिभूतानां सतां सामर्थ्यं कदापि नार्थक्रियाकृत्त्वाभाववद्भवति । त्वमपि वीरो मया निर्भर्त्सितोऽसि । अतस्त्वया मया साकं योद्धुं बद्धपरिकरेण भाव्यमिति कमठचरशम्बरासुराभिप्रायः ।

O [ would-be ] cloud ! you, considering yourself a man of sound learning, yourself should tell whether at that time when in the society of warriors the faces of men are stigmatized owing to their self-respect being offended by the proud-hearted enemies, the sovereign power of those, holding up their heads with pride, would enjoy the pleasure of sleep.

**या ते बुद्धिर्मदुपचरिताद्बिभ्यती लुप्तसञ्ज्ञा**
**मूकावस्थां त्वयि विदधती रुन्धती सत्त्ववृत्तिम् ।**
**सावष्टम्भं भव भटतरो वार्धयुद्धेऽस्थिरः स-**
**न्नन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ॥ ६ ॥**

अन्वयः— मदुपचरितात् बिभ्यती, लुप्तसञ्ज्ञा, त्वयि मूकावस्थां विदधती, सत्त्ववृत्तिं रुन्धती या ते बुद्धिः [ तां ] एनां सावष्टम्भं अन्वास्य स्तनितविमुखः अर्धयुद्धे स्थिरः सन् भटतरः भव, वा याममात्रं सहस्व ।

येत्यादि । **मदुपचरितात्** त्वत्समीपं ममागमनात् । हेतौ का । **बिभ्यती** भयविह्वला भवन्ती । **लुप्तसञ्ज्ञा** नष्टचेतना । हिताहितप्राप्तिपरिहारयोर्गुणदोषविचारणात्मिका सञ्ज्ञा । लुप्ता विलयं प्राप्ता सञ्ज्ञा हिताहितप्राप्तिपरिहारयोर्गुणदोषविचारात्मकं

ज्ञानं यस्याः सा । **त्वयि** भवति **मूकावस्थां** वाचंयमत्वं । अवाक्त्वमित्यर्थः । 'मूकस्त्ववाङ्मतो दीने' इति विश्वलोचने । **विदधती** कुर्वाणा । **सत्त्ववृत्तिं** प्राणानां प्रवृत्तिं । प्राणव्यापारमित्यर्थः । 'सत्त्वं जन्तुषु न स्त्री स्यात्सत्त्वं प्राणात्मभावयोः। द्रव्ये बले पिशाचादौ सत्तायां गुणवित्तयोः । स्वभावे व्यवसाये च सत्त्वमित्यभिधीयते' 'वृत्तिः प्रवृत्तौ वृत्तौ च' इत्युभयमपि विश्वलोचने । धैर्यं वा । **रुन्धती** प्रतिबध्नन्ती । **या ते** या तव **बुद्धिः** मतिः । मनः हृदयं वेत्यर्थः । तां **एनां** बुद्धिं **सावष्टम्भं** धैर्येण **अन्वास्य** प्रशाम्य परिहृत्य वा **स्तनितविमुखः** गार्जितपराङ्मुखः परिहृतगर्जनः इत्यर्थः । **अर्धयुद्धे** अर्धसङ्ग्रामे **स्थिरः** निश्चलः । अस्थिरः इति पाठे प्रक्षुब्धः इत्यर्थः । **सन्** भवन् **भटतरः** वीरतरः । 'भटः स्यात्पुंसि वीरे च विशेषे पामरस्य च' इति मेदिन्यां । प्रकृष्टः भटः इत्यर्थः । 'द्विविभज्ये तरः' इति तरः । **भव**। सङ्ग्रामभीरुर्मा भूरित्यर्थः । **वा** किंवा **याममात्रं** प्रहरप्रमाणकालं यावत् । 'द्वौ यामप्रहरौ समौ' इत्यमरः । **सहस्व** तितिक्षस्व । प्रहरप्रमाणकालादेव सङ्ग्रामः पूर्णतामेष्यतीति भावः ।

Having set aside courageously this state of your mind, afraid of my arrival, deprived of grasping capacity, reducing you to the state of speechlessness, obstructing the working of your vital airs [ or obstructing the course of your courageous conduct ( or behaviour ) ], you, averse to thundering, becoming steadfast [ or violent ] in the mid-course of fighting, should become a better warrior or have patience for a period of three hours.

**मा भूद्भीतिस्तव सुरभटत्रासिगर्जोर्जितेऽसि-**
**प्राप्ते योद्धुं मयि किमभियाने मृतिर्वीरलक्ष्म्याः ।**
**वीरम्मन्ये त्वयि मयि तथाऽन्यत्र वा प्रेमभङ्गो**
**मा भूदस्याः प्रणयिनि जने स्वप्नलब्धे कथञ्चित् ॥ ७ ॥**

अन्वयः— सुरभटत्रासिगर्जोर्जिते मयि योद्धुं असिप्राप्ते तव भीतिः मा भूत् । अभियाने वीरलक्ष्म्याः मृतिः किम् ? वीरम्मन्ये त्वयि तथा मयि अन्यत्र वा प्रणयिनि जने स्वप्नलब्धे अस्याः प्रेमभङ्गः कथञ्चित् मा भूत् ।

मेत्यादि । **सुरभटत्रासिगर्जोर्जिते** अमरवीरभयजनकगर्जिबले । सुरभटान् त्रासयितुं भाययितुं शीलं यस्य तत् । 'शीलेऽजातौ णिन्' इति शीलेऽर्थे त्रसतेर्ण्यन्तात् णिन् । गर्जस्य ऊर्जितं बलं गर्जोर्जितम् । गर्जः तडित्वत्स्तनितमिव गर्जः । सुरभटत्रासि

गर्जोर्जितं यस्य सः । तस्मिन् । **मयि योद्धुं** सम्प्रहर्तुं **असिप्राप्ते** गृहीतकरवाले । प्राप्तः सम्पादितः गृहीतः वा असिः येन सः । 'क्ताचास्त्रं' इति पूर्वं क्तान्ताद-सिशब्दस्य निपातः । **तव** भवतः **भीतिः** भयं **माभूत्** मा स्म जनि । **अभियाने** आक्रमणकाले **वीरलक्ष्म्याः** वीरसामर्थ्यस्य । वीराणां लक्ष्मीः श्रीः वीरलक्ष्मीः । वीरशौर्यस्येत्यर्थः । **मृतिः** विनाशः **किं** भवति किम् । आक्रमणकाले वीराणां सामर्थ्यं नैव विलयमीयते इति भावः । **वीरम्मन्ये** वीरमानिनि । आत्मानं वीरं शूरं मन्यते इति वीरम्मन्यः । 'खश् स्वस्य' इति खशि प्राप्ते 'मुमचः' इति मुमागमः। **त्वयि** मरुभूतिचरे पार्श्वनाथे **तथा मयि** कमठचरे मयि शम्बरासुरे **अन्यत्र वा** अन्यस्मिन् वा **प्रणयिनि** प्रेमवति **जने** लोके **स्वप्नलब्धे** स्वप्नप्राप्ते । **अस्याः** वीर-लक्ष्म्याः **प्रेमभङ्गः** प्रीतिविनाशः **कथञ्चित्** केनापि प्रकारेण **माभूत्** मा स्म जनि । 'माङि लुङ्' इति माङ् योगे लुङ् ।

Do not be afraid of me when I, the force of whose thunderlike roar troubles the heavenly warriors, wield a sword to give a fight. Does the goddess [ the supermost strength ( i. e. supermost valour ) ] of the brave cease to exist ( or give way ) at the time of an attack ? Let not her love for you, for me or for any one else, considering one-self to be a warrior, the object of her love, secured in a dream, be lost in any way.

**निस्सङ्गस्त्वं न हि भुवि भयस्याऽङ्गमङ्गाङ्गसङ्गात्**
**किं वा जीवन्मतक भवतोऽप्यस्ति भीरङ्गनानाम् ।**
**कृत्वा युद्धे विदधति मतिं नन्विमे योधमुख्याः**
**सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ ८ ॥**

अन्वयः– अङ्ग ! त्वं निस्सङ्गः । भुवि [ ते ] भयस्य अङ्गं न हि । वा जीव-न्मतक ! अङ्गनानां अङ्गसङ्गात् भवतः अपि भीः अस्ति किम् ? इमे योधमुख्याः युद्धे मतिं कृत्वा कण्ठच्युतभुजलताग्रन्थि गाढोपगूढं सद्यः ननु विदधति ।

**निस्सङ्ग** इत्यादि । **अङ्ग** सम्बोधने । उक्तं च – 'क्षिप्रे च पुनरर्थे च सङ्गमासूययोस्तथा । हर्षे सम्बोधने चैव ह्यङ्ग शब्दः प्रयुज्यते ॥' इति । **त्वं** भवान् । **निस्सङ्गः** सङ्गरहितः । निष्परिग्रहः इत्यर्थः । **भुवि** भुवने ते **भयस्य** भीतेः **अङ्गं** उपायः । 'अङ्गो देशेऽङ्गमन्तिके । गात्रोपायाप्रधानेषु प्रतीकेऽप्यङ्गवत्यपि' इति विश्वलोचने । **न हि** नैव । अस्तीति शेषः । 'हि विशेषेऽवधारणे' इति विश्वलोचने ।

वा किंवा **जीवन्मतक** प्राणिगणैः ध्यानविषयतां नीतः । कः । जीवद्भिः मतः जीवन्मतः । जीवन्मतः एव जीवन्मतकः । तस्य कः । अङ्गनानां स्त्रीणां । ' स्त्री नारी वनिता मुग्धा भामिनी भीरुरङ्गना ' इति धनञ्जयः । **अङ्गसङ्गात्** शरीरस्पर्शात् **भवतः अपि** तवाऽपि **भीः** भयं **अस्ति किम्** विद्यते किम् । निस्सङ्गस्य भयोत्पत्तिकारणासम्भवात्तव निस्सङ्गस्य नारीशरीरस्पर्शजनितेन भयेन न कदापि भाव्यमिति भावः । **इमे** अत्रत्याः **योधमुख्याः** वीराग्रण्यः । योधानां मुख्याः प्रधानाः योधमुख्याः । **युद्धे** युद्धं जेतुं **मतिं कृत्वा** निर्णयं विधाय । **कण्ठच्युतभुजलताग्रन्थि** कण्ठप्रदेशविरचितलताकारभुजबन्धनं । कण्ठे च्युता विरचिता भुजलतयोः ग्रन्थिः बन्धनं यस्मिन् । तत् । **गाढोपगूढं** गाढालिङ्गनं । गाढं च तदुपगूढं च गाढोपगूढं । उपगूढं उपगूहनम् । आलिङ्गनमित्यर्थः । ' नञ्भावे क्तोऽभ्यादिभ्यः ' इति भावे क्तः, नप् च । **सद्यः** झटिति **ननु** निश्चयेन । ' प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ' इत्यमरः । **विदधति** कुर्वन्ति । युद्धे कृतमतयोऽपि योधमुख्याः मृतिभीतिमपसार्याङ्गनालिङ्गनसङ्गतमानासिकभावतरङ्गसङ्गाः भवन्ति, तव तु मरणोत्तरकालेऽङ्गनाङ्गालिङ्गनप्राप्तेरवश्यम्भावित्वान्मरणभयमपसार्यमेव, अन्यथा निस्सङ्गस्याऽपि तेऽङ्गनाङ्गसङ्गभयं भवतीति दोषः आपतेत् । अतस्त्वयावश्यमेव युद्धसन्नद्धेन भाव्यमिति शम्बरासुराभिप्रायः ।

Well, sir ! you are altogether free from attachment to worldly ties. In this world there is nothing that could excite fear in you. O sir ! are you, reverd by all living beings, also afraid of coming into contact with the bodies of women ? Verily these, the best of warriors, having made their mind for battle, verily give suddenly close embraces ( to their beloved wives ), having ties formed with their creeper like arms round necks ( of their beloved wives ).

**लक्ष्मीं क्षीणां स्ववपुषि सतीमुद्यमाख्येन दोषा**
**प्रोत्थाप्याऽलं भव युधि सतामाश्रितानुग्रहोऽर्थः ।**
**शंसन्तीदं ननु नवघना धर्मतप्तक्षतां क्ष्मां**
**प्रोत्थाप्यैनां स्वजलकणिकाशीतलेनाऽनिलेन ॥ ९ ॥**

अन्वयः— स्ववपुषि सतीं क्षीणां लक्ष्मीं उद्यमाख्येन दोषा प्रोत्थाप्य युधि अलं भव । नवघनाः धर्मतप्तक्षतां एनां क्ष्मां स्वजलकणिकाशीतलेन अनिलेन प्रोत्थाप्य ' आश्रितानुग्रहः सतां अर्थः ' [ इति ] इदं ननु शंसन्ति ।

लक्ष्मीमित्यादि । **स्ववपुषि** आत्मीयशरीरे **सतीं** विद्यमानां समीचीनां वा **क्षीणां** क्षामतां प्राप्तां । कृशीभूतामित्यर्थः । 'क्ष्यः' इति कृतदीत्वात्क्षेस्ततकारस्य नः। 'प्रो नो णोऽभिन्ने' इति नस्य णः। **लक्ष्मीं** वीर्यं। **उद्यमाख्येन** प्रयत्नाभिधेन। उद्यमः प्रयत्नः एव आख्या अभिधानं यस्य सः। तेन। **दोषा** बाहुना। 'भुजबाहू प्रवेष्टो दोः' इत्यमरः। **प्रोत्थाप्य** सञ्जीव्य। **युधि** युद्धे। युद्धं कर्तुमित्यर्थः। **अलं** समर्थः। 'अलं भूषणपर्याप्तिशक्तिवारणनिष्फले' इति विश्वलोचने। **भव** भवतात्। भवच्छरीरनिष्ठं सामर्थ्यं भवतस्तपआराधनानिमग्नमानसत्वाद्यद्यपि क्षामतामितं तथापि तत्प्रयत्नेन प्रबोध्य युद्धाय शक्तो भवताद्भवानित्यभिप्रायः शम्बरासुरस्य। **नवघनाः** नूतनमेघाः। नवाः नूतनाश्च ते घनाः मेघाश्च नवघनाः। नवेति घनविशेषणं तेषां सलिलसङ्कुलत्वख्यापनार्थम्। **घर्मतप्तक्षतां** ग्रीष्मर्तुतापसन्त्रस्तां। घर्मस्य ग्रीष्मर्तोः ततं तापः घर्मततं। 'घर्मः स्यादातपे ग्रीष्मे ऊष्मस्वेदजलेऽपि च' इति विश्वलोचने। ततं तापः। 'नञ्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च। तेन क्षता सन्त्रस्ता। ताम्। यद्वा घर्मेण ऊष्मणा तप्ता घर्मतप्ता। सा चाऽसौ क्षता च घर्मतप्तक्षता। ताम्। **एनां क्ष्मां** मेदिनीं। 'गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही' इत्यमरः। **स्वजलकणिकाशीतलेन** स्ववारिशीकरशीतलेन। स्वं स्वकीयं जलं वारि स्वजलं। मेघाधिकरणनिष्ठं जलमित्यर्थः। तस्य कणिकाभिः शीकरैः शीतलः स्वजलकणिकाशीतलः। तेन। कणः एव कणिका। 'कणोऽतिसूक्ष्मे धान्यांशे' इति विश्वलोचने। **अनिलेन** समीरणेन **प्रोत्थाप्य** ह्लादयित्वा **आश्रितानुग्रहः** संश्रितरक्षणं। आश्रितानां आश्रयार्थमागतानां अनुग्रहः अभ्युपपत्तिः संरक्षणादिरूपाऽऽश्रितानुग्रहः। 'विमर्दनं परिमलोऽभ्युपपत्तिरनुग्रहः' इत्यमरः। **सतां** सज्जनानां **अर्थः** कर्तव्यं इति **इदं** एतत् **ननु** एव। 'ननु प्रश्नावधारणे' इति विश्वलोचने। **शंसन्ति** सूचयन्ति। त्वदाश्रितायास्तपआराधनया क्षामतामितायाः वीरलक्ष्म्यास्त्वया प्रयत्नेन तां सञ्जीव्यावश्यमेवानुग्रहो विधेयः इत्यूचिवान् तथा च कृते प्रबुद्धया तया सहकृतो मरुभूतिचरः पार्श्वः समराजिरे कृतावतरणः सन् स्वेहितिहतिविषयतामेष्यतीत्यभिप्रायवाञ्छम्बरासुरः।

Having roused to action the deteriorated goddess of valour resorting to your body, through the agency of your arm in the form of exertion, be perfectly qualified [ or powerful ] for a fight. New clouds, having delighted this earth, troubled very much by the heat of the summer season, by means of wind rendered cool by the sprays of their water, verily announce 'Giving protection to the refugees is the duty of the good.'

कीर्तिं च स्वां कुरु कुसुमितां स्वोद्यमाम्बुप्रसेकैः
सद्वल्लीं वा प्रधनविषयैरुन्नतानां क्रमोऽयम् ।
कुर्यात् किन्नो नवजलमुचां कुं क्षतान्तामनेहा
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ॥ १० ॥

अन्वयः— स्वां कीर्तिं च सद्वल्लीं वा प्रधनविषयैः स्वोद्यमाम्बुप्रसेकैः कुसुमितां कुरु। अयं उन्नतानां क्रमः। नवजलमुचां अनेहा क्षतान्तां कुं मालतीनां अभिनवैः जालकैः समं प्रत्याश्वस्तां नो कुर्यात् किम् ?

**कीर्तिमित्यादि।** **स्वां** आत्मीयां। 'स्वो ज्ञातावात्मनि स्वं तु त्रिष्वात्मीये- धनेऽस्त्रियाम्' इति विश्वलोचने। **कीर्तिं** यशः। 'कीर्तिर्यशसि विस्तारे प्रसादेऽपि च कर्दमे' इति विश्वलोचने। चोऽत्र समुच्चये। **सद्वल्लीं वा** शोभनां लतामिव। 'वल्ली तु व्रततिर्लता' इत्यमरः। समीचीना शोभना चासौ वल्ली लता च सद्वल्ली। तां। वा इवार्थेऽत्र। 'उपमायां विकल्पे वा' इत्यमरः। **प्रधनविषयैः** युद्धगोचरैः। युद्धसम्बन्धिभिरित्यर्थः। 'विषयो गोचरे देशे इन्द्रियार्थेऽपि नीवृति। प्रबन्धाद्यस्य यो ज्ञातः स तस्य विषयः स्मृतः॥' इति विश्वलोचने। 'प्रधनं दारुणे तद्ध्ये' इत्यपि तत्रैव। प्रधनं युद्धं विषयः गोचरः येषां तैः। **स्वोद्यमाम्बुप्रसेकैः** स्वीयप्रयत्नजलसिञ्चनैः। स्वः स्वीयश्चासौ उद्यमः प्रयत्नश्च स्वोद्यमः। स एवाम्बु सलिलं। तस्य प्रसेकाः सिञ्चनानि। तैः। **कुसुमितां** सञ्जातपुष्पां। पुष्पितामित्यर्थः। 'तदस्य सञ्जातं तारकादिभ्यः इतः' इति सञ्जातार्थे इतः। **कुरु** विधेहि। **अयं** एषः **उन्नतानां** औन्नत्यभाजां। महतामूर्ध्वगामिनां चेत्यर्थः। **क्रमः** परिपाटी। 'क्रमः शक्तिपरीपाटी चलने कम्पनेऽपि च' इति विश्वलोचने। **नवजलमुचां** नूतनतडिद्वतां। जलं मुञ्चन्तीति जलमुचः। मेघाः इत्यर्थः। क्विप्। नवाः नूतनाश्च ते जलमुचश्च नवजलमुचः। तेषाम्। **अनेहा** कालः। वर्षर्तुप्रारम्भकाले प्रादुर्भूताः मेघाः इत्यर्थः। 'ऋदुशनस्पुरुदंशोऽनेहसां' इत्यनेहसः सौ परतः ङन्। **क्षतान्तां** क्षतमनोहरस्वरूपां। क्षतो विध्वस्तः अन्तः मनोहरं स्वरूपं यस्याः सा। ताम्। 'अन्तो नाशे मनोहरे। स्वरूपेऽन्ते मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु' इति विश्वलोचने। **कुं** मेदिनीं। 'कुः शब्दे ना भुवि स्त्रियाम्' इति विश्वलोचने। **मालतीनां** जातीनां। 'मालती जातियुवति—' इति विश्वलोचने। **अभिनवैः** प्रत्यग्रैः **जालकैः** कोरकैः। 'जालकः कोरके दम्भप्रभेदे जालिनीफले' इति विश्वलोचने। **समं** सह **प्रत्याश्वस्तां** पुनरुज्जीवितां। श्वसेः कर्तरि क्तः। 'जतश्वस्तापचितश्च' इतीडागमविकलो निपातः।

**नो कुर्यात् किम्** न करोति किम् । अपि तु करोत्येवेत्यर्थः । युद्धं कृत्वा स्वकीर्तिं वृद्धिं नयस्वेत्यर्थः ।

And furnish your fame, resembling a beautiful creeper, with flowers, by means of sprays of water in the from of your exertions for a fight. This is the tradition of the elevated. Does not the season of new clouds refresh the earth, having its beauty spoiled, along with the fresh buds of the Mālati creepers ?

**मत्प्रातीप्यं समरशिरसि प्राप्य दृष्टावदानः**
**क्षीणायुस्त्वं कुरु सुरवधूं काञ्चिदापूर्णकामां ।**
**द्यामारोहन्सहजमणिभाभूषितोऽम्भोद याने**
**विद्युद्गर्भे स्तिमितनयनां त्वत्सनाथे गवाक्षे ॥ ११ ॥**

अन्वयः— अम्भोद ! समरशिरसि मत्प्रातीप्यं प्राप्य दृष्टावदानः क्षीणायुः द्यां आरोहन् सहजमणिभाभूषितः त्वं विद्युद्गर्भे याने गवाक्षे त्वत्सनाथे स्तिमितनयनां काञ्चित् सुरवधूं आपूर्णकामां कुरु ।

**मदि**त्यादि । **अम्भोद** मेघ । नैगमनयापेक्षया मेघेत्यभिधानं, सम्भाषणकाले पार्श्वभगवतोऽनुपात्तमेघाकारत्वात् । **समरशिरसि** रणाग्रभागे । ‘ अस्त्रियां समरानीकरणाः कलहविग्रहौ ’ इत्यमरः । ‘ शिरस्तु मस्तके सेनाग्रभागेऽन्यप्रधानयोः ’ इति विश्वलोचने । **मत्प्रातीप्यं** मम प्रातिकूलतां । प्रतीपः प्रतिकूलः । तस्य भावः प्रातीप्यं । परिपन्थित्वमित्यर्थः । ‘ प्रतिकूलं तु विलोममपसव्यमपष्ठुरं । वामं प्रसव्यं प्रतीपं प्रतिलोममपष्ठु च ’ इति हैमेऽभिधानचिन्तामणौ । **प्राप्य** अधिगम्य । **दृष्टावदानः** अनुभूतमदसिकृतखण्डनकर्मा । दृष्टमनुभूतमित्यर्थः, धातूनामनेकार्थत्वात् । अवदानं खण्डनं । ‘ अवदानं मतमिति वृत्तकर्मणि खण्डने ’ इति विश्वलोचने । दृष्टं अनुभूतं अवदानं मदसिकृतत्वच्छरीरखण्डनं येन सः । ‘ दृष्टावधानः ’ इति योगिराजस्वीकृतपाठेऽपि पूर्वोक्त एवार्थः । परिवर्तितपाठस्य सुस्पष्टतयाऽर्थवाचकत्वात्स एव स्वीकृतः । अवधानशब्दः साहसार्थवाचको यथा तथाऽवदानशब्दोऽपि । ‘ अवधानं तु साहसम् ’ इति धनञ्जयः ‘ साहसे द्वौ । अवधीयतेऽवधानम् । अवदानं च ’ इति नाममालाटीकाकारश्च । क्षीणायुरिति पाठस्योत्तरत्राव्यवधानेन दर्शनाद् ‘ दृष्टावदानः ’ इति पाठस्य साधुत्वात्स एवोररीकृतः । **क्षीणायुः** विनष्टमनुष्यजीवितकालः । मदसिघातकृतत्वच्छरीरखण्डनेन मृतिमितः इत्यर्थः । ‘ आयुर्जीवितकालो, ना जीवातुर्जीवनौपधम् ’

इत्यमरः। **द्यां** सुरलोकं। 'सुरलोको द्योदिवौ' इत्यमरः। **आरोहन्** आरोहणं कुर्वन्। स्वर्गारोहणं कुर्वाणः इत्यर्थः। **सहजमणिभाभूषितः** उपपादशय्यायां जन्मकाले एव जातानां मणीनां भाभिः द्युतिभिः भूषितः। सह जाताः जन्मकाले शरीरेण सह प्रादुर्भूताः ये मणयः तेषां भाभिः द्युतिभिः भूषितः समलङ्कृतः। देवानां यदा उपपादशय्यायां जन्म भवति तदैव तच्छरीरालङ्करिष्णूनि भूषणान्यपि सम्भवन्तीति जैनसमयः। **त्वं** पार्श्वः। **विद्युद्गर्भे** प्रकृष्टतेजस्विनि। द्योतते इति द्युत्। विशिष्टा चासौ द्युत् च विद्युत्। प्रकृष्टतेजःइत्यर्थः। विद्युत् गर्भः अन्तस्थः यस्य तद्विद्युद्गर्भं। तस्मिन्। प्रकृष्टतेजोयुक्ते इत्यर्थः। **याने** वाहने। विमाने इत्यर्थः। ईयते गम्यतेऽनेनेति यानं। देवयानस्य विमानरूपत्वाद्यानशब्दस्य विमानपर्यायत्वेनाऽत्र ग्रहणम्। **गवाक्षे** विमानावयवभूते जालके **त्वत्सनाथे** सति त्वया सहिते सति। 'सनाथं प्रभुमित्याहुः सहिते चित्ततापिनि' इति शब्दार्णवे। **स्तिमितनयनां** त्वद्रूपावलोकनजनितविस्मयाङ्कितस्वान्तत्वाद्वीतचाञ्चल्यनयनां। 'स्तिमितं वीतचाञ्चल्येऽप्यार्द्रीभूतेऽपि वाच्यवत्' इति विश्वलोचने। 'स्तिमितो निश्चलार्द्रयोः' इति मेदिन्याम्। **काञ्चित्** काञ्चन **सुरवधूं** देवाङ्गनां **आपूर्णकामां** सम्पूर्णाभिलाषां। सफलेच्छामित्यर्थः। **कुरु** विधेहि। यदर्थं त्वं तपः कुरुषे सा देवाङ्गना मद्धेतिहतिजनितमरणेन प्राप्तस्वर्गावासेन त्वया स्वयमेव सङ्गमेष्यतीति त्वयावश्यमेवं युद्धसन्नद्धेन भाव्यमिति शम्बरासुराभिप्रायः।

O cloud! coming into antagonism with me in the van of battle, you, seeing my heroic achievements [ or undergoing pain of wounds ( inflicted by my sword ) ], with the duration of your life come to an end, attaining heaven, decorated with the lustre of jewels come into being in conjunction with you, should reduce a certain celestail woman with her eyes fixed upon a window, occupied by you, of a vihicle shining with lustre, to a state of complete satisfaction [ or to a state of her passion being completely satisfied ].

**यद्येतत्तेऽध्यवसितमतिप्रौढमानोद्धुरस्य**
**ध्यानाभ्यासं शिथिलय ततो योद्धुकामो निकामम्।**
**अस्युत्खातः पटुतरगिरं प्रोज्झ्य वाचंयमत्वं**
**वक्तुं धीरं स्तनितवचनो मानिनीं प्रक्रमेथाः॥ १२॥**

अन्वयः— यदि अतिप्रौढमानोद्धुरस्य ते एतत् अध्यवसितं ततः निकामं

योद्धुकामः अस्युत्खातः ध्यानाभ्यासं शिथिलय; वाचंयमत्वं प्रोज्झ्य स्तनितवचनः मानिनीं पटुतरगिरं धीरं वक्तुं प्रक्रमेथाः ।

यदीत्यादि । **यदि** चेत् **अतिप्रौढमानोद्धुरस्य** अतिशयेन वृद्धिं प्राप्तेन मानेन निर्भयस्य । अतिप्रौढः अतिशयेन वृद्धिं प्राप्तश्चासौ मानश्चित्तसमुन्नतिश्च अतिप्रौढमानः । 'प्रादूहोढोढ्येषैष्येषु' इति प्रादूढे परतः ऐप् । तेन उद्धुरः निर्भयः । तस्य । **ते** तव **एतत्** 'काञ्चित् सुरवधूं आपूर्णकामां कुरु' इत्येतद्वचः अनुसर्तुं **अध्यवसितं** निश्चयः । मद्वचनानुसारेण काञ्चन देवाङ्गनामापूर्णकामां कर्तुं यदि भवता निश्चयः कृतः इति भावः । **ततः** तर्हि **निकामं** पर्याप्तं । यथेप्सितमित्यर्थः । क्रियाविशेषणमेतत् । 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितं' इत्यमरः । **योद्धुकामः** युयुत्सुः । 'सम्तुमोर्मनःकामे' इति तुमो मकारस्य खम् । **अस्युत्खातः** उद्गीर्णखड्गः । उत्खातः कोशाद्बहिर्निष्कासितः असिः खड्गः येन सः । 'क्ताचास्त्रे' इत्यस्त्रवाचिनोऽसिशब्दस्य क्तान्तात्पूर्वं प्रयोगः वसत्वात् । **ध्यानाभ्यासं** एकाग्रचिन्तानिरोधलक्षणस्य ध्यानस्याभीक्ष्ण्यं । ध्यानस्य समाधेः अभ्यासः पुनःपुनः करणमाभीक्ष्ण्यं वा ध्यानाभ्यासः । तम् । **शिथिलय** श्लथं कुरु । 'मृदो ध्वर्थे णिज्वहुलं' इति शिथिलशब्दात्करोत्यर्थे णिज् । निकाममिति क्रियाविशेषणस्य 'निकामं शिथिलय' इत्येवमप्यन्वयो विधेयः । **वाचंयमत्वं** तूष्णींभावं । वाचं यच्छति निगृह्णातीति वाचंयमः । वाचं निगृह्य यो मौनेनास्ते स वाचंयम इत्यभिधीयते । तस्य भावः वाचंयमत्वं । मौनित्वमित्यर्थः । 'वाचंयमो व्रती' इति वाक्पूर्वाद्यमेः खच् अमश्चानुप् । **प्रोज्झ्य** परित्यज्य **स्तनितवचनः** गर्जितशब्दः । स्तनितं गर्जितं वचनं शब्दः यस्य सः । 'स्तनितं गर्जितं मेघनिर्घोषे रसितादि च' इत्यमरः । स्तनितवचनैरित्यर्थः । 'वक्तुं धीरैः स्तनितवचनैः' इति पाठान्तरम् । तदपि समीचीनम् । **मानिनीं** प्रणयकोपवतीं । दीर्घकालिकविप्रलम्भजनितकोपवतीमित्यर्थः । 'प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इत्यमरः । मानः प्रणयकोपः अस्याः अस्तीति मानिनी । ताम् । काचिद्देवाङ्गना चिरात्त्वय्यासक्तमतिस्त्वत्तोऽप्राप्तरतिसुखा सती तुभ्यं कुपितास्तीति भावः । **पटुतरगिरं** अतिपट्वीं वाचम् । अतिशयेन पट्वी पटुतरा । सा चासौ गीश्च पटुतरगीः । ताम् । प्रचुरचातुर्यसम्पन्नां वाचमित्यर्थः । यद्वा पटुतरा गीः यस्मिन् कर्मणि यथा स्यात् तथेति क्रियाविशेषणत्वमप्यस्य सम्भवति । **धीरं** निर्भयतया दृढतया वा । तस्याः पुरस्तात्त्वया निर्भयतयैव वक्तव्यं त्वद्वचनस्य कातरत्वे तया तस्य मिथ्यात्वेन ग्रहणप्रसङ्गात् । दृढतयेत्यर्थग्रहणे तदनाश्वासनप्रसङ्गपरिहारः । **वक्तुं**

भाषितुं **प्रक्रमेथाः** आरभस्व । 'प्रोपाभ्यां समर्थाभ्याम्' इति प्राल्समर्थात्क्रमेर्दः । समर्थत्वमत्रादिकर्माङ्गीकरणनिबन्धनम् ।

If this is determined by you, altogether free from fear on account (your) boldness flown very high, then you, cherishing a very strong desire to engage (yourself) in a combat and having (your) sword unsheathed, should slacken (your) constant practice of meditation; having repudiated taciturnity you, uttering words in the form of thundering sounds, should begin to talk to the proud lady very eloqnently and boldly.

**भीते शस्त्रं यदि भटमते वावहीम्यस्त्रशून्ये**
**स्त्रीम्मन्ये वा चरणपतिते क्षीणके वा स कश्चित् ।**
**पादस्पृष्ट्या शपथयति वा जातु हिंसां भुजिष्यं**
**भर्तुर्मित्रं प्रियमभिदधे विद्धि मामम्बुवाहम् ॥ १३ ॥**

अन्वयः— भीते, अस्त्रशून्ये भटमते, स्त्रीम्मन्ये वा, चरणपतिते, क्षीणके वा, पादस्पृष्ट्या शपथयति वा यदि जातु शस्त्रं स कश्चित् (अहं) वावहीमि; भर्तुः प्रियं मित्रं अम्बुवाहं मां हिंसां भुजिष्यं विद्धि इति अभिदधे ।

**भीते** इत्यादि । **भीते** भयव्याकुले **अस्त्रशून्ये** अगृहीतशस्त्रपाणौ । अस्त्रेण शून्यः रिक्तः अस्त्रशून्यः । तस्मिन् । 'शून्यं तु वशिकं तुच्छरिक्तके' इत्यमरः । **भटमतः** भटैरादृतः 'भटः' इति ख्यातिं प्राप्तः वा । भटैः मतः भटमतः । मतशब्दस्य भूते क्तान्तत्वाद्धासः । नायं मतशब्दः वर्तमाने क्तान्तः । तेन भटशब्दस्य समस्तत्वात् 'जीन्मत्यर्चार्थशील्यादिभ्यः क्तः'. इति सूत्रविहितक्तत्यान्तेन सस्य 'कर्तरि क्तेन' इति सूत्रेण प्रतिषिद्धत्वात् । पूर्वं भटैरादृतस्यास्त्रविकलस्य शम्बरासुरोक्तिकाले परमार्थसङ्कटत्वस्याभावात् क्तान्तस्य भूतार्थकत्वाद्भटमतशब्दस्य भासत्वग्रहणमेवोचितं प्रतिभाति । **स्त्रीम्मन्ये** वा स्त्रीमानिनि वा । स्त्रीमात्मानं मन्यते स्त्रीम्मन्यः । तस्मिन् । 'खश् स्वस्य' इति खश् । तस्य च खित्वात् 'मुमचः' इति मुमागमः ।' खित्यङ्गेः कृति' इति प्रत्वस्य प्राप्तावपि स्त्रीशब्दस्यैकाच्त्वात् 'अमेकाचोऽम्वत्' इति सूत्रेणामीव कार्यस्य विधानात्प्रत्वस्य प्रतिषेधः । **चरणपतिते** मच्चरणविसृष्टापघने । चरणौ पतितः चरणपतितः । तस्मिन् । 'इप्तास्त्रिताादिभिः' इति पतितेन चरणावितीवन्तपदस्य प्रसः । **क्षीणके** वा क्षीणतेजसि वा । क्षीणः कः द्योतः तेजः यस्य सः क्षीणकः । तस्मिन् । 'को ब्रह्मानिलसूर्याग्नियमात्मद्योतबर्हिषु' इति विश्वलोचने ।

यद्वा क्षीणशरीरे इत्यर्थोऽप्यत्र ग्राह्यः । **पादस्पृष्ट्या** चरणस्पर्शनेन । पादयोः स्पृष्टिः पृक्तिः पादस्पृष्टिः । पादस्पर्शनमित्यर्थः । तया । **शपथयति वा** शपथं कुर्वति वा । शपथं करोति शपथयति । 'मृदो ध्वर्थे णिज्बहुलम्' इति शपथशब्दाद्ध्वर्थे णिचि शतृत्यः । **यदि** चेत् **जातु** कदाचित् । 'कदाचिज्जातु' इत्यमरः । **शस्त्रं** अस्त्रं **स कश्चित्** स क्षुद्रोऽहं **वावहीमि** अत्यर्थं पौनःपुन्येन वा वहामि धारयामि । 'धोर्यङ् भृशाभीक्ष्णेऽशुभ्रुच्चेः' इति भृशार्थे पौनःपुन्यार्थे वा यङ् । तस्य च 'यङ उप्' इत्युप् । अत इदं यङ्वन्तरूपम् । तर्हि **भर्तुः** राजराजस्य कुबेराख्यस्य स्वामिनः **प्रियं मित्रं** हितं सखायं **अम्बुवाहं** अम्बुवाहाकारधरं शम्बरासुरं । अम्बु वहतीति अम्बुवाहः । मेघः इत्यर्थः । अम्बुवाहः इव अम्बुवाहः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । तम् । **मां** शम्बराभिधं कमठचरमसुरं **हिंसां भुजिष्यं** हिंसादोषभाजं । भुङ्क्ते इति भुजिष्यः । सेवमानः इत्यर्थः । **विद्धि** जानीहि **इति अभिदधे** इति ब्रवीमि । हिंसादोषभयादशस्त्रपाणौ त्वयि नाहं शस्त्रं वोढुमिच्छामि । अतो युद्धसन्नद्धो भवेति भावः ।

If at all, in the case of the frightened, of the one who is looked upon as a soldier having no weapon or of the one who considers himself to be a woman, of the one fallen down at the feet, of the one swearing a solemn oath by touching feet, I, the contemptible one, wield a weapon, then I say that you should hold me, a cloud, the dear friend of the lord ( i. e. Kubera ), guilty of assassination.

**तन्मा भैषीर्विहतगरिमा हस्तमुत्क्षिप्य पादा–**
**वाश्लिष्य त्वं मम यदि च ते जीवनेऽस्त्युत्सुकत्वम् ।**
**किञ्चित्प्रीत्यै प्रिययुवतितो माऽन्यथा त्वं गृहीमां**
**तत्सन्देशैर्मनसि निहितैरागतं त्वत्समीपम् ॥ १४ ॥**

अन्वयः–– प्रियुयुवतितः प्रीत्यै यदि जीवने ते किञ्चित् उत्सुकत्वं अस्ति तत् त्वं हस्तं उत्क्षिप्य मम पादौ आश्लिष्य विहतगरिमा मा भैषीः । मनसि निहितैः तत्सन्देशैः त्वत्समीपं आगतं मां त्वं अन्यथा मा गृहीः ।

**तदित्यादि** । **प्रियुयुवतितः** प्रियुयुवत्याः । प्रिया चासौ युवतिश्च प्रियुयुवतिः । तस्याः । 'यूनस्तिः' इति युवन्शब्दात्स्त्रियां तिः । 'पुंवद्यजातीयदेशीये' इति पुंवद्भावः । अत्र तसिः क्रार्थे तार्थे वा, तसेः सार्वविभक्तिकत्वात् । **प्रीत्यै** प्रमोदं

प्राप्तुं जनयितुं वा । 'ध्वर्थवाचोऽर्थात् कर्मणि' इति ध्वर्थवाचः कर्मण्यप् । तसेः कार्थत्वे प्रियुवत्याः सुखं प्राप्तुमित्यर्थः । तत्तार्थत्वे च प्रिययुवत्या मनसि सुखं जनयितुमित्यर्थः । 'मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः' इत्यमरः । **यदि** चेत् **जीवने** जीविते **ते** भवतः **किञ्चित्** ईषत् **उत्सुकत्वं** प्रसक्तत्वं । 'प्रसितोत्सुकावबद्धैर्भ्या च' इत्युत्सुकेन योगे ईप् । **अस्ति** विद्यते **तत्** तर्हि । **हस्तं** करं **उत्क्षिप्य** उद्यम्य **मम** मदीयौ **पादौ** चरणौ **आश्लिष्य** उपगुह्य **विहतगरिमा** विनष्टमाहात्म्यः । विहतः विनाशं नीतः गरिमा महिमा यस्य येन वा सः । गुरुशब्दात् 'पृथ्वादेर्वेमन्' इति भावेऽर्थे इमनि परतः 'बहुलगुरूरुवृद्धतृप्रदीर्घवृन्दारकाणां बंहिगर्वर्वर्षित्रप्द्राघवृन्द्राः' इति तस्य स्थाने गरादेशः । **त्वं** भवान् **मा भैषीः** मयाक्रान्तस्वान्तो मा भूः । 'माङि लुङ्' इति माङो वाक्त्वाद्धोर्लुङि 'लुङ्लङ्लृङ्क्ष्वामाङाट्' इति गोरडागमप्रतिषेधः माङ्योगसद्भावात् । **मनसि** स्वान्तःकरणे **निहितैः** निवेशितैः **तत्सन्देशैः** राजराजराजधानीस्थितभवत्प्रियपत्नीवसुन्धराचर्या प्रेषितैर्वाचिकैः **त्वत्समीपं** भवत्सकाशं **आगतं** प्राप्तं **मां** शम्बराभिधानं कमठचरं मां **त्वं** भवान् **अन्यथा** अन्यप्रकारेण । शात्रवाक्रान्तस्वान्तत्वेनेत्यर्थः । **मा गृहीः** मा जानीहि । अस्त्रशून्ये समालिङ्गितमच्चरणयुगले त्वयि न शस्त्रं वोढास्मीति त्वं भैषीः । प्राग्भवीयभवत्प्रियाङ्गनासम्प्रेषितसन्देशं मनसि निधाय भवत्सन्निधिमागतं मां मित्रं विद्धीति शम्बरासुराभिप्रायः । एवं सामवचनैः शम्बरासुरः भगवत्समाधेः भङ्गं चिकीर्षति इत्यवसेयम् ।

If you are a bit fond of continuing [ your worldly ] life [ further ] for giving pleasure to the youg woman, your beloved, [ or for deriving pleasure from the young woman, dear to you ], you, with your self-conceitedness dissipated by raising your hands [ and ] embracing my feet, need not be afraid [ of me ]; do not think otherwise of me, approched you with her message, kept in mind.

**सद्यः क्लृप्तो जलदसमयो यो मया कालमेघै-**
**रारुद्धद्युर्व्यवधि सहसा सोऽप्यनेनात्मशक्त्या ।**
**ध्वान्तस्यैव प्रतिनिधिरहो योषितां जीवनार्थं**
**यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानाम् ॥ ६५ ॥**

अन्वयः— अहो । यः योषितां जीवनार्थं पथि श्राम्यतां प्रोषितांना वृन्दानि त्वरयति, यः ( च ) ध्वान्तस्य एव प्रतिनिधिः आरुद्धद्युः जलदसमयः मया कालमेघैः सद्यः क्लृप्तः सः अपि अनेन आत्मशक्त्या सहसा व्यवधि ।

सद्य इत्यादि । अहो महदाश्चर्यम् । 'अहो हीति विस्मये' इत्यमरः । यः जलदकालः । योषितां स्त्रीणां जीवनार्थं प्राणधारणार्थं । प्रोषितभर्तृकाणां विप्रलम्भजनितमरणावस्थानां प्राणधारणार्थमित्यर्थः । पथि अध्वनि श्राम्यतां मार्गाक्रमणजनितखेदखिन्नानां प्रोषितानां नानाकार्यवशाद्दूरदेशं गतानां वृन्दानि समूहान् । 'समुदायः समुदयः समवायश्चयो गणः । स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकं' इत्यमरः। त्वरयति सत्वरं गमयति । 'चल्यद्यर्थात्' इति मं । यः ( च ) ध्वान्तस्य एव तिमिरस्यैव प्रतिनिधिः मुख्यध्वान्तसदृशः । 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्' इत्यमरः। आरुद्धद्युः कालमेघव्याप्तनभोदेशः। आरुद्धा कालमेघैः व्याप्ता द्यौः नभोदेशः यस्मिन् येन वा । सः । 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् । नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खं' इत्यमरः। जलदसमयः वर्षाकालः । मया शम्बरासुरेण कालमेघैः कार्ष्णायसतुल्यकालवर्णमेघैः सद्यः सपदि क्लृप्तः विरचितः सः अपि स तादृशोपि जलदसमयः अनेन ध्यानैकतानेन मुनिवरेण्येन आत्मशक्त्या स्वात्मसामर्थ्येन सहसा अतर्कितं निर्मितिकालमात्रे एव वा। 'तत्कालमात्रे सहसा सहसाऽऽकस्मिकेऽपि च' इति विश्वलोचने । व्यवधि व्यच्छेदि । 'वध् हिंसायां' इत्यस्माद्विपूर्वाद्धोर्लिङ् । कालायसकालवर्णकालमेघजनितः प्रावृट्कालोऽनेन जनितमात्र एवात्मसामर्थ्येन विलयं नीत इत्यहो आश्चर्यं महदिति शम्बरासुरः स्वसामर्थ्योत्पन्नाखर्वगर्वोऽपि मनसि विचिन्तयतीति विज्ञेयम् ।

Ah! even the rainy-season ( monsoon ), the representative of the dark alone, pervading the sky, expediting the masses of those gone abroad, moving laboriously on their ways [ to homes ] to keep the lives of their better-halves from falling off, [ and ] brought into being at once by me by means of black clouds, is at once brought to nothing by this through the agency of his soul-power.

**सोऽयं योगी प्रकटमहिमा लक्ष्यते दुर्विभेदो**
**विद्यासिद्धो ध्रुवमभिमना यन्ममाप्यात्तनाशा ।**
**कर्तुं शक्ता नवघनघटा या मनांस्यध्वगानां**
**मन्द्रस्निग्धैर्ध्वनिभिरवलावेणिमोक्षोत्सुकानि ॥ १६ ॥**

अन्वयः— या अध्वगानां मनांसि मन्द्रस्निग्धैः ध्वनिभिः अवलावेणिमोक्षो-

त्सुकानि कर्तुं शक्ता [ सा ] मम अपि नवघनघटा यत् आत्तनाशा [ तत् ] अयं सः प्रकटमहिमा विद्यासिद्धः ध्रुवं अभिमनाः योगी दुर्विभेदः लक्ष्यते ।

सोऽयमित्यादि । **या नवघनघटा अध्वगानां** पथिकानां । अध्वानं गच्छतीत्यध्वगः । 'अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि' इत्यमरः। **मनांसि** चेतांसि **मन्द्रस्निग्धैः** गम्भीरैः श्रुतिमधुरैश्च । मन्द्राः गम्भीराश्च ते स्निग्धाः श्रुतिमधुराश्च मन्द्रस्निग्धाः । तैः । 'मन्द्रस्तु गम्भीरे' 'मसृणं स्निग्धं' इत्युभयत्राप्यमरः । कुब्जखञ्जादिवत् 'विशेषणं विशेष्येणेति' इति सः । **ध्वनिभिः** गर्जितैः । **अबलावेणिमोक्षोत्सुकानि** स्वस्वकमनीयकामिनीकेशबन्धविशेषमोचनोत्कण्ठितानि । अबलानां स्वीयस्वीयकमनीयकामिनीनां वेणयः केशबन्धविशेषाः अबलावेणयः । स्वकान्तविरहसंसूचनार्थमबलाभिरेकवेणिविशेषरूपः केशबन्धो विरच्यते इति सर्वजनप्रसिद्धम् । 'वेणी नदीनां सङ्गे स्यात्केशबन्धान्तरेऽपि च । देवताडेऽपि वेणी स्त्री' इति विश्वलोचने । तासां मोक्षो मोक्षणम् । मोचनमित्यर्थः । तत्र उत्सुकानि सञ्जातोत्कण्ठानि । **कर्तुं** विधातुं **शक्ता** सामर्थ्यसम्पना **सा ममापि** मायया मयैव विरचिताऽपि । नवाया घनाघनघटाया मत्कर्तृकत्वादन्येन केनचिदपि विनाशयितुमशक्यत्वेपि सानेन विनाशं प्रापितेत्याभिप्रायोऽपिना व्यज्यते । **नवघनघटा** प्रावृट्कालारम्भे शरनिकरसम्भृता । नवा प्रत्यग्रा घनघटा वारिवाहानां समूहः । घनानां मेघानां घटा समूहः घनघटा । नवा चासौ घनघटा च नवघनघटा । यद्वा नवाः प्रत्यग्राः प्रावृडारम्भकाले सम्भूतत्वाच्च घना मेघाः नवघनाः । तेषां घटा समूहः नवघनघटा । **यत्** यस्मात्कारणात् । **आत्तनाशा** स्वीकृतविनाशा । विलयं प्राप्तेत्यर्थः । तस्मात्कारणात् **अयं सः** स एषः । मुनिरित्यर्थः । **प्रकटमहिमा** आविर्भूतमाहात्म्यः । प्रकटः आविर्भूतः महिमा माहात्म्यं यस्य स प्रकटमहिमा । प्रकटीभूतालौकिकसामर्थ्यः इत्यर्थः । मदीयमायाप्रादुर्भावितप्रत्यग्रघनघटायाः केनचिदप्यप्रकटितमहिम्नाऽविनाश्यत्वेऽपि विनाशदर्शनादयमवश्यमेव प्रकटीतालौकिकसामर्थ्य इति कमठचरशम्बरासुराभिप्रायः । **विद्यासिद्धः** प्रकटीभूतशुद्धज्ञानघनैकस्वभावः । विद्या आत्मस्वभावभूतं शुद्धमात्मज्ञानं सिद्धं पूर्णत्वेन प्रकटतां प्राप्तं यस्य सः । 'वाहिताग्न्यादिषु' इति सः । **ध्रुवं** मोक्षं । 'ध्रुवः क्लीबे शिवे शङ्कौ मुनौ योगे वटे वसौ । ध्रुवं तु निश्चिते तर्के नित्यनिश्चलयोस्त्रिषु' इति 'शिवो हरे योगभेदे वेदे कीलेऽपि वालुके । गुग्गुले पुण्डरीकद्रौ शिवं मोक्षे सुखे जले' इति च विश्वलोचने । ध्रुवशब्दस्य योगसुखरूपार्थद्वयमप्यत्र सम्भवति । **अभिमनाः** अभिगतं मनो यस्य सः । प्रपर्णवद्वसः । अतिप्रस-

न्वतमनाः इत्यर्थः । **योगी** निर्विकल्पसमाधिसमभिरूढमनस्को मुनिः **दुर्विभेदः** निर्विकल्पसमाधेः कष्टप्रच्याव्यः । 'स्वीषद्दुसि कृच्छ्राकृच्छ्रे खः' इति खः । त्यस्य खित्त्वेऽपि पूर्वपदस्य झित्त्वान्न मुम् । **लक्ष्यते** ज्ञायते । दृश्यते इत्यर्थः ।

As this assemblage of fresh clouds, able to render the minds of travellars anxious for untying the hair, twisted into single unornamented braid and allowed to fall on their backs, of their beloved wives, by means of deep and charming thunders, has, though brought into being by myself, dispersed, this very sage, having superhuman power manifetsed in himself, possessing complete and flawless knowledge, having his mind concentrated upon salvation, absorbed in deep thinking, seems very difficult to be agitated.

**इत्याध्यायन्पुनरपि मुनिं सोऽभणीद्युद्धशौण्डो**
**वीरश्रीस्त्वामिह वनतरौ मन्मथाक्लेशमुक्ता ।**
**पश्यन्त्यास्ते दशमुखपुरोद्यानवृक्षे सती स्या-**
**दित्याख्याते पवनतनयं मैथिलीवोन्मुखी सा ॥ १७ ॥**

अन्वयः— इति आध्यायन् '[ या ] मन्मथक्लेशमुक्ता त्वां पश्यन्ती इह वनतरौ आस्ते सा वीरश्रीः आख्याते दशमुखपुरोद्यानवृक्षे पवनतनयं [ पश्यन्तीं ] उन्मुखी सती मैथिली इव स्यात्' इति युद्धशौण्डः सः पुनरपि मुनिं अभणीत् ।

इतीत्यादि । **इति** पूर्वश्लोकोक्तप्रकारेण । 'इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः । इति प्रकरणेऽपि स्यात्समाप्तौ च निदर्शने' इति विश्वलोचने । **आध्यायन्** विचिन्तयन् । या वीरश्रीः **मन्मथाक्लेशमुक्ता** मनःस्थैर्यभ्रंशजनकदुःखविकला कामवासनाकर्तृकक्लेशरहिता पञ्चबाणोन्मुक्तपौष्पबाणशल्यजनितवेदनानाकुला वा । मननं मत् । चेतनेत्यर्थः । 'हन्मन्यम्रम्नमगम्वनतितनादेर्ङ्खं झलि' इति ङ्खम् । ङ्खे च तुगागमः । मथ्नातीति मथः । मतो मनसो मथः मन्मथः । मनोमन्थनकृदित्यर्थः । मन्मथश्चासौ आक्लेशो दुःखं मन्मथाक्लेशः । तेन मुक्ता मन्मथाक्लेशमुक्ता । यद्वा मन्मथस्य कामदेवस्याक्लेशेन मुक्ता रहिता । 'मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः ।' इत्यमरः । 'मन्मथः कामचिन्तायां कामदेवकपित्थयोः' इति विश्वलोचने । वीरश्र्यभीष्टस्य भवतः सामीप्याद्विप्रलम्भासम्भवात्त्वत्समागमोपलब्धेर्दृढप्रत्ययात्तन्मनसि कामचिन्ताया अप्रादुर्भावात्कामचिन्ताजनितदुःखप्रादुर्भावासम्भवात्तस्या मन्मथाक्लेशमुक्तत्वमवसेयम् । **त्वां** भवन्तं मरुभूतिचरं पार्श्वनाथयोगीन्द्रं **पश्यन्ती** विलोकयन्ती इह अत्र **वनतरौ**

वनतरुतले । अत्र वनतरोरधस्तनभागे इत्यर्थो न विवक्षितः, वृक्षाधोभागस्थितमैथिल्यो-पमितत्वात्तस्याः वीरश्रियः । अतस्तस्य मुख्यार्थं बाधित्वा तरुतलरूपस्तद्युक्तः प्रदेशोऽत्र लक्षणया ग्राह्यः । **आस्ते** तिष्ठति **सा** त्वदभिलाषाकुलमनस्का **वीरश्रीः** श्रीरिव श्रीः । वीराणां श्रीः वीरश्रीः । **आख्याते** लोकपुराणप्रसिद्धे **दशमुखपुरोद्यानवृक्षे** लङ्कानगर्यु-पवनवृक्षतले । तच्छायायामित्यर्थः । दश दशसङ्ख्याकानि मुखानि वदनानि यस्य सः दशमुखः । रावण इत्यर्थः । बहुरूपिणीविद्यासम्पन्नत्वाद्रावणस्य दशाननत्वं पुराणप्रसि-द्धम् । तस्य पुरं लङ्का नाम राजधानी । तस्योद्यानवृक्ष उपवनतरोरधस्तनप्रदेशे । अत्रापि मैथिल्यास्तत्वधस्तनप्रदेशस्थितेः पुराणे प्रसिद्धत्वादस्य पदस्य लक्षणया वृक्षाधस्तन-प्रदेशरूपोऽर्थो ग्राह्यः । **पवनतनयं** पवनञ्जयमहाराजात्मजं कामदेवं हनूमन्तं विलोक-यन्ती **उन्मुखी** उन्नामितमुखी । बन्दिग्राहं गृहीताया मैथिल्यास्स्वमुक्तिविचारा-क्रान्तत्वादधोमुख्या हनूमद्दर्शनार्थम्मुखोन्नमनमभिप्रेत्योन्मुखीति वचनमत्र समीचीन-मेव । 'स्वाङ्गान्नीचोऽस्फोडः' इति स्त्रियां ङी । उद्गतं मुखं यस्याः सोन्मुखी । **सती** साधुशीला । एकपत्नीत्वात्तस्याः सतीत्वम् । **मैथिली** इव मिथिलाधिपते-रपत्यं स्त्रीव । मिथिलेश्वरकन्या सीतेत्यर्थः । सेव । **स्यात्** भवति । **इति** अनेन प्रकारेण । **युद्धशौण्डः** युद्धे प्रसक्तः शौण्डः । 'ईप् शौण्डादिभिः' इतीबन्तस्य युद्धपदस्य शौण्डेन-सह षसः । युद्धे प्रवीणः इत्यर्थः । युद्धप्रसक्तमतिः स शम्बरासुर इति भावः । **सः** कमठचरोऽसुरः **पुनरपि मुनिं** पार्श्वजिनेन्द्रं **अभणीत्** भणति स्म ।

He, thinking thus, excessively fond of combating [ or skilled in fighting ], spoke again to the sage thus—'the superhuman power resembling Laxmi, of the brave, freed from the tortures causing disturbance in mind [ or caused by the god of love ], looking at you from beneath a sylvan tree where she is sitting, resembles the chaste woman, Sītā [ the daughter of the king of Mithilā ], looking, with her face raised, at the son of Pavana ( Hanūman), from beneath a welknown tree grown in the garden of the city of the ten-faced one [ i. e. Rāvana ], where she sat.

सङ्ख्ये सङ्ख्यां सुभटविषयां पूरयन्नसमदीये
हित्वा भीतिं त्वमधिशयितो वीरशय्यां यदा स्याः ।
प्रत्यासीदत्यपिहितरसा वीरलक्ष्मीस्तदैषा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्मान्य चैव ॥ १८ ॥

अन्वयः — अस्मदीये सङ्ख्ये सुभटविषयां सङ्ख्यां पूरयन् त्वं यदा भीतिं हित्वा वीरशय्यां अधिशयितः स्याः तदा त्वां वीक्ष्य सम्भाव्य च उत्कण्ठोच्छ्वसितहृदया अपिहितरसा एषा प्रत्यासीदति ।

**सङ्ख्ये** इत्यादि। **अस्मदीये** आस्माकीने। अस्माकमिदमस्मदीयम्। तस्मिन्। अस्मदस्त्यदादित्वात् 'त्यदादिः' इत्यनेन वृद्धसञ्ज्ञत्वाद् 'वृद्धाच्छः' इति छः। **सङ्ख्ये** युद्धे। सम्पूर्वस्य चक्षेर्वधार्थत्वात्सङ्ख्यशब्दो युद्धार्थः। सञ्चक्षतेऽस्मिन्सङ्ख्यम्। 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणं। मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम्' इत्यमरः। **सुभटविषयां** शूरसैनिकसम्बन्धिनीं **सङ्ख्यां** गणनां **पूरयन्** पूर्णतां प्रापयन् **त्वं** भवान् **यदा** यस्मिन्काले **भीतिं** भयं **हित्वा** परिहृत्य **वीरशय्यां** वीरशयनम्। वीरोचितशयनमित्यर्थः। वीराः शूराः युयुधानाः शेरतेऽस्यामिति वीरशय्या। ताम्। **अधिशयितः** प्रसुप्तः। 'कर्माधारः शीङ्स्थासः' इत्यधिपूर्वस्य शीङः आधारस्य कर्मत्वे 'कर्मणीप्' इति इप्। **स्याः** भवेः। भविष्यसीत्यर्थः। **तदा** तस्मिन्काले **त्वां** भवन्तं **वीक्ष्य** विलोक्य **सम्भाव्य च** सत्कृत्य च **उत्कण्ठोच्छ्वसितहृदया** त्वद्दर्शनजनितौत्सुक्येन विकसितचित्ता। उत्कण्ठया त्वद्दर्शनजनितौत्सुक्येन उच्छ्वसितं विकसितं हृदयं चित्तं यस्याः सा। **अपिहितरसा** प्रकटीकृतानुरागा। न पिहितः प्रच्छादितः अपिहितः। अपिहितः प्रकटीकृतः रसः अनुरागः यया सा। 'रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे। पारदे धातुवीर्याम्बुरागे गन्धरसे तनौ' इति विश्वलोचने। **एषा** वीरश्रीः त्वां **प्रत्यासीदति एव** सुनिश्चितं प्रत्यासत्स्यति। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तसामीप्याद्भविष्यर्थे लट्। समराजिरमाश्रितं भवन्तं शौर्यं शीघ्रं श्रयिष्यति। अतो युद्धासन्नद्धो भवेति शम्बरासुराभिप्रायः।

In a battle that will be offered by you and me, when you, completing the number of best warriors, having abandoned fear, will be having recourse to the battle-field, then this [ i. e. the goddess of the brave ], with her heart throbbing owing to her yearning for you, on seeing and greeting you, displaying her love [ for you ], will surely resort to you very soon [ i. e. the very moment you will have recourse to the battle-field ].

मन्ये श्रोत्रं परुषपवनैर्दूषितं ते मदुक्तां
व्यक्ताकूतां समरविषयां सङ्कथां नो शृणोति।

तत्पारुष्यप्रहरणमिदं भेषजं विद्धि गेयं
श्रोष्यत्यस्मात्परमवहितं सौम्य ! सीमन्तिनीनाम् ॥ १९ ॥

अन्वयः – सौम्य ! ते श्रोत्रं मदुक्तां व्यक्ताकूतां समरविषयां सङ्कथां नो शृणोति ( इति ) परुषपवनैः दूषितं मन्ये । इदं सीमन्तिनीनां गेयं अवहितं पारुष्य-प्रहरणं परं भेषजं विद्धि; अस्मात् तत् श्रोष्यति ।

**मन्ये** इत्यादि । **सौम्य** ! हे साधो ! हे अनुग्र इति वा । भगवद्धृदयक्षोभ-जननसमर्थैर्नानाविधैरुच्चावचैरुपायैर्नितरां-कमठचरेण शम्बरासुरेण पीडितस्य सतोऽपि भगवतोऽस्पृष्टक्रोधत्वात्सौम्येत्युक्तिः कमठचरस्य यथार्थभावप्रद्योतिनी। सोमो देवताऽस्येति सौम्यः । 'कसोमाट्ट्यण्' इति देवतार्थे ट्यण् । अनुग्रार्थे त्वयं शब्द उपचारा-प्रयुज्यते । 'बुधे सौम्योऽथ वाच्यवत् । बौद्धे मनोरमेऽनुग्रे पामरे सोमदैवते ॥' इति विश्वलोचने । **ते** तव **श्रोत्रं** श्रवणेन्द्रियं **मदुक्तां** मया कथितां **व्यक्ताकूतां** विशदाभिप्रायां । व्यक्तः विशदः आकूतः अभिप्रायः यस्याः सा । ताम् । **समरविषयां** युद्धसम्बन्धिनीं । समरः रणः विषयः गोचरः यस्याः सा । ताम् । 'अस्त्रियां समरा-नीकरणाः कलहविग्रहौ' इत्यमरः । 'विषयो गोचरे देशे इन्द्रियार्थेऽपि नीवृति । प्रबन्धाद्यस्य यो ज्ञातः स तस्य विषयः स्मृतः॥' इति विश्वलोचने । **सङ्कथां** समी-चीनं भाषणं **नो** न **शृणोति** आकर्णयति यतस्ततस्ते श्रोत्रं **परुषपवनैः** निष्ठुर-प्रभञ्जनैः । परुषाः निष्ठुराः व्याघातकृतश्च ते पवनाः प्रभञ्जनाश्च परुषपवनाः । तैः । 'परुषं कर्बुरे रूक्षे त्रिषु निष्ठुरवाच्यपि' इति विश्वलोचने । 'नभस्वद्वातपवनपवमान-प्रभञ्जनाः । प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः' इत्यमरः । **दूषितं** जनित-दूषणं । 'दोषो णौ' इति दुषेर्णौ परत उङ ऊत् । इति **मन्ये** जाने । **इदं** गीयमानं **सीमन्तिनीनां** योषितां । भवत्कान्तोपान्तात्समागतानां स्त्रीणामित्यभिप्रायः । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः । सीमन्तः केशवेशोऽस्त्यस्या सीमन्तिनी । **गेयं** गायनम् । 'गेयस्तु त्रिषु गातव्ये गेयः स्याद्गायने पुमान्' इति विश्वलोचने । पदस्वरतालावधानात्मकं गान्धर्वरागगीत्यादिरूपं गीतमित्यर्थः। **अवहितं** श्रवणगोचरतां नीतं सत् **पारुष्यप्रहरणं** परुषपवनाघातजनितं श्रोत्रेन्द्रियश्रवण-सामर्थ्यप्रतिहन्तृ यच्छ्रवणयोः पारुष्यं नैष्ठुर्यं तस्य प्रकर्षेण परिहर्तृ । अत्र पारुष्यपदेन श्रवणयोर्बाधिरिमा ग्राह्यः । प्रहरतीति प्रहरणम् । 'व्यानड्बहुलम्' इति कर्तर्यनट् । **परं** अनुत्तमं । साधिष्ठमित्यर्थः । **भेषजं** औषधं । भेषं रोगभयं जयतीति भेषजं । डः। 'भेषजौषधभैषज्यान्यगदो जायुरित्यपि' इत्यमरः । **विद्धि** जानीहि । **अस्मात्**

पारुष्यप्रहरणाद्गेयरूपाद्भेपजात् । तत् ते श्रवणेन्द्रियं **श्रोष्यति** शब्दं स्वगोचरतां नेष्यति ।

O you, an impassive one! as your ears do not listen to a charming speech, made by me with reference to a fight, with its implication quite clear, I think your ears are afflicted by very harsh winds [i.e. by winds blowing very harshly]. Take this song of women [i. e. sung by women], when heard by you, to be a medicine curing deafness; by using this medicine your ears will perceive sounds.

**श्रव्यं गेयं, नयनसुभगं रूपमालोकनीयं,**
**पेयस्तासां वदनसुरभिः, स्पृश्यमाघ्रायमङ्गम् ।**
**कामाङ्गं ते समुचितमिदं सङ्गमं सानुबन्धं**
**कान्तोपान्तात्सुहृदुपगमः सङ्गमात्किञ्चिदूनः ॥ २० ॥**

अन्वयः— तासां श्रव्यं गेयं, नयनसुभगं आलोकनीयं रूपं, पेयः वदनसुरभिः, स्पृश्यं आघ्रायं अङ्गं ते समुचितं कामाङ्गं; इदं सानुबन्धं सङ्गमं कान्तोपान्तात् सुहृदुपगमः सङ्गमात् किञ्चित् ऊनः ।

**श्रव्यमित्यादि** । **तासां** त्वकान्तायाः उपान्तात् समुपागतानां सीमन्तिनीनां **श्रव्यं** श्रवणार्हं । 'तृव्व्याश्चार्हे' इत्यर्हार्थे व्यः । मनोहारि वा । 'श्राव्यं हृद्यं मनोहारि' इत्यमरः । **गेयं** गानम् । 'गेयस्तु त्रिषु गातव्ये गेयः स्याद्गायने पुमान्' इति विश्वलोचने । **नयनसुभगं** नयनाभिरामं । नयनयोः नेत्रयोः सुभगं अभिरामं नयनसुभगम् । **आलोकनीयं** आलोकनार्हम् । **रूपं** सौन्दर्यम् । 'रूपमाकारसौन्दर्यस्वभावश्लोकनाणके । नाटकादौ मृगे ग्रन्थावृत्तौ च पशुशब्दयोः ॥' इति विश्वलोचने । **पेयः** पानार्हः । **वदनसुरभिः** मुखसौरभं **स्पृश्यं** स्पर्शनार्हं **आघ्रायं** आघ्राणार्हं **अङ्गं** शरीरं । 'अङ्गमन्तिके । गात्रोपायाप्रधानेषु प्रतीकेऽप्यङ्गवत्यपि' इति विश्वलोचने । **ते** तव **समुचितं** नितरां योग्यं **कामाङ्गं** कामोत्पत्तिसाधनम् । **इदं** एतद्गेयादिकं **सानुबन्धं** निरन्तरायम् । साक्षादित्यर्थः । अनुबन्धः अन्तरायाभावः । अनुबन्धेनान्तरायाभावेन सहितं सानुबन्धम् । **सङ्गमं** अन्योन्यमिलनम् । संगमशब्दो नपुंसलिङ्गोऽपि वर्तते । 'सङ्गमं शतमानाऽमंशम्बलाव्ययताण्डवम्' इत्यमरः । **कान्तोपान्तात्** कान्तासमीपात् । कान्तायाः उपान्तः समीपं कान्तोपान्तः । तस्मात् **सुहृदुपगमः** सुहृदामागमनम् । कान्तायाः मित्रीभूतानां

सीमन्तिनीनामागमनमित्यर्थः । **सङ्गमात्** अन्योन्यं साक्षाद्यन्मिलनं तस्मात् **किञ्चित्** ईषत् **ऊनः** न्यूनः । कान्तासङ्गमसदृशः इत्यर्थः । एताः कलकण्ठ्यः, आलोकनीयसौन्दर्याः, सुसौरभवदनाः, स्पृश्याघ्रायशरीराः भवत्कान्ताया उपान्तात्समुपागताः । एतास्त्वयि कामोत्पत्तेर्निमित्तभूताः । एतासामुपगमः कान्तेव समागमसुखजननः, तस्य कामोत्पत्तिनिबन्धनत्वात् । अतः कान्तोपान्तात्तत्सुहृदुपगमः अतः साक्षात्कान्तासमागमसम एव, कान्तासमागमवत्तस्यापि कामोत्पत्तिनिमित्तत्वात् । अतस्त्वया कान्तासमागमार्थमाचर्यमाणं तपो विहाय गेयादावत्र दत्तावधानेन भाव्यमिति शम्बरासुराभिप्रायः ।

Their song ( or singing ) worthy of giving audiance, their eye-gladdening beauty worthy of being perceived, their fragrance of (their) mouths worthy of being drunk, their body worthy of being touched and smelt are the very suitable means of rousing your passion. This is actually (directly) meeting together, (for) arrival of friends coming from one's own beloved is a little less than an actual meeting.

**तस्माद्वासः किसलयमृदु त्वं मुखस्थायि दिव्यं**
**ताम्बूलं च प्रणयमचिराद्योषितां मानयोच्चैः ।**
**व्यर्थक्लेशां विसृज विरसामार्यवृत्तिं मुनीनां**
**तामायुष्मन्मम च वचनादात्मनश्चोपकर्तुम् ॥ २१ ॥**

अन्वयः – आयुष्मन् मम वचनात् च आत्मनः उपकर्तुं च तस्मात् योषितां किसलयमृदु वासः, मुखस्थायि दिव्यं ताम्बूलं, प्रणयं च अचिरात् उच्चैः मानय; मुनीनां व्यर्थक्लेशां तां विरसां आर्यवृत्तिं विसृज ।

**तस्मादित्यादि** । **आयुष्मन्** जैवातृक । 'जैवातृकः स्यादायुष्मान्' इत्यमरः । **मम वचनात् च** मदीयोक्तेः । मदुक्तिमनुसृत्येत्यर्थः । **आत्मनः** स्वस्य **उपकर्तुं च** हितं सम्पादयितुम् । स्वहितं कर्तुमित्यर्थः । **तस्मात्** कान्तोपान्तात् सुहृदुपगमो यतः कान्तया सङ्गमात्किञ्चिदूनस्ततः । **योषितां** अङ्गनानाम् । 'स्त्री नारी वनिता मुग्धा भामिनी भीरुरङ्गना । ललना कामिनी योषिद्योषा सीमन्तिनी वधूः' इति धनञ्जयः । **किसलयमृदु** किसलयं पल्लव इव मृदु कोमलं । पल्लववत्कोमलमित्यर्थः । 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । 'सामान्येनोपमानं' इति सः । **वासः** वस्त्रम् । 'वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम्' इत्यमरः । **मुखस्थायि** मुखे अभीक्ष्णं तिष्ठतीति

मुखस्थायि । मुखे स्थितमित्यर्थः । 'व्रताभीक्ष्ण्ये' इत्याभीक्ष्ण्ये गम्यमाने णिन् । **दिव्यं** दिवि जातं भवं वा दिव्यम् । अतिशयेनोत्कृष्टमित्यर्थस्तस्यालौकिकत्वेन प्रतिपादनात् । 'द्युप्रागपागुदक्प्रतीचो यत्' इति शेषेऽर्थे यः । **ताम्बूलं** सुधापूगकर्पूरकश्मीरजयुक्तताम्बूलीपत्रनिबद्धां चर्वितां वीटिकाम् । **प्रणयं च** रतिः । प्रेमेत्यर्थः । **अचिरात्** शीघ्रं **उच्चैः** अत्यर्थं मानय सम्भावय । **मुनीनां** तपोधनानां **तां** लोकप्रसिद्धां **व्यर्थक्लेशां** व्यर्थो विफलः क्लेशः परीषहजयार्थं प्रावृडादौ तरुतलादिप्रदेशे निषदनेन जनितं शारीरं मानसं च दुःखं यस्यां सा । ताम् । सम्यक्चारित्राराधनजनितसौख्यस्य पारलौकिकत्वादप्रत्यक्षत्वात्तदर्थाचरिततपश्चरणजनितक्लेशानां वैफल्यमिति कमठचरशम्बरासुराभिप्रायः। **विरसां** विगलितानन्दां प्रणयविकलां । करुणाविकलां वा। मुनिचर्यायाः कायक्लेशबाहुल्यादानन्दवैकल्यं स्त्रीसम्पर्कवैकल्यात्प्रणयविकलत्वं शरीरक्लेशकरत्वाच्च विरसत्वमध्यवसेयम् । **आर्यवृत्तिं** सतां पूजनीयां चर्याम् । अर्यते सद्भिः पूज्यते इत्यार्या । आर्याऽभ्यर्हितेत्यर्थः । 'पुंस्यार्ये सौविदल्ले स्यादार्यस्त्वभ्यर्हिते त्रिषु' इति विश्वलोचने । सा चासौ वृत्तिश्चर्या च आर्यवृत्तिः । ताम् । **विसृज** परिहर । मुनिचर्यां परित्यज्य स्त्रीसम्भोगजनितसुखमनुभवेत्यसुराभिसन्धिः

Oh long-lived one ! in my name and to benefit yourself you should, for that reason, immediately, highly respect the garments of those women, delicate like young and tender foliage, the charming Tambul in their mouths and their love [ for you ]; you should give up that welknown pious conduct of sages, void of pleasure [ and ] consisting in fruitless strenuous efforts.

**श्रेयोमार्गः किल मुनिवरैः सेव्यते मोक्षहेतोः**
**सौख्यं द्वेधा सुरयुवतिजं मुक्तिलक्ष्म्याश्रयं च ।**
**दूरे मुक्तिः सुलभमितरत्सेव्यमन्योऽपि विद्वान्**
**ब्रूयादेवं तव सहचरो रामगिर्याश्रमस्थः ॥ २२ ॥**

अन्वयः— श्रेयोमार्गः मुनिवरैः सौख्यहेतोः किल सेव्यते । सौख्यं सुरयुवतिजं मुक्तिलक्ष्म्याश्रयं च [ इति ] द्वेधा । दूरे मुक्तिः । इतरत् सुलभं सेव्यं [ च ] । अन्यः अपि रामगिर्याश्रमस्थः तव विद्वान् सहचरः एवं ब्रूयात् ।

**श्रेयोमार्ग** इत्यादि । **श्रेयोमार्गः** निःश्रेयसप्राप्तिसाधनः संयमः । 'श्रेयो निःश्रेयसामृतम्' इत्यमरः । एतदनयोरस्माद्वा प्रशस्यं श्रेयः । 'प्रशस्यस्य श्रः'

इतीयसौ प्रशस्यस्य श्रादेशः । मार्ग्यतेऽन्विष्यतेऽनेनेति मार्गः । श्रेयसः निःश्रेयसस्य मार्गः अन्वेषणसाधनभूतः संयमः श्रेयोमार्गः । भेदाभेदरत्नत्रयात्मको मोक्षमार्ग इत्यर्थः । **मुनिवरैः** संयमिश्रेष्ठैः । मुनीनां मुनिषु वा वराः श्रेष्ठाः मुनिवराः । तैः । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये' इत्यमरः । **सौख्यहेतोः** निरुपधिसुखप्राप्त्यर्थम् । सुखमेव सौख्यम् । तस्य हेतोः । सुखप्राप्त्यर्थमित्यर्थः । 'हेतौ सर्वाः प्रायः' इति ता । **किल** सम्भावनायाम् । 'किल स्वरुचौ वार्तायां सम्भाव्यानुनयार्थयोः' इति विश्वलोचने । **सेव्यते** स्वीक्रियते । **सौख्यं** सुखं **सुरयुवतिजं** सुराङ्गनासम्भोगसमुत्पन्नं **मुक्तिलक्ष्म्याश्रयं च** मोक्षावस्थासमुत्पन्नं चेति । मुक्तिर्मोक्षः कृत्स्नकर्मविप्रमोक्षलक्षणः । सैव लक्ष्मीरमानुपमनन्तं वीर्यादिकं । सैव आश्रयः यस्य तत् । **द्वेधा** द्विप्रकारम् । **दूरे** स्थलकालापेक्षया सुरयुवतिसम्भोगजसुखापेक्षया च दवीयसी । **मुक्तिः** कर्मबन्धव्यपगमजनिता शुद्धावस्थाऽनन्तसुखप्रसूः । **इतरत्** मुक्तिसुखादन्यत्सुरयुवतिसम्भोगजनितं सुखं **सुलभं** अकृच्छ्रलभ्यम् । **सेव्यं** सेवनार्हम् । सेवितुं योग्यं, न त्याज्यमित्यर्थः । **अन्यः अपि** त्वत्तो भिन्नस्त्वत्सजातीयोऽपि मुनिवरः **रामगिर्याश्रमस्थः** रामगिरिपर्वतस्थाश्रमनिवासः । रामगिरौ य आश्रमस्तत्र निवसनशील इत्यर्थः । **तव** भवदीयः **विद्वान्** ज्ञानी **सहचरः** सतीर्थ्यः मुनीन्द्रः **एवं** सुरयुवतिजं सुखं सुलभं सेव्यं चेत्येवं **ब्रूयात्** कथयिष्यति । मुक्तिसङ्गमजनितसुखस्य दवीयस्त्वात्साक्षादनुभूयमानत्वासम्भवान्निरतिशयायाससाध्यत्वाच्च तत् परित्यज्य त्वया सुरयुवतिजसुखस्यानायाससाध्यत्वात्साक्षादत्रैव भवे शीघ्रमनुभावितुं शक्यत्वादपायापायाच्च तदेव त्वया सेवनीयमिति कमठचरशम्बरासुराभिप्रायः ।

The way to final beatitude is pursued by the greatest of sages verily for the sake of attaining pleasure. Pleasure is divided into two varieties, the first of which is attained through heavenly damsels while the other is inherent in the superhuman power in the form of salvation. Salvation is far away. The other one is very easy to attain [ and ] worthy of being enjoyed. Even another person, a learned companion of yours, residing in a hermitage situated on the mountain, Ramagiri by name, also will proclaim thus.

विद्युद्वल्लीविलसितनिभाः सम्पदश्चञ्चलत्वात्
लब्धाभोगाः नियतविपदस्तत्क्षणादेव भोगाः ।
तस्माल्लोकः प्रणयिनि जने स्थास्नुभावव्यपायात्
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः ॥ २३ ॥

अन्वयः—[ यस्मात् ] चञ्चलत्वात् सम्पदः विद्युद्वल्लीविलसितनिभाः, लब्धाभोगाः भोगाः तत्क्षणात् एव नियतविपदः, तस्मात् अबले प्रणयिनि जने स्थास्नुभावव्यपायात् अव्यापन्नः वियुक्तः लोकः त्वां कुशलं पृच्छति।

विद्युदित्यादि। यस्मात् कारणात् **चञ्चलत्वात्** अस्थिरत्वात् **सम्पदः** धनानि। धनधान्यकुप्यभाण्डादय इत्यर्थः। **विद्युद्वल्लीविलसितनिभाः** तडिल्लतास्फुरितसदृशाः। विद्युद्वल्ल्यास्तडिल्लतायाः विलसितं स्फुरणं विद्युद्वल्लीविलसितं। विलसितं विलासः। स्फुरणमित्यर्थः। 'नञ्भावे क्तोऽभ्यादिभ्यः' इति क्तः। तन्निभास्तत्तुल्याः। अयं निभशब्दस्तुल्यार्थस्स एवोत्तरपदत्वेन रूढस्तेन 'तेन निभः' इत्येवं वाक्ये न प्रयोज्यः। 'वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक्। साधारणः समानश्च स्युरुत्तरपदे त्वमी॥ निभसंकाशनीकाशप्रतीकाशोपमादयः।' इत्यमरः। **लब्धाभोगाः** प्राप्तानुभवाः। लब्धः प्राप्तः आभोगः अनुभवो येषां ते लब्धाभोगाः। भोक्त्रा भुक्ताः इत्यर्थः। **भोगाः** निर्वेशाः निर्वेशविषयाः वा। 'पुंसि भोगः सुखेऽपि स्यादहेश्च फणकाययोः। निर्वेशे गणिकादीनां भोजने पालने धने॥' इति विश्वलोचने। भुजेरभ्यवहारार्थात्कौटिल्यार्थाच्च घञ्। **तत्क्षणादेव** भुक्त्यनन्तरोत्तरसमय एव। **नियतविपदः** निश्चितविनाशाः। भुक्त्यनन्तरोत्तरकाले विनाशिनः इत्यर्थः। नियता निश्चिता विपद्विनाशः येषां ते नियतविपदः। विपद्यते विनश्यतीति विपद्। 'सम्पदादिभ्यः क्विप् क्तिः' इति विपद्यतेर्भावे स्त्रियां क्विप्। भुक्त्यव्यवहितोत्तरकाले विनशनशीलाः इत्यर्थः। **तस्मात्** ततः कारणात् **अबले** शरीरसामर्थ्यविकले। अनशनावमोदर्यादिबाह्यतपआचरणजातशारीरदौर्बल्ये भवति पार्श्वे **प्रणयिनि जने** पत्नीचर्यां वसुधरायां विषये प्रणयितां गच्छति जने भवति। भवद्विषये इत्यर्थः। **स्थास्नुभावव्यपायात्** स्थिरत्वाभावात्। यथाऽन्ये भोगाः भोगविषयाः वा भोगाव्यवहितोत्तरकाले निश्चितविनाशास्तथा भवतोऽपि तद्भोगविषयत्वात्त्वद्विनाशाशङ्कया विगलितचित्तस्थैर्यत्वादिति हेतोश्चेतसः स्थैर्यव्यपगमाद्धेतोर्वा। स्थास्नुः स्थितिशीलः। 'ग्लाभूजिस्थो ग्स्नुः' इति तिष्ठतेश्शीलार्थे ग्स्नुः। स्थास्नुः स्थितिशीलश्चासौ भावश्च स्थास्नुभावः। तस्य व्यपायादपगमात्। विनाशादित्यर्थः। सम्पदां विद्युद्वल्लीविलसितनिभत्वस्य भोगानां च निश्चितविनश्वरत्वस्य दर्शनान्मनःस्थैर्यस्य व्यपगमाद्वेत्यप्यर्थान्तरमत्रोह्यम्। **अव्यापन्नः** भृशं दुःखितः। व्यापन्नः आकुलीभूतः। दुःखितः इत्यर्थः। अप्रशस्तं कुत्सितं यथा तथा व्यापन्नः अव्यापन्नः। अत्यर्थं दुःखितः इत्यर्थः। यद्वा व्यापन्नं व्यापादः। अन्तर्भावितण्यर्थस्य ग्रहणस्यानुकूलोऽयमर्थः।

अव्यापन्नः इत्यस्य भवद्विषयकपापाशयविकलः इति चार्थः । वियुक्तस्य द्रोहादिपापाशयसम्भवेऽपि त्वत्तो वियुक्तायास्त्वत्पत्नीचर्यास्त्वद्विषयको न द्रोहादिपापरूपभावनात्मकः आशयः इति भावः । 'व्यापादो द्रोहचिन्तनं ' इत्यमरः । **वियुक्तः** त्वत्तो वियोगं प्राप्तो दुःखाकुलः सन् **लोकः** जनः । भवत्पत्नीत्यर्थः । **त्वां** भवन्तं **कुशलं** भवतः क्षेममारोग्यं च **पृच्छति** अनुयुङ्क्ते । जिज्ञासते इत्यर्थः । 'दुहि याचि रुधि प्रच्छि ' इत्यादिना पृच्छतेर्द्विकर्मकत्वम् ।

Inasmuch as the riches resemble a flash of lightning owing to their fickleness [ inconstancy ], the worldly enjoyments, when experienced, perish certainly the very moment they are experienced, a separated person [ i. e. your better half of the former birth separated from you then ] much distressed owing to the absence of stabilty in the mind [ of your beloved or ] in the loving person wLo is void of [ bodily ] srengfh, inquires of you after your health [ or welfare ].

**तद्भोक्तव्ये स्वयमुपनते शीतकत्वं समुज्झे-**
**र्मृत्युव्याघ्रो द्रुतमनुपदी वाममन्विच्छतीतः ।**
**आयुष्मत्त्वं कुशलकलितं नन्विहाशाधि नित्यं**
**पूर्वाशास्यं सुलभविपदां प्राणिनामेतदेव ॥ २४ ॥**

अन्वयः– तत् भोक्तव्ये स्वयं उपनते शीतकत्वं समुज्झेः । द्रुतं अनुपदी मृत्युव्याघ्रः वामं अन्विच्छति । इतः कुशलकलितं आयुष्मत्त्वं इह ननु आशाधि । सुलभविपदां प्राणिनां एतदेव नित्यं पूर्वाशास्यम् ।

तदित्यादि । **तत्** यस्मात्कारणात्त्वां त्वदीयं कुशलं पृच्छति तस्मात्कारणात् । **भोक्तव्ये** भोगार्हे । प्राक्तनभवे देवरेण भुक्तत्वात्सा वसुन्धराचरी यद्यपि भ्रष्टशीलाऽऽसीत्तथाप्यधुनातनभवेऽक्षतयोनित्वात्तस्याः परदारत्वाभावादस्त्येव भोगार्हत्वमिति कमठचरशाम्बरासुराभिप्रायः । **स्वयं उपनते** स्वयमेव त्वत्समीपं समागते सति त्वं **शीतकत्वं** आलस्यं । शीतं मन्दं कारी शीतकः जडः । अलसः इत्यर्थः । शीतकस्यालसस्य भावः शीतकत्वमलत्वम् । 'शीतकोष्णकौ कारिणि ' इति कारिण्यर्थे को निपातितः । **समुज्झेः** परित्यजतात् । **द्रुतं** शीघ्रं **अनुपदी** अनुपदमन्वेष्टा । पदस्य पश्चादनुपदं । ' झिः सुव्व्यृद्व्यृद्ध्यर्थाभावातीत्यसम्प्रतिशब्दख्यातिपश्चाद्यथायुगपत्सम्पत्साकल्यान्ते ' इति पश्चादर्थे हसः भावप्रधानः । अनुपदमन्वेष्टाऽनुपदी । 'पार्श्वकायःशूलिक-

दाण्डाजिनिकानुपद्यन्वेष्टा ' इत्यनुपदीत्यन्वेष्टरि निपातः । **मृत्युव्याघ्रः** व्याघ्रतुल्यः मृत्युः । मृत्युर्व्याघ्रः इव मृत्युव्याघ्रः । ' व्याघ्रादिभिरुपमेयोऽतद्योगे ' इति सः । **वामं** प्रतीपं । प्रतिकूलमित्यर्थः । ' वामौ वल्गुप्रतीपौ ' इत्यमरः । ' वामो वक्त्रे मनोहरे ' इति धनञ्जयः । **अभिलषति** काङ्क्षति । यथा व्याघ्रः स्वभक्ष्यस्य प्रतिकूलं मरणमभिकाङ्क्षति तथाऽयं मृत्युर्मर्त्यस्य प्रतीपं मरणमभिलषतीति भावः । **इतः** एतस्मात्कारणात् । यतो मृत्युर्मर्त्यस्य मरणमभिलषति ततः इत्यर्थः । **कुशलकलितं** क्षेमसहितम् । ' पर्याप्ति–क्षेम–पुण्येषु कुशलं शिक्षिते त्रिषु ' इत्यमरः । **आयुष्मत्त्वं** दीर्घजीवित्वम् । जैवातृकत्वमायुष्मत्त्वमित्यनर्थान्तरत्वम् । अत्र भूम्न्यर्थे मतुः । **इह** अत्र भोक्तव्यविषये **ननु** निश्चितं । नन्वत्रावधारणे । ' ननु प्रश्नावधारणे । नन्वनुज्ञावितर्कायमन्त्रेष्वनुनये ननु ' इति विश्वलोचने । **आशाधि** काङ्क्षतात् । आङ्शास्विच्छायामित्यस्य धोर्लोटि रूपम् । **सुलभविपदां** प्रयत्नानुपस्थापितोपप्लवानां । कारणमन्तरेण येषां पापकर्मोदयेनानर्थाः प्राप्तास्तेषामित्यर्थः । **प्राणिनां** देहिनां विषये **एतदेव** कुशलकलितमायुष्मत्त्वमेव **नित्यं** सततं **पूर्वाशास्यम्** प्रथममाशंसनीयम् । ' व्याः ' इत्यावश्यकत्वस्य गम्यमानत्वाद्व्यः । एतद्भोक्तव्यजनविषयं कुशलं त्वयाऽऽकाङ्क्षणीयमिति शम्बरासुराभिप्रायः ।

As the object of enjoyment has presented itselt [ without any efforts on your part ], you should give up indifference. As the tiger–like death, following on the heels to make search [ for its prey ], wishes to do evil thing, you should verily desire for a long–life along with prosperity, for this very thing is to be necessarily desired for with reference to the living beings whom calamities befall in an easy manner.

**सैषा बाला प्रथमकथिता पूर्वजन्मप्रिया ते**
**पश्यायाता रहसि परिरभ्याऽनुमोदं नयेत्त्वाम् ।**
**अङ्गेनाङ्गं तनु च तनुना गाढतप्तेन तप्तं**
**सास्रेणास्रद्रवमविरतोत्कण्ठमुत्कण्ठितेन ॥ २५ ॥**

अन्वय :— [ या ] प्रथमकथिता [ या ] ते पूर्वजन्मप्रिया सा एषा बाला आयाता; पश्य । [ सा ] तनुना गाढतप्तेन सास्रेण उत्कण्ठितेन [ स्वेन ] अङ्गेन तनु तप्तं अस्रद्रवं अविरतोत्कण्ठं [ ते ] अङ्गं रहसि परिरभ्य त्वां अनुमोदं नयेत् ।

**सैषेत्यादि** । या **प्रथमकथिता** पूर्वं वर्णिता । पूर्वश्लोकवर्णितेत्यर्थः । या **ते** तव

**पूर्वजन्मप्रिया** प्राग्भवीया कान्ता । प्राचीनभवसम्बन्धिनी कान्तेत्यर्थः । **सा एषा बाला** नवयौवनाऽङ्गना **आयाता** सम्प्राप्ता । **पश्य** विलोकस्व । सा **तनुना** विरलेन । कृशेनेत्यर्थः । ' तनुः केशेऽपि विरले स्वल्पमात्रेऽपि वाच्यवत् ' इति विश्वलोचने । **गाढतप्तेन** नितान्तं सन्तप्तेन । ' तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ' इत्यमरः । **सास्रेणा** साश्रुणा । ' अस्रमश्रु च ' इत्यमरः । **उत्कण्ठितेन** सञ्जातस्वानन्दजननचञ्चुशरीरान्तरप्राप्त्यभिलाषेण स्वेन **अङ्गेन** शरीरेण **तनु** कृशं । विरहजनितकार्श्यमित्यर्थः । **तप्तं** उदीर्णशृङ्गाररसत्वेन समुत्पन्नमदनज्वरं **अस्रद्रवं** विरहदुःखजनितगलदश्रुजलक्लिन्नम् । अस्राणां द्रवः अस्रद्रवः । सोऽस्यास्तीति अस्रद्रवम् । 'ओऽभ्रादिभ्यः' इति मत्वर्थीयोऽप्रत्ययः । **अविरतोत्कण्ठं** स्वानन्दजननिपुणशरीरान्तरप्राप्त्यर्थं सततं तीव्राभिलाषाकुलं ते **अङ्गं** शरीरं **रहसि** एकान्ते **परिरभ्य** आलिङ्ग्य **त्वां** भवन्तं **अनुमोदं** प्रमोदं **नयेत्** नेष्यति । प्रापयिष्यतीत्यर्थः ।

Look, this female, in the prime of her youth, referred–to just before, your beloved of the former birth, has arrived. She will give you pleasure by embracing with ( her ) body emaciated, greatly heated, possessing drops of tears [ fallen upon it from her eyes], having longing produced [ for a person beloved to itself ], [ your ] body which is thin, heated, having a flow of tears [ droppidg down from your eyes ] and having incessant longing produced [ for a person beloved to itself ].

**दूरागाढप्रणयदिवसो मन्मथेनाऽतिभूमिं**
**नीतो बिभ्यत्त्वदभिसरणादुत्सुकः स्त्रीजनस्त्वाम् ।**
**उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती**
**सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥ २६ ॥**

अन्वय :— दूरागाढप्रणयादिवसः, समधिकतरोच्छ्वासिना मन्मथेन अतिभूमिं नीतः, त्वदभिसरणात् बिभ्यत्, उत्सुकः, दूरवर्ती, वैरिणा विधिना रुद्धमार्गः स्त्रीजनः उष्णोच्छ्वासं त्वां तैः सङ्कल्पैः विशति ।

दूरेत्यादि । **दूरागाढप्रणयादिवसः** आप्रणयदिवसाद्व्यतीतदीर्घकालः । प्रणयस्य प्रेमाराधनस्य दिवसः । प्रणयदिवसः । दूरे दूरभूते परोक्षातीतकाले आगाढः निमग्नः दूरागाढः । दूरागाढः प्रणयदिवसः यस्य सः । **समधिकतरोच्छ्वासिना** समधिकतरः उच्छ्वासी

वृद्धिमान् समधिकतरोच्छ्वासी । तेन । उच्छ्वासः वृद्धिरस्त्यस्योच्छ्वासी । 'अतोऽनेकाचः' इतीन्मत्वर्थे । 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ ( ठेनौ ) स्मृतौ ' [ पा. म. ५।२।११५ ] । **मन्मथेन** कामेन कामाभिलाषेण वा । 'मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः' इत्यमरः । अतिभूमिं अतिक्रान्तमर्यादत्वं **नीतः** प्रापितः । उन्मादावस्थां प्रापय्य निर्लज्जावस्थां प्रापितः । आप्रणयदिवसाद्द्राघीयसः कालस्य व्यतीतत्वात् कामाभिलाषस्य तीव्रतामितत्वादेष स्त्रीजनोऽह्रीको जातः इति शम्बरासुराभिसन्धिः । **त्वदभिसरणात् बिभ्यत्** त्वदभिसरणविषये भयाकुलः । त्वां प्रत्यभिसरणं त्वदभिसरणम् । तस्मात् बिभ्यत् शङ्कमानः । 'भीत्रार्थानां भयहेतुः' इति भयहेतोरपादानत्वाद् 'अपादाने पञ्चमी' इति पञ्चमी । विवृद्धमदनावस्थया निर्लज्जतां प्रापितोऽपि भयाकुलत्वात्त्वामभिसर्तुं न शक्नोति । कान्तार्थं सङ्केतं यातुकामया लज्जावद्भयमपि त्याज्यं, तत्त्यागे कृते सत्येव कान्तं प्रत्यभिसरणस्य सम्भवात् । तदुक्तं भरतेन – 'हित्वा लज्जाभये श्लिष्टा मदनेन मदेन च । अभिसारयते कान्तं सा भवेदभिसारिका ॥' **उत्सुकः** विलम्बितमसहमानः । 'कालासहनमौत्सुक्यं चेतस्तापत्त्वरादिकृत्' इत्यलङ्कारचिन्तामणौ । **दूरवर्ती** त्वत्समीपदेशादीषद्दूरे वर्तमानः। भयाकुलत्वात्त्वदन्तिकमागन्तुमसमर्थत्वादीषद्दूरे वर्तमानः इत्यर्थः । **वैरिणा** शत्रुभूतेन । 'समधिकतरोच्छ्वासिनेत्यस्य वैरिणेत्यनेनान्वये समधिकतरमुच्छ्वासयितुं वियोजयितुं शीलमस्येति समधिकतरोच्छ्वासी । तेन । 'शीलेऽजातौ णिन्' इति णिन्' । **विधिना** दैवेन **रुद्धमार्गः** प्रतिबद्धाध्वा । तत्समीपगमनमार्गस्य निष्प्रत्यूहत्वेपि विधिजनितभयाकुलितस्वान्तत्वात्तस्य स्त्रीजनस्य त्वत्समीपं गन्तुमसमर्थत्वात्प्रतिपन्थिदैवजनितप्रत्यूहत्वान्मार्गस्य विधिरुद्धत्वमभ्यूह्यम् । **स्त्रीजनः** समागता स्त्री । **उष्णोच्छ्वासं** विरहज्वरसन्ततत्वादुष्णोच्छ्वासं **त्वां** भवन्तं **तैः** स्वसंवेद्यैः **सङ्कल्पैः** मनोरथैः **विशति** निर्विशति । सङ्कल्पनिर्मितेन त्वया सङ्कल्पैरेव रतिसुखमनुभवतीति भावः । यद्वा स्त्रीजनः इत्यस्याङ्गनासङ्घात इत्यर्थो ग्राह्यः, मायामयस्य ललितललनासमूहस्य कमठचरशम्बरासुरेण कल्पितत्वात् ।

This young female [ or this concourse of young females ], having its day of love-making merged into the long past, rendered shameless [ or insolent ] by passion intensified too much, fearing to meet you [or apprehensive of coming in the nearest proximity to you], intolerant of delay, staying at a distance, with her path [ leading to you] blocked up by inimical fate, experiences you [ i. e. takes delight in cohabing

with you ] through those fancies [ i. e. through the fancies which are worthy of being experienced by oneself in whose mind they rise ].

सोऽयं त्वत्तः प्रणयकणिकामप्यलब्ध्वा विलक्षो
दूरात्सेवां तव वितनुते पश्य सार्थो वधूनाम् ।
शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ॥ २७ ॥

अन्वय :— यत् किल सखीनां पुरस्तात् शब्दाख्येयं अपि [ तत् ] आननस्पर्शलोभात् ते कर्णे कथयितुं यः लोलः अभूत् सः अयं वधूनां सार्थः त्वत्तः प्रणयकणिकां अपि अलब्ध्वा विलक्षः दूरात् तव सेवां वितनुते, पश्य ।

सोऽयमित्यादि । **यत्** प्रतिपादनीयो विषयः **किल** खलु **सखीनां** वयस्यानां **पुरस्तात्** अग्रतः । 'पूर्वाधरावराणां पुरधवोऽसि' 'अस्तात्' इत्यस्तादस्ताति च परतः पूर्वस्य परादेशः । **शब्दाख्येयं अपि** शब्दोच्चारणपूर्वकं प्रतिपादयितुं योग्यमपि । शब्दैः स्थानप्रयत्नाभ्यामुच्चैरुच्चारितैश्शब्दैः आख्येयं प्रतिपादनार्हम् । 'तृच्व्याश्चार्हे' इत्यर्हार्थे व्यसञ्ज्ञस्त्यः । **तत्** स प्रतिपादनीयो विषयः **आननस्पर्शलोभात्** त्वन्मुखसम्पर्कगृध्नुतायाः । आननस्पर्शे भावत्कमुखसम्पर्के लोभाद्गृध्नुतायाः आननस्पर्शलोभात् । त्वदधररसपानलौल्यादित्यर्थः । **ते** भवदीये **कर्णे** श्रोत्रे । श्रवणाविलसन्निधौ स्वमुखं नीत्वेत्यर्थः । **कथयितुं** प्रतिपादयितुं । **यः** वधूनां समूहः **लोलः** सतृष्णः । 'लोलश्चलसतृष्णयोः' इत्यमरः । **अभूत्** भवति स्म । **सः अयं वधूनां** योषितां । 'ललना कामिनी योषिद्योषा सीमन्तिनी वधूः' इति धनञ्जयः । **सार्थः** वृन्दः । 'सार्थः स्याद्वणिजां वृन्दे वृन्दमात्रेऽपि दृश्यते' इति विश्वलोचने । **त्वत्तः** भवत्सकाशात् **प्रणयकणिकां अपि** प्रेम्णः लेशमपि । 'गोधूमचूर्णे कणिकः स्त्रियां सूक्ष्माग्निमन्थयोः' इति विश्वलोचने । 'कणिकाऽल्पकणः गोधूमपिष्टं च' इत्यमरटीकायां क्षीरस्वामी । **अलब्ध्वा** अनवाप्य **विलक्षः** विस्मयान्वितः । निष्प्रतिपत्तिरित्यर्थः । प्रतिपत्तेरभावाज्जातविस्मय इत्यर्थो वा । **दूरात्** त्वत्समीपे वर्तमानोऽपि त्वत्समीपतरं प्रदेशमप्राप्य । **तव** भवतः **सेवां** शुश्रूषां **वितनुते** करोति । **पश्य** नयनयोर्गोचरतां नयतात् ।

Look here, this ( very ) concourse of ( young ) females which was ( just ) eager, owing to an ardent desire for a touch of ( your ) face, to tell into your ear what could be indeed spoken out in

words in the presence of friends, struck with wonder on account of non-attainment of even a bit of love from you, serves you from a distance.

योऽसौ स्त्रीणां प्रणयमधुरो भावगम्योऽधिकारः
कामाभिख्यां दधदविरतं लोकरूढा प्रसिद्धिः।
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥ २८ ॥

अन्वयः— यः असौ कामाभिख्यां दधत् श्रवणविषयं अतिक्रान्तः, लोचनाभ्यां अदृष्टः, प्रणयमधुरः अधिकारः [ यस्य च ] भावगम्यः [ इति ] अविरतं लोकरूढा प्रसिद्धिः सः मन्मुखेन उत्कण्ठाविरचितपदं इदं आह।

**योऽसावि**त्यादि। **यः असौ स्त्रीणां** कामिनीनां **कामाभिख्यां** 'कामः' इति सञ्ज्ञां **दधत्** बिभ्राणः **श्रवणविषयं** श्रोत्रगोचरं। श्रवणयोः कर्णयोः विषयः गोचरः श्रवणविषयः। तम्। **अतिक्रान्तः** अतीतः। **लोचनाभ्यां** नयनाभ्यां **अदृष्टः** दर्शनविषयतामप्रापितः। अनवलोकितः इत्यर्थः। **प्रणयमधुरः** प्रणयेन प्रेम्णा मधुरः माधुर्ययुक्तः। आनन्दस्यन्दीत्यर्थः। मधु माधुर्यम्। तदस्यास्मिन्वाऽस्तीति मधुरः। 'मधुकृष्यादिभ्यो रलौ' इति मत्वर्थीयो रः। 'मधुरो रसवत्स्वादुप्रियेषु त्रिषु वाच्यवत्' इति विश्वलोचने। 'स्वादुप्रियौ च मधुरौ' इत्यमरः। **अधिकारः** मानसः परिणामः। यस्य च **भावगम्यः** भावैः सविलासैरभिनयैर्गम्योऽनुमेयः। शृङ्गाररसस्यान्तर्हृदयमुत्प्लवमानत्वादिन्द्रियागोचरत्वात्सविलासैः कामुकीनामभिनयैर्गम्यत्वमिति भावः। इति **अविरतं** अविच्छिन्नकालं **लोकरूढा** लोके प्रचलिता। सर्वलोकसम्मतेत्यर्थः। **प्रसिद्धिः** प्रख्यातिः। **सः** प्रणयमधुरो मानसः परिणामः। परिणामपरिणामिनोः कथञ्चिदभिन्नत्वात्कामवासनाकुलितस्वान्तः कामिनीजनः इत्यर्थः। **मन्मुखेन** मद्द्वारेण **उत्कण्ठाविरचितपदं** उत्कण्ठया उत्कलिकया विरचितानि पदानि सुप्तिङन्तरूपाणि वाक्यानि वा यस्मिंस्तत्। 'पदं वाक्ये प्रतिष्ठायां व्यवसायापदेशयोः। पादातचिह्नयोश्शब्दे स्थानत्राणाङ्घ्रिवस्तुषु' इति विश्वलोचने। **इदं** वक्ष्यमाणं 'योगिन्! योगप्रणिहितमनाः' इत्यादिकं **आह** ब्रवीति।

That transmutation of the minds of women, which is mellifluous owing to love, which assumes the name Kama, which has gone beyond the range of ears, which is not seen by eyes, and which is incessantly

known in the world to be intelligible through amorous gestures, says through me, their mouthpiece, this ( i. e. the following ), the words [ or sentences ] in which are arranged by longing.

**योगिन् ! योगप्रणिहितमनाः किंतरां ध्येयशून्यं**
**ध्यायस्येवं, स्मर ननु धियाऽध्यक्षवेद्यं मतं नः।**
**श्यामास्वङ्गं, चकितहरिणीप्रेक्षिते दृष्टिपातं,**
**वक्त्रच्छायां शशिनि, शिखिनां बर्हभारेषु केशान् ॥ २९ ॥**

अन्वयः— योगिन् ! योगप्रणिहितमनाः एवं किंतरां ध्येयशून्यं ध्यायसि ? ननु नः मतं अध्यक्षवेद्यं अङ्गं श्यामासु, दृष्टिपातं चकितहरिणीप्रेक्षिते, वक्त्रच्छायां शशिनि, केशान् शिखिनां बर्हभारेषु धिया स्मर।

**योगिन्नित्यादि**। हे योगिन् ध्याननिमग्नचेतस्क। योगो ध्यानमस्याऽस्तीति योगी। तस्य किः। 'योगः सन्नहनोपाय-ध्यान-सङ्गति युक्तिषु' इत्यमरः। 'अतोऽनेकाचः' इतीन्। 'तपस्वी संयमी योगी वर्णी साधुश्च पातु वः' इति धनञ्जयः। **योगप्रणिहितमनाः** ध्येयैकाग्रनिरुद्धचेतस्कः। योगे ध्याने प्रणिहितं स्थापितं मनः येन सः। **एवं** श्रीमन्मूर्त्येत्यादिश्लोकोक्तप्रकारेण **किंतरां** इन्द्रियप्रत्यक्षावेद्यविषयाणां सम्प्रज्ञातासम्प्रज्ञातमेघनादसमाधिरूपाणां किंविशिष्टं ? किमो ज्ञान्तात् 'र्येन्मिङ्किंज्ञा-दामद्रव्ये' इति आम्। **ध्येयशून्यं** इन्द्रियाग्राह्यध्यानविषयविकलं ध्यानं। शून्यं रिक्तम्। 'शून्यं तु वशिकं तुच्छरिक्तके' इत्यमरः। **ध्यायसि** चिन्तयसि। ध्यानविषयस्येन्द्रियग्राह्यत्वाभावात्तुच्छाभावात् किंविशिष्टं समाधिमधिरूढोऽसीति भावः। **ननु** अयि योगिन् **नः मतं** आवाभ्यां बह्वादतम्। 'द्वौ चास्मदोऽनुपाधौ' इत्यस्मदो वहुत्वम्। 'जीन्मत्यर्चार्थशील्यादिभ्यः क्तः' इति सति काले क्तः। 'क्तस्याधारसतोः' इति सति कालेऽत्र क्तस्य प्रत्युक्तत्वात्ता। **अध्यक्षवेद्यं** इन्द्रियार्थसन्निकर्षजनितज्ञानविज्ञेयं अङ्गं शरीरं **श्यामासु** प्रियङ्गुलतासु। प्रीणनक्षमसौकुमार्यादिसाधारण्याच्छ्यामायाः मनोहारिण्याः विशिष्टस्त्रियोऽङ्गं प्रियङ्गुलतायां स्मरेति भावः। 'प्रियङ्गुः प्रियवल्ली च फलिनी कुञ्जिनी प्रिया। वृक्षा गोवन्दनी श्यामा कारम्भा वर्णभेदिनी' इति क्षीरस्वामिटीकायाम्। श्यामाख्यस्त्रीलक्षणं यथा — 'शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते'॥ **दृष्टिपातं** नयनोपान्तविलोकितादिदृग्व्यापारं **चकितहरिणीप्रेक्षिते** भयाकुलैणीनयनयोरवलोकनव्यापारे। कामिनीभयाकुलैणीनयनयोश्चाञ्चल्यस्य साधर्म्यात्कमनीय-

कामिनीजननयनव्यापारं भीत्याकुलस्वान्तैणीनयनव्यापारे स्मरेत्यभिप्रायः । वक्त्रच्छायां वदनसौन्दर्यं शशिनि चन्द्रमसि । मुखचन्द्रमसोः कान्तिसाम्यात्कामिनीमुखकान्तिं चन्द्रमःकान्त्यां स्मरेत्यर्थः । केशान् कुन्तलान् शिखिनां शिखावलानां । मयूराणामित्यर्थः । 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् । शिखावलः शिखी केकी मेघनादानुलास्यपि' इत्यमरः । शिखा शिखण्डिनश्चूडाऽस्त्यस्य शिखी मयूरः । 'तुन्दादिव्रीहेरिलश्च' इतीन् । 'शिखा शिखायां चूडायां चूडायां च शिखण्डिनः' इति विश्वलोचने । बर्हभारेषु पिच्छकलापेषु । 'बर्हं मयूरपिच्छेऽपि दलेऽपि स्यान्नपुंसकम्' इति विश्वलोचने । कुन्तलबर्हभारयोर्वैपुल्यमार्दवादिधर्मसाधर्म्यात्कामिनीकुन्तलान्बर्हभारेषु स्मरेत्याकूतम् । धिया मनसा स्मर ध्यायतात् । 'स्मर्थदयेशां कर्मणि' इति शेषे ताचा विहितत्वेऽपि शेषत्वेनात्र विवक्षाया अभावादिप्कर्मणः । पूर्वदृष्टसंस्कारोद्बोधनिबन्धनत्वात्स्मृतेः स्मृतिरूपत्वाद्ध्यानस्य सम्प्रज्ञातादिसमाधिविषयस्येन्द्रियैस्सन्निकर्षासम्भवात्तद्विषयग्रहणस्याशक्यत्वात्तत्संस्कारसम्भवानुपपत्तेः स्मृत्युत्प्लुतेरभावात्प्रोक्तध्यानस्याशक्यानुष्ठानत्वादध्यक्षवेद्यं स्त्रीरूपं त्वं ध्यायस्वेति कमठचरशाम्बरार्यभिप्रायः ।

Oh mendicant ! with your mind absorbed in profound and abstract meditation, what kind of meditation, having no concrete object, are you practising thus ? Oh sage ! call to your mind the physical frame ( of a beautiful woman ) in the Śyāmā creeper, ( her ) glances in those of the frightened doe, the charm of her face in the moon, ( and her ) tresses in the plumages of peacock — all this is highly considered by both of us and is perceptible through sense–organs.

पश्याऽमुष्मिन्नवकिसलये पाणिशोभां, नखानां
छायामस्मिन् कुरबकवने सप्रसूने, स्मितानाम् ।
लीलामुद्यत्कुसुमितलतामञ्जरीष्वस्मदीया–
मुत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान् ॥३० ॥

अन्वयः— अस्मदीयां पाणिशोभां अमुष्मिन् नवकिसलये [पश्य], नखानां छायां अस्मिन् सप्रसूने कुरबकवने [ पश्य ], स्मितानां लीलां उद्यत्कुसुमितलतामञ्जरीषु [ पश्य ], भ्रूविलासान् प्रतनुषु नदीवीचिषु पश्य, उत्पश्यामि ।

**पश्येत्यादि** । **अस्मदीयां** अस्मत्सम्बन्धिनीं । मदीयामित्यर्थः । 'त्यदादिः' इत्यस्मदो वृद्धसञ्ज्ञत्वाद् 'दोश्छः' इति छः । **पाणिशोभां** करतलसौन्दर्यं **अमुष्मिन्** एतस्मिन् **नवकिसलये** प्रत्यग्रपल्लवे । नवं प्रत्यग्रं च तत् किसलयं पल्लवश्च नवकिसलयम् । तस्मिन् । 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः' 'पल्लवोऽस्त्री किसलयम्' इत्युभयत्राऽप्यमरः । पश्य । **नखानां** कररुहाणां **छायां** कान्तिं । 'छाया स्यादातपाभावे सत्कान्त्युत्कोचकान्तिषु । प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने । **अस्मिन्** एतस्मिन् **सप्रसूने** सकुसुमे । 'प्रसूनं कुसुमं सुमम्' इत्यमरः । **कुरवकवने** । कुरवकः रक्तपुष्पः कुरण्टकजातीयः ओषधिविशेषः । तदुक्तं– 'पीतः कुरण्टको ज्ञेयो रक्तः कुरवकः स्मृतः ।' इति । 'सैरेयाख्या झिण्टी अरुणपुष्पा चेत् कुरवकोऽसौ' इति क्षीरस्वामी । तस्य वने कानने । कुरवककानने इत्यर्थः । पश्य । **स्मितानां** मन्दहासानां । 'स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम्' इत्यमरः । **लीलां** चारुतां शोभां वा । **उद्यत्कुसुमितलतामञ्जरीषु** कुसुमितानां पुष्पितानां लतानां उद्यत्सूद्गच्छन्तीषु मञ्जरीषु कुसुमस्तवकेषु । पश्य । **भ्रूविलासान्** भ्रुकुटिविभ्रमान् । **प्रतनुषु** स्वल्पासु **नदीवीचिषु** तरङ्गिणीतरङ्गेषु **पश्य** विलोकयेत्युत्पश्यामि विलोकयामि । अत्र 'ग्राममट नगरमट गिरिमट इत्येवाहमटामि' इत्यादिवत् पाणिशोभां, नखच्छायां, स्मितलीलां, भ्रूविलासांश्चेति कर्मणां प्रचयस्य दर्शनात् 'पश्य' इति 'भृशाभीक्ष्ण्ये लोट् तस्य हिस्वौ वा तध्वमोस्तथार्थे' इत्यनुवृत्तौ 'प्रचये वा सामान्यार्थे' इति कालसामान्ये विकल्पेन लोटः प्रयोगः । पाणिशोभां पश्य, नखच्छायां पश्य, स्मितलीलां पश्य, भ्रूविलासान् पश्य इत्येवाहमुत्पश्यामि । वावचनात्पक्षान्तरे पाणिशोभां पश्यामि, नखच्छायां पश्यामि, स्मितलीलां पश्यामि, भ्रूविलासान् पश्यामि इत्येवाहमुत्पश्यामीति पश्येत्यस्यार्थः । अहमनेकत्र मत्सादृश्यं पश्यामीति शम्बरासुरमुखेन वदतः वधूसार्थस्याभिप्रायः । अस्मदीयामिति सार्थगतवधूबहुत्वापेक्षयौत्पश्यामीति च वधूसार्थैकत्वापेक्षयेत्यभ्यूह्यम् ।

We see in these young and tender sprouts the loveliness of our palms, in this grove of Kurabaka plants bearing ( red ) flowers the brightness of our nails, in these clusters of blossoms shooting out of creepers bearing flowers the grace of our smiles [ and ] in the very slender ripples of rivers the graceful-movements of our eyebrows. [ We see our semblance in many objects. ]

साहश्यं नः स्फुटमिति यथा दृश्यते सर्वगामि
ध्येयं साक्षात्सुखफलमिदं योगिनां कामदायि ।
मिथ्याध्यातेर्मुनिषु विधये हे तपोलक्ष्मि तद्वद्
हन्तैकस्थं क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥ ३१ ॥

अन्वयः— हे चण्डि तपोलक्ष्मि। इति ध्येयं, साक्षात्सुखफलं, योगिनां कामदायि इदं नः सादृश्यं यथा स्फुटं सर्वगामि दृश्यते तद्वत् मुनिषु मिथ्याध्यातेः विधये ते सादृश्यं क्वचित् एकस्थं अपि हन्त न अस्ति ।

**सादृश्य**मित्यादि । हे अयि **चण्डि** सन्तापजनिके । हिंस्रे निष्ठुरे वेत्यर्थः । 'भवेच्चण्डी तु पार्वत्यां हिंस्रकोपनयोषितोः' इति विश्वलोचने । साक्षात्सुखफलत्वाभावात्पारलौकिकस्य तज्जनितसुखस्येन्द्रियागोचरत्वाद्बहिरभ्यन्तरतपस आयासमात्रात्मकत्वात्तपोलक्ष्म्याश्चण्डीति विशेषणं वधूसार्थाभिप्रायापेक्षया यथार्थमवसेयम् । **तपोलक्ष्मि** तपःपद्मे । तपः एव लक्ष्मीः तपोलक्ष्मीः । क्रिः । **इति** अनन्तरपूर्वश्लोकोक्तप्रकारेण **ध्येयं** ध्यातुं योग्यं **साक्षात्सुखफलं** सुखात्मकप्रत्यक्षफलजनकं । इन्द्रियभोग्यसुखप्रदमित्यर्थः । साक्षात् प्रत्यक्षमिन्द्रियग्राह्यं सुखमेव फलं यस्य तत् । 'प्रत्यक्षवाचकः साक्षात्साक्षात्तुल्यार्थवाचकः' इति विश्वलोचने । 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः । **योगिनां** ध्यानिनाम् । योगः ध्यानमस्यास्तीति योगी । 'अतोऽनेकाचः' इतीन् । यं कामं हृदि निधाय ध्यायन्ति योगिनस्तत्कामप्रदमित्यर्थः । **कामदायि** इच्छितप्रदम् । काममिच्छितं ददातीत्येवं शीलमस्य कामदायि । 'शीलेऽजातौ णिन् ।' इति णिन् । 'कामः स्मरेच्छयोः काम्ये कामं रेतोनिकाययोः । सम्मते स्यादनुमतौ काममित्येतदव्ययम्' इति विश्वलोचने । **इदं** पाणिशोभादिकं । सामान्ये नपुंसकम् । **नः** अस्माकं **सादृश्यं** सधर्मत्वम् । अस्मत्पाणिशोभादिधर्मसमानो धर्मो गुणविशेषः । **यथा** येन प्रकारेण **स्फुटं** स्पष्टत्वेन **सर्वगामि** सर्वस्मिन्ग्राह्यार्थे गच्छतीत्येवं शीलमस्येति सर्वगामि । बहुविधग्राह्यार्थे विद्यमानमित्यर्थः । 'शीलेऽजातौ णिन्' इति शीले णिन् । **दृश्यते** दृक्पथमवतरति **तद्वत्** तथा **मुनिषु** योगिषु । मननान्मुनिः । तेषु । मुनीनधिकृत्य मुनिजनविषये वा । **मिथ्याध्यातेः** विफलध्यानस्य । मिथ्या निष्फला ध्यातिः ध्यानम् । ध्यानस्य मिथ्यात्वं विफलत्वाद्विफलत्वं चेन्द्रियग्राह्यसुखफलाभावात् । ध्यातिः ध्यानम् । ध्यायतेः 'स्त्रियां क्तिः' इति क्तिः । **विधये** विधानं कर्तुम् । 'तादर्थ्ये' इत्यप् । प्रचोदयितुमित्यर्थः । **ते** तव । तपोलक्ष्म्याः इत्यर्थः । **सादृश्यं** साधर्म्यम् । त्वद्रूपा—

दिसदृशं रूपादिकमित्यर्थः । **क्वचित् एकस्थं अपि** क्वचिदेकस्मिन्नपि कुरवकादितुल्ये वस्तुनि **हन्त न आस्ति** नास्तीति निश्चितम् । 'दाने निश्चये च हन्तकारः' इत्यमरटीकायां क्षीरस्वामी ।

Oh cruel Laxmī in the form of penance! as this our semblance as described [ in the former stanza ] above, worthy of being meditated upon, bearing fruit in the form of actual pleasure, fulfilling the desires of mendicants, is seen clearly pervading all [ i. e. many external ] objects [ lit. all-pervading ], your semblance, [ helping ] to prescribe fruitless meditation with reference to sages, is decidedly not found in a single object even.

**हा धिङ् मूढिं ! यदयमृपिपः त्वामसाध्वीमजानन्**
**त्वय्यासक्तिं मुहुरुपगतोऽस्मास्वनादर्यभूच्च ।**
**चेतोमय्यां यदनुकमितां ध्यायति प्रेयसीं वा**
**त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम् ॥ ३२ ॥**

अन्वयः— हा ! मूढिं धिक् ! यत् अयं ऋषिपः त्वां असाध्वीं अजानन् त्वयि मुहुः आसक्तिं उपगतः अस्मासु च अनादरी अभूत्, यत् [ च ] अनुकमितां प्रणयकुपितां प्रेयसीं वा त्वां धातुरागैः चेतोमय्यां शिलायां आलिख्य ध्यायति ।

हेत्यादि । **हा** शोके । 'हा विषादेऽपि दुःखेऽपि शोके' इति विश्वलोचने । **मूढिं** मूर्खतां । 'स्त्रियां क्तिः' इति क्तिः । **धिक्** धिगस्तु । धिगत्र निन्दायाम् । 'निर्भर्त्सनेऽपि निन्दायां धिक्' इति विश्वलोचने । 'हाऽन्तराऽन्तरेणातिधिङ्निकषासमयाभिश्चोपाधौ' इति इप् । **यत्** यस्मात्कारणात् **अयं** नासाग्राहितलोचनः-ध्यानैकतानः एष **ऋषिपः** मुनीश्वरः **त्वां** भवतीं तपोलक्ष्मीं **असाध्वीं** । असाधुशीलाम् । हीनाचरणामित्यर्थः । अप्रशस्ता साध्वी असाध्वी । नञत्राप्राशस्त्ये, 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः' इत्युक्तेः । **अजानन्** अनवगच्छन् **त्वयि** भवत्यां तपोलक्ष्म्यां मुहुः शश्वत् । 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत् समाः' इत्यमरः । **आसक्तिं** अभिनिवेशं । अनुरागमित्यर्थः **उपगतः** प्राप्तः । **अस्मासु** च अस्मद्विषये च । वधूसार्थविषये प्राग्भवीयत्वद्वधूविषये मयि वा । **अनादरी** आदरशून्यः । निर्व्यपेक्षः इत्यर्थः । आदरोस्याऽस्तीत्यादरी । 'अतोऽनेकाचः' इति मत्वर्थीयः इन् । न आदरी

अनादरी । **अभूत्** भवति स्म । **यत्** च यतश्च **अनुकामितां** बद्धप्रीतिं । कामिना बद्धानुरागामित्यर्थः । **प्रणयकुपितां** प्रणयक्रियायां सञ्जातकोपाम् । कृतालीककोपामित्यर्थः । **प्रेयसीं वा** दयितामिव **त्वां** भवतीं । तपोलक्ष्मीमित्यर्थः । **धातुरागैः** धातुरागसदृशैः सानुरागैः मानसैः परिणामैः । धातुरेव गैरिकादिरेव रागः लोहितवर्णः धातुरागः । धातुरागः इव धातुरागः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । 'धातुः क्रियार्थे शुक्रेऽपि विषयेष्विन्द्रियेषु च । श्लेष्मादिरसरक्तादिभूतादिवसुधादिषु ॥ मनःशिलादिके लोहे विशेषाद्गैरिकेऽस्थिनि' 'रागोऽनुरागमात्सर्ये क्लेशादौ लोहितादिषु । गान्धारादौ नृपे नागे' इत्युभयमपि विश्वलोचने । यद्वा धातोरात्मनः रागैः अनुरागैः । अनुरागरूपैः परिणामैरित्यर्थः । **चेतोमय्यां** मनोनिर्मितायाम् । 'मयड्वाऽभक्ष्याच्छादने' इति विकारे मयट् । मनसा निर्मितायामित्यर्थः । **शिलायां** शिलासदृश्यां मनोभूमिकायाम् । शिलापट्टकसदृशे मनोनिर्मिते पट्टके इत्यर्थः। शिलेव शिला । तस्याम् । 'देवपथादिभ्यः' इत्यनेन 'इवे खुप्रतिकृत्योः कः' इत्यनेन विहितस्येवार्थस्य कस्योप् । **आलिख्य** मनसि चित्रयित्वा । त्वत्प्रतिकृतिं मनसि विनिर्मायेत्यर्थः । **ध्यायति** स्मृतिविषयतां नयति । यथा कश्चित्प्रणयी प्रणयक्रीडायां कृतकृतककोपां दूरीभूतां प्रेयसीं गैरिकादिपार्वतेयरञ्जनद्रव्यैः शिलापट्टके विलिख्य तां ध्यायति तथाऽयं योगीश्वरः चेतोनिर्मिते शिलापट्टकेऽनुरागरूपैर्मानसैः परिणामैश्चिन्तयित्वाऽसाध्वीमपि तां तपोलक्ष्मीं शश्वद्ध्यायतीत्यर्थः । तादृशीमपि तां ध्यायतो योगिनो मूर्खतां धिगास्त्विति 'वधूसार्थस्याभिप्रायः ।

Ah! fie upon the stupidity (of the sage)! for this sage, not knowing you to be ill-behaved, has become constantly attached to you and does not show favour to us; [ and ] having painted you on a slab of stone in the form of the modification of his mind by means of feelings full of love resembling to the mineral dyes, like a beloved [ loved by her lover and ] enraged while dallying.

**भो भो साधो मम कुरु दयां, देहि दृष्टिं, प्रसीद,**
**प्रायः साधुर्भवति करुणार्द्रीकृतस्वान्तवृत्तिः ।**
**योगं तावच्छिथिलय मनाक् प्रार्थनाचाटुकारैः**
**आत्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ॥ ३३ ॥**

अन्वयः— भो भो साधो ! प्रसीद, मम दयां कुरु, दृष्टिं देहि । साधुः प्रायः

करुणार्द्रीकृतस्वान्तवृत्तिः भवति । यावत् प्रार्थनाचाटुकारैः आत्मानं ते चरणपतितं कर्तुं इच्छामि तावत् योगं मनाक् शिथिलय ।

'भो भो' इत्यादि । **भो भो** हे ! नैतौ शब्दौ सकारान्तौ किन्त्वोकारान्तौ झिसञ्ज्ञौ । **साधो** योगीश्वर **प्रसीद** प्रसन्नमनाः भव । **मम दयां कुरु** ममास्माकं वा दयस्व । मामस्मान्वा करुणाभाजनं विधेहि । **दृष्टिं देहि** मय्यस्मासु वा दृष्टिपातं विधेहि । **साधुः** योगी **प्रायः** भूयसा **करुणार्द्रीकृतस्वान्तवृत्तिः** अनुकम्पामृदूकृतान्तःकरणव्यापारः । करुणयाऽनुकम्पया आर्द्रीकृता मृदूकृता स्वान्तवृत्तिः अन्तःकरणव्यापारः यस्य येन वा सः । प्रागनार्द्रा सम्प्रति आर्द्रा सम्पद्यमाना क्रियते स्माऽऽर्द्रीकृता । 'कृभ्वस्तियोगेऽभूततद्भावे सम्पद्यकर्तरि च्विः' इति च्विः । अनुकम्पोपशमितान्तःकरणव्यापार इत्यर्थः । **यावत्** यावत्कालम् । चरणपतनकालावधीत्यर्थः । **प्रार्थनाचाटुकारैः** सुरतव्यापारार्थक्रियमाणप्रियवचनप्रयोगैः । क्रियते कारः । क्रियेत्यर्थः । 'भावे' इति घञ् । चाटुः प्रियवचनं । चाटोः प्रियवचनस्य काराः क्रियाः चाटुकाराः प्रियवचनप्रयोगा इत्यर्थः । तैः । प्रार्थनायां सुरतयाच्ञायां चाटुकाराः प्रियवचनप्रयोगाः । तैः । **आत्मानं** स्वं **ते** भवतो योगिनः **चरणपतितं** साष्टाङ्गप्रणतं । चरणयोः पतितं प्रणतं चरणपतितं । **कर्तुं** विधातुं **इच्छामि** अभिलषामि । **तावत्** तावत्कालम् । चरणप्रणमनकालावधीत्यर्थः । **योगं** ध्यानं **मनाक्** ईषत् **शिथिलय** श्लथीकुरु । त्यजतादित्यर्थः । साष्टाङ्गप्रणतिकालं यावद्ध्यानक्रियां विमुच्य मामस्मान्वा विलोकयेति भावः ।

Oh sage ! be pleased, have compassion upon me [ or us ], cast a momentary look ( at me or us ). Mostly, a sage is the very milk of compassion [ lit. Mostly, a sage has the activities of his mind rendered tender through compassion ]. Give up your meditation a little until I desire to make myself prostrate at your feet along with sweet words meant to request you for enjoyment.

**त्वत्सादृश्यं मनसि गुणितं कामुकीनां मनोहृत्**
**कामाबाधां लघयितुमथो द्रष्टुकामा विलिख्य ।**
**यावत्प्रीत्या किल बहुरसं नाथ पश्यामि कोष्णै-**
**रस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे ॥ ३४ ॥**

अन्वयः— अथो नाथ ! कामुकीनां मनोहृत् मनसि गुणितं त्वत्सादृश्यं

कामावाधां लघयितुं द्रष्टुकामा विलिख्य यावत् प्रीत्या वहुरसं पश्यामि तावत् मुहुः उपचितैः कोष्णैः अस्रैः मे दृष्टिः किल आलुप्यते।

**त्वत्सादृश्य**मित्यादि। **अथो** प्रतिज्ञायाम्। **नाथ** स्वामिन् **कामुकीनां** वृषस्यन्तीनां। कामयते तच्छीलः कामुकः। 'लष्पतपद्स्थाभूवृषहनकमगमशृभ्यः उकञ्' इति शीले उकञ्। 'कुण्डगोणस्थलभाजनागकुशकामुककवरकटात् पात्रावपनाकृत्रिमाश्राणास्थूलायसरिरंसुकेशवेशश्रोणौ' इति रिरंस्वर्थे कामुकशब्दात् स्त्रियां ङी। कामुकी रिरंसुरित्यर्थः। अन्यत्रार्थे कामुकेति। 'वृषस्यन्ती तु कामुकी' इत्यमरः। **मनोहृत्** मनोहारि। मनस आकर्षणं विदधत्। **मनसि** हृदये **गुणितं** चिन्तितं। मनसा विमृष्टमित्यर्थः। चुरादिगणगतो गुणयतिरामन्त्रणार्थः। आमन्त्रणं च चिन्तनम्। **त्वत्सादृश्यं** भवदीया प्रतिकृतिः **कामावाधां** कामोद्रेकजनितां मदनजनितां वा पीडां **लघयितुं** लघ्वीं कर्तुम्। लघु अल्पं करोति लघयति। तुम्। 'मृदो ध्वर्थे णिज्वहुलम्' इति करोत्यर्थे णिच्। **द्रष्टुकामा** दिदृक्षुः। द्रष्टुं कामः यस्याः सा द्रष्टुकामा। 'सम्तुमोर्मनःकामे' इति कामे परस्य तुमः लम्। **विलिख्य** चित्रयित्वा **यावत्** यदा। **प्रीत्या** प्रेम्णा मोदेन ऐकाग्र्येण वा। 'प्रीतिः स्मरसुतायोगभेदयोः प्रेममोदयोः' इति विश्वलोचने। **वहुरसं** महता प्रेम्णा मोदेन वा। वहुः रसः प्रेम मोदो वा यस्मिन्कर्मणि यथा स्यात्तथा। **पश्यामि** नयनगोचरतां नयामि। **तावत्** तदा **मुहुः** अविच्छिन्नं पुनःपुनर्वा **उपचितैः** प्रवृद्धैः **कोष्णैः** कवोष्णैः। ईषदुष्णैरित्यर्थः। 'कवं चोष्णे' इत्युष्णे परतः कोः कादेशः। 'कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति' इत्यमरः। **अस्रैः** अश्रुभिः। 'अस्रमश्रु च' इत्यमरः। **मे** मम वधूसार्थस्य **दृष्टिः** नयनं **किल** नियतं **आलुप्यते** आव्रियते।

To speak out the mind, oh Lord! my eye–sight is obscured by luke-warm tears gathering up incessantly when I, with delight and great attachment, look at your picture designed ( sketched ) in my mind, attracting minds of lascivious women, on painting it with a desire to look at to mitigate the misery caused by the god of love [ or by the feelings of love ].

**तीव्रावस्थे तपति मदने पुष्पवाणैर्मदङ्गं**
**तल्पेऽनल्पं दहति च मुहुः पुष्पभेदैः प्रकॢप्ते।**
**तीव्रापाया त्वदुपगमनं स्वप्नमात्रेऽपि नाऽऽप्तं**

क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ ३५ ॥

अन्वयः— तीव्रावस्थे मदने मदङ्गं पुष्पबाणैः तपति पुष्पभेदैः च प्रक्लृप्ते तल्पे अनल्पं मुहुः दहति [ सति ] तीव्रापाया [ अहं ] स्वप्नमात्रे अपि त्वदुपगमनं न आपं । क्रूरः कृतान्तः नौ सङ्गमं तस्मिन् अपि न सहते ।

**तीव्रेत्यादि** । **तीव्रावस्थे** अरुन्तुदस्थितौ । तीव्रा अरुन्तुदा अवस्था स्थितिः यस्य सः । तस्मिन् । जनितकामार्यां मनोवस्थायामरुन्तुदतां प्राप्तायां सत्यामित्यर्थः । **मदने** कामदेवे । 'मदनः स्मरधत्तूरवसन्तद्रुमसिक्थके' इति विश्वलोचने । **मदङ्गं** मदीयं शरीरं । **पुष्पबाणैः** पौष्पैः शरैः **तपति** पीडयति सति । 'उन्मादनं शोचनं च तथा सम्मोहनं विदुः । शोषणं मारणं चैव पञ्चबाणा मनोभुवः' इति मदनबाणा अवस्थाविशेषजनकाः । **पुष्पभेदैः च** पुष्पाणां प्रकारैः । नानाविधैः पुष्पैरित्यर्थः । पुष्पाणां भेदाः विशेषाः पुष्पभेदाः । तैः । 'भेदो द्वैधविशेषयोः । विदारणे चोपजाते' इति विश्वलोचने । **प्रक्लृप्ते** विरचिते **तल्पे** शयनीये । 'तल्पं कलत्रे शय्यायां तल्पमट्टेऽपि न द्वयोः' इति विश्वलोचने । **अनल्पं** भृशं **मुहुः** पौनःपुन्येन **दहति** मदनज्वरमुत्पाद्य देहदाहं जनयति सति **तीव्रापाया** दुःखदविप्रलम्भा । तीव्रः मर्मव्यथाजनकः अपायः विप्रलम्भः यस्याः सा । अरुन्तुदविरहेत्यर्थः । अहं **स्वप्नमात्रेऽपि** स्वप्नावस्थायामपि । किं पुनर्जागर्यावस्थायाम् । **त्वदुपगमनं** त्वदीयसमीपागमनम् । त्वत्त्वदीयं उपगमनं समीपागमनं त्वदुपगमनम् । **न आपं** नाप्नवम् । आप्नोतेर्लुङि रूपम् । **क्रूरः** दयापायवान् । विनष्टानुकम्पत्वाद्धिंस्र इत्यर्थः । **कृतान्तः** यमो दैवमशुभकर्म वा । 'कृतान्तो यमसिद्धान्तदैवेऽप्यशुभकर्मणि' इति विश्वलोचने । **नौ** आवयोः **सङ्गमं** समागमं संयोगं वा तस्मिन् **अपि** स्वप्नमात्रेऽपि **न सहते** न तितिक्षते । न मर्षयतीत्यर्थः । जागर्यायां त्वदुपगमनमसम्भवीति हेतोः स्वप्नावस्थायां त्वदुपगमनजनितसुखमभिलषमाणाऽप्यहं कामोद्रेकवशादनल्पतूलतल्पगता सत्यपि विद्राविततनिद्रा न स्वप्नमात्रेऽपि तल्लभे इत्यहो मेऽशुभकर्मोदय इति कामुक्यभिप्रायः ।

When the god of love, reduced to a poignant state, pains my body by means of floral arrows and schorches [ torments ] it [ i. e. my body ] constantly very much in the bed, made of a variety of flowers, I, whom seperation causes sharp pain, could not have your company [ or could not keep company with you ] in a dream even;

cruel Fate does not allow [ lit. tolerate ] our association even then [ i. e. in a dream even ].

**मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-**
**रुत्तिष्ठासुं त्वदुपगमनप्रत्ययात्स्वप्नजातात् ।**
**सख्यो दृष्ट्वा सकरुणमृदुव्यावहासीं दधानाः**
**कामोन्मुग्धाः स्मरयितुमहो संश्रयन्ते विबुद्धाम् ।।२६।।**

अन्वयः— स्वप्नजातात् त्वदुपगमनप्रत्ययात् निर्दयाश्लेषहेतोः आकाशप्रणिहितभुजं उत्तिष्ठासुं मां दृष्ट्वा कामोन्मुग्धाः सकरुणमृदुव्यावहासीं दधानाः सख्यः स्मरयितुं अहो मां विबुद्धां संश्रयन्ते ।

**मामित्यादि** । **स्वप्नजातात्** स्वापजातात् । स्वप्ने स्वापे जात उत्पन्नः स्वप्नजातः । तस्मात् । **त्वदुपगमनप्रत्ययात्** भवत्समीपप्रापणज्ञानात् । त्वामुपगमनं समीपप्रापणं त्वदुपगमनम् । तस्य प्रत्ययः ज्ञानम् । तस्मात् । हेतौ का । 'प्रत्ययः शपथे हेतौ ज्ञानविश्वासनिश्चये । सन्नाद्यधीनरन्ध्रेषु ख्यातत्वाचारयोरपि' । इति विश्वलोचने । **निर्दयाश्लेषहेतोः** गाढालिङ्गनार्थम् । निष्क्रान्तो दयायाः निर्दयः । 'प्रात्यवपरिनिःप्रत्यादयो गतक्रान्तक्रुष्टग्लानक्रान्तस्थिताद्यर्थे वेभाप्केभिः' इति क्रान्तार्थे पसः । निर्दयश्चासावाश्लेष आलिङ्गनं च निर्दयाश्लेषः । तस्य हेतुः । तस्मात्तस्य वा । 'हेतौ सर्वाः प्रायः' इति का ता वा । **आकाशप्रणिहितभुजं** आकाशे निर्विषये व्योम्नि प्रणिहितौ प्रसारितौ भुजौ बाहू यस्मिन्कर्मणि यथा तथा । व्योमप्रदेशे भुजौ प्रसार्येत्यर्थः **उत्तिष्ठासुं** उत्थातुमिच्छुम् । 'सन्भिक्षाशंस्विदिच्छादुः' इति सन्नन्तादुः । **मां दृष्ट्वा** मां विलोक्य **कामोन्मुग्धाः** अत्यर्थविमूढाः । काममत्यर्थं उन्मुग्धा विमूढाः कामोन्मुग्धाः । विपुलहसनाद्विगलितात्मवत्ताः इत्यर्थः । **सकरुणमृदुव्यावहासीं** । परस्परस्य हसनं व्यावहासी । 'कर्मव्यतिहारे ञः' इति कर्तव्यतिहारे स्त्रियां भावे ञः । 'ञिनोऽण्' इति ञान्तात्स्वार्थेऽण् स्त्रियां ङी च । मृद्वी चासौ व्यावहासी च मृदुव्यावहासी । 'पुंवद्यजातीयदेशीये' इति पुंवद्भावः । सकरुणा करुणया अनुकम्पया सहिता सकरुणा । सकरुणा चासौ मृदुव्यावहासी च सकरुणमृदुव्यावहासी । ताम् । **दधानाः** कुर्वाणाः । दधतीति दधानाः **सख्यः** वयस्याः **स्मरयितुं** स्मृतिविषयतां नाययितुं **अहो** वाक्यालङ्कारे **मां विबुद्धां** विद्रुतनिद्रां मां । प्रबुद्धामित्यर्थः । **संश्रयन्ते** आश्रयन्ते । समीपमागच्छन्तीत्यर्थः ।

व्यावहासीं कुर्वाणानां सखीनां कारुण्यं कामुक्यवस्थानिबन्धनं व्यावहास्या मृदुत्वं च कामुक्याः स्वापभङ्गाभावनिमित्तमित्यवसेयम् ।

My female friends, confounded very much, mutually laughing gently with compassion on seeing me wishing to get up with my arms stretched in the sky for the purpose of embracing you closely [ lit. mercilessly ], by reason of knowledge, acquired in a dream, of your approch, have recourse to me when my dream [ or sleep ] ceases to remind me [ of the activities taking place in my dream ].

निद्रासङ्गादुपहितरतेर्गाढमाश्लेषवृत्ते-
लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु ।
विश्लेषस्स्याद्विहितरुदितैराधिजैराशुबोधैः
कामोऽसह्यं घटयतितरां विप्रलम्भावतारम् ॥ ३७ ॥

अन्वयः— निद्रासङ्गात् स्वप्नसन्दर्शनेषु कथं अपि लब्धायाः उपहितरतेः ते गाढं आश्लेषवृत्तेः विश्लेषः स्यात् इति विहितरुदितैः आधिजैः आशुबोधैः कामः विप्रलम्भावतारं असह्यं घटयतितराम् ।

निद्रेत्यादि । निद्रासङ्गात् स्वापसङ्गमात् । स्वापसम्पर्कात् । निद्रया स्वापेन सङ्गः सम्पर्कः निद्रासङ्गः । तस्मात् । हेतौ का । स्वप्नसन्दर्शनेषु स्वप्नमार्गेषु स्वप्नज्ञानेषु वा । स्वप्न एव सन्दर्शनं मार्गः स्वप्नसन्दर्शनम् । तेषु । ' दर्शनं दृशि दर्पणे । स्वप्ने वर्त्मनि बुद्धौ च शास्त्रधर्मोपलब्धिषु ' इति विश्वलोचने । यद्वा स्वप्नज्ञानेष्वित्यर्थः । स्वप्ने सन्दर्शनानि ज्ञानानि स्वप्नसन्दर्शनानि । तेषु । ' दर्शनं समये शास्त्रे दृष्टौ स्वप्नेऽक्षिण संविदि ' इति शब्दार्णवे । यद्वा स्पप्ने स्वप्नदर्शने सन्दर्शनानि संविदः स्वप्नसन्दर्शनानि । तेषु । ' स्वप्नः स्वप्नधीस्वापदर्शने ' इति विश्वलोचने । कथमपि महता कष्टेन लब्धायाः प्राप्तायाः । गृहीतायाः इत्यर्थः । उपहितरतेः जनितप्रीतेः । उपहिता जनिता रतिः प्रीतिः यस्मिन् सः । तस्य । ते तव गाढं दृढमविरलं वा । आश्लेषवृत्तेः आलिङ्गनव्यापारस्य । आश्लेषस्यालिङ्गनस्य वृत्तिः व्यापारः । क्रियेत्यर्थः । तस्याः । विश्लेषः वियोगः । अपगम इत्यर्थः । स्यात् भवेत् । ' सम्भाव्येऽलम्यर्थात् ' इति सभावनायां लिङ् । विश्लेषः सम्भवेदित्यर्थः । इति अतः । ' इति हेतौ प्रकारे च प्रकाशाद्यनुकर्षयोः । इति प्रकरणेऽपि स्यात्समाप्तौ च निदर्शने ' इति विश्वलोचने । विहितरुदितैः कृतरोदनैः । विहितानि कृतानि च तानि रुदितानि रोदनानि च

विहितरुदितानि । तैः । रुदितं रोदनम् । 'नभावे क्तोऽभ्यादिभ्यः' इति क्तः । **आधिजैः** मनःपीडायाः जातैः । आधेः मानस्याः पीडायाः जायन्ते इति आधिजाः । तैः । डः । 'पुंस्याधिश्चित्तपीडायां प्रत्याशायां च बन्धके । व्यसने चाप्यधिष्ठाने' इति विश्वलोचने । **आशुबोधैः** शीघ्रप्रबोधैः । शीघ्रनिद्राविद्रवैरित्यर्थः । 'सत्वरं चपलं तूर्णमविलम्बितमाशु च' इत्यमरः । बोधो जागर इत्यर्थः । **कामः** कामदेवः । मदनः इत्यर्थः । **विप्रलम्भावतारं** वियोगोत्पत्तिं वियोगानुभूतिं वा । **असह्यं** अशक्यसहनं । सोढुं शक्यं सह्यम् । न सह्यमसह्यम् । 'शकि लिङ्च' इति शक्यर्थे ण्यः । **घटयतितरां** अतिशयेन करोति । अत्यर्थमसह्यं करोतीत्यर्थः । 'इयेन्मिङ्किंझादामद्रव्ये' इति मिङः पराज्झान्तादाम् । झश्चातिशायनेऽर्थे ।

Owing to the possibility of [ my ] being robbed of the embrace, carried into effect by you, having feelings of love risen in your heart, and secured by me with a great difficulty in dream-visions came into being on account of my contact with sleep, the god of love renders extrembly unbearable the experience of separation by means of disturbances, associated with prolonged plaintive cries, of my sleep caused again and again at short intervals, and brought into being by mental worries.

तां तां चेष्टां रहसि निहितां मन्मथेनाऽस्मदङ्गे
त्वत्सम्पर्कस्थिरपरिचयावाप्तये भाव्यमानाम् ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ ३८ ॥

अन्वयः— मन्मथेन अस्मदङ्गे रहसि निहितां त्वत्सम्पर्कस्थिरपरिचयावाप्तये भाव्यमानां तां तां चेष्टां पश्यन्तीनां स्थलीदेवतानां मुक्तास्थूलाः अश्रुलेशाः तरुकिसलयेषु खलु बहुशः न पतन्ति [ इति ] न ।

**तां तामि**त्यादि । **मन्मथेन** कामेन । मननं मच्चेतना । 'हन्मन्यम्रम्नम्गम्वनतितनादेर्ड्ल्वं झलि' इति ङ्लम् तुक् च ङ्ले । मथ्नातीति मथः । मतो मनसः मथः मन्मथः । 'मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः । कन्दर्पो दर्पकोऽनङ्गः कामः पञ्चशरः स्मरः' इत्यमरः । **अस्मदङ्गे** मानकीने शरीरे **रहसि** एकान्ते **निहितां** प्रस्थापितां । न्यासीकृतामित्यर्थः । **त्वत्सम्पर्कस्थिरपरिचयावाप्तये** भवदीयसंसर्गस्थास्तुसंस्तव-

प्राप्त्यर्थं । तव सम्पर्कः संसर्गः त्वत्सम्पर्कः । तस्य स्थिरः स्थास्नुश्चासौ परिचयः संस्तवश्च त्वत्सम्पर्कस्थिरपरिचयः । तस्यावाप्तिः । प्राप्तिः । तस्यै । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति कर्मण्यप् । भाव्यमानां प्रकटीक्रियमाणां तां तां निखिलां चेष्टां अङ्गविक्षेपात्मकमभिनयं पश्यन्तीनां साक्षात्कुर्वन्तीनां स्थलीदेवतानां वनदेवतानां । स्थल्यकृत्रिमं स्थलम् । वनमित्यर्थः । 'कुण्डगोणस्थलभाजनागकुशकामुककबरकटात् पात्रावपनाकृत्रिमाश्राणास्थूलायसरिंसुकेशवेशश्रोणी' इत्यकृत्रिमार्थे स्थलशब्दात्स्त्रियां ङी । मुक्तास्थूलाः मौक्तिकमणय इव परिबृंहितकायाः । मुक्तामण्याकारा इत्यर्थः । अश्रुलेशाः नेत्राम्बुबिन्दवः तरुकिसलयेषु पादपपल्लवेषु । 'पल्लवोऽस्त्री किसलयं' इत्यमरः । तरूणां किसलयानि प्रवालाः तरुकिसलयानि । तेषु । अनेन वनदेवतानां कामुकीदुःखावलोकनजनिता मानसी पीडा व्यज्यते । खलु निश्चये । 'खलु स्याद्वाक्यभूषायां खलुवीप्सानिषेधयोः । निश्चिते सान्त्वने मौने जिज्ञासादौ खलु स्मृतम्' इति विश्वलोचने । बहुशः भूरिशः न पतन्ति [ इति ] न; अपि तु पतन्तीत्यर्थः । द्वौ नञौ प्रकृतार्थं गमयत इतिन्यायेन प्रकृतार्थगमनात्पतन्तीत्यर्थः । नञ्द्वयस्य प्रयोगो निश्चये चेत्, तर्हि खलुशब्दप्रयोगो वाक्यालङ्कारे ग्राह्यः । अत्र पादपप्रवालेषु नयनजलबिन्दुपातेन कामुक्या मरणाभावः सूचितः, अश्रूणां क्षितौ पतनेन मरणादीनामेव संसूचनात् । तदुक्तं—'महात्मगुरुदेवानामश्रुपातः क्षितौ यदि । देशभ्रंशो महद्दुःखं मरणं च भवेद्ध्रुवम् ॥' इति ।

Not indeed do not drops of tears, big like pearls, fall in abundance on the foliage of trees, of the sylvan dieties, seeing various gestures, treasured up in our bodies secretly by the god of love, displayed to have an everlasting acquaintance with your association [ i. e. to have an everlasting familiarity with you ].

सङ्क्षिप्येत क्षणमिव कथं दीर्घयामा त्रियामा
प्राणाधीशे विधिविघटिते दूरवर्तिन्यभीष्टे ।
इत्थं कामाकुलितहृदया चिन्तयन्ती भवन्तं
प्राणारक्षं श्वसिमि बहुशश्चक्रवाकीव तप्ता ॥ ३९ ॥

अन्वयः—'विधिविघटिते अभीष्टे प्राणाधीशे दूरवर्तिनि दीर्घयामा त्रियामा क्षणं इव कथं सङ्क्षिप्येत ?' इत्थं कामाकुलितहृदया प्राणारक्षं भवन्तं चिन्तयन्ती तप्ता चक्रवाकी इव बहुशः श्वसिमि ।

**सङ्क्षिप्येते**त्यादि । **विधिविघटिते** पापेन दैवेन वियोजिते । विधिना दैवेन विघटितः वियोजितः विधिविघटितः । तस्मिन् । 'विधिर्वेधसि काले ना विधाने नियतौ स्त्रियाम्' इति विश्वलोचने । **अभीष्टे** समभिलषिते । आभिमुख्येनेष्यतेऽभीष्टम् । 'अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम् ।' इत्यमरः । प्रिये इत्यर्थः । **प्राणाधीशे** प्राणनाथे । प्राणानामीष्टे प्राणाधीशः । तस्मिन् । **दूरवर्तिनि** दूरदेशस्थिते सति । **दीर्घयामा** । दीर्घा यामाः प्रहराः यस्याः सा दीर्घयामा । "प्रहरे संयमे यामः' इति विश्वलोचने । **त्रियामा** निशा । आद्यन्तयोरर्धयामयोर्दिनव्यवहारात् त्रियामा रात्रिः । 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इत्यमरः । **क्षणं इव** क्षणमात्रमिव । 'क्षणः स्यादुत्सवे कालभेदावसरपर्वसु' इति विश्वलोचने । कथं केन प्रकारेण **सङ्क्षिप्येत** लघूक्रियेत । **इत्थं** एतेन प्रकारेण । 'कथमित्थं' इति प्रकारेर्थे थं किमिदमेतद्भ्यः । **कामाकुलितहृदया** मदनजनितभ्रान्त्याकुलचित्ता । कामेन मदनेन कामवासनया वा आकुलितं आकुलं व्यस्तं कृतं हृदयं चित्तं यस्याः सा । **प्राणरक्षं** प्राणसंरक्षकम् । प्राणानारक्षतीति प्राणारक्षः । तम् । 'नखमुचादयः' इति कः । **भवन्तं** त्वां **चिन्तयन्ती** ध्यायती **तप्ता** विरहानलदग्धा **चक्रवाकी इव** चक्रवाकवनितेव **बहुशः** भूरिशः । भूरीत्यर्थः । 'बह्वल्पार्थाच्छस् कारकाद्वेशानिष्टे' इति शस् । **श्वसिमि** श्वसनं विदधे ।

'How could the night, with long watch-periods, be reduced to a moment as it were during the period in which my beloved lord, separated [ from me ] by fate, is far away ?' — Meditating upon you, thus, the rescuer of my life, I, with my heart distressed by the god of love [ or by the thoughts of love ], am yearning [ for you ] very much like the [ distressed ] female Chakravaka.

**ज्योत्स्नापातं मम विषहितुं नोतरां शक्नुवन्त्याः**
**सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।**
**आचित्तेशप्रथमपरिरम्भोदयादित्यभीक्ष्णं**
**ध्यायामीदं मदनपरतासर्वचिन्तानिदानम् ॥ ४० ॥**

अन्वयः— ज्योत्स्नापातं विषहितुं नोतरां शक्नुवन्त्याः मम अहः अपि सर्वावस्थासु मन्दमन्दातपं कथं स्यात् इति इदं मदनपरतासर्वचिन्तानिदानं आचित्तेशप्रथमपरिरम्भोदयात् अभीक्ष्णं ध्यायामि ।

ज्योत्स्नेत्यादि । **ज्योत्स्नापातं** चन्द्रिकाविसरं । ज्योत्स्नायाश्चन्द्रिकायाः पातः विसरः ज्योत्स्नापातः । तम् । ज्योतिः प्रकाशोऽस्त्यस्यां ज्योत्स्ना चन्द्रप्रकाशाख्या। ज्योतिष उङः खं नश्च खुविषये । **विषहितुं** सोढुं **नोतरां शक्नुवन्त्याः** अत्यर्थमशक्नुवन्त्याः 'इयेन्मिङ्किंशादामद्रव्ये' इति ङेः पराञ्ज्ञान्तादाम्। **मम** मदीये विषये **अह्नः अपि** दिवसोऽपि **सर्वावस्थासु** मदनजनितासु सर्वासु दशासु। 'विशेषः कालिकोऽवस्था' इत्यमरः । **मन्दमन्दातपं** मन्दप्रकारसूर्यप्रकाशम्। मन्दमन्दः मन्दप्रकारः आतपः सूर्यप्रकाशः यस्मिंस्तत्। मन्दमन्दः मन्दप्रकारः इत्यर्थः । 'प्रकारे गुणोक्तेर्वा' इति प्रकारेऽर्थे द्विरुक्तिः । **कथं** केन प्रकारेण **स्यात्** भवेत् **इति** एवं । इतिरत्र प्रकारार्थे । 'इति हेतौ प्रकारे च' इति विश्वलोचने। **इदं** 'सर्वावस्थास्वह्नः मन्दमन्दातपं कथं स्यात्' इत्येतत् **मदनपरता-सर्वचिन्तानिदानं** कामवासनाजनितनिखिलचित्तोद्वेगनिमित्तकम् । मदनः कामः परः यस्याः सा मदनपरा । मदननिष्ठेत्यर्थः । तस्या भावः मदनपरता । सर्वाश्च ताश्चिन्ताश्च सर्वचिन्ताः । चिन्ताशब्दो गुणमुक्त्वा तदाश्रयभूतां कामुकीं वक्तीति सः गुणवचनः। ताश्च मदनपरतया कृता इति मदनपरतायाः सर्वचिन्तानां कार्यकारणभावः । अतः सामर्थ्यात् 'भा तत्कृतयार्थेनोनैः' इति षसः । मदनपरतया सर्वचिन्ताः मदनपरतासर्वचिन्ताः । ताः निदानं कारणं यस्य तत् मदनपरतासर्वचिन्तानिदानम् । **आचित्तेशप्रथमपरिरम्भोदयात्** प्राणनाथकृतप्रथमालिङ्गनकालं मर्यादीकृत्य तत उत्तरकालम् । प्राणनाथकृतप्रथमाश्लेषकालमारभ्याधुनातनकालं यावदित्यर्थः । चित्तस्य मनस ईष्टे इति चित्तेशः । तस्य यः प्रथमः आद्यः परिरम्भः आलिङ्गनं चित्तेशप्रथमपरिरम्भः । तस्योदय उत्पत्तिः । आङत्र मर्यादायाम् । 'काऽऽङाऽभिविधिमर्यादे' इति काऽऽङा योगे । 'पर्यपाङ्बहिरञ्चः' इति सुबन्तेन सहाऽऽङः सः । **अभीक्ष्णं** सततम् । अविच्छिन्नमित्यर्थः । **ध्यायामि** चिन्तयामि । भर्तृकृतप्रथमपरिरम्भकालमारभ्याधुनातनकालं यावत् 'अह्नः अपि सर्वावस्थासु मन्दमन्दातपं कथं स्यात्?' इत्यविच्छिन्नकालं चिन्तयामीति कामुक्यभिप्रायः । एषा मायामयी स्त्री 'अहं वसुन्धराचरी मरुभूतिचरपत्नी' इति प्रकटीकर्तुकामाऽऽचित्तेशेत्यादि मिथ्यैव ब्रूते, मिथ्योद्यमन्तरेणास्य ध्यानभ्रंशोऽशक्यविधान इत्यभिप्रायेण ।

'How, in all the states of my mind caused by the feelings of love, could the day, even, have moderate heat with reference to me who am not able at all to bear the diffusion of the moon-light?'— In this way I have been constantly thinking of this, brought into

effect by all the anxieties caused by the god of love, since the first embrace of my lord.

कामावेशो महति विहितोत्कण्ठमाबाधमाने
त्वय्यासक्तिं गतमनुगतप्राणमेतद्द्वयं च ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्णाभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥ ४१ ॥

अन्वयः– महति कामावेशे विहितोत्कण्ठं आबाधमाने चटुलनयने त्वयि आसक्तिं गतं अनुगतप्राणं च । इत्थं एतद्द्वयं दुर्लभप्रार्थनं मे चेतः गाढोष्णाभिः त्वद्वियोगव्यथाभिः अशरणं कृतम् ।

**कामेत्यादि । महति** बृहति । विपुले इत्यर्थः । 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्' इत्यमरः । **कामावेशे** कामप्राबल्ये । कामस्य मदनस्य आवेशः प्राबल्यं प्रभावो वा कामावेशः । तस्मिन् । **विहितोत्कण्ठं** उत्कण्ठां जनयित्वा । विहिता जनिता उत्कण्ठा उत्कलिका यस्मिन् कर्मणि यथा स्यात्तथा । 'उत्कण्ठोत्कलिके समे' इत्यमरः । **आबाधमाने** पीडां जनयति सति । **चटुलनयने** मनोहरनयने **त्वयि** भवति **आसक्तिं गतं** अभिनिविष्टं **अनुगतप्राणं** च क्षीणशक्तिकं त्वद्ध्यानानुकूलस्वरूपं वा । अनुगतः क्षीणः प्राणः मननसामर्थ्यं यस्य तत् । यद्वा अनुगतः त्वय्यासक्तः प्राणः मननाख्यं स्वरूपं यस्य तत् । **इत्थं** त्वदासक्तत्वानुगतप्राणत्वप्रकारेण **एतद्द्वयं** एतत् त्वय्यासक्तत्वमनुगतप्राणत्वं चेत्येतद्द्वयं विद्यते यस्य तत् । दुर्लभप्रार्थनं दुष्प्राप्ययाचनं दुर्लभयाचनं वा । दुःखेन लभ्यते इति दुर्लभम् । 'स्वीषद्दुसि कृच्छ्राकृच्छ्रे खः' इति खः । दुर्लभं त्रियामायाः क्षणमिव लघूभवनं, अह्नश्च सर्वास्ववस्थासु मन्दमन्दातपत्वेन भवनं चेत्यादिरूपं प्रार्थयते इति दुर्लभप्रार्थनम् । 'ल्यानङ्बहुलम्' इति कर्तर्यनट् । यद्वा दुर्लभा कृच्छ्रलभ्या प्रार्थना यस्य तत् । **मे** मम **चेतः** मनः **गाढोष्णाभिः** अतिदारुणाभिः । गाढं बाढं भृशं नितान्तं उष्णाभिः दारुणाभिः । 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च' इत्यमरः । उषति दहतीवोष्णा । तीव्रा दारुणा वेत्यर्थः । **त्वद्वियोगव्यथाभिः** भवद्वियोगवेदनाभिः । त्वत्तो वियोगस्त्वद्वियोगः । तस्य व्यथाः दुःखानि त्वद्वियोगव्यथाः । ताभिः । 'दुःखं प्रसूतिजे क्लीबे पीडा बाधा च वेदना' इति मालायाम् । 'पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजं' इत्यमरः । **अशरणं** अगतिकं निराश्रयं वा **कृतं** विहितम् ।

During the period when the excessive force of passion excessively distresses by causing anxieties, [ my mind ] becomes attached to and absorbed in meditating upon you, possessing beautiful eyes. My mind, thus, reduced to this two-fold state, praying for what is difficult to obtain, is rendered helpless by exceedingly poignant [ sharp ] agonies caused by the separation from you.

**तानप्राक्षं मदनविवशा युष्मदीयप्रवृत्तिं**
**प्रत्यावृत्तान् हिमवदनिलान् कातरा मत्समीपम् ।**
**भित्त्वा सद्यः किसलयपुटान्देवदारुद्रुमाणां**
**ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ॥ ४२ ॥**

अन्वयः– देवदारुद्रुमाणां किसलयपुटान् सद्यः भित्त्वा तत्क्षीरस्रुतिसुरभयः ये दक्षिणेन प्रवृत्ताः तान् मत्समीपं प्रत्यावृत्तान् हिमवदनिलान् मदनविवशा कातरा [ अहं ] युष्मदीयप्रवृत्तिं अप्राक्षम् ।

तानित्यादि । **देवदारुद्रुमाणां** पारिभद्रकवृक्षाणाम् । तदुक्तं – ' देवदारु स्मृतं दारु सुराह्वं किलिमं च तत् । स्नेहविद्धं महादारु भद्रदार्विन्द्रदारु च ॥ देवकाष्ठं भद्रकाष्ठं पूतिकाष्ठं च दारु च । सुरदार्विन्द्रवृक्षश्च तथैवामरदारु च ॥ ' इति । ' शक्रपादपः पारिभद्रकः । भद्रदारुद्रुकिलिमं पीतदारु च दारु च । पीतकाष्ठं च सप्त स्युर्देवदारुण्यथो द्वयोः ' इत्यमरः । **किसलयपुटान्** प्रवालगर्भान् **सद्यः** सपदि ' सद्यः सपदि तत्क्षणे ' इत्यमरः । **भित्त्वा** विदार्य **तत्क्षीरस्रुतिसुरभयः** तत्क्षीरनिष्यन्दजनितसौगन्ध्याः । तेषां देवदारुद्रुमाणां क्षीरस्रुतिभिः क्षीरनिष्यन्दैः सुरभयः सुगन्धयः । अत्र क्षीरशब्दोऽर्कदुग्धवद्वृक्षनिर्यासवचनः । ये हिमवदनिलाः **दक्षिणेन** दक्षिणमार्गेण । ' प्रकृत्यादिभ्यः ' इति भा । **प्रवृत्ताः** प्रचिलताः **तान्** अनिलान् **मत्समीपं** मत्समीपप्रदेशं **प्रत्यावृत्तान्** प्रत्यागतान् **हिमवदनिलान्** प्रालेयाचलसम्बन्धिनो वातान् **मदनविवशा** मदनेन हेतुनानात्मवती **कातरा** ससाध्वसा । ' अधीरे कातरस्त्रस्ते भीरुभीरुकभीलुकाः ' इत्यमरः । अहं **युष्मदीयप्रवृत्तिं** भवत्सम्बन्धिनं वृत्तान्तम् । ' प्रवृत्तिर्वृत्तिवृत्तान्तप्रवाहेषु प्रवर्तने ' इति विश्वलोचने । **अप्राक्षं** अपृच्छम् । प्रच्छ ज्ञीप्सायामित्यस्य धोर्लुङि रूपम् ।

I, having control over myself lost owing to the god of love [ or owing to the feelings of love ] ( and ) tremulous through fear [ or discouraged ], asked the breezes from the Himalayas, on having destroy-

-ed at once the folds of shoots of the Devadāru-trees, become fragrant on account of trickling drops of their milky juice, start moving in the southern direction and come into my vicinity, for fresh information about you.

इष्टे वस्तुन्यतिपरिचितं यत्तदप्यङ्गनानां
प्रीतेर्हेतुर्भवति नियतं यत्त्वदङ्गानुरोधात्
आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ४३ ॥

अन्वयः– इष्टे गुणवति वस्तुनि यत् अतिपरिचितं तदपि अङ्गनानां यत् नियतं प्रीतेः हेतुः भवति [ तत् ] एभिः तव अङ्गं यदि किल पूर्वं स्पृष्टं भवेत् इति त्वदङ्गानुरोधात् ते तुषाराद्रिवाताः मया आलिङ्ग्यन्ते ।

इष्टे इत्यादि । **इष्टे** अङ्गनाभिरभिलषिते **गुणवति** प्रशस्तगुणे । प्रशस्ताः गुणाः अस्य सन्तीति गुणवत् । तस्मिन् । प्रशंसायामत्र मतुः । **वस्तुनि** द्रव्ये **यत्** अन्यद्वस्तु **अतिपरिचितं** प्राप्तदृढपरिचयं **तदपि** प्राप्तदृढपरिचयमन्यद्वस्त्वपि **अङ्गनानां** सुन्दरीणां । अङ्गानि कल्याणान्यस्याः सन्तीत्यङ्गना । 'लक्ष्मण-विपुणाङ्गनाः' इति निपातः । **यत्** यस्मात्कारणात् **नियतं** निश्चयेन **प्रीतेः** आनन्दस्य प्रेम्णो वा **हेतुः** कारणं **भवति**, तस्मात्कारणात् **एभिः** एतैस्तुषाराद्रिवातैः **तव** भवदीयं **अङ्गं** शरीरं **यदि** कदाचित् **किलेति** सम्भावनायां **पूर्वं** पूर्वस्मिन्काले **स्पृष्टं** संश्लिष्टं **भवेत्** स्यात् **इति** अतः कारणात् । 'इति हेतौ प्रकारार्थे' इति विश्वलोचने । **त्वदङ्गानुरोधात्** भवच्छरीरानुरागात् । तव अङ्गं शरीरं त्वदङ्गम् । तत्रानुरोधः अनुरागः त्वदङ्गानुरोधः । तस्मात् । **ते तुषाराद्रिवाताः** ते हिमवदनिलाः **मया** कामुक्या **आलिङ्ग्यन्ते** आश्लिष्यन्ते ।

As that, which is intimatly acquainted with esteemed object endowed with excellent qualities, becomes necessarily the cause of delight [ or of exciting passion ] in women, those breezes from the Himalayas, thinking that your body might, very possibly, have been touched previously by these, are embraced by me out of regard for your body [ or through love for your body ].

तन्मे वीर प्रतिवचनकं देहि युक्तं, वृथाशां
मा कार्षीर्मा यदि च रुचितं ते तदाभाष्यमेतत् ।

नन्वात्मानं बहु विगणयन्नात्मनैवाऽवलम्बे
तत्कल्याणि त्वमपि नितरां मा गमः कातरत्वम् ॥ ४४ ॥

अन्वयः— तत् वीर मे युक्तं प्रतिवचनकं देहि, मां वृथाशां मा कार्षीः, यदि च ते रुचितं तदा ' ननु बहु विगणयन् आत्मानं आत्मना एव अवलम्बे, तत् कल्याणि त्वं अपि नितरां कातरत्वं मा गमः ' [ इति ] एतत् ते आभाष्यम् ।

तदित्यादि । **तत्** तस्मात्कारणात् **वीर** भो शूर । युवतिजनकटाक्षविद्धहृदयत्वेऽपि विकारानाक्रान्तचित्तत्वाद्भगवतोऽत्र शूरत्वम् । भगवतः सुशीलत्वदर्शनात्समाकृष्टायाः कामुक्याः स्वाभिलाषवैफल्यस्याशक्यपरिहारत्वेऽपि पुनःक्रियमाणप्रयासानुरूपं वचनम् । **मे युक्तं** उचितम् । मत्प्रार्थनानुकूलमित्यर्थः । ' युक्तं स्यादुचिते युक्तं संयुतेऽप्यभिधेयवत् ' इति विश्वलोचने । **प्रतिवचनकं** स्वल्पं प्रत्युत्तरम् । ' कुत्सिताज्ञातात्स्वे कन् ' इत्यल्पार्थे कन् । यद्यपि विस्तरेण वक्तुं नेच्छसि, तथापि त्वया मदाशापूर्त्यर्थं स्वल्पं त्ववश्यं वक्तव्यमिति कामुक्यभिप्रायः । **देहि** दत्तात् । **मां वृथाशां** विफलाशाम् । वृथा विफला आशाऽभिलाषो यस्याः सा । ताम् । ' वृथा निरर्थकाऽविध्योः ' इत्यमरः । **मा कार्षीः** मा कृथाः । ' माङि लुङ् ' इति माङि वाचि लुङ् । ' लुङ्लङ्लृङ्क्ष्वमाङाऽट् ' इत्यत्र माङ्योगसद्भावादडागमप्रतिषेधः । **यदि च** चेत् च **ते** तव **रुचितं** अभिप्रेतं **तदा** तर्हि **ननु** भो प्रिये । नन्वत्रामन्त्रणे । ' प्रश्नावधारणाऽनुज्ञाऽनुनयाऽऽमन्त्रणे ननु ' इत्यमरः । **बहु** विपुलं **विगणयन्** पर्यालोचयन् **आत्मानं** स्वं **आत्मना एव** स्वेनैव । ' प्रकृत्यादिभ्यः ' इति भा । **अवलम्बे** धारयामि । स्वगोपनं करोमि । भविष्यति प्रियया समागमस्य सम्भवात् मया प्राणत्यागो न विधेय इति बहु पर्यालोच्य निर्णीयास्मिन्कालेऽन्यालम्बनाभावेऽपि जीवितं धारयामीति भावः । **तत्** तस्मात् कारणात् हे **कल्याणि** भद्रे । ' बह्वादेः ' इति स्त्रियां ङी । **त्वमपि** भवत्यपि **नितरां** सुतरां । अत्यन्तमित्यर्थः । **कातरत्वं** भीरुत्वसम्भ्रान्तत्वं वा । ' अधीरे कातरस्त्रस्ते भीरुभीरुकभीलुकाः ' इत्यमरः । **मा गमः** मा गच्छ । माङा युक्तत्वादडागमप्रतिषेधः । इति **ते** त्वया **आभाष्यं** वक्तव्यम् । ' व्यस्य वा कर्तरि ' इति ता ।

Oh valiant one ! give, therefore, a short but proper [ agreeable ] reply. Do not disappoint me. If at all it pleases you, you should say this — ' Oh beautiful one ! [ or auspicious one ! ], contemplating mentally very much, I am holding me up by myself; so, do not, on your part, have recourse to nervousness at all events.

**एवंप्रायां निकृतिमसुरः स्त्रीमयीमाशु कुर्वन्**
**व्यर्थोद्योगः समजनि मुनौ प्रत्युताऽगात्स दुःखम् ।**
**कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा**
**नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ४५ ॥**

अन्वयः— असुरः मुनौ एवंप्रायां स्त्रीमयीं निकृतिं कुर्वन् आशु व्यर्थोद्योगः समजनि प्रत्युत सः दुःखं अगात् । कस्य एकान्तं सुखं उपनतं एकान्ततः दुःखं वा ? चक्रनेमिक्रमेण दशा नीचैः उपरि च गच्छति ।

**एवंप्रायामि**त्यादि । **असुरः** दैत्यः । 'असुरः दानवे सूर्ये' इति विश्वलोचने । **मुनौ** मुनिविषये । मुनिं विषयीकृत्येत्यर्थः । **एवंप्रायां** एवंविधां **स्त्रीमयीं** स्त्रियः आगताम् । स्त्रियः प्राप्तामित्यर्थः । मायामयीं स्त्रियमुत्पाद्य तद्द्वारेति भावः । 'मयट्' इति तत आगतेऽर्थे मयट् । टित्त्वात् ङीं । **निकृतिं** भर्त्सनं । अपकारमित्यर्थः 'निकृतिर्भर्त्सने क्षेपे' इति विश्वलोचने । **कुर्वन्** विदधानः **आशु** शीघ्रं **व्यर्थोद्योगः** विफलप्रयासः । व्यर्थः विफलः उद्योगः उत्साहः प्रयासो वा यस्य सः । **समजनि** जातः **प्रत्युत** पुनः परन्तु वा **सः** दानवः **दुःखं** पीडां **अगात्** अगच्छत् । प्राप्तः इत्यर्थः । **कस्य** कस्यात्मनः **एकान्तं** नितान्तमपरिवर्तनीयं वा । एको निश्चितः अन्तः अत्र एकान्तम् । 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च' इत्यमरः । **सुखं** सौख्यं **उपनतं** प्राप्तं **एकान्ततः** एकान्तेन । निश्चयेनापरिवर्तनीयत्वेन वेत्यर्थः । तसेस्सार्वविभक्तिकत्वात्तृतीयार्थेऽत्र तसिः । **दुःखं वा** दुःखमपि । उपनतम् । **चक्रनेमिक्रमेण** रथाङ्गान्तपरिपाट्या । चक्रं रथाङ्गम् । 'चक्रं सैन्ये रथाङ्गेऽपि आम्रजालेऽम्भसां भ्रमे । कुलालकृत्यनिष्पत्तिभाण्डे राष्ट्रास्त्रभेदयोः ।' इति विश्वलोचने । तस्य नेमिः अन्तः चक्रनेमिः । नेमिश्चक्रान्तः । 'चाकाची धाव अथवा पाटा' इति महाराष्ट्र्याम् । 'नेमिः कूपत्रिकायां स्याच्चक्रान्ते तिनिशद्रुमे' इति विश्वलोचने । तस्य क्रमः परिपाटी । तेन । 'क्रमः शक्तिपरीपाटीचलने कम्पनेऽपि च' इति विश्वलोचने । **दशा** अवस्था **नीचैः** अधः **उपरि च** ऊर्ध्वं च **गच्छति** याति । अपकृतिकाले सुखायमानोऽप्यसुरो भगवतो ध्यानैकतानतया विकारवैकल्यं दृष्ट्वाऽऽत्मनो विफलप्रयासत्वं ज्ञात्वा दुःखितोऽभवदिति भावः ।

The demon, thus giving maltreatment to the sage through a woman [ or women ], had his efforts turned futile very soon; on the contrary he became sorrowful. To whose lot does invariable [ or

absolute ] happiness or unalloyed misery fall ? One's state goes up and down after the manner of the periphery of a wheel.

यस्मिन्काले समजनि मुनेः केवलज्ञानसम्प-
द्यस्मिन्दैत्यो गिरिमुदहरन्मूर्ध्नि चिक्षेप्सुरस्य ।
तत्काले सा शरदुदभवद्वक्तुकामेति वोच्चैः
शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ ॥ ८६ ॥

अन्वयः— यस्मिन् काले मुनेः केवलज्ञानसम्पत् समजनि, यस्मिन् दैत्यः अस्य मूर्ध्नि चिक्षेप्सुः गिरिं उदहरत् तत्काले 'शार्ङ्गपाणौ भुजगशयनात् उत्थिते मे शापान्तः' इति उच्चैः वक्तुकामा वा सा शरत् उदभवत् ।

यस्मिन्नित्यादि । **यस्मिन्** यत्र **काले** समये । चैत्रमासे इति भावः । **मुनेः** भगवतः श्रीपार्श्वनाथस्य **केवलज्ञानसम्पत्** केवलबोधसम्पत्तिः । ससर्वपर्यायाणि द्रव्याणि यद्बलाज्ज्ञायन्ते तज्ज्ञानं केवलमित्यभिधीयते । **समजनि** प्रादुरभूत् । सर्वघातिकर्मक्षयादाविरभूदिति भावः । **यस्मिन्** यत्र काले **दैत्यः** शम्बरासुरः **अस्य** भगवतः श्रीपार्श्वजिनेन्द्रस्य **मूर्ध्नि** शिरसि **चिक्षेप्सुः** क्षेप्तुमिच्छुः । 'सन्भिक्षाशंसाविन्दिच्छादुः' इति सन्नन्तादुः । **गिरिं** भूधरं **उदहरत्** उद्धृतवान् **तत्काले** तस्मिन् काले । तदेत्यर्थः । **शार्ङ्गपाणौ** विष्णौ । शृङ्गस्य विकारः शार्ङ्गम् । शृङ्गविनिर्मितं धनुरित्यर्थः । 'हेमादिभ्योऽञ्' इति विकारार्थेऽञ् । शार्ङ्गं पाणौ यस्य सः शार्ङ्गपाणिः नारायणः । 'क्ताचास्त्रं' इति वसत्त्वादस्यास्त्रवाचिनश्शार्ङ्गशब्दस्येवन्तात्पूर्वं निपातः । **भुजगशयनात्** उरगशय्यायाः । भुजगः उरगः शेषाख्यः एव पक्षे धरणाख्यः एव शयनं शय्या भुजगशयनम् । तस्मात् । **उत्थिते** सति **मे** मम शरदः **शापान्तः** प्रतिबन्धान्तः । शापस्य प्रतिषेधस्य प्रतिबन्धस्यान्तोऽवसानं शापान्तः । **इति** एवं **उच्चैः** तारस्वरेण **वक्तुकामा वा** वक्तुमभिलषन्तीव । वक्तुं वदितुं कामः अभिलाषः यस्याः सा वक्तुकामा । वक्तुमभिलाषवतीत्यर्थः । 'सम्तुमोर्मनःकामे' इति तुमो मकारस्य खम् । वाशब्दोऽत्रेवार्थे । **सा शरत्** स शरत्कालः **उदभवत्** औन्नत्यं प्रापत् प्रादुरभवद्वा । यस्मिन्काले भगवति केवलज्ञानसम्पदाविरभूत्तस्मिंश्चैत्रमाससमये शरत्कालः प्रादुरभूत् । भगवतः पार्श्वनाथस्य शार्ङ्गपाणिवन्नीलकायत्वात् । 'अयं शार्ङ्गपाणिरेव' इति शरदतौ भ्रान्तिः समजायत । तस्मिंश्च भगवति मण्डलाकारविरचनजनितशयनाकाराद्धरणाख्यभुजगशरीरात्केवलज्ञानोत्पत्तौ जातायामूर्ध्वमाकाशप्रदेशेऽ

रत्निमात्रं समुत्थिते 'भगवतः शार्ङ्गपाणेर्भुजंगशयनात्समुत्थितत्वादयं कार्तिकमास एव' इति भ्रान्त्या चैत्रमासं कार्तिकमासत्वेन गृहित्वा चैत्रमास एव शरत्प्रादुरभवदिति भावः । भगवतः शिरसि प्रहर्तुं यदा शम्बरासुरो धराधरमुज्जहार तदैव भगवति केवलज्ञानं शुद्धात्मस्वभावभूतमाविरभूदित्यवसेयम् ।

The autumnal season, desirous of speaking out loudly as if —'The ban put upon my advent has come to end as Viṣṇu [ the wielder of the Sārnga bow ] has got up from [ his ] serpent – bed'; set in when the superhuman power in the form of pure and perfect knowledge sprang up in the sage, [ and ] when the demon, desirous of throwing on the head of this [ sage ], uplifted a mountain.

ज्योत्स्नाहासं दिशि दिशि शरत्तन्वती प्रादुरासी–
दैत्यस्याऽस्य प्रहसितुमिवाज्ञानवृत्तिं दुरन्ताम् ।
वैमल्येन स्फुटमिति दिशां रुन्धतीवोष्णकालं
मासानन्यान्गमय चतुरो लोचने मीलयित्वा ॥ ४७ ॥

अन्वयः— अस्य दैत्यस्य दुरन्तां अज्ञानवृत्तिं प्रहसितुमिव ज्योत्स्नाहासं दिशि दिशि तन्वती दिशां वैमल्येन 'चतुरः ( त्वं ) मीलयित्वा लोचने अन्यान् मासान् गमय' इति उष्णकालं स्फुटं रुन्धती इव शरद् प्रादुरासीत् ।

ज्योत्स्नेत्यादि । **अस्य** शम्बराख्यस्य कमठचरस्य **दैत्यस्य** दानवस्य **दुरन्तां** दुष्परिणामां दुष्टस्वरूपां वा । दुष्टः दुःखजनकत्वात् अन्तः परिणामः यस्याः सा । यद्वा दुष्टं अन्तं स्वरूपं यस्याः सा । ताम् । 'अन्तं विशुद्धे व्याप्ते स्यादन्तो नाशे मनोहरे । स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु' इति विश्वलोचने । **अज्ञानवृत्तिं** ज्ञानशून्यां क्रियाम् । न विद्यते ज्ञानं सम्यग्ज्ञानं यस्यां सा अज्ञाना । अज्ञाना चासौ वृत्तिः क्रिया वर्तनं वा चाज्ञानवृत्तिः । ताम् । मिथ्याज्ञानजनितां क्रियामित्यर्थः । **प्रहसितुमिव** उपहासास्पदीकर्तुमिव । उपहास्यतां गमयितुमिवेत्यर्थः । **ज्योत्स्नाहासं** कौमुदीहसितं । ज्योत्स्ना कौमुद्येव हासः हास्यं ज्योत्स्नाहासः । तम् । **दिशि दिशि** प्रतिदिशम् । सर्वासु दिक्ष्वित्यर्थः । **तन्वती** वितन्वाना । विस्तारं नयन्तीत्यर्थः । **दिशां** काष्ठानां **वैमल्येन** नैर्मल्येन **चतुरः** पटुः त्वमुष्णकालः । 'दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च' इत्यमरः । **मीलयित्वा** निमील्य अनवलोक्येत्यर्थः । अत्र कार्तिकमासेऽनाक्षिप्येति भावः । चैत्रमासस्योत्तरायणगत्वादुष्ण-

कालत्वेऽपि तत्र धरणाख्यभुजगेन्द्रविरचितमण्डलाकारशरीरशयनादूर्ध्वदेशे उत्थितं भगवन्तं दृष्ट्वा 'अयं शार्ङ्गपाणिरेव शयनादुत्थितः, अतोऽयं कार्तिकमास एव' इति भ्रान्त्या कार्तिकमासत्वमध्यास्य शरत् 'मा त्वमत्र दृष्टिक्षेपं कुरु; लोचनेऽन्यान् कार्तिकमासाद्भिन्नान्मासान् प्रापय' इत्युष्णकालमुवाचेत्यब्रवीदितिभावः। पक्षे समाकृष्येत्यर्थः। **लोचने** नयने। पक्षे मयूखान्। लोचने इव लोचने। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। 'युक्तवद्व्यक्ति लिङ्गसङ्ख्ये' इति द्विवचनत्वं नपुंसकलिङ्गत्वं च। प्रकाशनक्रियासाधर्म्याल्लोचनमयूखानामन्योन्यसमानत्वम्। **अन्यान्** चैत्रमासेऽध्यस्तात्कार्तिकमासाद्भिन्नान् **मासान् गमय** प्रापय इति एवं **उष्णकालं** ऊष्मागमकालम्। उष्णः उष्णगोः सूर्यस्य कालः आतपसमयः उष्णकालः। यद्वा उष्णः सूर्यातपः भूम्नाऽस्त्यस्येति उष्णः। 'ओऽभ्रादिभ्यः' इति भूमार्थे मत्वर्थीयोऽत्यः। स चासौ कालश्चोष्णकालः। खरकरप्रकरव्यातिकालः इत्यर्थः। अनेनोत्तरायणकालः संसूच्यते। तदुक्तम्—'भानोर्मकरसङ्क्रान्तेः षण्मासा उत्तरायणं। कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्॥' इति। **स्फुटं** व्यक्तं **रुन्धतीव** प्रतिबन्धं कुर्वाणेव **शरद्** ऋतुविशेषः **प्रादुरासीत्** आविरभूत्। प्रकटतामयादित्यर्थः।

The autumnal season, spreading [ diffusing ] in all directions [ her ] laughter in the form of moon-light to deride, as it were, the unwise course of this demon's conduct resulting in misery, [ season ] preventing openly as if the advent of the summer-season through the clearness of all quarters, with the words— 'Oh! [ you ] who are clever or agreeable, with both of your eyes shut [ with your hot rays contracted ], remove them [ your glances ] to other months,' appeared [ set in ].

जाताकम्पासननियमितः सावधिर्नागराजः
कान्तां स्माऽऽह प्रथममधिपं पूजयावोऽद्य गत्वा।
पश्चादावां विरहगुणितं तं तमेवाभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ४८ ॥

अन्वयः— जाताकम्पासननियमितः सावधिः नागराजः कान्तां आह स्म— 'अद्य गत्वा प्रथमं अधिपं पूजयावः, पश्चात् परिणतशरच्चन्द्रिकासु क्षपासु विरहगुणितं तं तं एव अभिलाषं निर्वेक्ष्यावः'।

**जातेत्यादि**। **जाताकम्पासननियमितः** प्रकम्पितविष्टरप्रचोदितः। जातः

कालत्वेऽपि तत्र धरणाख्यभुजगेन्द्रविरचितमण्डलाकारशरीरशयनादूर्ध्वदेशे उत्थितं भगवन्तं दृष्ट्वा 'अयं शार्ङ्गपाणिरेव शयनादुत्थितः, अतोऽयं कार्तिकमास एव' इति भ्रान्त्या कार्तिकमासत्वमध्यास्य शरत् 'मा त्वमत्र दृष्टिक्षेपं कुरु; लोचनेऽन्यान् कार्तिकमासाद्भिन्नान्मासान् प्रापय' इत्युष्णकालमुवाचेत्यत्रवीदितिभावः। पक्षे समाकृष्येत्यर्थः। **लोचने** नयने। पक्षे मयूखान्। लोचने इव लोचने। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। 'युक्तवद्व्यक्ति लिङ्गसङ्ख्ये' इति द्विवचनत्वं नपुंसकलिङ्गत्वं च। प्रकाशनक्रियासाधर्म्याल्लोचनमयूखानामन्योन्यसमानत्वम्। **अन्यान्** चैत्रमासेऽध्यस्तात्कार्तिकमासाद्भिन्नान् **मासान् गमय** प्रापय इति एवं **उष्णकालं** ऊष्मागमकालम्। उष्णः उष्णगोः सूर्यस्य कालः आतपसमयः उष्णकालः। यद्वा उष्णः सूर्यातपः भूम्नाऽस्त्यस्येति उष्णः। 'अोऽभ्रादिभ्यः' इति भूमार्थे मत्वर्थीयोऽत्यः। स चासौ कालश्चोष्णकालः। खरकरप्रकरव्यातिकालः इत्यर्थः। अनेनोत्तरायणकालः संसूच्यते। तदुक्तम्—'भानोर्मकरसङ्क्रान्तेः षण्मासा उत्तरायणं। कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम्॥' इति। **स्फुटं** व्यक्तं **रुन्धतीव** प्रतिबन्धं कुर्वाणेव **शरद्** ऋतुविशेषः **प्रादुरासीत्** आविरभूत्। प्रकटतामयादित्यर्थः।

The autumnal season, spreading [ diffusing ] in all directions [ her ] laughter in the form of moon-light to deride, as it were, the unwise course of this demon's conduct resulting in misery, [ season ] preventing openly as if the advent of the summer-season through the clearness of all quarters, with the words—'Oh! [ you ] who are clever or agreeable, with both of your eyes shut [ with your hot rays contracted ], remove them [ your glances ] to other months,' appeared [ set in ].

**जाताकम्पासननियमितः सावधिर्नागराजः**
**कान्तां स्माऽऽह प्रथममधिपं पूजयावोऽद्य गत्वा।**
**पश्चादावां विरहगुणितं तं तमेवाभिलाषं**
**निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु॥ ४८॥**

अन्वयः— जाताकम्पासननियमितः सावधिः नागराजः कान्तां आह स्म— 'अद्य गत्वा प्रथमं अधिपं पूजयावः, पश्चात् परिणतशरच्चन्द्रिकासु क्षपासु विरहगुणितं तं तं एव अभिलाषं निर्वेक्ष्यावः'।

जातेत्यादि। **जाताकम्पासननियमितः** प्रकम्पितविष्टरप्रचोदितः। जातः

आकम्पः वेपथुः यस्य तज्जाताकम्पम् । जाताकम्पं च तदासनं विष्टरश्च जाताकम्पासनम् । तेन नियमितः प्रयोजितः प्रचोदितः जाताकम्पासननियमितः । **सावधिः** अवधिज्ञानसहितः । अवध्या सहितः सावधिः । उपयुक्तावधिज्ञानः इत्यर्थः । **नागराजः** धरणाख्य उरगराट् । नागानामुरगाणां राजा नागराजः । 'राजाहःसखेभ्यः' इति सान्तष्टः । **कान्तां** स्वकामिनीं भोगिनीं **आह स्म** अब्रवीत् । आसनप्रकम्पनेनोपयुक्तस्वीयावधिज्ञानेन भगवतः केवलज्ञानसम्पदमाविर्भूतां विज्ञाय भोगिनीं स्वकामिनीमाहेति भावः । **अद्य** इदानीं **गत्वा** यात्वा **प्रथमं** आदौ **अधिपं** भगवन्तं पार्श्वजिनेन्द्रम् । भोगिनो भोगिन्याश्च प्राक्तनजन्मनि मरणकाले पञ्चनमस्कारमन्त्रं श्रावयित्वा भगवांस्तयोरुभयोर्हितं कृतवानिति भगवतस्तयोराधिपत्यमिति भावः । भगवत्कृतमुपकारं संस्मृत्य नागराजो भगवन्तमधिपत्वेन निर्दिष्टवान् । **पूजयावः** तदपचितिं करिष्यावः । वर्तमानसमीपत्वाद्भविष्यार्थे वर्तमानवत्प्रयोगः । **पश्चात्** अनन्तरं **परिणतशरच्चन्द्रिकासु** प्रचितशारदीयकौमुदीषु । परिणताः प्रचिताः शरच्चन्द्रिकाः शारदीयकौमुद्यः यासु ताः । तासु । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः । **क्षपासु** रात्रिषु । 'निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा' इत्यमरः । **विरहगुणितं** विरहेण बहुलीकृतं **तं** **तमेव** सर्वमेव **अभिलाषं** इच्छां **आवां** त्वं चाहंच **निर्वेक्ष्यावः** भोक्ष्यावहे । अनुभवगोचरतां नेष्याव इत्यर्थः । विशतेर्लृट् । 'निर्वेशो वेतने भोगे निर्वेशो मूर्च्छनेऽपि च' इति विश्वलोचने ।

The lord of serpents, directed by the shaking seat, making use of [ his ] Avadhi [ a kind of knowledge ] said to his beloved wife—'Having gone to-day we shall first of all, worship the Lord, [ and ] then, during the night having the mature autumnal moon-light, we, both of us, shall enjoy those very various desires [ of ours ] multiplied by the feelings of love springing up in our minds on account of our lonliness.

प्रस्थानेऽस्य प्रहतपटहे दिव्ययानावकीर्णे
कश्चित्कान्तां तदनुगजनः सस्मितं वीक्षते स्म ।
भूयश्चाह त्वमसि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा ॥ ४९ ॥
यत्तद्वृत्तं स्मरसि सुभगे मामुपालब्धुकामा
मन्ये त्वीपत्कुपितमिव मे दर्शयन्ती प्रपासि ।

अस्मात् **अभिज्ञानदानात्** प्रत्यभिज्ञानसाधनभूतवृत्तान्तप्रतिपादनात् । अभिज्ञायतेऽनेनेति अभिज्ञानं । 'करणाधारे चानट्' इति करणेऽनट् । तस्य दानं प्रतिपादनम् । तस्मात् । हेत्वर्थे का । **मां** नागराजं **कुशलिनं** क्षेमंकरं **विदित्वा** ज्ञात्वा **भो भवान्** हे शम्बरासुर त्वं **माऽपयासीत्** मा पलायस्व । भवच्छब्दयोगादुत्तमपुरुषप्रत्ययान्तः प्रयोगः । माङा युक्तत्वादडागमप्रतिषेधः । इति **एवं** अभिज्ञानदानवचनेन **धरणपतिना** धरणेन्द्रेण **रुद्धः च** पलायनान्निवारितश्च ।

This demon, on seeing the lord of serpents with his beloved, standing in the vicinity of Lord Jina with best material for worshipping, began to withdraw through fear and was prohibited [ from withdrawing ] by the lord Dharana, thus—' knowing me to be one doing good [ or to be a virtuous man or to be a gentleman ] from this evidence [ i. e. the information given in next staza ] in proof [ of my being a virtuous man ], oh gentleman, you need not withdraw [ or you should not withdraw ].

**देवस्याऽस्य प्रियसहजकः पूर्वजन्मन्यभूस्त्वं**
**स्त्रीकाम्यंस्तं प्रसभमवधीर्वैरकाम्यंस्तदैनम् ।**
**तत्ते मौढ्यात्कृतमनुचितं मर्षितं न त्वयाऽपि**
**मा कौलीनादसितनयने मय्यविश्वासनी भूः ॥ ५२ ॥**

अन्वयः— पूर्वजन्मनि त्वं अस्य देवस्य प्रियसहजकः अभूः । तदा स्त्रीकाम्यन् वैरकाम्यन् [ त्वं ] एनं तं प्रसभं अवधीः । मौढ्यात् अनुचितं ते तत् कृतं त्वया अपि न मर्षितम् । [ अतः ] असितनयने मयि कौलीनात् अविश्वासनी मा भूः ।

**देवस्ये**त्यादि । **पूर्वजन्मनि** प्राक्तनभवे **त्वं** भवान् **अस्य देवस्य** अस्य भगवतो मरुभूतिचरस्य पार्श्वजिनेन्द्रस्य **प्रियसहजकः** प्रियसोदर्यः । सह जातः सहजः । स्वार्थे कप्रत्ययः । प्रियश्चासौ सहजकश्च प्रियसहजकः । **अभूः** बभूविथ । **तदा** तस्मिन्भवे **स्त्रीकाम्यन्** मरुभूतिपत्नीं वसुन्धरां जिगमिषुः । स्त्रियं मरुभूतेः पत्नीमात्मनः इच्छतीति स्त्रीकाम्यन् । 'स्वेपः काम्यः' इत्यात्मनः इच्छायां काम्यः । **वैरकाम्यन्** वैरायितुमिच्छन् । वैरं मरुभूतावात्मनः इच्छतीति वैरकाम्यन् । यथापूर्वं काम्यः । त्वं **एनं** पार्श्वजिनेन्द्रं **तं** मरुभूतिचरं **प्रसभं** हठात् । युक्तायुक्तम-

विचारार्येत्यर्थः । **अवधीः** अहन् । **मौढ्यात्** अज्ञानात् **अनुचितं** औचित्यविकलम् । अयुक्तमित्यर्थः । 'उचितं तु समञ्जसे । अनुमत्यां मिताऽभ्यस्तज्ञातेषु त्रिषु च त्रिषु' इति विश्वलोचने । । **ते** तव **तत्** वसुन्धराभिलाषरूपम् । **कृतं** कर्म । कृत्यमित्यर्थः । 'नभावे क्तोऽभ्यादिभ्यः' इति क्तः । **त्वया अपि** भवता अपि **न मर्षितं** न सोढम् । एतस्मादभिज्ञानदानात् **असितनयने मयि** रक्तनयने मयि नागराजे । न सितं शुभ्रं असितं । पर्युदासेन सितेतरदित्यर्थः । नयनयोर्नागराजावयवभूतत्वाल्लक्षणयाऽसितशब्देन रक्तवर्णोऽत्र ग्राह्यः । तेन असिते रक्ते नयने यस्य सोऽसितनयनः । तस्मिन् । **कौलीनात्** परीवादात् लोकवादाद्वा । 'कौलीनं तु परीवादे कुलीनत्वे कुकर्मणि । गुह्येपि सङ्गरेऽपि श्वभुजङ्गपशुपक्षिणाम् ।' इति विश्वलोचने । लोकवादेनात्रापवादार्थो ग्राह्यः । **अविश्वासनी** विश्वासशून्यः । 'करणाधारे चानट्' इति नभावे विधीयमानेनानट्प्रत्ययेन विश्वासनमिति शब्दः सिद्धः । न विश्वासनमविश्वासनम् । अनटष्टित्वान्नात्र स्त्रियां ङी, अपि तु 'अतोऽनेकाचः' इति मत्वर्थे इन् । अविश्वासनमस्त्वस्येत्यविश्वासनी । **मा भूः** मा स्म भवः । माङ्‍ युक्तत्वादडागमप्रतिषेधः । **अविश्वासनी भूः** इत्यस्य च्व्यन्तत्वेऽपि न काऽपि क्षतिः । प्राक् अनविश्वासन इदानीमविश्वासनो मा भूः । अत्राप्यडागमः प्रतिषिद्ध एव । तथापि पूर्वोक्तैव रूपसिद्धिस्समीचीना, द्वितीये व्याख्याने प्राक्तनीयविश्वासनस्याशक्यसमर्थनत्वात् । रक्ताक्षा उरगा न विश्वासनार्हा इति लोकापवादमात्रेण न त्वया मयि विश्वासस्त्याज्य इति भावः ।

In the former birth you were a dear brother of whole blood of this Lord. In that birth you, wishing to have [ sexual intercourse with ] his wife [ and so ] wishing to have enmity with him, killed this perforce. That wicked deed of yours, perpetrated through foolishness, was not put up with by you even. On the strength of malicious gossip, do not be distrustful towards me, having [ my ] eyes red.

**धिक्कृत्यैनं मुहुरथ सजूकृत्य तं सोऽहिराजो**
**भक्त्या भर्तुश्चरणयुगले प्राणमत्स्नेहनिघ्नः ।**
**स्नेहानाहुः किमपि विरहे ह्रासिनस्तेऽप्यभोगा-**
**दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ५३ ॥**

अन्वयः— अथ एनं तं मुहुः धिक्कृत्य सजूकृत्य सः अहिराजः भर्तुः चरण-

युगले स्नेहनिघ्नः भक्त्या प्राणमत्। [ यत् ] विरहे स्नेहान् ह्रासिनः आहुः [ तत् ] किमपि। ते अभोगात् इष्टे वस्तुनि उपचितरसा [ सन्तः ] प्रेमराशीभवन्ति।

**धिक्कृत्येत्यादि**। **अथ** अनन्तरं। 'अथाऽथो च शुभे प्रश्ने साकल्यारम्भसंशये। अनन्तरेपि' इति विश्वलोचने। **एनं** शम्बरासुरं तं पूर्वभववैरिणं **मुहुः** असकृत्। 'मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत् समाः' इत्यमरः। **धिक्कृत्य** सधिक्कारं निर्भर्त्स्य। 'साक्षादाद्यन्च्वि' इति साक्षादादिगणान्तर्गतत्वात्क्त्वि तिसञ्ज्ञा। **स्जूकृत्य** सहायीकृत्य। सहकृत्वेत्यर्थः। 'च्विडाजूर्याद्यनुकरणं' इत्यूर्यादिगणत्वात्सजूरित्यस्य सहार्थस्य तिसञ्ज्ञा। 'इसुसोर्बहुलम्' इति सत्वे सजूकृत्येतिरूपं तदभावे च सजूःकृत्येति। द्वावपि पाठौ समीचीनौ। तेन सहेत्यर्थः। **सः** धरणेन्द्राख्यः **अहिराजः** उरगराट्। 'राजाहःसखेष्टः।' इति सान्तष्टः। **भर्तुः** भगवतः पार्श्वजिनेन्द्रस्य **चरणयुगले** पादद्वये। पादयोरित्यर्थः। **स्नेहानिघ्नः** प्रणयाधीनः। स्नेहे निघ्नः स्नेहनिघ्नः। प्रणयाधीन इत्यर्थः। निघ्नः आयत्तः। 'अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ' इत्यमरः। निहन्यते निघ्नः। 'स्थादिभ्यः कः' इति कः। **प्राणमत्** प्रणमति स्म। अत्र स्नेहनिघ्नः इत्यनेन नागेन्द्रतदिन्द्राण्योः सर्पयुगलचरयोः मरुभूतिचरेण भगवता पार्श्वजिनेन्द्रेण कृत उपकारः ध्वन्यते। यत् **विरहे** विप्रयोगकाले **स्नेहान्** प्रणयान् **ह्रासिनः** ह्रसनशीलान्। ह्रसनस्वभावानित्यर्थः। 'शीलेऽजातौ णिन्' इति शीले णिन्। **आहुः** ब्रुवन्ति तत् **किमपि** अवचनार्हम्। वक्तुमयोग्यमित्यर्थः। यतः **ते** अपि स्नेहाः अपि **अभोगात्** भोगाभावात्। प्रसज्यप्रतिषेधेऽत्र नञ्। अभुक्तत्वादित्यर्थः। **इष्टे** अभिलषिते **वस्तुनि** विषये **उपचितरसाः** सन्तः प्रचितानुरागाः। प्रवृद्धतृष्णा इत्यर्थः। उपचित प्रचितः प्रवृद्धः रसः रागः येषां येषु वा ते उपचितरसाः। 'रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे। पारदे धातुवीर्याम्बुरागे गन्धरसे तनौ॥ रसो घृतादावाहारपरिणामोद्भवेऽपि च' इति विश्वलोचने। **प्रेमराशीभवन्ति** गाढस्नेहत्वमाप्नुवन्ति। नात्र स्नेहप्रेम्णोरवस्थाभेदादन्योन्यभिन्नत्वमपि त्वनर्थान्तरत्वमेव, उभयोरपि देवतारतिभावार्थपरत्वात्। प्रेमराशीभवन्तीति पदेन स्नेहस्य गाढत्वमात्रं व्यज्यते। प्रागप्रेमराशयः इदानीं भगवद्योगीन्द्रयुगलयोर्विप्रयोगकालानन्तरमस्मिन्साक्षाद्दर्शनकाले प्रेमराशयः सम्पद्यमानाः भवन्ति। 'कृभ्वस्तियोगेऽतत्तत्वे सम्पत्तरि च्विः' इति च्विः।

Afterwards, that king of serpents, absorbed in devotion [ to Him or absorbed in affection for Him ], having rebuked this [ demon ] again and again [ and ] taking him along with himself, made, with

devotion [ devoutly ], a low obeisance to the two feet of the Lord. They [ people ] speak of affections to be deteriorating during the period of seperation; [ but it is ] inexplicable. Those [ affections ], however, owing to non-enjoyment, having longing heightened [ intensified ] in respect of objects desired for [ of beloved objects ] get turned into heaps of affection [ i. e. become intensified ].

सङ्क्षेपाच्च स्तुतिमुरगराट् कर्तुमारब्ध भर्तुः
श्रेयस्सूते भवति भगवन्भक्तिरल्पाप्यनल्पम् ।
श्रेयस्कामा वयमत इतो भोगिनीं नोऽनुकूला-
माश्वास्यैनां प्रथमविरहे शोकदग्धां सखीं ते ॥ ५४ ॥

अन्वयः— उरगराट् सङ्क्षेपात् भर्तुः स्तुतिं च कर्तुं आरब्ध – ' भगवन् भवति अल्पा अपि भक्तिः अनल्पं श्रेयः सूते । अतः प्रथमविरहे शोकदग्धां नः अनुकूलां एनां सखीं भोगिनीं आश्वास्य ते वयं श्रेयस्कामाः [सन्तः] इतः [प्राप्ताः ।]

**सङ्क्षेपादित्यादि** । **उरगराट्** नागराजः । राजते इति राट् । क्विप् । **सङ्क्षेपात्** समासेन **भर्तुः** भगवतः श्रीपार्श्वजिनेन्द्रस्य **स्तुतिं च** स्तवं च **कर्तुं** विधातुं **आरब्ध** आरेभे । लुङि रूपम् । **भगवन्** भो स्वामिन् **भवति** त्वयि **अल्पा अपि** स्तोकाऽपि **भक्तिः** भजनं । सेवेत्यर्थः । ' भक्तिर्विभागे सेवायाम् ' इति विश्वलोचने । **अनल्पं** विपुलं **श्रेयः** मङ्गलं पुण्यं वा । ' श्रेयस्तु मङ्गले धर्मे ' इति विश्वलोचने । **सूते** जनयति । **अतः** एतस्मात्कारणात् । **प्रथमविरहे** प्राथमिके विरहे । **शोकदग्धां** शोकेनात्यन्तं पीडिताम् । शोकेन दुःखेन दग्धा अत्यन्तं पीडिता शोकदग्धा । ताम् । प्राक्तने भवे पञ्चाग्नितपः समाचरता कमठचरेण तापसेनाग्निसन्धुक्षणे क्रियमाणे काष्ठान्तर्गतस्वशरीराणामस्माकं देहेषु दग्धेषु पञ्चत्वं प्राप्तानां भवतस्तदा प्रथमो विरहो जातः । तस्मिन्काले शोकाक्रान्ताम् । **नः** अस्माकं **अनुकूलां** अनुरूपां **एनां** एतां **सखीं** मम्मालीं **भोगिनीं** भोगवतीं पत्नीं **आश्वास्य** शान्तयित्वा ते भस्मीभूतशरीराः **वयं** त्वद्भक्तिभाजः **श्रेयस्कामाः** श्रेयोभिलाषिणः सन्तः । श्रेयसे कामः इच्छा येषां येषु वा ते । **इतः** अत्र भवच्चरणयोस्समीपं प्राप्ताः । प्राक्तनभवे भवच्चरणसामीप्यमात्रेण देवभूयं गतत्वादस्माभिः ' भवत्यल्पापि भक्तिरनल्पं श्रेयः सूते ' इति विज्ञायातोऽप्यधिकतरं श्रेयोऽस्माकं भूयादिति मनसि विधाय भक्तिनम्राः वयं भवच्चरणयुगलं पूजयितुकामाः अत्र प्राप्ताः स्मः इत्यभिप्रायोऽसुरस्य ।

The king of serpents began to pray succintly—'Oh Lord! devotion to you, though insignificant, produces bliss in abundance. So, having conciliated this, the female serpent, the female friend of mine, favourable to me [ i. e. not going against me ], distressed at the time when we deserted you first [ or when we got separated from you first ], we, desirous of attaining bliss, have come here.

**सैषा सेवां त्वयि विदधतः श्रेयसे मे दुरापं**
**यन्माहात्म्यात्पदमधिगतं कान्तयाऽमा मयेदम् ।**
**यस्माच्चैनं तदनुचरणेनाऽहमुज्झन्विहारं**
**तस्मादद्रेस्त्रिनयवृषोत्खातकूटान्निवृत्तः ॥ ५५ ॥**

अन्वयः— यन्माहात्म्यात् मया कान्तया अमा इदं दुरापं पदं अधिगतं, यस्मात् च तदनुचरणेन अहं विहारं उज्झन् त्रिनयनवृषोत्खातकूटात्तस्मात् अद्रेः निवृत्तः, सा एषा त्वयि सेवां विदधतः मे श्रेयसे ।

सैषेत्यादि । **यन्माहात्म्यात्** यस्याः भक्तेः प्रभावात् । यस्याः माहात्म्यं यन्माहात्म्यम् । तस्मात् । **मया** नागराजेन । **कान्तया** पत्न्या भोगिन्या **अमा** सह । 'अमा सह समीपे च' इत्यमरः । **इदं** एतत् **दुरापं** दुर्लभं । दुःखेन कृच्छ्रेण आप्यते इति दुरापम् । 'स्वीषद्दुसि कृच्छ्राकृच्छ्रे खः' इति खः । **पदं** नागेन्द्रपदम् । 'पदं वाक्ये प्रतिष्ठायां व्यवसायापदेशयोः । पादातच्चिह्नयोश्शब्दे स्थानत्राणाङ्घ्रिवस्तुषु ॥' इति विश्वलोचने । **अधिगतं** प्राप्तम् । **यस्मात् च** यन्माहात्म्याच्च **तदनुचरणेन** भक्त्यनुकूलाचरणेन हेतुना । भक्त्यनुकूलमाचरितु मित्यर्थः । **अहं** नागराजः **विहारं** लीलार्थकं भ्रमणं **उज्झन्** परिहरन् **त्रिनयनवृषोत्खातकूटात्** रत्नत्रयात्मकवृषभजिनमन्दिरयुक्तशिखरात् । त्रीणि नयनानि सम्यग्दर्शनज्ञानचारित्रलक्षणानि यस्य स त्रिनयनः। वृषो वृषभोऽस्याऽस्तीति वृषः । वृषभलाञ्छनः आदिजिनेंद्र इत्यर्थः । 'ओऽभ्रादिभ्यः' इत्यः । त्रिनयनश्चासौ वृषश्च त्रिनयनवृषः । यद्वा त्रीणि सम्यग्दर्शनादित्रयरूपाणि नयनानि त्रिनयम् । तदेव वृषः आत्मधर्मः यस्य स त्रिनयनवृषः । 'वृषो मूषकधर्मयोः । वृषभे वासके श्रेष्ठे राशौ शृङ्ग्यां च शुक्ले । शुक्रे पुरुषभेदेऽपि' इति विश्वलोचने । कूटः शिखरमस्यास्तीति कूटम् । सशिखरं मन्दिरमित्यर्थः लक्षणयाऽत्र ग्राह्यः । उत्खातं उत्खात्य निर्मितम् । 'ओऽभ्रादिभ्यः' इत्यो मत्वर्थीयः। त्रिनयनवृषायोत्खातं कूटं सशिखरं मन्दिरं यत्र सः। तस्मात् । **तस्मात्**

अद्रेः कैलासाद्रेः **निवृत्तः** प्रत्यागतः **सा** धरणेन्द्रपदप्रदायिनी **एषा** भक्तिः **त्वयि** भवति **सेवां** भक्तिं **विदधतः** कुर्वतः **मे** मम धरणेन्द्रस्य **श्रेयसे** कल्याणाय स्यादिति शेषः । विदधति विदधते चेति बहुवचनतिङ्प्रत्ययान्तपदद्वयस्यैकवचनसुबन्तकर्तृपदेऽन्वयासम्भवदर्शनात् ' विदधतः ' इति कृदन्तं पाठमुररीकृत्य व्याख्यानं कृतम् ।

That this devotion to you, through the magnanimity of which I, along with my beloved, secured this dignity which is very difficult to attain, and on account of which I, with a desire to worship with devotion, giving up rambling excursion, returned from that mountain having an excavated temple dedicated to Vṛsabha Jina possessing three eyes [ in the form of right belief, right knowledge and right conduct ], is for the welfare of me, performing your worship.

तन्मे देव श्रियमुपरिमां तन्वतीयं त्वदङ्घ्र्यो-
र्भक्तिर्भूयान्निखिलसुखदा जन्मनीहाऽप्यमुत्र ।
कान्तासङ्गैरलमघवशाद्गृध्नुतां वर्धयद्भिः
साभिज्ञानं प्रहितवचनैस्तत्र युक्तैर्ममाऽपि ॥ ५६ ॥

अन्वयः— तत् देव ! उपरिमां श्रियं तन्वती इयं त्वदङ्घ्र्योः भक्तिः इह जन्मनि अमुत्र अपि मे निखिलसुखदा भूयात् । कान्तासङ्गैः तत्र युक्तैः अपि अघवशात् मम गृध्नुतां वर्धयद्भिः साभिज्ञानं प्रहितवचनैः अलम् ।

**तदि**त्यादि । **तत्** तस्मात् कारणात् **देव** भगवन् **उपरिमां** उपरितनीं । उत्तमामित्यर्थः । **श्रियं** सम्पदं **तन्वती** तन्वाना । ददानेत्यर्थः । **इयं** एषा **त्वदङ्घ्र्योः** भवच्चरणकमलयोः । तव अङ्घ्री चरणौ त्वदङ्घ्री । तयोः । ' अङ्घ्रिः पुंस्येव चरणे मूलेऽपि च महीरुहे ' इति विश्वलोचने । **भक्तिः** सेवा **इह** अस्मिन् **जन्मनि** भवे **अमुत्र अपि** परलोके अपि **मे** मम **निखिलसुखदा** सर्वप्रकारकसुखदायिनी **भूयात्** भवत्वित्यहं पार्थये । **कान्तासङ्गैः** कामिनीसंसर्गैः **तत्र** कामिनीसंसर्गविषये **युक्तैः अपि** सम्बद्धैश्च । कामिनीसंसर्गविषयसम्बद्धैरित्यर्थः । **अघवशात्** चारित्रमोहनीयाख्यपापकर्मोदयाद्धेतोः **मम** मामकीनां **गृध्नुतां** अभिलाषुकतां । कान्तासङ्गविषये लुब्धतामित्यर्थः । ' गृध्नुस्तु गर्धनः । लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ ' इत्यमरः । ' त्रसगृधिधृषिक्षिपः क्नुः ' इति क्नुत्यः। गृध्नोः भावः गृध्नुता । ताम् । **वर्धयद्भिः** वृद्धिं प्रापयद्भिः । **साभिज्ञानं** प्रत्यभिज्ञानसाधनसहितं । अभिज्ञा-

यते प्रत्यभिज्ञायतेऽनेनेति अभिज्ञानम् । तेन सहितं यथा स्यात्तथा । यौगपद्ये हसः । सहशब्दो यौगपद्यसम्पत्साकल्यान्तोक्तिषु वर्तते । 'हेऽकाले' इति सहस्य सः । 'झिः सुव्' इति हसः । **प्रहितवचनैः** प्रेषितवाचिकैः । प्रहितानि प्रेषितानि च तानि वचनानि वाचिकानि प्रहितवचनानि । तैः । **अलं** पर्याप्तम् । 'प्रकृत्यादिभ्यः' इति निषेधवचनालंशब्दप्रयोगान्निषिध्यमानाद्वा । अनादिचारित्रमोहोदयजनितान्तरङ्गबहिरङ्गचेष्टितरूपाण्यङ्गनाङ्गसङ्गक्रीडितानि तदभिलाषवृद्धिकारीणि च तद्विषयकाणि वचनानि त्वद्भक्त्या निखिलसुखान्यधिजिगमिषुरहं परित्यज्य भवच्चरणकमलापचितिदत्तचित्तो बुभूषामीति भावः ।

Therefore oh Lord ! may this devotion to your feet, bestowing excellent prosperity, bring me all pleasures in this life and even in the life to come next. Enough of the unions with my beloved and of words, even, sent along with a means of recognition, referring to those [ unions ], intensifing my eagerness [ for those unions ] owing to the sin [ committed by me in my former births ].

**भूयो याचे सुरनुत मुने त्वामुपारूढभक्तौ**
**दैत्ये चाऽस्मिन्प्रणयमधुरां देहि दृष्टिं प्रसीद ।**
**चित्तोद्वेगैरनुशयकृतैश्चास्य गात्रात्प्रपित्सु**
**प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेदम् ॥ ५७ ॥**

अन्वयः— भो सुरनुत मुने त्वां भूयः याचे; प्रसीद, अस्मिन् च उपारूढभक्तौ दैत्ये प्रणयमधुरां दृष्टिं देहि; अनुशयकृतैः चित्तोद्वेगैः प्रातःकुन्दप्रसवशिथिलं इदं गात्रात् प्रपित्सु जीवितं धारय ।

**भूय** इत्यादि । **भो सुरनुत मुने** हे वन्दारुनिर्जरप्रणुतचरणकमल सार्वज्ञ **त्वां** भवन्तं **भूयः** पुनः **याचे** प्रार्थये **प्रसीद** प्रसन्नो भव । **अस्मिन्** च एतस्मिन् शम्बरासुराभिधाने कमठचरे च **उपारूढभक्तौ** विवृद्धसेवाभावे । उपारूढा वृद्धिं प्राप्ता भक्तिः सेवाभावः यस्मिन् सः । तस्मिन् । **दैत्ये** असुरे **प्रणयमधुरां** अनुकम्पामधुस्राविणीं । प्रणयसुभगामित्यर्थः । **दृष्टिं देहि** दर्शनं देयाः । तस्मिन् सानुकम्पां दृष्टिं निक्षिप्याः इत्यर्थः । **अनुशयकृतैः** पश्चात्तापविहितैः । अनुशयेन पश्चात्तापेन कृताः विहिताः अनुशयकृताः । तैः । 'दीर्घद्वेषानुतापानुबन्धेष्वनुशयः पुमान्' इति विश्वलोचने । **चित्तोद्वेगैः** स्वकृतापराधस्मृतिजनितैर्मानसैर्भयैः । चित्तस्य मनसः उद्वेगा उद्वेजनानि

भयानि चित्तोद्वेगाः। तैः। ओविजी भयचलनयोरित्यस्मादुदुपसर्गपूर्वाद्घञि रूपम्। ' उद्वेग उद्ग्राहुलके पुमानुद्वेजनेऽपि च। भवेदुद्गमने चाऽयमुद्वेगं क्रमुकीफले ' इति विश्वलोचने। **प्रातःकुन्दप्रसवशिथिलं** प्रगेतनकुन्दकुसुमश्लक्ष्णम्। प्रातः प्रगेतनकाले यः कुन्दप्रसवः स इव शिथिलं श्लथबन्धनम्। 'प्रसवो गर्भमोक्षे स्याद्वृक्षाणां फलपुष्पयोः। परम्पराप्रसङ्गे च लोकोत्पादे च पुत्रयोः ' इति विश्वलोचने। ' सामान्येनोपमानम् ' इति सः। **इदं** एतत् **गात्रात्** अस्य शरीरात्। ' गात्रं गजाग्रजङ्घादिविभागेऽप्यङ्ग-देहयोः ' इति विश्वलोचने। **प्रपित्सु** प्रपतितुमिच्छु। ' सन्भिक्षाशंस्विन्दिच्छादुः ' इति सन्नन्तादुः। **जीवितं** प्राणान् **धारय** प्रपतनान्निवारयस्व। निवारयत्विति प्रार्थये इति भावः। स्वकृतागस्स्मरणजनितानुतापात्पापाद्भीतिश्च कमठचरशम्बरासुर-शरीरात्प्रपतनोन्मुखानस्य प्राणाननुकम्पामधुराविण्या दृष्ट्या विलोक्य प्रपतनान्नि-वारयस्वेति भावः।

Oh sage! praised by gods, I again implore you; be pleased and cast a glance agreeable owing to compassion, at this demon, in whom [ feelings of ] devotion [ to you ] are intensified; prop up this life [ of him ], enfeebled like a Kunda flower in the morning, desirous of flying away from his body owing to the afflictions of his mind caused by repentance.

**स्तुत्यन्तेऽसौ व्यरचयदिव च्छत्रमुच्चैः फणालिं**
**भर्तुर्भक्त्या दधदधिशिरः स्वां वितत्य प्रमोदात्।**
**व्यात्तैर्वक्त्रैर्ध्रुवमिति मुनिं वक्तुकामस्तदानीं**
**कच्चित्सौम्य ! व्यवसितमिदं बन्धुकृत्यं त्वया मे ॥ ५८ ॥**

अन्वयः—' सौम्य ! कच्चित् इदं मे बन्धुकृत्यं त्वया व्यवसितं ' इति व्यात्तैः वक्त्रैः तदानीं मुनिं ध्रुवं वक्तुकामः असौ स्तुत्यन्ते भक्त्या स्वां फणालिं उच्चैः वितत्य प्रमोदात् भर्तुः अधिशिरः दधत् छत्रं इव व्यरचयत्।

**स्तुत्यन्ते** इत्यादि। **सौम्य** बुध अनुग्र वा। बुधेत्यनेन भगवतः केवल-ज्ञानित्वं ध्वन्यतेऽनुग्रेत्यनेन च प्रणष्टकषायचक्रत्वं च। ' बुधे सौम्योऽथ वाच्यवत्। बौद्धे मनोरमेऽनुग्रे पामरे सोमदैवते ' इति विश्वलोचने। **कच्चित्** कामप्रवेदने। **इदं** प्रणयमधुरां दृष्टिं देहीत्यादिनोक्तं **मे** मम **बन्धुकृत्यं** बन्धुकार्यम्। भगवद्भक्तिबद्ध-त्वे तत्कत्वाद्धरणेन्द्रस्य भगवद्बन्धुत्वम्। स्वजनकार्यमित्यर्थः। 'सगोत्रबान्धवज्ञातिबन्धु-

स्वस्वजनाः समाः' इत्यमरः। त्वया भगवता पार्श्वनाथेन भवता। व्यवसितं निश्चितम्। भवतः स्वजनेन मया दृष्टिदानादिकार्यं प्रार्थितं भवता कर्तुं निश्चितमित्याशासे। इति अनेन प्रकारेण व्यात्तैः विवृतैः वक्त्रैः मुखैः तदानीं तस्मिन् काले मुनिं भगवन्तं पार्श्वजिनेन्द्रं वक्तुकामः वक्तुमिच्छन्। 'सम्तुमोर्मनःकामे' इति तुमः खम्। असौ धरणाख्यो नागराजः स्तुत्यन्ते स्तवनावसानकाले भक्त्या अनुरागेण स्वां स्वकीयां फणालिं फटाटोपं। फणानां फटानां आलिः आवलिः फणालिः। ताम्। उच्चैः अत्यर्थं वितत्य विस्तार्य प्रमोदात् प्रहर्षेण भर्तुः भगवतः पार्श्वस्य अधिशिरः शिरसि। 'ङिःसुप्–' इत्यादिना विभक्त्यर्थे हसः। दधत् दधानः। धारयन्नित्यर्थः। छत्रमिव आतपत्रमिव व्यरचयत् व्यरचत्। विरचितवानित्यर्थः। फणाल्या छत्रकार्यं कारयामासेति भावः।

This [ lord of serpents ], at the end of the prayer, at that time, with all his mouths opened, verily desirous of speaking to the sage— Oh omniscient ! I hope that this friendly service to me has been decided upon by you', holding upon His head through devotion the row of his hoods, expanding it very much, made it serve like an umbrella.

देवी चाऽस्य प्रचलदलका लोलनेत्रेन्दुवक्त्रा
दिव्यं छत्रं व्यरचदहो धैर्यमित्यालपन्ती।
दैत्यस्याऽद्रेर्यदभिदलनं शक्तियोगेऽपि कर्तुं
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि॥ ५९॥

अन्वयः—'अहो धैर्यम्। यत् दैत्यस्य अद्रेः अभिदलनं कर्तुं शक्तियोगे अपि प्रत्यादेशात् भवतः धीरतां न खलु कल्पयामि' इति आलपन्ती प्रचलदलका लोलनेत्रा इन्दुवक्त्रा अस्य देवी च दिव्यं छत्रं व्यरचयत्।

देवीत्यादि। अहो विस्मये। 'अहो हीति विस्मये' इत्यमरः। धैर्यं धीरता। अस्याश्चर्यकरं धैर्यमित्यर्थः। यत् यस्मात् कारणात् दैत्यस्य शम्बराभिधानस्यासुरस्य अद्रेः भगवतः शिरसि पातितुमुत्थापितस्याचलस्य अभिदलनं कर्तुं शकलीकर्तुं शक्तियोगे अपि शक्तिमत्त्वेऽपि। शक्त्या सामर्थ्येन योगः सम्बन्धः शक्तियोगः। तस्मिन् सत्यपि। प्रत्यादेशात् प्रत्याख्यानात्। दैत्याद्र्यभिदलननिराकरणादित्यर्थः। 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः' इत्यमरः। भवतः पार्श्वजिनेन्द्रस्य तव धीरतां धैर्यं न कल्पयामि मनसाऽपि न चिन्तयामि इति एवं

**आलपन्ती** भाषमाणा **प्रचलदलका** लोलालका । प्रचलन्तः लोलाः अलकाः चूर्णकुन्तलाः यस्याः सा प्रचलदलका । **लोलनेत्रा** चञ्चलाक्षी । लोले चञ्चले नेत्रे अक्षिणी यस्याः सा । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति स्फोङ्त्वाङ्ङ्याः प्रतिषेधः । **इन्दुवक्त्रा** चन्द्रवदना । इन्दुश्चन्द्रः इव वक्त्रं मुखं यस्याः सा । **अस्य** धरणाख्यस्य नागराजस्य **देवी च** देवजातीया कान्ता च **दिव्यं** अतिमनोहरं । दिवि भवं दिव्यम् । **छत्रं** आतपत्रं **व्यरचयत्** अररचत् । रचयति स्मेत्यर्थः ।

And the beloved of this, having her hair dangling, eyes fickle and face like the moon, speaking out—'Oh ! what a great courage ! I cannot imagine [ even ] your courage indeed because of your rejecting to cut the mountain of the demon to pieces, notwithstanding your being in possession of strength capable of doing it', produced a very beautiful [ lit. celestial ] umbrella.

**तच्छायायां समधिकरुचिं देवमुत्पन्नबोधं**
**बद्धास्थानं शरणमकृत त्यक्तवैरः स दैत्यः ।**
**श्रेयोऽस्मभ्यं समभिलषितं वारिवाहो यथा त्वं**
**निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः ॥ ६० ॥**

**प्रत्युत्कीर्णो यदि च भगवन्भव्यलोकैकमित्रात्**
**त्वत्तः श्रेयः फलमभिमतं प्राप्नुयादेव भक्तः ।**
**प्रत्युक्तैः किं फलति जगते कल्पवृक्षः फलानि ?**
**प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ ६१ ॥**

अन्वयः— सः त्यक्तवैरः दैत्यः तच्छायायां समधिकरुचिं उत्पन्नबोधं बद्धास्थानं देवं शरणं अकृत । हे भगवन् ! [ यदि ] प्रत्युत्कीर्णः वारिवाहः चातकेभ्यः जलं यथा, याचितः [ सन् ] निःशब्दः अपि अस्मभ्यं समभिलषितं श्रेयः प्रदिशसि, यदि च भव्यलोकैकमित्रात् त्वत्तः भक्तः अभिमतं फलं प्राप्नुयात् एव, [ तर्हि ] श्रेयः । कल्पवृक्षः फलानि जगते किं प्रत्युक्तैः फलति ? प्रणयिषु ईप्सितार्थक्रिया एव हि सतां प्रत्युक्तम् ।

**तच्छायाया**मित्यादि युग्मम् । **सः** शम्बराभिधानः **त्यक्तवैरः** परित्यक्तशात्रवः **दैत्यः** असुरः **तच्छायायां** फणाछत्रयोः छायायाम् । छायाऽनातपः । तयोः

फणाछत्रयोः छायाऽनातपः तच्छाया। तस्याम्। 'छाया स्यादतपाभावे सत्कान्त्युत्कोचकान्तिषु। प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने॥' इति विश्वलोचने। **समधिकरुचिं** अधिकतरकान्तिम्। 'रुचिरिच्छा रुचा रुक्ता शोभाभिष्वङ्गयोरपि। रुक् शोभायां च किरणे स्त्रियामपि मनोरथे॥' इति विश्वलोचने। **उत्पन्नबोधं** आविर्भूतकेवलज्ञानम्। आत्मनश्शुद्धज्ञानघनैकस्वभावत्वात्तज्ज्ञानस्योत्पत्त्यसम्भवादुत्पत्तिशब्द आविर्भवनार्थवचन एव ग्राह्यो लक्षणया। उत्पन्नशब्दसान्निध्यादात्मनश्च ज्ञानसामान्यत्वाद्बोधशब्दः केवलरूपज्ञानविशेषवचन इत्यभ्यूह्यम्। **बद्धास्थानं** पाकशासनाज्ञाकारिकुबेरविरचितसमवसरणम्। बद्धं विरचितं आस्थानं सभामण्डपः यस्य स बद्धास्थानः। तम्। आस्थीयतेऽत्र पारिषद्यैरित्यास्थानम्। 'करणाधारे चानट्' इत्याधारेऽनट्। **देवं** भगवन्तं पार्श्वनाथतीर्थंकरं **शरणं** रक्षितारम्। 'शरणं गृहरक्षित्रोः शरणं रक्षणे वधे' इति विश्वलोचने। **अकृत** अकरोत्। हे **भगवन्** केवलज्ञानिन्। भगं प्रशस्तं ज्ञानमस्त्यस्येति भगवान्। प्रशंसायामत्र मतुः। 'भगं तु ज्ञानयोनीच्छायशोमाहात्म्यमुक्तिषु। ऐश्वर्यवीर्यवैराग्यधर्मश्रीरत्नभानुषु॥' इति विश्वलोचने। यदि **प्रत्युत्कीर्णः** राशीभूतः विनश्वरो वा जिन पक्षे केवलज्ञानयुक्तः। **वारिवाहः** वलाहकः। मेघ इत्यर्थः। वारि वहतीति वारिवाहः। कर्मण्यण्। **चातकेभ्यः** जलरङ्केभ्यः **जलं यथा** वारीव। यथा याचितः राशीभूतः घनः निःशब्दः अपि चातकेभ्यः जलं प्रदिशति तथेत्यर्थः। **याचितः** सन् प्रार्थितः सन् त्वं **निःशब्दः अपि** वाचंयमतां प्राप्तः अपि। वाग्यतोऽपीत्यर्थः। **अस्मभ्यं** मह्यम्। 'द्वौ चास्मदोऽनुपाधौ' इति बहुवचनम्। **समभिलषितं** अभिकाङ्क्षितं **श्रेयः** कल्याणं मङ्गलं वा। अभ्युदयनिःश्रेयससम्पदमित्यर्थः। 'श्रेयस्तु मङ्गले धर्मे' इति विश्वलोचने। **प्रदिशसि** ददासि **यदि च भव्यलोकैकमित्रात्** रत्नत्रयात्मपरिणतियोग्यपुरुषश्रेष्ठमित्रात्। रत्नत्रयात्मना भूयतेऽनेनेति भवितुमर्हतीति भवतीति वा भव्यः। 'जन्भूगो यो वा' इति यः। भव्याः रत्नत्रयधारणयोग्याश्च ते लोकाः जनाः भव्यलोकाः। तेषां एकं श्रेष्ठं केवलं मित्रं भव्यलोकैकमित्रं। तस्मात्। 'एकस्तु स्यात्त्रिषु श्रेष्ठे केवलेतरयोरपि' इति विश्वलोचने। **त्वत्तः** भवतः पार्श्वजिनेन्द्रात्। **भक्तः** भक्तिभाक् **अभिमतं** अभिलषितं **फलं** लाभम्। 'फलं तु सस्ये हेतूत्थे फलके व्युष्टिलाभयोः। जातीफलेऽपि कङ्कोले मार्गणाग्रेऽपि न द्वयोः॥ स्यात् फलं त्रिफलायां च' इति विश्वलोचने। **प्राप्नुयादेव** निश्चितं लभेत तर्हि **श्रेयः** ज्यायः। प्रशस्यतरम्। 'प्रशस्यस्य श्रः' इतीयसि परे प्रशस्यस्य श्रादेशः। यदि भवान् वाचंयमोऽपि श्रेयः प्रदिशसि यदि च भक्तोऽभिमतं फलं त्वत्तो निश्चयेन लभेत तदा त्वदीयं वाचंयमत्व-

मन्यस्माच्छ्रेयः इति भावः । **कल्पवृक्षः** सङ्कल्पपूरणः देवद्रुमः **फलानि** अभिकाङ्क्षितानि **जगते** लोकाय । जनेभ्यो दातुमित्यर्थः । **किं प्रत्युक्तैः फलति** किं प्रतिवचनैः फलेग्रहितां याति । **प्रणयिषु** सविनयं प्रार्थिषु **ईप्सितार्थक्रिया एव** अभिकाङ्क्षितफलनिष्पादनमेव । ईप्सितः अभिलषितः अर्थः प्रयोजनं फलं ईप्सितार्थः । तस्य क्रिया निष्पादनमीप्सितार्थक्रिया । 'अर्थः प्रयोजने चित्ते हेत्वभिप्रायवस्तुषु । शब्दाभिधेये विषये स्यान्निवृत्तिप्रकारयोः' इति विश्वलोचने । **हि** हेतौ निश्चये वा । यस्मात्कारणात् निश्चयतो वा । 'हि विशेषेऽवधारणे । हि पादपूरणे हेतौ' इति विश्वलोचने । **सतां** सत्पुरुषाणां **प्रत्युक्तं** प्रतिवचनम् । उत्तरमित्यर्थः ।

That demon, with enmity abandoned [ abandoning enmity ] found his protector in the Lord, having his splendour increased in the shadow of those, having perfect and flawless knowledge manifested, and having a lecture-hall constructed [ for Him by Kubera ]. Oh Lord ! if you, though silent, give us bliss desired for, on request, like an amalgamated cloud giving water to the Chātaka birds, and if the devotee gets his purpose, desired for, achieved certainly, through You, the excellent [ or matchless ] friend of the fortunate people, it is better. Do the desire-fulfilling trees bear fruits for the sake of the world through words [ i. e. replies ] ? Bringing into effect only the purpose, desired for, is a reply of the good to the supplicants.

**सह्रीकस्ते कथमपि पुरो वर्तितुं सङ्घटेऽहं**
**दूराद्वक्तुं निकृतिबहुलः पापकृद्वैरदग्धः ।**
**सौजन्यस्य प्रकटय परां कोटिमात्मन्यसङ्गात्**
**एतत्कृत्वा प्रियमनुचितं प्रार्थनादात्मनो मे ॥ ६२ ॥**

अन्वयः— सह्रीकः निकृतिबहुलः पापकृत् वैरदग्धः अहं ते पुरः वर्तितुं कथमपि सङ्घटे । वक्तुं दूरात् । आत्मनि असङ्गात् [ ते ] अनुचितं [ मे ] प्रियं एतत् मे प्रार्थनात् कृत्वा आत्मनः सौजन्यस्य परां कोटिं प्रकटय ।

**सह्रीक** इत्यादि । **सह्रीकः** सलज्जः । ह्रिया लज्जया सहितः सह्रीकः । 'ऋङ्न्मोः' इति कप् । 'केऽणः' इति प्रत्वे प्राप्ते 'न कपि' इति प्रत्वस्य निषेधः । **निकृतिबहुलः** अपकारबहुलः। निकृतिरपकारो बहुलः प्रचुरः यस्मिन्यस्य वा । कृतबहुपकारः इत्यर्थः । **पापकृत्** पापकर्मकरः । पापं पापकर्म करोतीति पापकृत् । क्विप् ।

'पिति कृति तुक्' इति प्रान्तत्वात् क्विपः पित्त्वात्तस्मिन्परे तुक्। **वैरदग्धः** वैरदग्धहृदयः । वैरं शात्रवम् । तेन दग्धः । यद्वा पापकृता वैरेण दग्धः । **अहं** शम्बराभिधानः दैत्यपाशः । **ते** भवतः **पुरः** अग्रतः **वर्तितुं** स्थातुं **कथमपि** महता कष्टेन **सङ्घटे** प्रयते । **वक्तुं** भाषितुं **दूरात्** दूरे अस्तु । **आत्मनि** स्वशरीरे । स्वशरीरविषये इत्यर्थः । 'आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु' इति विश्वलोचने । **असङ्गात्** आसक्त्यभावात् ते **अनुचितं** अयोग्यं मे **प्रियं** रुचितं **एतत्** अनन्तरोत्तरश्लोकोक्तं कार्यं **मे** मम **प्रार्थनात्** याचनाद्धेतोः **कृत्वा** विधाय **आत्मनः** स्वस्य **सौजन्यस्य** सानुकम्पत्वस्य **परां कोटिं** आत्यन्तिकं प्रकर्षं । 'कोटिः सङ्ख्यान्तराग्रयोः । अत्युत्कर्षप्रकर्षाश्रिकार्मुकाग्रेषु च स्त्रियाम्' इति विश्वलोचने । **प्रकटय** प्रकटीकुरु । 'मृदो ध्वर्थे णिज्वहुलम्' इति करोत्यर्थे णिच् ।

I, put to shame, possessing wickedness in abundance, committing sin, burning at heart with enmity, am trying to stand before you with a great difficulty. Let alone speaking with you ! Manifest a climax of your compassion by doing this [ which is described in the next stanza ], dear [ to me and ] improper [ in your opinion ] owing to your renunciation of attachment to your body [ even ], on my request.

**अत्राणं मामपघृणमतिप्रौढमायं दुरीहं**
**पश्चात्तापाच्चरणपतितं सर्वसत्त्वानुकम्प ।**
**पापापेतं कुरु सकरुणं त्वाऽद्य याचे विनम्रः**
**सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ॥ ६२ ॥**

अन्वयः— सर्वसत्त्वानुकम्प ! विनम्रः अहं त्वा अद्य सकरुणं याचे । सौहार्दात् वा, विधुर इति मयि अनुक्रोशबुद्ध्या वा अत्राणं अपघृणं अतिप्रौढमायं दुरीहं पश्चात्तापात् चरणपतितं मां पापापेतं कुरु ।

अत्राणमित्यादि । **सर्वसत्त्वानुकम्प** प्राणिमात्रे दयाशील । सर्वाणि च तानि सत्त्वानि प्राणिनः सर्वसत्त्वानि । तेषु अनुकम्पा यस्य सः सर्वसत्त्वानुकम्पः । तस्य किः । 'सत्त्वं जन्तुषु न स्त्री स्यात्सत्त्वं प्राणात्मभावयोः । द्रव्ये बले पिशाचादौ सत्तायां गुणवित्तयोः ॥ स्वभावे व्यवसाये च सत्त्वमित्यभिधीयते' इति विश्वलोचने । **विनम्रः** अत्यर्थं विनतः । 'नम्कम्पिस्म्यजस्कर्मिंहसदीपो रः' इति रः । **अहं** कमठचरः शम्बरासुरः **त्वा** भगवन्तं पार्श्वजिनेन्द्रं **अद्य** अधुना **सकरुणं** सदैन्यं । दीनतयेत्यर्थः

करुणया दैन्येन सहितं यथा स्यात्तथा। 'हेऽकाले' इति सहस्य सः। 'ञिः सुव्–' इत्यादिना हसः। **याचे** प्रार्थये। **सौहार्दाद्वा** सुहृद्भावाद्वा। औदार्यादित्यर्थः। सुहृदो भावः सौहार्दम्। शोभनं हृदयं यस्य सः सुहृदयः। सुहृदयस्येदं सौहार्दम्। 'कच्छादेः' इत्यणि परे 'हृदयस्य हृल्लेखाण्यलासे' इति हृदयस्य हृदादेशः। हृदि परे च 'हृत्सिन्धुभगे द्वयोः' इति द्वयोरपि पदयोरैप्। यद्वा 'सुहृद्दुर्हृन्मित्रामित्रे' इत्यनेन निपातितात्सुहृच्छव्दात् 'कच्छादेः' इत्यणि परे 'हृत्सिन्धुभगे द्वयोः' इत्युभयोरप्यैप्। **विधुरः इति** पापभयाक्रान्तत्वात् कृतपापजनितदुःखाकुलत्वाद्वा। अयं पापभीतः दुःखाकुलः वेति मनसि विधायेत्यर्थः। 'विधुरं तु प्रविश्लेषे प्रत्यवायेऽपि तन्मतम्। विधुरा तु रसालायां विधुरं विकलेऽन्यवत्' इति विश्वलोचने। **मयि** मयकि **अनुक्रोशबुद्ध्या वा** अनुकम्पामयेन मनसा। 'कृपा दयाऽनुकम्पा स्यादनुक्रोशोपि' इत्यमरः। **अत्राणं** अशरणम्। 'त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च' इत्यमरः। न विद्यते त्राणं शरणं रक्षिता यस्य सः अत्राणः। तम्। त्रायते इति त्राणः। 'व्यानड् बहुलम्' इति कर्तर्यनट्। यद्वा नास्ति त्राणं रक्षणं यस्य सः। तम्। **अपघृणं** निर्दयम्। अकरुणमित्यर्थः। 'कारुण्यं करुणा घृणा' इत्यमरः। **अतिप्रौढमायं** अतिवृद्धकपटभावं। अत्यर्थं प्रौढा वृद्धिं गता माया कपटाचरणं कपटभावो वा यस्य सः। तम्। **दुरीहं** दुष्टाभिलाषम्। दुष्टा ईहा अभिलाषः यस्य सः। तम्। **पश्चात्तापात्** अनुतापात्। कृतापराधस्मृतिजानितमानससन्तापादित्यर्थः। **चरणपतितं** पादयोरानतम्। चरणौ पतितः चरणपतितः। चरणावितीवन्तं पतितपदेन समस्तम्। 'इतच्छ्रितादिभिः' इति पसः। **मां** शम्बरासुरं **पापापेतं** पापान्मुक्तम्। पापादपेतः अपगतः पापापेतः। तम्। 'का भ्यादिभिः' इति पापादिति कान्तं पदमपेतपदेन समस्तम्। **कुरु** विधेहि।

Oh Lord! showing compassion to all living beings, I, bent down with modesty, request you now [ lit. to-day ] piteously—'Deliver me, devoid of any protection, merciless, characterized by fraud brought to climax, cherishing wicked desires, fallen at your feet through repentance, from sin either through good-heartedness or through a feeling of compassion towards me because of my being overwhelmed with grief.

इत्थङ्कारं कमठदनुजः स्वापकारं प्रमार्जन्
भूयः स्माऽऽह प्रकटितमहाभोगभोगीन्द्रगूढः।

**लोकाह्लादी नव इव घनो देव धर्माम्बु वर्ष-**
**न्निष्टान्देशान्विचर जलद प्रावृषा सम्भृतश्रीः ॥ ६४ ॥**

अन्वयः— कमठदनुजः इत्थङ्कारं स्वापकारं प्रमार्जन् भूयः आह स्म — 'देव जलद प्रावृषा सम्भृतश्रीः नवः घनः इव धर्माम्बु वर्षन् लोकाह्लादी प्रकटितमहाभोगभोगीन्द्रगूढः इष्टान् देशान् विचर।

**इत्थकार**मित्यादि। **कमठदनुजः** कमठचरासुरः **इत्थंकारं** अनेन प्रकारेण। पूर्वश्लोकोक्तप्रकारेणेत्यर्थः। इत्थमिति शब्दस्य कृञ्प्रयोगाभावे योऽर्थस्तस्यैव कृञ्प्रयोगेऽपि विद्यमानत्वात् 'कृञोऽन्यथैवंकथमित्थंस्वनर्थात्' इति प्रयुक्तात् कृञः खमुञ्। **स्वापकारं** कृतपूर्वं स्वकीयं अपराधम्। स्वस्य स्वकृतः अपकारः भगवच्छिरसि दृषत्पातनभीमयनिकृत्यादिरूपः अपराधः स्वापकारः। तम्। **प्रमार्जन्** प्रक्षालयन् **भूयः** पुनः **आह स्म** अब्रवीत्। **देव** भगवन् पार्श्वजिनेन्द्र **जलद** मेघसमान। जलदः इव जलदः। तस्य किः। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। सद्धर्मामृतवर्षुकत्वाज्जलदेति सम्बोधनं समीचीनम्। **प्रावृषा** वर्षाकालेन। प्रवर्षतीति प्रावृट्। 'नहिवृतिवृषिव्यधिरुचिसहितनौ' इति गेर्दीः। **सम्भृतश्रीः** प्रचितशोभः। समन्ताद्भृता प्रपूरिता श्रीः शोभा यस्मिन् सः सम्भृतश्रीः। 'श्रीर्लक्ष्मीभारतीशोभाप्रभासु सरलद्रुमे। वेशत्रिवर्गसम्पत्तौ शेषापकरणे मतौ' इति विश्वलोचने। **नवः** नूत्नः **घनः इव** जीमूतः इव। मेघः इवेत्यर्थः। **धर्माम्बु** धर्मजलम्। धर्म एवाम्बु धर्माम्बु। यसः। 'वार्वारि कं पयोऽम्भोऽम्बु पाथोऽर्णस्सलिलं जलं' इति धनञ्जयः। **वर्षन्** सिञ्चन् **लोकाह्लादी** जनसन्तोषजननस्वभावः। लोकान् आह्लादयतीत्येवं शीलं लोकाह्लादी। 'शीलेऽजातौ णिन्' इति शीलस्य गम्यमानत्वाण्णिन्। **प्रकटितमहाभोगभोगीन्द्रगूढः** प्रकटीकृतविपुलफटाटोपफणीन्द्रसंवृतशरीरः। प्रकटितः प्रकटीकृतः। 'मृदो ध्वर्थे णिज् बहुलम्' इति णिच्। तदन्तात् क्तः। **भोगः** फणः। 'पुंसि भोगः सुखेऽपि स्यादहेश्च फणकाययोः। निर्वेशे गणिकादीनां भोजने पालने धने' इति विश्वलोचने। भोगी नागः। भोगः फणः अस्यास्तीति भोगी। 'भोगी भोगान्विते सर्पे ग्रामण्यां राज्ञि नापिते।' इति विश्वलोचने। गूढः संवृतः। महांश्चासौ भोगश्च महाभोगः। प्रकटितः महाभोगः येन सः प्रकटितमहाभोगः। भोगी इन्द्रः इव भोगीन्द्रः। 'व्याघ्रादिभिरुपमेयोऽतद्योगे' इति षसः। प्रकटितमहाभोगश्चासौ भोगीन्द्रश्च। तेन गूढः संवृतोर्ध्वकायः। **इष्टान्** अनुरूपान् **देशान्** जनपदान् **विचर** विहर। विहारं कुर्वित्यर्थः। 'कालाध्वभावदेशं वाऽकर्म धीनां' इति देशानित्यस्य कर्मत्वम्।

The demon, formerly Kamatha, thus making amends for misdeeds perpetrated by himself, said again— 'Oh Lord, resembling a cloud showering down water [ i. e. rain ] in the form of righteousness, like a new cloud, having splendour increased by the rainy season, making happy all the living beings of this world, overspread with [ umbrella-like ] big unfolded hoods of the lord of serpents, roam about over agreeable regions.

**यत्तन्मौढ्याद्बहुविलसितं न्यायमुल्लङ्घ्य वाचां**
**तन्मे मिथ्या भवतु च मुने दुष्कृतं निन्दितस्वम् ।**
**भक्त्या पादौ जिन विनमतः पार्श्व मे तत्प्रसादात्**
**मा भूदेवं क्षणमपि सखे विद्युता विप्रयोगः ॥ ६५ ॥**

अन्वयः— मुने जिन पार्श्व सखे ।. भक्त्या पादौ विनमतः मे तत्प्रसादात् यत् मौढ्यात् न्यायं उल्लङ्घ्य मे वाचां बहुविलसितं तत् मिथ्या भवतु, निन्दितस्वं [ मे ] दुष्कृतं च [ मिथ्या भवतु ] । एवं क्षणं अपि विद्युता विप्रयोगः मा भूत् ।

**यदि**त्यादि । **मुने** ध्यानैकतान । मननाद्ध्यानैकतानत्वान्मुनिः। तस्य किः । **जिन** अष्टादशप्रकारकक्षुधादिदोषविजेतः अर्हन् । अष्टादशदोषान् क्षुत्पिपासादीञ्जयतीति जिनः । तस्य किः । **पार्श्व** भगवन् पार्श्वनाथ । **सखे** मित्र । कमठचरस्य शम्बराभिधानस्यासुरस्य विवान्तभगवद्विषयकवैरत्वात्तत्कृतं 'सखे' इति भगवद्विषयकं सम्बोधनमेतन्न्याय्यमेव । **भक्त्या** अनुरागेण **पादौ** भवतश्चरणौ **विनमतः** प्रणमतः **मे** शम्बरासुरस्य मम **तत्प्रसादात्** तयोर्भवतश्चरणयोः प्रसादादनुग्रहात् **यत् मौढ्यात्** दर्शनमोहनीयोदयजनितादज्ञानात् । **न्यायं उल्लङ्घ्य** साधुवृत्तमतिक्रम्य **मे** मम दुर्वृत्तस्य कमठचरस्य शम्बरासुरस्य **वाचां** आलपितानां **बहुविलसितं** बहुप्रकारं चेष्टितम् । बहु विविधप्रकारं च तद्विलसितं च चेष्टितं बहुविलसितम् । नानाविधाश्चेष्टाः इत्यर्थः । **तत्** नानाविधं वाचामन्याय्यं चेष्टितं **मिथ्या** निष्फलं **भवतु** भूयात् **निन्दितस्वं** प्रतिक्रान्तस्वरूपं । निन्दितः गर्हितः स्वः आत्मा स्वरूपं यस्य तत् । 'स्वो ज्ञातावात्मनि' इति विश्वलोचने । **मे दुष्कृतं** च । पापकर्म च । दुष्टं कृतं कर्म दुष्कृतम् । दुष्कर्मेत्यर्थः । मिथ्या भवतु इति शेषः । **एवं** अनेनैव प्रकारेण **क्षणमपि** क्षणमात्रकालमपि **विद्युता** आत्मस्वभावभूतेन ज्ञानेन । द्योतते प्रकटीकरोति आत्मस्वरूपमिति स्वपरार्थाविति वा द्युत् । क्विप् । विशिष्टा द्युत् प्रकाशः ज्ञानं विद्युत् । आत्मस्वभावभूतं सम्यग्ज्ञानमित्यर्थः । तेन

विद्युता। विप्रयोगः वियोगः मा भूत् न भवत्। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमप्रतिषेधः।

Oh friend Jina Pārsva, absorbed in meditation! may the various operations of the speech, carried, through ignorance, into effect, setting at nought the moral conduct, of me, bowing down to your feet devoutedly, as well as the misdeeds [ perpetrated by me ], the nature of which is censured, be rendered fruitles through favour of your feet! Similarly, may not separation of me from right knowledge be carried into effect even for a moment!

**अनुनयति सतीत्थं भक्तिनम्रेण मूर्ध्ना**
**कमठदनुजनाथे नागराजन्यसाक्षात्।**
**ध्रुवमनुशयतप्ताद्वैरबन्धश्चिरात्तः**
**स्म गलति निजचित्तात्सन्तताश्रुच्छलेन ॥ ६६ ॥**

अन्वयः—नागराजन्यसाक्षात् कमठदनुजनाथे भक्तिनम्रेण मूर्ध्ना इत्थं अनुनयति सति अनुशयतप्तात् निजचित्तात् चिरात्तः वैरबन्धः सन्तताश्रुच्छलेन ध्रुवं गलति स्म।

**अनुनयतीत्यादि।** **नागराजन्यसाक्षात्** सर्पाधिराजसमक्षम्। नागानां राजन्यः नागराजन्यः। तस्य साक्षात् समक्षं नागराजन्यसाक्षात्। राज्ञः अपत्यं राजन्यः। 'जातौ राज्ञः' इति जातौ ये परे 'येऽङौ' इति टिखम्। **कमठदनुजनाथे** कमठचरदैत्याधिपे। दनुजानां दैत्यानां नाथः दनुजनाथः। कमठः एव दनुजनाथः कमठदनुजनाथः। तस्मिन्। 'यद्भावाद्भावगतिः' इति ईप्। **भक्तिनम्रेण** अनुरागविनतेन। भक्त्याऽनुरागेण नम्रः विनतः भक्तिनम्रः। तेन। 'नम्कम्पिस्म्यजसकम्हिसदीपो रः' इति रः। **मूर्ध्ना** शिरसा **इत्थं** अनेन प्रकारेण **अनुनयति सति** प्रार्थयमाने सति। अनुनयतीत्यनुनयन् प्रार्थयमानः। तस्मिन् सति। प्रणामादिना विनयमादधति सति इत्यर्थः। **अनुशयतप्तात्** पश्चात्तापेन सन्तप्तात् **निजचित्तात्** स्वहृदयात् **चिरात्तः** चिरगृहीतः। चिरात् चिरातीतकालादात्तः गृहीतः चिरात्तः। **वैरबन्धः** वैरविरचनम्। वैरस्य शात्रवस्य बन्धः विरचनं वैरबन्धः। **सन्तताश्रुच्छलेन** अविच्छिन्नाश्रुधाराव्याजेन। सन्ततान्यविच्छिन्नान्यश्रूणि सन्तताश्रूणि। तेषां छलं व्याजः। तेन। **ध्रुवं** निश्चयेन **गलति स्म** अच्योष्ट। अगलदित्यर्थः।

In the presence of the lord of serpents, when the lord of demons, Kamatha [ by name in his former birth ], was supplicating thus with his head bent down through devotion, the feeling of enmity roused up ere long, certainly disappeared from his own heart, inflamed with repentance, in the guise of tears dropping down incessantly.

**अथ सुरभिसमीरान्दोलितैः कल्पवृक्षैः**
**सममसरनिकायाः पुष्पवृष्टिं वितेनुः**
**अविरलनिपतद्भिः स्वर्विमानैर्निरुद्धा**
**नवजलदविलिप्तेवेक्ष्यताऽसौ तदा द्यौः ॥ ६७ ॥**

अन्वयः — अथ सुरभिसमीरान्दोलितैः कल्पवृक्षैः समं अमरनिकायाः पुष्पवृष्टिं वितेनुः । तदा अविरलनिपतद्भिः स्वर्विमानैः निरुद्धा असौ द्यौः नवजलदविलिप्ता इव ईक्ष्यत ।

अथेत्यादि । **अथ** अनन्तरं **सुरभिसमीरान्दोलितैः** सुगन्धिगन्धवाहप्रकम्पितैः । सुरभयः सुगन्धयश्च ते समीराः गन्धवाहाश्च सुरभिसमीराः । तैः आन्दोलिताः प्रकम्पिताः । तैः । **कल्पवृक्षैः** देवद्रुमैः **समं** साकं । युगपदित्यर्थः । **अमरनिकायाः** देवसमाजाः । देवानां निकायाः समाजाः समूहाः देवनिकायाः । निचीयते निकायः । ‘ चित्यावासाङ्गोपसमाधौ च कः ’ इति चेर्घञ् चकारस्य च ककारादेशः । ‘ निकायस्त्वात्मवेश्मनोः । सधर्मिनिवहे लक्ष्ये संहतानां च मेलके ’ इति विश्वलोचने । **पुष्पवृष्टिं** कुसुमवर्षं **वितेनुः** चक्रुः । **तदा** तस्मिन्समये **अविरलनिपतद्भिः** निरन्तरोड्डयनैः । निपतति उड्डयते इति निपतन् । तैः । अविरलं निरन्तरं निपतन्तः उड्डयमानाः अविरलनिपतन्तः । तैः । **स्वर्विमानैः** दिव्ययानैः । स्वर्गीयैर्व्योमयानैरित्यर्थः । ‘ स्वर्गे परे च लोके स्वः ’ इत्यमरः । **निरुद्धा** निरन्तरं व्याप्ता **असौ** एषा **द्यौः** अम्बरम् । ‘ द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ’ इत्यमरः ; **नवजलदविलिप्ता इव** प्रत्यग्रजलधरदिग्धेव । नवः प्रत्यग्रश्चासौ जलदः जलधरः नवजलदः । तेन विलिप्ता दिग्धा । **ईक्ष्यत** अदृश्यत ।

Afterwards, the multitudes of gods, along with the wish-fulfilling trees, shaken up by the fragrant winds, discharged flowers in showers. At that time, that sky, covered up with celestial cars, flying up closely, appeared as if besmeared with fresh clouds.

सपदि जलदमुक्तैः सान्द्रगन्धाम्बुपातैः
मधुपगणविकीर्णैराश्वसत्क्ष्मा क्षतोष्मा।
वियति मधुरमुच्चैर्दुन्दुभीनां च नादः
सुरकरतलगूढास्फालितानां जजृम्भे ॥ ६८ ॥

अन्वयः— जलदमुक्तैः मधुपगणविकीर्णैः सान्द्रगन्धाम्बुपातैः क्षतोष्मा क्ष्मा सपदि आश्वसत् वियति च सुरकरतलगूढास्फालितानां दुन्दुभीनां नादः मधुरं उच्चैः जजृम्भे ।

**सपदी**त्यादि । **जलदमुक्तैः** जलधरविसृष्टैः । मेघेभ्यः पतितैरित्यर्थः । **मधुपगणविकीर्णैः** विकीर्णमधुलिड्गणैः । मधु पिबतीति मधुपः । मधुपानां मधुपायिनां गणाः मधुपगणाः । ते विकीर्णाः यत्र । तैः । 'वाहिताग्न्यादिषु' इति क्तान्तस्य परनिपातः । सान्द्रगन्धाम्बुपातैः निबिडसौरभ्यजलवृष्टिभिः । सान्द्रः निबिडः गन्धः येषां तानि सान्द्रगन्धानि। सान्द्रगन्धानि च तान्यम्बूनि जलानि च । तेषां पाताः वृष्टयः । तैः । **क्षतोष्मा** विनष्टोत्तापा । क्षतः विनष्टः ऊष्मा उत्तापः यस्याः सा । **क्ष्मा** भूमिः **सपदि** झटिति **आश्वसत्** सुखिता बभूव । **वियति च** व्योम्नि **सुरकरतलगूढास्फालितानां** त्रिदशहस्ततलैः रहसि ताडितानाम् । सुराणां देवानां करतलानि पाणितलानि सुरकरतलानि । तैः गूढं आस्फालिताः ताडिताः । तेषां तासां वा । यद्वा सुरैः देवैः करतलैः गूढं रहसि आस्फालिताः । तेषां तासां वा । **दुन्दुभीनां** भेरीणां । 'भेरी स्त्री दुन्दुभिः पुमान्' इत्यमरः । **नादः** ध्वनिः **मधुरं** श्रुतिसुखं यथा स्यात्तथा । **उच्चैः** अत्यर्थ **जजृम्भे** वृद्धिं जगाम ।

The earth, with heat diminished by the falls of abundantly fragrant water discharged by clouds, having hordes of bees scattered over, became comforted, and in the sky, the sound of kettle-drums, beaten secretly with palms of hands by gods, became excessively heightened charmingly.

इति विदितमहर्द्धिं धर्मसाम्राज्यमिन्द्राः
जिनमवनतिभाजो भेजिरे नाकभाजाम् ।
शिथिलितवनवासाः प्राक्तनीं प्रोज्झ्य वृत्तिं
शरणमुपययुस्तं तापसा भक्तिनम्राः ॥ ६९ ॥

अन्वयः— इति विदितमहर्द्धिं धर्मसाम्राज्यं जिनं अवनतिभाजः नाकभाजां इन्द्राः भेजिरे। शिथिलितवनवासाः तापसाः प्राक्तनीं वृत्तिं प्रोज्झ्य भक्तिनम्राः [ सन्तः ] तं शरणं उपययुः।

इतीत्यादि। **इति** अनेन प्रकारेण। अनन्तरपूर्वश्लोकोक्तप्रकारेण सातिशयैरित्यर्थः। **विदितमहार्द्धिं** निखिललोकविज्ञातमहैश्वर्यम्। महती चासौ ऋद्धिः योगशक्तिश्च महर्द्धिः। 'ऋद्धिः स्यादोषधीभेदे योगशक्तौ च बन्धने' इति विश्वलोचने। 'आङ् महतो जातीये च' इति महतः आङ्कादेशः। विदिता ज्ञाता लोकैः महर्द्धिर्यस्य सः विदितमहार्द्धिः। तम्। 'विदितं स्वीकृते ज्ञाते' इति विश्वलोचने। विश्वजनविज्ञातप्रबलयोगशक्तिमित्यर्थः। **धर्मसाम्राज्यं** शुद्धज्ञानघनैकस्वभावात्यर्थराजमानत्वम्। धर्मेणात्मस्वभावेन समन्ताद्राजत इति धर्मसम्राट्। 'क्विप्' इति क्विप्। तस्य भावः धर्मसाम्राज्यं। तदस्यास्तीति धर्मसाम्राज्यः। तम्। 'ओऽभ्रादिभ्यः' इत्यो मत्वर्थीयः। यद्वा धर्मस्य साम्राज्यं विद्यते यस्य सः धर्मसाम्राज्यः। तम्। **जिनं** भगवन्तं पार्श्वजिनम्। **अवनतिभाजः** प्रणतिभाजः। अवनतिं प्रणतिं भजते इति अवनतिभाक्। ते। 'भजो ण्विः' इति ण्विः। **नाकभाजां** स्वर्गिणाम्। न विद्यतेऽकं दुःखं यत्र स नाकः। 'अकं दुःखाघयोः' इति विश्वलोचने। नाकं भजन्ते इति नाकभाजः। पूर्ववण्णिः। **इन्द्राः** शक्राः। 'इन्द्रः शक्रात्मसूर्येषु योगेऽपि' इति विश्वलोचने। देवाधिपतय इत्यर्थः। **भेजिरे** सिषेविरे। **शिथिलितवनवासाः** श्लथीकृतविपिननिवसनाः। वने वासः वनवासः। शिथिलितः शिथिलः कृतः। 'मृदो ध्वर्थे णिज्बहुलम्' इति करोत्यर्थे णिच्। णिचि च क्तः। शिथिलितः परित्यक्तः वनवासः यैस्ते। आत्मस्वरूपचिन्तनमन्तरेण मुक्तेरसम्भव इति जातप्रत्ययास्सन्तः वनवासं परितत्यजुरिति भावः। परित्यक्तविपिनाधिवासबुद्धयः इत्यर्थः। **तापसाः** पञ्चाग्नयो धृतव्रताः **प्राक्तनीं** धृतपूर्वां पञ्चाग्नितपश्चरणादिरूपां **वृत्तिं** आचरणं **प्रोज्झ्य** परित्यज्य **भक्तिनम्राः** सन्तः अनुरागेण नमनशीलाः। 'नम्कम्पि—' इत्यादिना रत्यः। **तं** भगवन्तं पार्श्वजिनेन्द्रं **शरणं** रक्षितारं **उपययुः** शिश्रियिरे। कायक्लेशादिरूपस्य तपसो वैयर्थ्यं विनिश्चित्य भगवदाचरितं तपो लब्धुकामाः तपोमहिम्ना सम्प्राप्तमहोदयं पार्श्वजिनेन्द्रं स्वरक्षणार्थमुपजग्मुरिति भावः।

The lords of gods, bowing down, worshipped Jina, whose supernatural power was, thus, known to all, and who enjoyed universal sovereignty owing to attaining completely the [ flawless ] nature of His soul. Ascetics, who abandoned residing in forests, having given

up their former course of conduct, bent down through devotion [ to Him ], approached Him in whom they found their protector.

इति विरचितमेतत्काव्यमावेष्ट्य मेघं
बहुगुणमपदोषं कालिदासस्य काव्यम् ।
मलिनितपरकाव्यं तिष्ठतादाशशाङ्कं
भुवनमवतु देवस्सर्वदामोघवर्षः ॥ ७० ॥

अन्वयः— इति बहुगुणं अपदोषं मलिनितपरकाव्यं कालिदासस्य काव्यं आवेष्ट्य विरचितं एतत् [ मलिनितपरकाव्यं ] काव्यं आशशाङ्कं तिष्ठतु । अमोघवर्षः देवः सर्वदा भुवनं अवतु ।

इतीत्यादि । इति अनेन प्रकारेण । पूर्वोक्तप्रकारेणेत्यर्थः । बहुगुणं विपुलगुणं । बहवो विपुलाः गुणाः रसोत्कर्षकारिणो माधुर्यादयो यस्मिंस्तत् । रसोत्कर्षकारिमाधुर्यादिगुणवैपुल्यसङ्कुलमित्यर्थः । अपदोषं अपगताः रसापकर्षकारिणः दोषाः यस्मात्तत् । काव्यरसापकर्षकारिदोषकुलविकलमित्यर्थः । मलिनितपरकाव्यं मलिनीकृतान्यकाव्यसन्दोहं । मलिनितं मलिनीकृतम् । 'मृदो ध्वर्थे णिज् बहुलम्' इति मृदो ध्वर्थे णिच् । तदन्ताच्च क्तः । मलिनितानि परकाव्यानि येन तत् । कालिदासस्य भारतवर्षप्रसिद्धस्य कालिदासाभिधानस्य महाकवेः काव्यं मेघदूतसञ्ज्ञं खण्डकाव्यं आवेष्ट्य आदौ मध्ये अन्ते वैकां पङ्क्तिं पङ्क्तिद्वयं वोपस्थाप्य विरचितं विहितं एतत् पार्श्वाभ्युदयाख्यं काव्यं मलिनितपरकाव्यं महाकाव्यं आशशाङ्कं यावच्चन्द्रमसं तिष्ठतात् तिष्ठतु । 'तुह्योर्ङ्तात्' इति तोराशिषि ङ्तात् । बहुगुणमित्यादिविशेषणत्रयं पार्श्वाभ्युदयाख्यकाव्यविषयेऽपि योजनीयम् । अमोघवर्षः राष्ट्रकूटवंश्यो बङ्कापुरराजधानीवास्तव्योऽमोघवर्षाभिधानः महाराजः, पक्षे सफलवृष्टिः । अमोघः सफलः वर्षः वृष्टिः यस्य सः । देवः राजा पक्षे मेघः । 'देवो राज्ञि सुरे मेघे देवं स्यादिन्द्रिये मतम् ।' इति विश्वलोचने । सर्वदा सर्वकालं भुवनं जगत् अवतु रक्षतात् । अत्र प्रार्थनायां लोट् ।

May this poem, intertwined thus with a line or two of each of the stanzas of Kālidāsa's poem, abounding in merits, void of faults, [ and ] defiling all other poems, exist until the existence of the moon. May the cloud [ otherwise, the king ], pouring showers of rain growing crops [ otherwise, Amoghavarsha ] protect [ rule ] the earth always.

श्रीवीरसेनमुनिपादपयोजभृङ्गः
श्रीमानभूद्विनयसेनमुनिर्गरीयान् ।
तच्चोदितेन जिनसेनमुनीश्वरेण
काव्यं व्यधायि परिवेष्टितमेघदूतम् ॥ ७१ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचितमेघदूतवेष्टितवेष्टित पार्श्वाभ्युदये भगवत्कैवल्यवर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

अन्वय— श्रीवीरसेनमुनिपादपयोजभृङ्गः श्रीमान् गरीयान् विनयसेनमुनिः अभूत् । तच्चोदितेन जिनसेनमुनीश्वरेण परिवेष्टितमेघदूतं काव्यं व्यधायि ।

श्रीत्यादि । **श्रीवीरसेनमुनिपादपयोजभृङ्गः** श्रिया ज्ञानतपोलक्षणयोपलक्षितः वीरसेनः श्रीवीरसेनः । स चासौ मुनिश्च । तस्य पादावेव पयोजे श्रीवीरसेनमुनिपादपयोजे । तत्र भृङ्गः इव भृङ्गः । ‘ देवपथादिभ्यः ’ इतीवार्थस्य कस्योप् । **श्रीमान्** तपोलक्ष्मीरूपा श्रीरस्यास्तीति श्रीमान् । **गरीयान्** गुरुतरः । ईयसि गुरोर्गरादेशः । **विनयसेनमुनिः** विनयसेनाभिख्यस्तपस्वी **अभूत्** बभूव । **तच्चोदितेन** विनयसेनमुनिप्रवरप्रेरितेन **जिनसेनमुनीश्वरेण** जिनसेनाचार्येण **परिवेष्टितमेघदूतं** मेघदूताख्यखण्डकाव्यपरिवेष्टितम् । परितः वेष्टितं आक्रान्तं मेघदूतं तदाख्यं कालिदासविराचितं काव्यं येन तत् । **काव्यं** सर्गबद्धं महाकाव्यं **व्यधायि** व्यरचि । विरचितामित्यर्थः ।

इति श्रीपार्श्वाभ्युदये मुक्तेन्दुवर्मविरचितायां बालप्रबोधिन्याख्यायां तद्व्याख्यायां च भगवत्कैवल्यवर्णनो नाम चतुर्थः सर्गः ।

There was a sage, Vinayasena by name, resembling a bee hovering on the lotuses in the form of the feet of the revered sage, Virsena by name. This poem, covering the whole of Meghadūta, was written by Ācharya Jinsena who was impelled by him [ the revered Vinayasena ].

---

**Stanza 90**—उपासन्नवृत्तौ — on your approach in the vicinity. उपासन्ना प्रत्यासन्ना वृत्तिः वर्तनं यस्य सः । तस्मिन् । आविष्कृतजललवे—when you would have discharged drops of water. जलस्य लवाः जललवाः । आविष्कृताः प्रादुर्भाविताः जललवाः येन सः । तस्मिन् । सीमोद्देशाः—the border lands. सीम्नां मर्यादानां उद्देशाः प्रदेशाः सीमोद्देशाः। सामिसंरूढसस्याः— having crops half grown. सामि ईषत् संरूढानि समुत्पन्नानि सस्यानि स्तम्बकरीणि तृणानि यत्र। मूकपुंस्कोकिलाः— silenced cuckoos. मूकाश्च ते पुंस्कोकिलाश्च मूकपुंस्कोकिलाः । गृहबलिभुजाम्—eating domestic oblations ( i. e. crows, sparrows etc.) गृहबलिं गृहे कृतायाः पूजायाः उपहारं भुञ्जन्तीति गृहबलिभुजः काकादयो ग्रामपक्षिणः । तेषाम् । 'बलिश्चामरदण्डेऽपि करपूजोपहारयोः' इति विश्वलोचने । यद्वा बलिभुजः काकादयः । गृहे पालिताः तिष्ठन्तः वा बलिभुजः गृहबलिभुजः। तेषाम् । नीडारम्भैः— with the efforts for building nests. आकुलग्रामचैत्या :—having trees, occupying high positions in their villages, overcome with. आकुलानि व्याप्तानि ग्रामचैत्यानि यत्र । ग्रामेषु चैत्यानि उद्देशपादपाः उन्नतभूप्रदेशोत्पन्नाः पादपाः ग्रामचैत्यानि । 'चैत्यमुद्देश्यपादपे' इति विश्वलोचने । नवपरिकराः— having their surroundings changed into new ones. नवः परिकरः येषां ते नवपरिकराः। यद्वा नवाः परिकराः आरम्भाः येषु ते नवपरिकराः ।

**Stanza 91**—परिणतफलश्यामजम्बूवनान्ता :—having on their borders Jambū groves possessing dark colour owing to their ripe fruits. परिणतानि पक्वानि च तानि फलानि च परिणतफलानि । तैः श्यामानि च कृष्णवर्णानि हरिद्वर्णानि च तानि जम्बूवनानि च परिणतफलश्यामजम्बूवनानि । तैः अन्ताः रम्याः । यद्वा परिणतफलैः श्यामानि जम्बूवनानि यत्र ते परिणतफलश्यामजम्बूवनाः परिणतफलश्यामजम्बूवनाः अन्ताः प्रान्ताः प्रत्यासन्नप्रदेशाः यासां ताः । 'अन्तो नाशे मनोहरे । स्वरूपेऽन्तं मतं क्लिबं न स्त्री प्रान्तेऽन्तिके त्रिषु' इति विश्वलोचने । तुङ्गशाखाग्रघृष्टव्योमोत्सङ्गैः—rubbing against the surface of the sky with the ends of their tall branches. शाखानां अग्राणि शाखाग्राणि । तुङ्गानि च तानि शाखाग्राणि च तुङ्गशाखाग्राणि। व्योम्नः आकाशस्य उत्सङ्गः तलं पृष्ठप्रदेशः व्योमोत्सङ्गः । तुङ्गशाखाग्रैः घृष्टः परिमृष्टः व्योमोत्सङ्गः यैः ते तुङ्गशाखाग्रघृष्टव्योमोत्सङ्गाः । तैः । निजतरुवरैः—on account of their excellent trees. तरूणां वृक्षाणां वराः श्रेष्ठाः तरुवराः। 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्

प्रिये ' इत्यमरः । निजाः स्वकीयाः तरुवराः निजतरुवराः । तैः । आत्तशोभाः— those that have assumed beauty i.e endowed - with beauty. आत्ता उररीकृता शोभा सौन्दर्यं याभिस्ताः आत्तशोभाः । फलाढ्याः — abounding in or rich in fruits फलैः आढ्याः समृद्धाः फलाढ्याः । नीडकृद्भिः — building nests. नीलं कुलायं करोतीति नीडकृत् । क्विप् । तैः । ' नीडं स्थाने कुलायेऽस्त्री समीपे तु सपूर्वकः ' इति विश्वलोचने । आकुलाः — overcrowded.

**Stanza 92** – विलसद्विद्युदुद्दामहासे – possessing excessive brilliance due to the lightning, emitting flashes. विलसन्ती प्रादुर्भावितचाकचक्या चासौ विद्युत् सौदामनी च विलसद्विद्युत् । सैव उद्दामः विकटः हासः हास्यं प्रकाशः वा यस्य सः । तस्मिन् । मुक्तासारप्रकटितरवे – sending forth roars while pouring showers of rain. मुक्तः व्युत्सृष्टश्चासौ आसारः वेगवती वृष्टिश्च मुक्तासारः। तत्र प्रकटितः प्रादुर्भावितः रवः गर्जिध्वनिः बिन्द्वासारपातजनितध्वानिविशेषः वा येन सः । यद्वा मुक्तेनासारेण प्रकटितः प्रकटीकृतः ध्वानिः येन सः । अथवा मुक्तासारश्चासौ प्रकटितरवश्च मुक्तासारप्रकटितरवः । किंवा मुक्ता इव मुक्ताः । मुक्ताकाराः जलबिन्दव इत्यर्थः । मुक्तानामासारः मुक्तासारः । मुक्तासारैः मुक्तासारे मुक्तासारणकाले वा प्रकटितरवः । तस्मिन् । आसारणमासारः । अत्र क्रियासामान्यस्वरूपे भावार्थे ' भावे ' इति घञ् । ' आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले ' इति विश्वलोचने । उन्मदानां — highly pleased. उद्गतः आविर्भूतः मदः अमन्दानन्दः येषां ते । तेषाम्। 'मदो मृगमदे मद्ये दान–मुद्–गर्व–रेतसि ।' इति विश्वलोचने । उद्भूतपङ्काः- having mud formed (by the showers of rain discharged by the cloud.) उद्भूतः समुत्पन्नः पङ्कः येषु ते । कतिपयदिनस्थायिहंसाः – having the swans staying (there) for a few days (only). कतिपयेषु एव दिनेषु स्थायिनः स्थितिमन्तः कतिपयदिनस्थायिनः। कतिपयदिनस्थायिनः हंसाः येषु ते कतिपयदिनस्थायिहंसाः । कतिपयशब्दः स्तोकार्थः ।

**Stanza 93** - पवनविचलत्केतुहस्तैः – with hands in the form of flags, set in motion by the wind. केतवः ध्वजाः एव हस्ताः कराः केतुहस्ताः। पवनेन समीरणेन विचलन्तः सञ्चरन्तः पवनविचलन्तः। पवनविचलन्तः केतुहस्ताः येषां ते। तैः। भवनशिखरैः – through the topmost parts of the mansions. भवनानां सौधानां प्रासादानां शिखराणि वलभयः शृङ्गाणि उन्नततरप्रदेशाः वा भवनशिखराणि । तैः । अभीक्ष्णम् – again and again, always. रूपिणीं –

incarnate, assuming beautiful form. सालोदग्रां – magnified owing to its ramparts. सालेन प्राकारेण उदग्रा उद्गताग्रभागा सालोदग्रा । ताम् । यद्वा सालस्य उद्गतानि अग्राणि सालोदग्राणि । तानि सन्त्यस्याः इति सालोदग्रा । ताम् । 'ओऽभ्रादिभ्यः' इति मत्वर्थीयोऽत्यः। नाभिभूतां– as good as a navel (i. e. situated at the centre of the country.) नाभिसदृशीं । भूत – resembling. 'त्रिषु प्राप्ते विवृत्ते च भूतं स्यान्न्याय्यसत्ययोः । उपमाने पृथिव्यादौ पिशाचादौ समे त्रिषु' इति विश्वलोचने । नाभिः – (1) navel; (2) principal. 'नाभिर्ना क्षत्रे चक्रवर्तिनि । द्वयोः प्रधानचक्रान्तप्राण्यङ्गेषु मदे स्त्रियाम्' इति विश्वलोचने। प्रथितविदिशालक्षणाम्— with its appellation Vidiśā well-known.

**Stanza 94** :—उपनिषत्तृष्ण— afflicted with a strong desire. उपनिषत् हृदये उपनिषीदन्ती तृष्णा अभिलाषः यस्य सः उपनिषत्तृष्णः । तस्य सम्बोधनम् । सौधोत्सङ्गे – on the uppermost parts of mansions or palaces. सौधानां सुधाधवलितानां हर्म्याणां प्रासादानां वा उत्सङ्गः वलभिप्रदेशः सौधोत्सङ्गः । तस्मिन् । तदुपरितनभागे इत्यर्थः । जालोद्गीर्णैः :— sent out by lattices i. e. rushing out or rising up through lattices. जालाद्गवाक्षाज्जालेन वा उद्गीर्णैः विनिःसृतैः विनिःसारितैः वा। सुरभिततनुः :– having (your) body perfumed. सुरभिता सुगन्धिता जनितसौरभ्या कृता तनुः शरीरं यस्य सः । यद्वा सुरभिः सुगन्धः सञ्जातः अस्याः सुरभिता। 'तदस्य सञ्जातं तारकादिभ्य इतच्।' इति इतच्। 'सुरभिश्चम्पके चैत्रे वसन्ते गन्धके कवौ। स्वर्णे जातीफले चाब्जे त्रिषु मद्यसुगन्धयोः । ख्याते च स्त्री तु शल्लक्यां' इति विश्वलोचने । वारस्त्रीणां– of the harlots. वारस्य लोकनिकायस्य स्त्री वारस्त्री । तासां वारस्त्रीणाम् । 'समूहे निवह-व्यूह-सन्दोह-विसर-व्रजाः । स्तोमौघ-निकरव्रात-वार-सङ्घात-सञ्चयाः' इत्यमरः । यद्वा 'वारे राजदेवादिसेवाक्रमे स्त्री वारस्त्री' इति क्षीरस्वामी । निधुवनरतिं– strong desires for cohabitation. निधुवने मैथुने सुरते रतिः आसक्तिः सुखं वा निधुवनरतिः । ताम् । 'मतं भवेन्निधुवनं सुरते कम्पनेऽपि च' इति विश्वलोचने ।

**Stanza 95** — सुभग – Oh fortunate one ! शोभनं भगं यशः माहात्म्यं वा यस्य सः। तस्य सम्बोधनं । कह्लाराङ्कं– possessing white lotuses. कह्लाराणि अङ्कः यस्य तत् । यद्वा कह्लाराणि अङ्के पृष्ठतले यस्य तत् कह्लाराङ्कम् ।

कह्लाराङ्कं — having white and fragrant lotuses on its surface. कह्लारं — a white lotus emitting fragrance. ' सौगन्धिकं तु कह्लारं हल्लकं रक्तसन्ध्यकम् ' इत्यमरः । ' अङ्को रेखायां चिह्नलक्ष्मणोः । नाटकादिपरिच्छेदोत्सङ्गयोरपि रूपके ' इति विश्वलोचने । उत्फुल्लपद्मं — having blown lotuses. उत्फुल्लानि विकसितानि पद्मानि यस्मिंस्तत् । वाताकीर्णैः — scattered over by the wind. वातेन आकीर्णानि प्रतिदिशं निर्गमितानि अपनुन्नानि वा वाताकीर्णानि । तैः । कुवलयदलैः — by the petals of the blue water-lilies. कुवलयानां कमलानां दलानि छदाः कुवलयदलानि । तैः । तीरोपान्तस्तनितसुभगम् — in a manner charming owing to the thundering ( gurgitation ) near the banks (' of the oblong lakes ). तीरस्य तटस्य उपान्तः समीपप्रदेशः तीरोपान्तः । तत्र स्तनितं स्तोकगर्जितं । तेन सुभगं मनोहरं यथा स्यात्तथा । ' ऊर्ध्वमुच्चलितकण्ठनासिकं हुङ्कृतं स्तनितमल्पघोषवत् ' इति मल्लिनाथोद्धृतलक्षणात्स्तनितमित्यस्याल्पगर्जितमित्यर्थः ।

**Stanza 96** — रसिक — ( 1 ) oh impassioned one !( 2 ) oh you giving out low thundering ! रसः आनन्दः, विषयाभिलाषः, शब्दः स्तनितरूपः वा अस्य अस्तीति रसिकः । सम्बोधनम् । The termination ठन् ( इक ) is affixed to the word रस under the rule ' अत इनिठनौ. ' रसिक may also mean ' oh you,, full of waters ! ' 'रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे। पारदे धातुवीर्याम्बुरागे गन्धरसे तनौ ' इति विश्वलोचने । सुरसं — very tasteful. लीलास्फुरितशफराघट्टनैः — owing to its being ruffled by the fish moving sportively. लीलायै क्रीडां कर्तुं स्फुरिताः सञ्जातचाञ्चल्याः लीलास्फुरिताः । ते च ते शफराः तिमयः ( मत्स्याः ) च । ' शफरोऽनिमिषस्तिमिः ' इति धनञ्जयः । तेषामाघट्टनैः सङ्घर्षैः। यद्वा लीलया क्रीडया हेतुभूतया स्फुरितानि प्रादुर्भूतानि शफराणामाघट्टनानि । तैः । लीलास्फुरितशफराघट्टनैः — owing to the movements of the fish effected while playing. यद्वा लीलया स्फुरितानां प्रादुर्भावितचाञ्चल्यानां शफराणामाघट्टनैराघातैः लीलास्फुरितशफराघट्टनैः — owing to the dashes ( against the earthen banks of the river ) of the fish moving sportively. आत्तपङ्कं — turbid, which has carrid off mud with it. आत्तः गृहीतः पङ्कः जम्बालः येन तत् । विहगकलभैः — by the chickens of birds. कलभ — a chicken. रोधःप्रान्ते — on the region of the banks. रोधसः तीरस्य प्रान्तः रोधःप्रान्तः । तत्र । ' कूलं रोधश्च तीरं च ' इत्यमरः । बद्धडिण्डीरपिण्डं— in

( or forest streams ) वननदीत्याख्यायाः नद्याः वने प्रवाहिनीनां सरितां वा तीरे कूले जातानाम् । यूथिकाजालकानि — the clusters of buds of the jasmine creepers. यूथिकायाः मगधदेशोद्भवायाः गणिकापराभिधानायाः पुण्यगन्धायाः जालकानि कुड्मलानि । 'जालकः कोरके दम्भप्रभेदे' इति विश्वलोचने ।

**Stanza 102**— गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानाम्— having their ear-lotuses faded on account of their being afflicted while getting rid of the perspiration on their cheeks. गण्डे कपोलतले स्वेदः तिग्मरुचिप्रखरकरनिकरजनितघर्मबिन्दवः गण्डस्वेदः । तस्यापनयने प्रमार्जने अपनयनेन प्रमार्जनेन वा या रुजा उपतापः तया आक्लान्तानि ईषन्म्लानानि कर्णोत्पलानि यासां ताः । तासाम् । पुष्पलावीमुखानाम् — to the faces of the women plucking flowers. पुष्पाणि लुनन्तीति पुष्पलाव्यः । तासां मुखानि । तेषाम् । क्षणपरिचितः— become familiar for a moment. पुष्पगुल्मावकीर्णां — covered over with flowery thickets. पुष्पोत्पादकैः लताप्रतानतृणादिसङ्घातैः अवकीर्णां विकीर्णां । ताम् ।

**Stanza 103** — कासिकाग्रार्जुनान्तात् — having sugarcane-like grassfileds ( or forests of Kāsha grass ) in the beginning and Arjuna trees at the end. कासिकम्— a grove of Kāsa grass. कासानां काण्डेक्षूणां समूहः कासिकम् । The termination ठण् ( इक् ) is affixed to the word कास in the sense of 'समूह' under the rule 'हस्तिकवच्यचित्ताच ठण्.' कासिकं कासिकानि वा अग्रे प्रारम्भे यस्य सः कासिकाग्रः । अर्जुनाः ककुभवृक्षाः अन्ते यस्य स अर्जुनान्तः । कासिकाग्रश्चासावर्जुनान्तश्च कासिकाग्रार्जुनान्तः। तस्मात् । वनपथात्—by the way passing through a forest. वने पन्थाः वनपथः । तस्मात् । the word पथिन् when it stands at the end of a compound, is changed to पथ under the rule 'ऋक्पूरप्पथोऽत्.' The Ablative case of the word वनपथ is due to the disappearance of the ल्यबन्त form आरुह्य under the rule 'ल्यब्लोपे कर्माधारे'। The word वनपथ is the object of the ल्यबन्त form आरुह्य. सौधोत्सङ्गप्रणयविमुखः — with face turned away from intimate familiarity with the uppermost parts of the mansions. विपरीतं विरुद्धं वा मुखं यस्य सः विमुखः । सौधानां सुधाधवलितानां हर्म्याणां उत्सङ्गेषु उपरितनभागेषु यः प्रणयः परिचयः तस्य विमुखः पराङ्मुखः । 'प्रणयः स्यात्परिचये याच्ञायां सौहृदेऽपि च' इति यादवः ।

**Stanza 104 —** पौराङ्गनानां — ( 1 ) of the beautiful women of citizens; ( 1 ) of the city-damsels. पुरे भवाः पौराः । नागराः इत्यर्थः । तेषां अङ्गनाः सुन्दरस्त्रियः । तासाम् । यद्वा पुरे भवाः पौर्यः । पौर्यश्च ताः अङ्गनाश्च पौराङ्गनाः । कर्मधारयसमासत्वात्पौरीशब्दस्य पुंवद्भावः । विद्युद्दामस्फुरितचकितैः— dazzled by the flashes of lightnings. विद्युत् दाम इव विद्युद्दाम । तस्याः स्फुरितानि स्फूर्जितानि । तैः चकितैः पदीतैः प्रकाशेन प्रतिहतैः । लोलापाङ्गैः— with the eyes having their outer corners tremulous ( unsteady ). लोलाश्चञ्चलाः सतृष्णा वा अपाङ्गाः नेत्रान्ताः येषां तैः । यद्वा लोलाश्चञ्चलाश्च ते अपाङ्गाः नेत्रान्तदेशाश्च लोलापाङ्गाः । कुसुमधनुषः — of the god of love. कुसुमान्येव धनुः यस्य सः । तस्य । दृढपरिचितभ्रूलधनुर्यष्टिमुक्तैः— discharged by means of bows in the form of their intimately familiar eye-brows. दृढं परिचिताः भ्रुवः भ्रकुट्यः एव धनुर्यष्टयः । ताभिर्मुक्ताः ताभ्यः मुक्ता वा । तैः । मर्माविद्भिः — piercing the vitals of bodies. मर्माणि सन्धिस्थानानि । विध्यतीति विध् । मर्मणां विध् मर्माविध् । The ending न् of the word मर्मन्, when it is followed by a क्विबन्त form is dropped under the rule 'नमादीनां क्वौ' and the vowel अ, preceding न् which is dropped, is lengthened under the rule 'नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ वाग्गेः' । दूरपातैः — having a very wide range, falling far away. दूरे पातः येषां ते । तैः । जैत्रैः— victorious. जेतैव जैत्रः । जेतृशब्दस्य तृन्नन्तत्वात् 'प्रज्ञादिभ्यः' इत्यण् । तेन जेतृभिरित्यर्थः ।

**Stanza 105 —** लुठन्मीनलोलायताक्ष्याः — possessing large rolling eyes in the form of wallowing fish. लुठन्तः उद्वर्तमानाः मीनाः मत्स्याः लुठन्मीनाः । ते एव लोले चञ्चले आयते दीर्घे अक्षिणी यस्याः सा लुठन्मीन-लोलायताक्षी । तस्याः । वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः — having a string-like girdle in the form of a row of birds chirping louldly on account of the agitation of the waves. वीचीनां क्षोभेण आलो-डितेन स्तनिताः कृतस्वनाः विहगाः हंसादिपक्षिणः वीचिक्षोभस्तनितविहगाः । तेषां श्रेणिः पङ्क्तिः । सैव काञ्चीगुणः यस्याः सा । तस्याः । काञ्चीगुणः रसना । दर्शितावर्तनाभेः — manifesting her navel in the form of eddies. दर्शितः

which lumps of foam are formed. बद्धाः विरचिताः डिण्डीराणां फेनानां पिण्डाः ग्रासाकारविरचनाः यत्र तत् । सभ्रूभङ्गम्— having eyebrows knit. भ्रुवोर्भङ्गः विरचनं भ्रूभङ्गः । तेन सहितं सभ्रूभङ्गम् । चलोर्मि – possessing mobile ripples. चलाः चञ्चलाः ऊर्मयः वीचयः यत्र तत् । प्राणयात्रानिमित्त – for the sake of maintenance.

**Stanza 97**— जीविकाकृत्य–making ( it ) as if a means of subsistence. In my opinion, the word जीविकांकृत्य is grammatically incorrect. Though the old edition of पार्श्वाभ्युदयम्, edited and published by Pt. Pannalal Bakliwal reads जीविकांकृत्य, the reading should be replaced by जीविकाकृत्य. The word जीविका, having the root कृ placed after it in the sense of इव, it is termed as गति under the rule 'जीविकोपनिषदिवे' Owing to its being termed गति, the termination ल्य ( ल्यप् according to Pāṇini ) is affixed to the root कृ instead of क्त्वा, under the rule 'ल्यास्तिवाक्ये क्त्वः'

**Stanza 98** — सिद्धस्त्रीणां - of the women of Siddha-gods. सिद्धानां देवविशेषाणां स्त्रियः सिद्धस्त्रियः। तासाम्। रतिपरिमलैः– with the sweet smell of perfumes used at the time of copulation. रतेः परिमलाः विमर्दोत्थाः जनमनोहराः गन्धाः । तैः । परिमल is that particular odour which emanates from perfumes which are used at the time of sexual intercourse and spreads only when the lover and the loved embrace and press each other. 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः । 'भवेत्परिमलश्चित्तहारिगन्धविमर्दयोः । रतामर्दसमुन्मीलदङ्गरागादिसौरभे' इति विश्वलोचने । वासिताधित्यकान्तम् – The bordering regions of the table-lands of which are made fragrant. वासितः सुरभितः अधित्यकायाः पर्वतोपरितनभूमेः अन्तः प्रान्तप्रदेशः यस्य तम् । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । प्रौढपुष्पैः — having flowers full-blown or having abundant growth of flowers. प्रौढानि पुष्पाणि येषां तैः । विद्युद्दामस्फुरितरुचिमद्दीपिकाद्योतिताशः– enlightening the quarters with the brightly burning torches in the form of the flashes of lightnings. विद्युत् दाम इव विद्युद्दाम । तस्याः स्फुरितानि स्फूर्जथवः एव रुचिमत्यः कान्तिमत्यः प्रभास्वराः दीपिकाः। ताभिः द्योतिताः प्रकाशिताः आशाः दिशः येन सः। मुक्तशङ्काः–with (your) fear dispelled. निशां– throughout

the whole night. The Accusative case is meant for implying 'thoroughness of the night' under the rule 'कालाध्वनोरविच्छेदे.'

**Stanza 99**— पण्यस्त्रीरतिपरिमलोद्गारिभि :—emitting sweet smell of the perfumes used at the time of sexual enjoyment by the courtezans. पण्यस्त्रीणां रूपाजीवानां गणिकानां रतौ रतिक्रीडायां यः परिमलः रतिपरिमर्दसमुच्छलन्माल्याङ्गरागादिसौरभं। तमुद्गिरंति आविर्भावयन्तीति तथोक्तानि तानि। सोपहारैः-possessing presents. भोगोद्रेकं — excess of the sexual enjoyment. समग्रग्रावोपाग्रैः—with the ends of all the rocks. ग्राव्णां उपलानां उपाग्राणि अग्रभागाः ग्रावोपाग्राणि । समग्राणि ग्रावोपाग्राणि समग्रग्रावोपाग्राणि । तैः । उपगृहीतुं — to seize or eclipse. उद्यन्— rising high up.

**Stanza 100** — शिलाग्रैः — with the ends of rocks. शिलानां ग्राव्णामग्राणि शिलाग्राणि तैः । व्योमोत्सङ्गं — the surface of the sky. व्योम्नः आकाशस्य उत्सङ्गः तलप्रदेशः व्योमोत्सङ्गः । तम् । परिमृजति — rubbing ( against ). This is a Locative absolute. निधुवनविधौ— in course of sexual enjoyment. निधुवनस्य मैथुनस्य विधिः विधानं निधुवनविधिः । तत्र। स्रस्तस्रग्भिः-possessing garlands which slipped off. स्रस्ताः विगलिताः स्रजः मूर्धमालाः येषु शिलावेश्मसु तानि स्रस्तस्राञ्जि । तैः । पुष्पशय्याचितान्तैः— having their interior parts covered over with flowery beds. पुष्पाणां शय्याः पुष्पशय्याः । ताभिः आचितः व्याप्तः छन्नः वा अन्तः मध्यदेशः येषां तानि तैः । शिलावेश्मभिः - through the stone-abodes. उद्दामानि यौवनानि प्रथयति — revealing the voilent juvenility. तव समुचितं प्रेम — a good will that is proper for you.

**Stanza 101**—रम्योत्सङ्गे—having its uppermost part beautiful. रम्यः रमणीयः उत्सङ्गः कूटाग्रदेशः यस्य सः । तस्मिन् । शिखरनिपतन्निर्झरारावहृद्ये—attractive owing to the roars of rivulets falling down from its peaks. शिखरात्सानुप्रदेशात् निपतन्तः प्रपतन्तः शिखरनिपतन्तः । ते च ते निर्झराः पाथः प्रवाहाः । तेषामारावैः संरावैः प्रस्खलनजनितध्वनिभिः हृद्यः हृदयप्रियः । तस्मिन्। पर्यारूढद्रुमपरिगतोपत्यके — having its low - lands overcrowded with trees grown all over. परितः सर्वतः आरूढाः संरुढाः सुतरां वृद्धिंगताः पर्यारूढाः । ते च ते द्रुमाः विटपिनः वृक्षाश्च । तैः परिगता सर्वतो व्याप्ता उपत्यका पर्यन्तभूर्यस्य सः । तस्मिन् । वननदीतीरजानां — grown on the banks of the Vananadi

प्रकटितः आवर्तः अम्भसां भ्रमः एव नाभिः यया सा । तस्याः । स्खलितसुभगं— in a way charmful owing to her stumblings ( i. e. stumbling movements ). स्खलिते स्खलितगत्या वा सुभगं मनोहरं यथा स्यात्तथा । संसर्पन्त्याः— moving, flowing. व्यञ्जिताकूतवृत्तिः — to whom your emotions would be evinced by you. व्यञ्जिता आविष्कृता आकूतस्य स्वाभिप्रायस्य वृत्तिः प्रवृत्तिः येन सः । यद्वा आकूतं रागादिभावः अस्त्यस्येति आकूतं । मनः इत्यर्थः । 'अोऽभ्रादिभ्यः' इति मत्वर्थीयोऽस्यः । आकूतस्य वृत्तिः प्रवृत्तिः आकूतवृत्तिः । व्यञ्जिता आकूतवृत्तिः मनसः रागादिरूपः व्यापारः येन सः ।

**Stanza 106** — पथि — on your way. सन्निपत्य— having approached. किञ्चिल्लज्जावलितं—turning round a little bashfully. किञ्चिदीषत् लज्जया व्रीडया अपत्रपया आवलितं स्वशरीरवक्रीभवनं यथा स्यात् तथा । निर्विन्ध्यानद्याः वक्रिमाणमुत्प्रेक्ष्योक्तमेतदित्यवसेयम् । सन्दर्शिताप्तागमायाः— displaying the arrival of a person, standing in close relation with her. सन्दर्शितः प्रकटीकृतः आप्तस्य दृढसम्बन्धस्य आगमः आगमनं यया सा । तस्याः । अत्र बान्धवाभिधेयाप्तशब्देन प्रियस्य ग्रहणं कर्तव्यम् । रसाभ्यन्तरः — ( i ) imbibing water; ( ii ) having love at heart. रसः जलं शृङ्गारादिर्वा अभ्यन्तरे उदरे मनसि वा यस्य सः । अभ्यन्तरं — ( 1 ) the interior part; ( 2 ) mind. विभ्रमः— love-gestures.

**Stanza 107** — वेणीभूतप्रतनुसलिला — having her very little water assuming the form of the braid of hair. वेणीभूतं वेण्याकारपरिणतं प्रतनुसलिलं यस्याः सा । अवेणी वेणी भवति स्म वेणीभूतं । वेणी इव वेणी । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप्. The word वेणी, here, means 'that which is like the braid of hair'. The termination क, implying 'resemblance' is dropped under the rule 'देवपथादिभ्यः'. It must be kept in mind here that the word वेणी, after dropping the termination क, does not get its gender and number changed under the rule 'युक्तवदुपि लिङ्गसङ्ख्ये'. Water of a stream or a river never gets changed into the braid of hair and so, the word वेणी must be taken to mean 'that which resembles a braid of hair.' When a river is full,

the stream does not assume the form of a braid of hair. It assumes this form only when the stream is reduced very much. The edition of the Meghadūta, in which I came accross the reading अवेणि वेणिभूतं in the Mallinātha's commentary, might have given the wrong form through oversight. The present compound can be dissolved as वेणीभूतं वेणीसदृशं प्रतनुसलिलं यस्याः सा, for the word भूत implies 'resemblance' also. तटरुहतरुभ्रंशिभिः — droping down from the trees grown on her banks. तटयोः रोहन्तीति तटरुहः । तटरुहाश्च ते तरवश्च तटरुहतरवः । तेभ्यः भ्रश्यन्तीति तटरुहतरुभ्रंशीनि । तेभ्यः ।

**Stanza 108** — क्षामा — emaciated. This is a past participle derived from the root क्षै ( to decrease ) by affixing the termination त which is changed to म under the rule 'क्षो मः'. प्रतनुसलिला — possessing a very small quantity of water. प्रकर्षेण तनु अल्पं सलिलं जलं यस्याः यस्यां वा । सा । वेणिकां — a stream resembling a thin braid of hair. अल्पा वेणी वेणिका. The termination क is affixed hear to imply 'thinness' under the rule 'कुत्सिताज्ञाताल्पे'. This form may be explained also as—वेणिरिव वेणिका. Here the termination क is affixed to the word वेणि to imply resemblance under the rule 'इवे खुप्रतिकृत्योः कः'. This word ends either in short इ or long ई. वेणी—णि= ( 1 ) braid of hair, ( 2 ) a stream of water. पार्थनाचाटु— sweet words used with a view to request for having sexual enjoyment. प्रार्थनायां सुरतार्थं क्रियमाणायां याच्ञायां चाटुः प्रियवचनं प्रार्थनाचाटुः । तम् । In this stanza, the river, Sindhu, is resembled to a love—sick woman whose lover or husband is gone abroad ( प्रोषितभर्तृका ). Visvanātha, in his Sāhitya-darpaṇa, has defined the word प्रोषितभर्तृका as below— 'नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः । सा मनोभवदुःखार्ता भवेत्प्रोषितभर्तृका ॥' Śambara means to say that the sage, assuming the form of a cloud, should pour showers of rain and make the river void of thinness. This act of the sage, is resembled to that of a lover who, through sexual intercourse, satisfies his beloved and removes all the causes, bringing

about her emaciation. The first two lines clearly express her resemblance to a woman, separated from her beloved.

**Stanza 109 —** संविधानानुषङ्गः — a possibility of having various emergent occupations. संविधानानां विधेयकर्मणां अनुषङ्गः प्रसक्तिः। तस्मिन्। मुख्यस्वार्थप्रतिहतिभयात् — through fear of your main purpose being defeated. स्वस्य स्वकीयस्य अर्थः प्रयोजनं स्वार्थः। मुख्यः प्रधानभूतश्चासौ स्वार्थश्च मुख्यस्वार्थः। तस्य प्रतिहतिः विघातः। तस्याः भयम्। तस्मात्। उदयनकथाकोविदग्रामवृद्धान् — having old villagers well-versed with the stories of prersons that had attained liberation. उत् ऊर्ध्वं अयनं गमनं येषां ते उदयनाः। This word may be explained also as — उदूर्ध्वं गच्छन्तीति उदयनाः। Here, the termination अनट् is affixed to उत् + इ to imply the sense of कर्तृ under the rule 'ल्युट् बहुलम्'. उदयनाः मोक्षशिलां प्रति प्रस्थिताः मुक्तत्वादुन्मुक्तदेहत्वादूर्ध्वगमनस्वभावत्वात्सिद्धावस्थां प्राप्ताः तत्पूर्वकालभाविनस्तत्रत्याः जनाः तेषां याः कथाः तासां कोविदाः तज्ज्ञानकुशलाः। उदयनकथाकोविदाः ग्रामवृद्धाः येषु तान्। King Udayana was not contemporaneous with Pārśva. He, according to the Jain scriptures, was contemporaneous with Mahāvira, the last Tirthakara. Pārśva was removed two centuries before Mahāvira. Under these circumstances, it is very difficult to take the word उदयन to mean 'king Udayana.' To avoid this anachronism, I have taken the word उदयन to mean 'a liberated soul'. श्रीविशालां— abounding in wealth or glory. श्रीः — ( i ) wealth, ( ii ) beauty, ( iii ) glory. 'श्रीर्लक्ष्मीभारतीशोभाप्रभासु सरलद्रुमे। वेशत्रिवर्गसम्पत्तौ शेषापकरणे मतौ' इति विश्वलोचने। श्रिया विशेषेण शालते शोभते इति श्रीविशाला। यद्वा श्रियः श्रिया वा उपलक्षिताः विविधाः शालाः निवासस्थानानि यत्र सा। यद्वा श्रीविशाला सन्त्यस्याः श्रीविशाला। The possessive termination अ is affixed to the word श्रीविशाला under the rule 'ओऽभ्रादिभ्यः' ('अर्शआदेः' पा०). विशाला— This is another name of उज्जयिनी. 'विशाला त्विन्द्रवारुण्यामुज्जयिन्यां च दृश्यते' इति विश्वलोचने.

**Stanza 110 —** भुवनमहितां— highly praised or aggrandized by the whole world. भुवनेन तात्स्थ्यात् तत्रत्यैः निखिलैः जनैः महितां भुवने वा

महितां पूजितां स्तुतिविषयतां नीताम् । उत्तमर्द्धि — possesing excellent glory. उत्तमा उत्कृष्टा ऋद्धिः ऐश्वर्यं विभवो वा यस्याः सा । ताम् । एकसूतिम् — the only source. एका केवला । अद्वितीयेत्यर्थः । एका अद्वितीया सूतिः उत्पत्तिस्थानं एकसूतिः । ताम् । सूयते अस्यामिति सूतिः । अत्राकर्तरि कारके 'स्त्रियां क्तिः' इति क्तिः । The termination क्ति (ति) is affixed to the root सू in the sense of the Locative case under the rule 'स्त्रियां क्तिः'. स्वल्पीभूते — reduced to a very small measure. अस्वल्पं स्वल्पं सम्पद्यमानं भवति स्म स्वल्पीभूतम् । तस्मिन् । The city of विशाला is described by the demi-god as a very beautiful piece torn off the heaven and brought down to the earth owing to the remnants of merits of the gods, gone down to the earth. This description implies that the city is as beautiful and attractive as the heaven and that the citizens are as much happy as the heavenly beings owing to their being extremely prosperous. Sāmbara means to say that the city resembles the heaven, the abode of gods, in all respects.

**Stanza 111** — उच्चैः — very lofty or tall. When construed with नामयन्, the word उच्चैः should be taken to mean 'very much' and when construed with मातरिश्वा, it should be taken to mean 'powerful (i. e. blowing with a loud noise).' नामयन् — bending. This is a present participle derived from the causal of the root नम्. वीचिक्षोभात् — owing to the disturbance of waves. वीचीनां क्षोभः वीचिक्षोभः । तस्मात् । The wind, blowing in the city, was very cool owing to the cold drops of water scattered by the waves of the Siprā disturbed by blowing wind. अधिकशिशिरः — अधिकं अत्यर्थं शिशिरः शीतलः अधिकशिशिरः । सारस — (1) swans, (2) cranes. पटु — shrill. 'पटुर्वाग्मिनि नीरोगे तीक्ष्णे दक्षे स्फुटे त्रिषु' इति विश्वलोचने. मदकलं — indistinct but sweet owing to their being intoxicated. The birds, floating on the surface of the water of the Siprā, were in the prime of life. Being disturbed by the waves of the river, they gave out shrill notes which were indistinct and sweet owing to their being intoxicated on account of their being in the prime of life. कूजितं — कूजनं — notes. दीर्घकुर्वन् — prolonging,

extending in spatial length. अदीर्घं दीर्घं करोतीति दीर्घीकुर्वन् — This is a च्वि form. स्फुटितकमलामोदमैत्रीकषायः — fragrant owing to its association with the perfume of the lotuses burst into flowers. स्फुटितानि विकसितानि च तानि कमलानि उत्पलानि च स्फुटितकमलानि। तेषामामोदः सुगन्धः। तेन या मैत्री मित्रत्वं। संसर्गः इत्यर्थः। तया कषायः सुरभितः। कषायः सुरभिगन्धः अस्यास्तीति कषायः। 'ओऽभ्रादिभ्यः' इत्यः। कषाय — fragrance. Here the word means 'fragrant.' मातरिश्वा — wind. प्रत्यूषेषु — at day-breaks. अप्कणौघैः— along with the masses of drops. अपां कणाः अप्कणाः। तेषां ओघाः समूहाः अप्कणौघाः। तैः।

**Stanza 112—** कल्लोलान्तर्वलनशिशिरः — cool on account of its blowing through waves. कल्लोलानां वीचीनां अन्तः मध्ये वलनं भ्रमणं कल्लोलान्तर्वलनम्। तेन शिशिरः शीतस्पर्शः। शीकरासारवाही — carrying masses or showers of sprays. शीकराः — drops of water. आसाराः — masses, collections. शीकराणां आसाराः प्रसराः शीकरासाराः। तान् वहतीति शीकरासारवाही। धूतोद्यानः — setting the gardens in motion. धूतानि प्रकम्पितानि उद्यानानि उपवनानि येन सः। मदमधुलिहां — of the gladdened bees. मदाः मदिनः। मदः हर्षः अस्त्येषामिति मदाः। 'ओऽभ्रादिभ्यः' इति मत्वर्थीयोऽत्यः। Here the termination अ is affixed to the word मद in the sense of 'possession'. मधु लेढीति मधुलिट्। तेषां मधुलिहाम्। मदाश्च ते मधुलिहश्च मदमधुलिहः। तेषाम्। सिञ्जितानि — buzzings. प्रार्थनाचाटुकारः — speaking gallantly like a lover requesting his beloved for sexual enjoyment. प्रार्थना सुरतार्थां याच्ञा। तत्र चाटु करोतीति प्रार्थनाचाटुकारः। 'कर्मणोऽण्' इत्यण्। अङ्गानुकूलः — agreeable to the body. अङ्गानां गात्राणां अनुकूलः। सुखस्पर्शत्वाद्वायोरङ्गानुकूल्यमित्यवसेयम्। शिप्रावातः — the wind or breezes from the Sipra. Generally, the name of this river is spelt as सिप्रा. शिप्रा or सिप्रा is that river on the bank of which the city of Visala is situated. 'सिप्रा तु सरिदन्तरे' इति विश्वलोचने.

**Stanza 113-114—** युद्धशौण्डः — skilled in fighting. युद्धे प्रसक्तः शौण्डः युद्धशौण्डः. This is a Tatpurusha compound, formed under

the rule 'ईद्धोण्डेः'. The word प्रवक्तः is dropped while forming the compound. The sentence 'वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादप्रयोगः' deserves to be committed to memory. मुरुण्डः — the ruler of the Murundas. मुरुण्डानां राजा मुरुण्डः। The termination implying the sense 'a king' is dropped under the rule 'उप् चोलादेः'। मुरुण्डाः — a country to the north-west of India. वत्सराजः — the ruler of the Vatsas. वत्साः — a country having कौशाम्बी as its capital. The word राजन्, though ending in अन्, is declined as a noun ending in अ under the rule 'राजाहःसखिभ्यष्टः' We cannot take the word वत्सराजः to mean the famous king उदयन for he belonged to the period posterior to that of Mahavir between whom and Parshva a period of two hundred years had elapsed. Mahavir belonged to the period later than that of Parshva. Moreover, there is no historical evidence to prove that king Udayana had ruled over the Murundas. There being no other alternative, we must take the word वत्सराज to mean some king other than Udayna, though Kalidasa is found to have referred to Udayana himself in his Meghaduta. कलहे — in a battle. The word कलह must be taken to refer to the struggle of a soul against the superior numbers of enemies in the form of *Karmans*. प्रद्योतस्य — of the soul possessing perfect knowledge. प्रकृष्टः प्रगतः वा द्योतः आत्म-तेजः यस्य सः। प्रादिबहुव्रीहिः। Though the word प्रद्योत is taken by Kalidasa to refer to the father of वासवदत्ता and the father-in-law of Udayana, it must be interpreted otherwise to make the sense agree with the present text. Like Udayana, his father-in-law, प्रद्योत, also was not contemporaneous with पार्श्व. It is, therefore, better to accept the above-given sense of this word. तीक्ष्णस्य अरेः — of the ferocious enemy. दुहितरं — which are like daughters. According to the Jain Scriptures, the Karman is divided into various parts. The various parts, being offshoots of Karman, are compared here with daughters.

Though the number of the word दुहितरं is singular, it should be taken to mean 'a number of daughters' for the singular number of the word implies जाति. दुहितेव दुहिता । Here, the termination implying resemblance is dropped under the rule 'देवपथादिभ्यः'. The number and the gender is retained as before under the rule 'युक्तवद्लुपि लिङ्गसङ्ख्ये'. किल – as it is traditionally reported. The word किल is used to show tradition. जह्रे – destroyed. हैमं – (i) possessing yellow colour like gold, (2) possessing coolness. शैलप्रतिमवपुषा – with his mountain-like body i. e. with his body as big as a mountain. पीडयन् – harassing, butting against. मरुद्वत् – like the wind. उन्मदिष्णून् – (1) wild, (2) in rut. व्यालान् – (1) wild beasts, (2) wicked elephants. कुपितसमवर्ती – the angry god of death. नलगिरिः – (1) an elephant resembling the Nalagiri mountain. (2) an elephant resembling the elephant of Indra. नलगिरिः इव नलगिरिः । Nalagiri is either a name of a mountain or of the elephant of Indra. The elephant referred to here in this stanza cannot be taken to be that of the king, Pradyota, who didn ot belong to the period of Parshva. The form नलगिरि is not grammatically correct. It ought to have been as नलागिरिः, for the last vowel of the word नल, which is followed by the word गिरि, is lengthened under the rule 'वनगिर्योः सञ्ज्ञायां कोटरकिंशुलुकादीनाम्' (पा०) Both the Jainendra and the शाकटायन support this. 'अञ्जनागिरिः । नलागिरिः ।' (जै. म. वृ.) 'अञ्जनागिरिः । नलागिरिः । साल्वागिरिः इत्यादयः । अन्यत्र...अञ्जनगिरिः ।' (शा. चि. २।२।९३ ). To avoid this difficulty, it may be taken as an आर्ष form. Modern scholars hold that this stanza is a later interpolation on the ground that this stanza is not read by Vallabha and Dakshināvarta in their editions of Meghadūta, but in my opinion it cannot be said that this stanza is an interpolation as it is found in the Parshvabhyudaya of Jinasena who belonged to the period prior to that of Vallabha and Dakshinavarta.

**Stanza 115**—अवनिपपथाः – royal roads ( i. e. main streets). अवनिपस्य पन्थानः अवनिपपथाः । The word पथिन्, when used at the end of a compound, is changed to पथ and declined as a word ending in अ under the rule 'ऋक्पूरब्धूःपथामानक्षे'. युगान्ते – at the time of the destruction of the world. आपीततोयाः – with water drunk up. आपीतं तोयं येषां ते आपीततोयाः । शूर्पोन्मेयान्–deserving to be or capable of being measured with winnowing baskets. शूर्पैः प्रस्फोटनैः उन्मातुमर्हन्ति शक्यन्त इति वा शूर्पोन्मेयाः । तान् । उदग्रान् – lofty. तरलगुटिकान् – having big precious stones as the central gem. तरलाः भासुराः हारमध्यगाः गुटिकाः महारत्नानि येषां ते । तान् । तरल – put at the centre of a necklace. गुटिकाः – big precious jewels. तारान् = शुद्धमौक्तिकवतः – having faultless [ or genuine ] pearls. कोटिशः –by crores, by tens of millions. कोटिः कोटिः कोटिशः । Here, the termination शस् is affixed to the word कोटि to imply repetition of the number to which it is affixed under the rule 'स्येकाद्वीप्सायाम्'. शङ्खशुक्तीः – conches and shells. शङ्खाश्च शुक्तयश्च शङ्खशुक्तयः । ताः शङ्खशुक्तीः । द्वितीयायाः बहुवचनम् । उन्मयूखप्ररोहान् – shooting sprout-like rays upwards. मयूखाः प्ररोहा इव मयूखप्ररोहाः । उद्गताः मयूखप्ररोहाः येषां तान् । प्ररोहाः — sprouts. Here, मयूख, the subject of comparison is compounded with प्ररोह, the standard of comparison, under the rule 'व्याघ्रादिभिरुपमेयोऽतद्योगे'. शष्पश्यामान् – as green as young grass. शष्प – young grass. श्याम – green-coloured. शष्पं बालतृणमिव श्यामाः हरिद्वर्णाः शष्पश्यामाः । Here, शष्प, the standard of comparison, is compounded with श्याम, the generic property, under the rule 'सामान्येनोपमानम्'. मकरतमणीन् – emerald gems. Some modern scholars are of the opinion that the stanza 'हारांस्तारान्— ', being not read by वल्लभ and दक्षिणावर्त, is a later interpolation by some one, wishing to furnish a more detailed description of Ujjayinī. But in my opinion, this view does not hold good as this stanza is found in this work of Jinasena who was chronologically prior to both वल्लभ and दक्षिणावर्त.

**Stanza 116** — भूयः – moreover. विपणिषु पण्यवीथिकासु रचिताः प्रसारिताः । तान् । विपणिरचितान् – arranged in the shops on the bazar roads. ज्योतिर्लेखारचितरुचिमच्छक्रचापानुकारान् – immitating the beautiful bow of Indra, brought into being by the streaks of sunlight. ज्योतिषां सूर्यकिरणानां लेखाः राजयः ज्योतिर्लेखाः । ताभिः रचितः निर्मितः रुचिमान् कान्तिमांश्चासौ शक्रस्येन्द्रस्य चापः धनुश्च । तस्यानुकारः अनुहारः सादृश्यं विद्यते येषां ते । तान् । नानाभरणरचनायोग्यरत्नप्रवेकान् – The best jewels, worthy of being turned into various ornaments. नाना अनेकविधानि आभरणानि भूषणानि नानाभरणानि । तेषां रचना घटना । तस्याः योग्याः रत्नप्रवेकाः रत्नोत्तमाः । तान् । रत्नानां प्रवेकाः अनुत्तमा श्रेष्ठाः अतिशोभनाः वा । तोयमात्रावशेषाः – having only water remaining behind (in the oceans).

**Stanza 117-118** — उत्तमार्द्धि – abounding in excellent prosperity. उत्तमा उत्कृष्टा ऋद्धिः सुखं ऐश्वर्यं लक्ष्मीर्वा यस्या यस्यां वा । सा । ताम् । वलभिषु = on the uppermost parts of the mansions. उच्चैः विश्रम्य = taking abundant rest. The word उच्चैः can be construed with वलभि, but as वलभि means 'the uppermost part of a mansion', it is construed with विश्रम्य. स्वर्गावासप्रणयं – ardent desire for staying in the heavens. स्वर्गे आवासः निवासः निवासस्थानं वा स्वर्गावासः । तत्र प्रणयः प्रेम आकाङ्क्षा वा स्वर्गावासप्रणयः । तम् । उररीकृत्य = स्वीकृत्य = having recourse to. जालोद्गीर्णैः = जालनिःसृतैः = issuing forth from the lattices. जालेभ्यो जालैर्वा उद्गीर्णाः उद्वान्ताः निःसृताः जालोद्गीर्णाः । तैः । केशसंस्कारधूपैः = owing to the aromatic smoke used for hair-toilet. केशानां संस्कारः अलङ्करणं केशसंस्कारः । केशसंस्कारस्य धूपाः केशसंस्कारधूपाः । तैः । The word संस्कार is derived from सम् + कृ by adding स् before कृ under the rule 'सम्पर्युपेभ्यः करोतौ भूषणे' । उपचितवपुः = having body increased in volume. उपचितं परिपुष्टं वपुः देहः यस्य सः । भवनशिखिभिः = by the domestic peacocks. बन्धुप्रीत्या – through brotherly love. बन्धौ प्रीतिः बन्धुप्रीतिः । तया । दत्तनृत्तोपहारः = having presents offered in the form of dances. नृत्तं नृत्यं एव

उपहारः उपायनं नृत्तोपहारः। दत्तः नृत्तोपहारः यस्मै स दत्तनृत्तोपहारः। उपहारः = a present. मन्द्रातोद्यध्वनिषु = resounding with the deep pleasing sounds of the musical instruments. मन्द्राः श्रुतिसुखाः आतोद्यानां वादित्रविशेषाणां ध्वनयः येषु ते। तेषु। मन्द्र = pleasing to the ears. आतोद्य = musical instrument. This compound is an adjective qualifying the noun हर्म्येषु. सततारब्धसङ्गीतकेषु = having entertainments consisting in songs attended with music and dancing arranged always in them. सततं निरन्तरं आरब्धं सङ्गीतकं येषु। This adjective also qualifies the noun हर्म्येषु. 'गीतं वाद्यं नर्तनं च त्रयं सङ्गीतमुच्यते' इति सङ्गीतकलक्षणम्। कुसुमसुरभिषु = perfumed with the fragrance of flowers. कुसुमानां सुरभिः सुगन्धः येषु ते। तेषु। यद्वा कुसुमैः सुरभीणि कुसुमसुरभीणि। तेषु। यद्वा कुसुमानां सुरभिः सौगन्ध्यं इव सुरभिः येषां येषु वा। तेषु। 'इवुपमानपूर्वस्य लुखं गतार्थत्वात्' इति लुखम्। ललितवनितापादरागाङ्कितेषु – marked with red dyes applied to the feet by the beautiful ladies. ललिताः सुन्दर्यश्च ताः वनिताः स्त्रियश्च ललितवनिताः। तासां पादयोर्यो रागः लाक्षारसः आलक्तकरसो वा तेन अङ्कितेषु चिह्नितेषु।. अध्वखिन्नान्तरात्मा = whose mind is fatigued with the journey. अध्वन् = (1) a journey; (2) an attack. अन्तरात्मा = mind. अध्वना मार्गक्रमणक्लेशेन खिन्नः सञ्जातखेदः श्रान्तः अन्तरात्मा अन्तःकरणं यस्य सः। The Meghadūta reads अध्वखेदं नयेथाः। खेदं नीत्वा – having removed the fatigue. Instead of this reading Meghadūta reads पश्यन् लक्ष्मीम्। स्वःसौधेषु = for the heavenly mansions. स्वर् (indiclinable) – heaven, paradise. प्रणयं = ardent desire. संहरिष्यसि = you will give up. Śambarāsura means to say 'having arrived Alakā, oh Sage! you will give up your ardent desire to see heavens, though you are practising penance for those. The city of Alakā is so beautiful and so prosperous that you will think it better to stay there, instead of attaining to heavens.' This is how Śambara is trying to induce him to give up practising penance and goad him into giving a fight with himself so that he may be able to take a bloody vengeance upon Him by putting Him to death while fighting with Him.

---

## CANTO II

**Stanza-1—** स्निग्धश्यामं – having resplendent and darkish complexion. स्निग्धं च तत् श्यामं च स्निग्धश्यामम् । फणाभृन्द्रर्तुः – of the lord of the cobras ( hooded-snakes ). कण्ठच्छविः – owning to ( your ) possesing the lustre like that of the neck ( of the lord of cobras ). कठस्य कन्धरायाः छविः इव च्छविः कान्तिः यस्य सः । नागराणां गणैः – by the crowds of citizens. नागरः = a citizen. शतमखपुरीं – the city of Indra. शतमखस्य शतमन्योरिन्द्रस्य पुरीं राजधानीभूतां पुरीम् । ह्रेपयन्त्या – putting to shame. सन्दिदृक्षुः – wishing to see. सन्द्रष्टुमिच्छुः सन्दिदृक्षुः – Sambarāsura means to say that when the sage, assuming the form of the cloud, would be roaming about over the city, the citizens would be looking at him with great respect and the sage would be having a look at the beauty and prosperity of the city and so he asks the sage not to stay at one place but to roam over the beautiful city which surpasses the city of Indra in beauty and prosperity. This also is one of the means adopted by the demon to distract the mind of the Sage, who is deeply absorbed in meditating upon the pure nature of the soul.

**Stanza-2—** सञ्चिचीषुः – wishing to attain. This is a Desiderative form derived from सम् + चि under the rule 'सन्भिक्षाशंसाद्रुः'. The Nirnayasagar edition reads सञ्चिचीर्षुः which ,being ungrammtical, is not accepted by me. कर्मारीणां – of the enemies in the form of Karmans. The Karmans are treated as enemies of the soul as the nature of the soul is perverted owing to its being in conjunction with them incessantly from time immemorial and having no beginning. Though the Karmans do not deprive the soul of its pure inherent property ( knowledge ), yet they pervert it by their being coexistent with it. The Genitive case implies निर्धारण ( seperating one out of many ). मोहशत्रोः – of the enemy in the form of मोह. मोहकर्म is one of the eight Karmans and causes the soul to err and embarrasses it. निहन्तुः – of Him who destroys. Here निहनन does not imply complete destruction. It implies the deprivation of the property of the Karman. The Jain school of thought

never believes in 'utter destruction' (अत्यन्ताभाव-तुच्छाभाव) of anything that exists. चण्डेश्वरस्य – (1) of the lord of sages practising austere penance; (2) of the conqueror of passions. चण्डानां क्रोधादिकषायाणामीष्टे इति चण्डेश्वरः। यद्वा चण्डानामुग्रतपसामीश्वरःश्रेष्ठश्चण्डेश्वरः। चण्डमुग्रं तपोऽस्यास्तीति चण्डः। 'ओऽभ्रादिभ्यः' इत्यः। चण्डानामीश्वरः श्रेष्ठश्चण्डेश्वरः। The Meghadūta reads also चण्डीश्वरस्य. Dakṣiṇāvarta refers to this reading as below :– चण्डेश्वरस्य, इदं महाकालनिकेतनेश्वरस्य देवस्याभिधानमिति केचित्। अन्ये रौद्राकारत्वाचण्डेश्वरपदं प्रयुक्तमिति वदन्ति। In my commentary I have explained this reading in the following words – चण्डीश्वरस्येति पाठे तु चण्डमुग्रतपोऽस्याऽस्तीति चण्डी। अनेकाच्त्वाददन्तत्वाच व्रीह्यादिविदिन्त्यः। चण्डिनामुग्रतपसां मुनीनामीश्वरोऽग्रणीश्चण्डीश्वरः। तस्य। यद्वा क्रोधादिद्रव्यभावकर्महननाचण्डीश्वरः रुद्रः इव चण्डीश्वरः। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। त्रिभुवनगुरोः – of the lord of all the three worlds. धवलितनभोभागं – that which has whitened a region of the sky. धवलित – which has rendered white. धवलितः धवलः कृतः। धवलितः धवलीकृतः नभोभागः येन तत् धवलितनभोभागम्। अभ्रंलिहाग्रं – touching the sky or clouds with its uppermost part. The termination खश् (अ) is afixed to लिह् under the rule 'वहाभ्रे लिहः' as it is preceded by the word अभ्र, meaning (i) a cloud; (ii) the sky. अभ्रं मेघं आकाशप्रदेशं वा लेढीति अभ्रंलिहम्। अभ्रंलिहं अग्रं अन्तः यस्य तत्। कैलासाद्रिश्रियं – the beauty of the Kailāsa mountain. कैलासाद्रेः श्रीः कैलासश्रीः। तां कैलासश्रियम्। धामन् – a temple.

**Stanza 3** :— कृतपरिगतिः – who has moved round the (temple). परितः अभितः गतिः गमनं परिगतिः। कृता विहिता परिगतिः प्रदक्षिणं गमनं येन सः। पुष्पवर्षं व्याकिरन् – (i) scattering or pouring drops of water resembling flowers; (ii) scattering flowers (of flowery trees or creepers beaten by showers of water discharged by the clouds.). पुष्पाणीव पुष्पाणि। तेषां वर्षः वृष्टिः। यद्वा वृष्टजलाघातपातितकुसुमवर्षेणेत्यर्थः। दुन्दुभिस्वानमन्द्रं – rumbling like that of kettle-drum. दुन्दुभेर्भेर्याः स्वानो ध्वनिः दुन्दुभिस्वानः। तद्वन्मन्द्रं गम्भीरं दुन्दुभिस्वानमन्द्रम्। स्तनितं – thundering sound.

वातोद्धूतैः – disturbed by the wind. वातेन वायुना उद्धूताः ऊर्ध्वं प्रापिताः वातोद्धूताः। तैः। समीरणसमीरितैरित्यर्थः। अनिभृततरैः – moving very violently. कुवलयरजोगन्धिभिः – fragrant on account of the pollens of blue-lotuses. कुवलयानां कमलानां रजांसि परागाः कुवलयरजांसि। कुवलयरजसामिव गन्धोऽस्य कुवलयरजोगन्धि। तैः। The termination इ is affixed to the word गन्ध, which is preceded by the word कुवलयरजः, the standard of comparision, under the rule 'वोपमानात्'. । This word may be explained also as कुवलयरजसः गन्धाः अल्पः अस्मिन्. Here, the termination इ in affixed to the word गन्ध under the rule 'वाल्पे'. According to this explanation, the word means 'slightly possessing fragrance of the pollens of blue lotuses.'

**Stanza 4**—सुरभिशिशिरस्वच्छतोयह्रदादौ – in lakes etc. possessing fragrant, cool and pure water. सुरभि सुगन्धि च तत् शिशिरं शीतलं च सुरभिशिशिरम्। सुरभिशिशिरं च तत् स्वच्छं निर्मलं च सुरभिशिशिरस्वच्छं। सुरभिशिशिरस्वच्छं तोयं यस्य सः। सुरभिशिशिरस्वच्छतोयश्चासौ ह्रदश्च सुरभिशिशिरस्वच्छतोयह्रदः। स आदिः यस्य सः। तस्मिन्। नानास्वादौ = very sweet. This word forms an adjective qualifying the noun पयसि. आ अत्यर्थं स्वादु आस्वादु। न आस्वादु अनास्वादु। न अनास्वादु नानास्वादु। अत्यन्तं स्वाद्वित्यर्थः। The नञर्थक न is changed अन् as it is followed by a word, having a vowel at its beginning, under the rule 'नञोऽन्'. This is how the word अनास्वादु is formed. In the word नानास्वादु, the नञर्थक न is not changed to अन्, though it is followed by a word, having a vowel at its beginning, for this is a compound implying nagation and compounded again with a word implying nagation. The नञर्थक न, when compounded with a compoud implying nagation, is not changed to अन्, though the word न, implying nagation, is followed by a word, having a vowel at its beginning. Acharya Abhayanandi, the author of the work जैनेन्द्रमहावृत्ति, has in his commentary obsereved 'पुनर्नञ्से नञः प्रकृतिभावः'। This compound may be dissolved also as ना स्वादु नास्वादु। ना नास्वादु नानास्वादु। स्वाद्वित्यर्थः।. The word नानास्वादौ, a Locative form, reminds us that the form is of a masculine noun. How, then, can it be said that the word is an adjec-

tive qualifying पयसि ? As a rule, an adjective and the noun it qualifies must be समानाधिकरण, i. e. must possess the same number and the same gender. The stanza यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य । तल्लिङ्गं तद्वचनं सा च विभक्तिर्विशेषणस्यापि ॥ also mentions the same thing. In my opinion, this difficulty does not arise, for नानास्वादौ can be a Locative form of the word possessing neuter gender, according to Devanandi and Panini both. The aphorisms 'भादौ वोक्तपुंस्कं पुंवत्' (जै.) and 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' (पा०) support the above-referred to view. A word, possessing masculine, feminine and neuter genders and implying one and the same meaning, is called भाषितपुंस्क or उक्तपुंस्क. The word भाषितपुंस्क or उक्तपुंस्क is defined as—'एक एव हि यः शब्दः त्रिषु लिङ्गेषु वर्तते । एकमेवार्थमाख्याति तद्धि भाषितपुंस्कम् ॥' 'यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते । क्लीबवृत्तौ तदेव स्यादुक्तपुंस्कं तदुच्यते ॥ पीलुर्वृक्षः फलं पीलु पीलुने, न हि पीलवे । वृक्षे निमित्तं पीलुत्वं, तज्जत्वं तत्फले पुनः ॥ उक्तः पुमान् यस्मिन् अर्थे तदुक्तपुंस्कम् । तदस्यास्तीति ह्यत्प्रत्ययोऽत्र बोध्यः । नपि तु फलव्याप्यजातिः वृक्षविशेषप्रभवत्वं तदिति बोध्यम् । एवं च पुंसि पीलुशब्दस्य वृक्षत्वव्याप्यजातिः वृक्षे प्रवृत्तिनिमित्तम् ।' In the महावृत्ति, Abhayanandi has explained this technical term as—'उक्तः पुमान् येन तुल्ये प्रवृत्तिनिमित्तेऽर्थे तदुक्तपुंस्कं शब्दरूपं गृह्यते । तेन भिन्नप्रवृत्तिनिमित्तस्य पुंसि नपुंसकशब्दस्य विकल्पो न भवति । पीलुने फलाय । पीलुशब्दस्य वृक्षे समुदायः प्रवृत्तिनिमित्तं, फले तु तदवयवः ।' [ जै. म. वृ. ५।१।५२ ]. The explanation of this word given by the author of तत्त्वबोधिनी runs as follows :—; यद्यत्र भाषितः पुमान् येन शब्देन स भाषितपुंस्कः शब्दः इति विज्ञायेत, तदा पीलुने इत्यादावतिप्रसङ्गः स्यात्, अतो व्याचष्टे प्रवृत्तिनिमित्तैक्य इति । अयं भावः । भाषितः पुमान् यस्मिन् अर्थे तद्भाषितपुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीति अर्शआदित्वादच् । तेनैकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्दस्वरूपं तल्लभ्यत इति ।' Now the word नानास्वादु being उक्तपुंस्क it is also declined in the Locative case as a word possessing masculine gender under the rule 'भादौ वोक्तपुंस्कं पुंवत्'. The forms

नानास्वादौ and नानास्वादुनि are therefore, gramatically correct. पवित–purified, cleansed. पयसि पीतिन् = drinking water. पीतमनेन पयः पीती पयसि । The termination इन् is affixed to the past participle पीत under the rule 'इष्टादेः'. The Accusative case of पयः, the object of पीतिन्, is changed to the Locative case under the rule 'क्तेन्कर्मणि'. त्वत् = तव = your. This is a form possessing Genitive case of युष्मत्, derived under the rule 'त्वमौ त्यद्यौ चैके.' Abhayanandi, in his commentary on the aphorism 'त्वमावेके' has given this form. [ त्वाम् । माम् । त्वत् । मत् । त्वयि । मयि । ]. तोयक्रीडानिरतयुवतिस्नानतिक्तैः = pungent (or fragrant) owing to the unguents, perfumed powders etc. (perfumery) of the young ladies, engaged in water-sports. तोयक्रीडायां जलक्रीडायां निरतानां व्यापृतानां युवतीनां तरुणीनां स्नानेन स्नानीयेन चन्दनादिद्रव्येण तिक्तैः सुगन्धिभिः । स्नायतेऽनेनेति स्नानीयं । 'करणाधारे चानट्' इति करणेऽनट् । स्नानं = perfumery. विनोदः = gratification.

**Stanza 5:—** जलधर – O cloud. Sambara calls the sage जलधर, as a prince is called King by people, though the body of the sage is not tranformed into a cloud. विचित्रा = very wonderful. प्रेतगोष्ठी = the meetings or conversations of those that are dead or of the ghosts. प्रेत = (1) dead, (2) ghost. गोष्ठी = (1) a meeting, (2) a conversation. उपरिनिपतद्गृध्रबद्धान्धकारे = pervaded with darkness formed by vultures flying above. उपरि ऊर्ध्वप्रदेशे निपतद्भिः गृध्रैः बद्धः विरचितः अन्धकारः तमः यस्मिन् । तस्मिन् । दोषामन्ये – which is as good as night. दोषां रात्रिमात्मानं मन्यते इति दोषामन्यम् । तस्मिन् । दोषा = a night. अतिष्ठन् – waiting for a little while. ईषत्तिष्ठन् अतिष्ठन् ।

**Stanza 6:—** जीर्णद्रुमशतबृहत्कोटरान्तःप्रबद्धध्वानोलूकप्रतिभयरवे = abounding in noises terrorizing the owls or abounding in terrorizing noises of the owls with their hootings impeded inside the interior of the exetensive hollows of hundreds of old trees. जीर्णाश्च ते द्रुमाश्च जीर्णद्रुमाः । तेषां शतं शतानि वा जीर्णद्रुमशतं जीर्णद्रुमशतानि

वा। वृहतः विशालाश्च ते कोटराः निष्कुहाश्च बृहत्कोटराः। जीर्णद्रुमशतस्य बृहत्कोटराः जीर्णद्रुमशतबृहत्कोटराः। तेषामन्तर्मध्ये प्रबद्धः निरुद्धः कृतः वा ध्वानः ध्वनिः येषां यैर्वा ते। ते च ते उलूकाः पेचकाः। तेषां प्रतिभयाः भयजनकाः रवाः ध्वनयः यस्मिन् सः। तस्मिन्। प्रतिभयं = terrorising. प्रेतशोफातिरौद्रे = extremely formidable owing to the intumescence [ swelling up ] of the dead bodies प्रेतानां शवानां शोफेन श्वयथुना अतिरौद्रः अतिभयङ्करः। तस्मिन्। शोफः = swelling up, intumescence. परिणतशिवारब्धसांराविणोग्रे = terrible owing to the fully developed and pervading howlings of female jackals. परिणतैः प्रवृद्धैः महत्त्वं प्राप्तैः शिवाभिः क्रोष्ट्रीभिः आरब्धैः कृतैः सांराविणैः प्रसरणाक्रियया दिगन्तव्यापिभिः ध्वनिभिः उग्रे भयानके। सांराविणानि – pervading howlings. समन्ततो रवणं सांराविणं। The termination इनि् is affixed to the root सम् + रौ in the sense of of 'complete pervasion' under the rule 'इनुन् व्याप्तौ'. The form, thus derived, possesses neuter gender and implies भाव (क्रिया). After affixing the termination इनुन्, the termination अण् is again affixed under the rule 'अभिनोऽण्'. As the form, thus derived, possesses neuter gender, the न् with the preceding vowel इ is to be dropped under the rule 'नः'; but as the termination अण्, affixed to the word, does not imply the sense 'an offspring', the न् with its preciding vowel इ need not be dropped under the rule 'अनपत्येऽणिनः'. This is how the word सांराविणं is derived.

**Stanza 7:—** विद्यासिद्धिं प्रति – for the sake of attaining knowledge of magic. नियमिनः – rigidly observing the prescribed rites. नियमः = व्रतम्। 'नियमो निश्चये वन्धे यन्त्रणे संविदि व्रते' इति विश्वलोचने। हुंफुङ्कारैः मन्त्रैः पितृवनं अभि भ्राम्यतः = moving all over the cremation ground uttering incantations consisting in हुं and फुं. अभि being a कर्मप्रवचनीय, governs the Accusative case and implies वीप्सा (व्याप्तुमिच्छा) under the rule 'वीप्सेत्थम्भूतलक्षणेऽभिनेवृ'। शूली – one armed with spears. साधकौघः = the assemblage of magicians. अनघमधुरैः विरिब्धैः =

by means of flawless pleasing sounds. विरिब्धैः = ध्वनिभिः। The Nirnaya-sagar edition reads विशब्दैः. I have changed this reading to विरिब्धैः on the ground of योगिराज's commentary. The sentence " 'क्षुब्धस्वान्त-ध्वान्त'—इत्यादिना ध्वनौ विशब्देति क्तान्ते साधुः ", found in the commentary, clearly implies that word which he wishes to explain is a क्तान्त form and विशब्द is not a क्तान्त form [ i. e. past participle ]. Moreover, the Sakatayana, from which Yogiraja is found to have been quoting often, has not made mention of this word in the aphorism 'क्षुब्धस्वान्तध्वान्त —'. The word विशब्द does not mean ध्वनि. Taking into consideration all the points referred to above, I have come to the conclusion that the word विशब्द must be replaced by some other word which must be a past participle and which must mean ध्वनि. The Chintamani commentary on the शाकटायन is helpful to us in fixing the exact reading. While explaining the aphorism 'क्षुब्धस्वान्त—', the commentator, यक्षवर्मा, has referred to a word fulfilling the above-mentioned conditions. The word is explained by him as 'रेभे रेभेच्च शब्दे इत्यस्य वा। विपूर्वस्य इत्वं च वि (र?) रिब्धः ध्वनिरित्यर्थः। In the aphorism of शब्दार्णव, the word अविशब्द is found, but it is given as the meaning of the word घुष्ट. Somadeva has explained the word विरिब्ध as 'विरिब्धः स्वरः। विपूर्वस्य रेभृङोऽनिड्त्वमित्वं च।' Abhayanandi has explained it as—'विरिब्ध इति निपात्यते स्वरश्चेत् विरेभितमन्यत् इत्वमेतो निपातनात्।' Jinedrabuddhi explains this word in his काशिकाविवरणपञ्जिका as—'विरिब्धमिति। अत्राप्येकारस्येत्वमपि निपात्यते। स्वरश्चेदिति। स्वरशब्दोऽत्र ध्वनौ वर्तते।' सन्ध्याबलिपटहतां कुर्वन् = acting as a drum beaten at the time of worship perfomed in the evening.

**Stanza 8:—** अन्तर्वणं – in the interior part of the forest. This is an अव्ययीभाव compound formed under the rule 'पारेमध्येऽन्तस्तया वा.' वनस्यान्तः अन्तर्वणम्। The न of वन is chaged to ण under the rule 'प्राग्रेऽन्तर्निःशरेक्षुप्लक्षपीयूक्षाकार्र्याम्रखदिरात्।'. अपभियां – fearless. अपगता विनष्टा भीर्भयं येभ्यः येषां वा ते। तेषाम्। This is a प्रादिबहुव्रीहि compound. आश्रितं

= a seat. अत्रेमे आसते स्मेत्यासितम् । The termination क्त is affixed to the root आस् in the sense of आधार under the rule ' आधारे चाद्यर्थाच्च '. The Genitive case is possessed by the word मुनि under the rule ' क्तस्याधारसतोः ' । स्तुतिकलकलात् = owing to the confused noise of prayers. आत्ततन्नामरूढि = known by the name traditionally. आत्ता गृहीता तस्य कलकलस्य नाम्नः अभिधानस्य रूढिः प्रसिद्धिः येन तत् । स्तनितपटहैः – with drums in the form of thunders sounded. स्तनितान्येव पटहाः स्तनितपटहाः । तैः ।.

**Stanza 9 —** सायाह्ने – in the evening. तत्कालपूजासङ्गीतान्ते – at the end of songs sung in chorus at the worship performed at that time. स चासौ कालश्च तत्कालः । सायाह्नः इत्यर्थः । सायाह्ने क्रियमाणा या पूजा तस्याः सङ्गीतस्याऽन्तेऽवसाने तत्कालपूजासङ्गीतान्ते । आचिताङ्गीः – having their bodies covered over with. आचितानि व्याप्तानि अङ्गानि गात्राणि यासां ताः । ( Accusative plural form ). सुकण्ठी – possessing beautiful necks or charming voice. कण्ठ – (1) a neck, (2) a voice. ' स्वरेऽपि कण्ठस्तु गले पार्श्वे शल्यद्रुशब्दयोः' इति विश्वलोचने. The feminine termination ङी is affixed to अङ्ग and कण्ठ, compounded with other words, under the rule ' नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ' ।. पादन्यासक्वणितरसनाः – wearing girdles jingling on account of the movements of their feet. पादन्यासैः चरणनिक्षेपैः क्वणिताः कृतध्वनयः रसनाः काञ्चीदामानि यासां ताः । लीलावधूतैः = discharged for sporting or discharged sportively. लीलायै लीलया वा अवधूतैः व्याधूतैः । प्रक्षिप्तैरित्यर्थः । ' साधनं कृता बहुलम् ' इत्यत्र बहुलग्रहणात्संप्रदानं कारकमपि कृता समस्तं भवति ।.

**Stanza 10—** अहर्मणिमयरणन्नूपुराः – wearing jingling anklets made up of ( or studded with ) jewels ( lit. sun-crystals ). अहर्मणिः सूर्यः इव अहर्मणिः । The word अहर्मणि originally means ' the sun.' As the termination implying resemblance is dropped under the rule ' देवपथादिभ्यः ', the word अहर्मणिः means 'sun-crystal' which resembles the sun in emitting rays and heat. अहर्मणेर्विकाराः अहर्मणिमयाः ।. The termination मयट् is

affixed to the word अश्मणि in the sense of 'modification' under the rule 'मयड्वाऽभक्षाच्छादने'. अश्मणिमयाः सूर्यकान्तमणिनिर्मिता इत्यर्थः। रणन्तः क्वणन्तः। शब्दायमानाः इत्यर्थः। रणन्तश्च ते नूपुराश्च रणन्नूपुराः। अश्मणिमयाः रणन्नूपुराः यासां ताः। नूपुराः – anklets. सुललितपदन्यासं – (1) in keeping with the graceful movements of their feet; (2) employing pleasing words. सुतरां ललितः मनोहरः सुललितः। पदानां चरणानां न्यासः प्रक्षेपः पदन्यासः। सुललितः पदन्यासः यस्मिन् कर्मणि यथा स्यात् तथा। This is an अव्ययीभाव compound. This compound may be dissolved also as — सुललितानां ललितानां लालित्यगुणोपेतानां पदानां सुप्तिङन्तरूपाणां न्यासः प्रयोगः यस्मिन्कर्मणि तत्। शोभनपादविक्षेपपूर्वकं विपुललालित्यगुणोपेतसुप्तिङन्तानि पदानि प्रयुज्य वेत्यर्थः। प्रोद्गायन्तीः–singing loudly. उद्भ्रूविलासाः – possessing graceful movements of their eyebrows. भ्रुवोर्विलासः भ्रूविलासः। उद्गतः प्रकर्षं प्राप्तः भ्रूविलासः यासां ताः। उत्पश्याः – looking upwards. उदूर्ध्वं पश्यन्तीति उत्पश्याः। The termination श (अ) is affixed to the root दृश्, it being preceded by an उपसर्ग, under the rule 'पाघ्राध्माधेट्दृशः शः'. The termination श being शित्, the root दृश् is changed to पश्य under the rule 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदाः।'. नवजलकणिकाद्वित्रसिक्तः – sprinkled over twice or thrice with drops of fresh sprays of water (discharged by the cloud). नवं मेघवृष्टं भुवमप्राप्तत्वाच्च नव्यं च तज्जलं सलिलं च नवजलम्। नवजलस्य कणिकाः बिन्दवः नवजलकणिकाः। द्वे वा त्रीणि वा द्वित्राणि। नवजलकणिकाभिः द्वित्राणि सिक्तानि यासां ताः। सिक्तानि सेचनानि। 'नपुंसके भावे क्तोऽस्यादिभ्यः' इति भावे क्तः नपुं च। द्वित्राणि is a बहुव्रीहि compound formed under the rule 'संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये'। विलोलाः – (1) possissing nimbleness; (2) possessing extraordinary beauty. रत्नच्छायाखचितवलिभिः – possessing handles covered over with the lustre of jewels. रत्नानां छाया रत्नच्छायम्। The jewels, from which lustre emanetes, being in a great number, the compound having छाया at its end, is formed under the rule 'छाया बाहुल्ये' and under this very rule the word छाया is changed to छाय and is declined as a noun possessing neuter gender. रत्नच्छायेन आखचिता रूषिता व्याप्ता वा

वलयः चामरदण्डाः येषां ते । तैः । वलिः = a handle of a चामर. क्लान्तहस्ताः = having their hands fatigued. क्लान्ताः सञ्जातवेदनाः श्रान्ताः वा हस्ताः पाणयः यासां ताः । This refers to the national or provincial dance which is defined as —दुकूलदण्डिकामालाखड्गचामरगोलकैः । हस्तसञ्चारिभिः कुर्युर्नृत्तं तद्देशिकं स्मृतम् ॥

**Stanza 11** — नखपदसुखान् — pleasing to the marks (wounds) made by the nails ( at the time of sexual enjoyments ). नखानां पदानि चिह्नानि व्रणाङ्काः नखपदानि । नखजनितव्रणाङ्काः इत्यर्थः । तेषां तेषु वा सुखं येभ्यस्तान् । This compound may also be dissolved as – नखपदेषु सुखाः सुखहेतवः नखपदसुखास्तान् । In this case the word सुख is taken to mean सुखहेतुः according to शब्दार्णवकोश. "सुखहेतौ सुखे सुखम्" इति शब्दार्णवे. वर्षाग्रविन्दून् — the first drops of rain-water. वर्षायाः वृष्टेः वर्षस्य अग्रविन्दवः आद्यपृषत्काः वर्षाग्रविन्दवः । तान् । अर्हद्भवनवलभेः ऊर्ध्वभागे = on the upper part of the roof of the temple dedicated to Jina. अर्हतः जिनस्य भवनं मन्दिरं जिनबिम्बमन्दिरं अर्हद्भवनम् । तस्य वलभिः छादनं अर्हद्भवनवलभिः । तस्याः। सन्ध्यारागच्छुरितवपुषम् = possessing body enlightened by the ( red ) lustre of evening. सन्ध्यायाः रागः रक्तिमा सन्ध्यारागः = the red colour seen in the sky in the evening. सन्ध्यारागेण च्छुरितं मिश्रितं वपुः शरीरं यस्य सः । तम् । The word छुरितं is a participle derived from the root छुर् ( i ) to envelop; (ii) to intermix. विद्युदुद्भासिदण्डं = having body enlightened by a lightning or lightnings. उद्भासते इति उद्भासी । विद्युता उद्भासते विद्युदुद्भासी । विद्युदुद्भासी दण्डः शरीरं यस्य सः । तम् । यद्वा उद्भासी चासौ दण्डश्च उद्भासिदण्डः । विद्युदेव उद्भासिदण्डः यस्मिन् सः । दण्डः – (i) a body; (ii) a flash of lightning resembling a stick. This compound may be dissoloved also as विद्युतः उद्भासी दण्डः इव दण्डः यस्मिन् सः । तम् ।. लीलावितानम् = a canopy or tent erected for the sake of sexual pleasure.

**Stanza 12**— त्वत्स्तनितचकिताः = frightend by your thundering sounds. तव स्तनितं गर्जितं त्वत्स्तनितम् । तेन चकिताः भीताः त्वत्स्तनितचकिताः । आत्तशङ्काः = become doubtful. आत्ता गृहीता शङ्का सन्देहः याभिः ताः ।

सन्देहदोलारूढमनस्कारा इत्यर्थः । किञ्चित्तिर्यग्वलितवदनाः = with their faces turned aslant a little. किञ्चित् ईषत् तिर्यक् जिह्मं वलितं घूर्णितं वदनं मुखं याभिस्ताः ।. बद्धोत्कम्पस्तनतटलुठल्लोलहाराः = having dangling necklaces rolling on their breasts. बद्धः भीत्या विरचितः उत्कम्पः वेपथुः ययोः तौ बद्धोत्कम्पौ । तौ च तौ स्तनतटौ च । तयोः लुठन्त उपावर्तमानाः लोलाः चञ्चलाश्च हाराः माला यासां ताः ।. मधुकरश्रेणिदीर्घान् = as much long as the rows of bees. मधुकराणां भ्रमराणां श्रेणिः पङ्क्तिः इव दीर्घाः मधुकरश्रेणिदीर्घाः । तान् । Length, being a common property found in both the rows of bees and the glances, the standard of comparision (i. e. मधुकरश्रेणि) is compounded with दीर्घ, the common property under the rule 'सामान्येनोपमानम्' ।. कटाक्षान् = side-glances. आमोक्ष्यन्ति = would cast. Meghadūta reads आमोक्ष्यन्ते. Both the readings are grammatically correct.

**Stanza 13** — भक्तिप्रकटनपटुः = proficient in manifesting devotion. भक्तेः जिनगुणानुरागस्य प्रकटने प्रकटीकरणक्रियायां पटुः नदीष्णातः भक्तिप्रकटनपटुः ।. आतोद्यगोष्ठीं = a discourse with reference to the musical instruments. आतोद्यस्य वाद्यस्य गोष्ठी संलापः । ताम् । आतोद्यं = a musical instrument. गोष्ठी = a discourse, conversation. मन्द्रस्तनितमुरवध्वानम् = resonant sounds of drums in the form of rumbling thunders. मन्द्रं गम्भीरं च तत् स्तनितं मेघनिर्घोषश्च मन्द्रस्तनितम् । मुरवस्य मुरजस्य ध्वानः ध्वनिः मुरवध्वानः । मन्द्रस्तनितमेव मुरवध्वानः मन्द्रस्तनितमुरवध्वानः । तम् ।. आविर्धितन्वन् = revealing. 'प्रकाशे प्रादुराविः स्यात्' इत्यमरः ।. उच्चैर्भुजतरुवनं = a grove of trees possessing very tall and big branches. उच्चैः उन्नताः भुजाः शाखाः येषां ते उच्चैर्भुजाः । उच्चैर्भुजाश्च ते तरवश्च उच्चैर्भुजतरवः । तेषां वनमुच्चैर्भुजतरुवनम् । यद्वा उच्चैर्भुजाः तरवः यत्र उच्चैर्भुजतरु तच्च तद्वनं च उच्चैर्भुजतरुवनम् । The word अभि implies here the sense of the Locative case. मण्डलेन = circuitously. लीनः = descended. वन्दारूणां = of those who are accustomed to praying. Here, the termination आरु is affixed to the word वन्द in the sense of 'habit' under the rule 'शृवन्द्यारुः'.

**Stanza 14**—जलधरपथे = in the sky. जलधराणां मेघानां पन्थाः जलधरपथः। The word पथिन्, being at the end of a compound, has the terimination अत् (अ) affixed to it under the rule 'ऋक्पूरप्पथोऽत्'. भक्तिभारावनम्रः = bent down under the burden of pious faith or devotion. भक्तेः जिनानुरागस्य भारः अतिशयः भरः वा भक्तिभारः। तेन अवनम्रः विनतः भक्तिभारावनम्रः। प्रतिनवजपापुष्परक्तः = red like a fresh Japā flower. प्रतिनवानि प्रत्यग्राणि जपापुष्पाणि ओड्रपुष्पाणि प्रतिनवजपापुष्पाणि। तानीव रक्तमरुणम्। सान्ध्यं = coming into being in the evening. स्वामिसेवानुरागम् = fondness for the worship of the lord. स्वामिनः भगवतः जिनेश्वरस्य सेवायां पूजायां अनुरागः प्रीतिः स्वामिसेवानुरागः। तम्।

**Stanza 15**—शतमखः = Indra. शतं मखाः इन्द्रध्वजादयो यागाः अस्य शतमखः। मखः = a sacrifice. 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरः। पशुपतेः = of the protector of living beings. पशूनां सुरनरतिर्यक्प्राणिनां पतिः पाता पशुपतिः। 'पशूनां सुरनरतिरश्चां पतिः शिवः श्रेयस्करत्वात्' इति क्षीरस्वामी. Lord Jina also, being श्रेयस्कर, can be called पशुपतिः according to this explanation of the word. आविर्भवद्दिव्यरूपः = possessing excellent beauty, becoming manifest (of its own accord). आविर्भवत् प्रकटीभवत् दिव्यं सुन्दरं रूपं आकारः यस्य सः। 'रूपमाकारसौन्दर्यस्वभावश्लोकनाणके। नाटकादौ मृगे ग्रन्थावृत्तौ च पशुशब्दयोः' इति विश्वलोचने। 'दिव्यं तु वल्गौ दिविभवेऽन्यवत्' इति विश्वलोचने। स्वरसरचितां = modified according to your liking. स्वस्य आत्मनः रसेन अभिलाषेण रचिता कृता स्वरसरचिता। ताम्। वृत्तिं = modification. शैखिनीं = of a peacock. आर्द्रनागाजिनेच्छां = (1) desire for the fresh flowers of Nāgakesara; (2) the strong desire of roots of the Nāgakesara trees; (3) the strong desire of other clouds abounding in water. आर्द्राः सरसाः नागाः नागकेसरकुसुमानि, तन्मूलानि, मेघाः, नागकेसरवृक्षा वा आर्द्रनागाः। तदर्थां तेषां वा आजिना अतिशयेन जित्वरी (तीव्रेत्यर्थः) इच्छा अभिलाषः। ताम्। नाग = (1) flowers of Nāgakesara; (2) roots of Nāgakesara; (3) a Nāgakesara tree; (4) a cloud. 'नागः पन्नगपुन्नाग-

नागकेसरदन्तिषु । नागदन्तक–जीमूत–मुस्तके क्रूरकर्मणि ' इति विश्वलोचने । ' जिनस्त्वर्हति बुद्धेऽतिवृद्ध–जित्वरयोस्त्रिषु ' इति विश्वलोचने । चित्रां = wonderful. Sambara means to say that the sage assuming the form of a cloud should discharge water and thus being light should go on his journey hastily.

**Stanza 16**— नाट्यम् – a dance accompanied with instrumental music and singing. ' ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तके । तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं स्मृतम् ' इत्यमरः । प्रियान्ते = before her beloved husband; in the presence of her beloved husband. भवान्या = the wife Indra, named शची. भवः श्रेयः अणिमाद्यष्टविधमैश्वर्यमस्यास्तीति भवः । ' ओऽभ्रादिभ्यः ' इत्यत्यो मत्वर्थीयः । इन्द्रः इत्यर्थः । भवस्य पत्नी स्त्री वा भवानी । इन्द्राणीत्यर्थः । To derive a feminine form, the feminine termination ङी, to which the augment आनुक् ( आन् ) is prefixed, is affixed to the word भव under the rule ' वरुणभवशर्वरुद्रेन्द्रमृडात् '. शान्तोद्वेगस्तिमितनयनम् = with ( her ) eyes rendered motionless owing to their rolling being subsided ( or stopped ). शान्तः प्रशमं गतश्चासौ उद्वेगः उद्भ्रमश्च शान्तोद्वेगः । शान्तोद्वेगेन स्तिमिते स्तब्धत्वं प्राप्ते शान्तोद्वेगस्तिमिते । शान्तोद्वेगस्तिमिते नयने यस्मिन् कर्मणि यथा स्यातां तथा । दृष्टभक्तिः = whose devotion is noticed. There are different opinions about the correctness of this compound-word. Though I have given expression to my opinion, I think it necessary to quote Mallinātha here. " ' दृष्टभक्तिः ' इति कथं रूपसिद्धिः, दृष्टशब्दस्य ' स्त्रियाः पुंवत्– ' ( पा. सू. ६।३।३४ ) इत्यादिना पुंवद्भावस्य दुर्घटत्वात् ' अपूरणीप्रियादिषु ' इति निषेधात् भक्तिशब्दस्य प्रियादिषु पाठात् ? " इति, तदेतच्चोद्यं दृढभक्तिरिति शब्दमाश्रित्य प्रतिविहितं गणव्याख्याने दृढं भक्तिरस्येति नपुंसकं पूर्वपदं, अदार्ढ्यनिवृत्तिपरत्वे दृढशब्दाल्लिङ्गविशेषस्यानुपकारित्वात्स्त्रीत्वमविवक्षितमिति । भोजराजस्तु– " ' भक्तौ च कर्मसाधनायाम् ' इत्यनेन सूत्रेण ' भज्यते सेव्यते ' इति कर्मार्थत्वे ' भवानीभक्तिः ' इत्यादि भवति । भावसाधनायां तु ' स्थिरभक्तिर्भवान्यां ' इत्यादि भवति " इत्याह । तारापुष्पप्रकररुचिरे = beautiful on account of the scattered

flowers in the form of stars. तारा एव पुष्पाणि तारापुष्पाणि। तेषां प्रकरः विकीर्णसमूहः तारापुष्पप्रकरः। तेन रुचिरः मनोज्ञः। तस्मिन्। 'प्रकरो निकुरम्बे स्यात् प्रकीर्णकुसुमादिषु' इति विश्वलोचने। व्योमरङ्गे — on the platform in the form of the sky. व्योमैव रङ्गः नृत्तस्थलं व्योमरङ्गः। तस्मिन्। सौम्यविद्युन्नटीम् — the actress in the form of the agreeable lightning. सौम्य — (1) agreeable; (2) beautiful; (3) not formidable. विद्युदेव नटी विद्युन्नटी। सौम्या चासौ विद्युन्नटी च सौम्यविद्युन्नटी। ताम्।

**Stanza 17** — लीलाम् — amorous sports. महाकालदेवालयानां — of the temples situated in the Mahākāla forest or of the very old temples or of the temples dedicated to great gods. महाकाले तदाख्यवने यानि देवानां आलयानि गृहाणि तेषाम्। यद्वा महान् कालः येषां तानि महाकालानि। महाकालानि च तानि देवालयानि च महाकालदेवालयानि। तेषाम्। यद्वा महान् कालः येषां ते महाकालाः। महाकालाश्च ये देवाः वृषभादयः जिनेन्द्राः महाकालदेवाः। तेषामालयाः मन्दिराणि। तेषाम्।

**Stanza 18** — पिहितव्योममार्गे — when the heavenly path would have been blockaded or pervaded (by you). पिहितः प्रच्छादितः व्योममार्गः आकाशपथः येन सः। तस्मिन्। Here, the अ of the preposition अपि, which is prefixed to the root धा, is dropped under the rule 'धाञ्नह्यपेः' or 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः'. निशीथे — at night. 'निशीथस्तु निशामात्रार्धरात्रयोः' इति विश्वलोचने। नरपतिपथे — the Royal roads. Here, the word पथिन्, being placed at the end of a compound, has the termination अत् affixed to it, under the rule 'ऋक्पूरप्पथोऽत्'. सूचिभेद्यैः — very pitch lit. worthy of being pierced by a needle. सूच्या भेद्यानि वेध्यानि सूचिभेद्यानि। तैः। रुद्धालोके — having light obstructed. रुद्धः प्रतिबद्धः आलोकः प्रकाशः यस्मिन्। तस्मिन्। पुंसु गाढोत्कण्ठाः — cherishing strong desire for males. गाढा तीव्रा उत्कण्ठा सङ्कल्पः प्रातीच्छा यासां ताः। मदनविवशाः — who have lost control over themselves owing to passion. मदनेन समुत्पन्नेन कामाभिलाषेण विवशाः स्वानधीनमनस्काराः मदनविवशाः। रतौ — for sexual enjoyment. सङ्केतगोष्ठीं — to the place of appointment; to the place fixed for sexual intercourse. ईशाः — able.

**Stanza 19**— आडम्बरं = (1) expansion; (2) amplification. आडम्बरं संहर – stop your expansion or amplification. 'आडम्बरं करीन्द्राणां गर्जिते तूर्यनिस्वने। समारम्भे प्रपञ्चे च रचनायां च दृश्यते' इति विश्वलोचने। विधुरे – at the time when distressed. कनकनिकषस्निग्धया – shining like a gold-streak on a touch-stone. निकषः – a streak or line of gold made on a touch-stone. Though the word निकष is derived by affixing the termination घ to the root नि + कष् in the sense of आधार under the rule 'गोचरसञ्चर—', it may be taken to mean 'a streak of gold on a touch-stone' also, as the line of gold is drawn on a touch stone (तात्स्थ्यात्). स्निग्ध = shining, glistening. 'स्निग्धं तु मसृणे सान्द्रे रम्ये क्लीबे च तेजसि' इति शब्दार्णवे। कनकस्य निकषः कषपट्टे विहिता रेखा कनकनिकषः। स इव स्निग्धा प्रकाशमाना कनकनिकषस्निग्धा। तया। This is an उपमितसमास formed under the rule 'सामान्येनोपमानम्'. Mallinātha explains the word निकष as 'कनकस्य निकषः निकष्यते इति व्युत्पत्त्या निकषः उपलगतरेखा। तस्येव स्निग्धं तेजः यस्यास्तया।' This explanation in not supported by either Pāṇini or any other grammarian. सौदामिनी – lightining.

**Stanza 20**— क्रीडाहेतोः – for the sake of ridiculing. क्रीडायाः परीहासस्य हेतुः कारणं क्रीडाहेतुः। तस्मात्। क्रीडा – ridicule. 'द्रवकेलीपरीहासाः क्रीडा लीला च नर्म च' इत्यमरः। नूपुरारावहृद्यं = as charmingly as the jingling of anklets of women. 'वनितानां योषितां नूपुराः मञ्जीराः वनितानूपुराः। तेषामारावाः ध्वनयः। शिञ्जितानि इत्यर्थः। ते इव हृद्यं मनोहरं यथा स्यात्तथा। This is an Avyayībhāva compound. अन्तर्मणितसुभगं – as charmingly as the internal inarticulate murmuring sound uttered at cohabitation. मणितम् – an inarticulate murmuring sound uttered at cohabitation. अन्तर्मणितं निधुवनक्रियायामुच्चरितोऽनक्षरो ध्वनिविशेषः। तद्वदिव सुभगं मनोहरं यथा स्यात् तथा। This also is an Avyayībhāva compound. सम्भृतासारधारः – pouring showers of heavy rain. सम्भृताः निष्पादिताः आसारस्य वेगवद्वर्षस्य धाराः स्रवाः येन सः। 'आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले' इति विश्वलोचने। तोयोत्सर्गस्तनितमुखरः – noisy with

thunder at the time of down-pour of water. तोयस्य जलस्य उत्सर्गः वृष्टिः तोयोत्सर्गः । स्तनितं गर्जितम् । तोयोत्सर्गश्च स्तनितं च तोयोत्सर्गस्तनिते । ताभ्यां मुखरः वाचालः तोयोत्सर्गस्तनितमुखरः । स्तनितशब्दस्याल्पाच्त्वात्पूर्वनिपाते प्राप्तेऽपि परनिपातः पूर्वनिपातशास्त्रानित्यत्वनिबन्धन इत्यवसेयम् । यद्वा तोयोत्सर्गे जलवृष्टिकाले यत् स्तनितं गर्जनध्वनिः तेन मुखरः इति वा विग्रहः । विक्लवाः – timid.

**Stanza 21** — रात्रिसम्भोगधूपैः – owing to the aromatic smoke issuing from incense burnt at the time of nocturnal cohabitation. रात्रौ सम्भोगः रात्रिसम्भोगः । तत्र दग्धेभ्यः चन्दनागुर्वादिसुगन्धिद्रव्यचूर्णेभ्यः विनिर्गतैः धूपैः । धूपधूमैरित्यर्थः । लब्धामोदः – enjoying fragrance or joy. लब्धः प्राप्तः आमोदः सौगन्ध्यं मोदो वा येन सः । 'सुगन्धिमुदि वाऽऽमोदः' इति विश्वलोचने । चिरविलसनात् – owing to her emitting flashes of light again and again for a long time. चिरं दीर्घकालं विलसनं प्रकाशमानत्वं चिरविलसनम् । तस्मात् । खिन्नविद्युत्कलत्रः – whose beloved in the form of lightning is fatigued. विद्युदेव कलत्रं विद्युत्कलत्रं । खिन्नं विद्युत्कलत्रं यस्य सः । गरीयान् – possessing a very expansive ( bodily ) form. The word गुरु is changed to गर् under the rule 'बहुलगुरूरुवृद्धतृप्रदीर्घवृन्दारकाणां बंहिगवर्वर्षित्रप्द्राघवृन्दाः' । when the termination ईयस् is affixed to it under the rule 'गुणाङ्गाद्वेष्ठेयसू'. सुप्तपारावतायां – where pigeons lie asleep. सुप्ताः निद्रावशं गताः पारावताः कलरवाः यस्यां सा । तस्याम् । भवनवलभौ – on the upper part of some mansion-gallery. भवनस्य प्रासादस्य वलभिः आच्छादनं भवनवलभिः । तत्र ।

**Stanza 22** — क्षणपरिचयः – momentary familiarity. क्षणं क्षणमात्रकालं यावत् परिचयः संसर्गः क्षणपरिचयः । स्वर्गवासातिशायी – surpassing the ( life-long ) residence in the heavens. स्वर्गे वासः निवासः स्वर्गवासः तमतिशेते इति स्वर्गवासातिशायी । आसक्ति – fondness. योगात् – by entering into friendship. योगं सम्बन्धं सङ्गतिं मित्रत्वं वा प्राप्य । Here the Ablative case of the word implies the dropping of a ल्यान्त ( ल्यबन्त ) form under the rule 'ल्यब्लोपे कर्माधारे'. शिथिलीकृत्य – slackening or dispelling. This is a च्वि form. अध्वशिष्टं – the remaining portion of the journey

or way. वाहयेत् – should traverse or go over. अभ्युपेतार्थकृत्याः – those who have promised to effect (or serve) the purpose. अर्थस्य प्रयोजनस्य कृत्या क्रिया निष्पादनं वा अर्थकृत्या। अभ्युपेताः स्वीकृताः अर्थकृत्याः यैः ते अभ्युपेतार्थकृत्याः। कृत्या – carrying into effect. Though this compound stands in need of some other word (i. e. सुहृदाम्), it is admissible, as it implies the required sense, under the rule 'सापेक्षत्वेऽपि गमकत्वात्समासः।'. न खलु मन्दायन्ते – never get slack.

**Stanza 23** — भासो भङ्गात् – owing to the disappearance of the sunlight. Śambara means to say that owing to the sun-light being obstructed by the cloud, the women of the city would mistake day for night and thus would be miserable owing to the absence of their lovers speaking agreeable and sweet words etc. To avoid this wretched state of the minds of the women of the city, he means to say that the cloud should not obstruct the rays of the sun by its expansive bodily form. In the commentary I have suggested a different reading which I need not discuss here. नयनसलिलं प्रणयिभिः शान्ति नेयम् – This is a passive construction, and so °सलिलं need not be taken in the Accusative case. In the active construction नी being द्विकर्मक, both the direct and indirect objects must possess Accusative case. मा स्म भूत् – would not possibly take place. Though the form अभूत्, having its अ dropped under the rule 'लुङ्लङ्लृङ्क्ष्वडुदात्तः', belongs to Aorist, it may be taken to imply the sense of future tense, as the rule 'स्मे लुङ् च' connotes exception to all other लकार s (i. e. to all other tenses.). खण्डिता – a woman whose husband or lover has been guilty of infidelity and who is, therefore, angry with him. Visvanātha describes her in his S. D. as— 'पार्श्वमेति प्रियो यस्या अन्यासम्भोगचिह्नितः। सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता॥'.

**Stanza 24** — अन्यव्यसनविधुरेण भाव्यम् – should necessarily feel sorry for the severe pressure of pain on the other. अन्यस्य व्यसनं विपत्तिः अन्यव्यसनम्। तेन विधुरः विकलः। दुःखितः इत्यर्थः। तेन। This is an imper-

sonal passive ( भावे प्रयोग ) construction. प्रियकमलिनीसंस्तवं – acquaintance with ( his ) beloved lotus-creeper. प्रिया हृदयग्राहिणी चासौ कमलिनी नलिनी च प्रिय कमलिनी । तस्याः संस्तवः परिचयः प्रियकमलिनीसंस्तवः । तम् । 'संस्तवः स्यात् परिचयः' इत्यमरः । प्रालेयास्रं – tears in the form of dew-drops. प्रालेयं नीहारः एव अस्रं अश्रु प्रालेयास्रम् । कमलवदनात् – from the face in the form of the lotus. कमलमेव वदनं कमलवदनम् । तस्मात् । कररुधि – obstructing rays. करान् किरणान् रुणद्धीति कररुध् । क्विप । तस्मिन् । अनल्पाभ्यसूयः – not a little angry or enraged or indignant. अनल्पा विपुला अभ्यसूया क्रोधः विद्यते यस्य सोऽनल्पाभ्यसूयः ।

**Stanza 25**— सुभगाम् – ( 1 ) very beautiful; ( 2 ) very well-known or well-reputed. शोभनं भगं श्रीः शोभा यशो वा यस्याः सा सुभगा । ताम् । 'भगं तु ज्ञानयोनीच्छायशोमाहात्म्यमुक्तिषु । ऐश्वर्यवीर्यवैराग्यधर्मश्रीरत्नभानुषु ॥' इति विश्वलोचने । 'सुन्दरेऽधिकभाग्यांशे उदिते तटवासरे । तुरीयांशे श्रीमति च सुभगः' इति शब्दार्णवे । धुनी – a river. मा अवमंस्थाः – do not dishonour. अवमंस्थाः is an Aorist form having the अडागम dropped under the rule 'लुङ्लङ्लृङ्क्ष्वमाङ्याट्' for it is accompanied with the word मा. अतिस्वच्छवृत्तेः – whose behaviour is extremely pure. अतिशयेन स्वच्छा वृत्तिः यस्याः सा अतिस्वच्छवृत्तिः । तस्याः । वृत्तिः – (1) state, condition; ( 2 ) course of conduct, behaviour; ( 3 ) maintenance, means of subsistence. रसं – ( i ) water; ( ii ) love. गम्भीरायाः सरितः चेतसि इव प्रसन्ने पयसि – in the pure waters which are as if the pure heart of the Gambthira river. छायात्मा – body in the form of a reflected image. It is implied that in the heart in the form of pure water of the Gambhira, the body of the cloud, her lover, would gain entrance and so the cloud should not disregard her by avoiding her.

**Stanza 26**—शीकरोत्थान् – originating from the sprays. लीलाहासान् – sportive smiles. प्रणयपरतां व्यञ्जयन्ती – expressing her whole-hearted love. कुमुदविशदानि – as white as the lilies. कुमुदानीव कमलानीव विशदानि धवलानि कुमुदविशदानि । चटुलशफरोद्वर्तन प्रेक्षितानि – glances

in the form of the peautiful springings up of the fish [ Saphara ). चटुलानि शीघ्रगतीनि शफराणां मत्स्यानां उद्वर्तनानि उल्लुठितानि एव प्रेक्षितानि विलोकनानि.

**Stanza 27, 28** — उच्चरत्पक्षिमालाभास्वत्काञ्चीमधुररणितात् — possessing charming jinglings of a resplendent zone in the form of the rows of chirping birds. उदूर्ध्वं चरतामुड्डीयमानानां उच्चरतां स्वनतां वा पक्षिणां पतत्रिणां माला पङ्क्तिः उच्चरत्पक्षिमाला। सैव भास्वत्काञ्ची तेजसा स्फुरन्ती रशना। तस्या मधुरं श्रोत्रप्रियं राणितं क्वाणः यत्र तत्। तस्मात्। हेतावत्र का। पक्षे उच्चरत्पक्षिणां मालेव माला उच्चरत्पक्षिमाला। 'देवपथादिभ्यः' इतीवार्थस्य कस्योप्। तया युक्ता भास्वत्काञ्ची। तस्याः मधुरं रणितं क्वाणः यत्र तत्। तस्मात्। उच्चैःपुलिनजघनात् — from the prominent buttocks in the form of sandy beaches. उच्चैः उन्नतं पुलिनं सैकतमेव जघनं कटिः। तस्मात्। पक्षे पुलिनमिव पुलिनं। 'देवपथादिभ्यः' इतीवार्थस्य कस्योप्। पुलिनमिव जघनं पुलिनजघनम्। उच्चैः उन्नतं पुलिनजघनम्। तस्मात्। 'जघनं वनिताश्रोणीपुरोभागे कटावपि' इति विश्वलोचने। 'तोयोत्थितं तत्पुलिनं' इत्यमरः। कामसेवाप्रकर्षम् — the excess of sexual enjoyment. कामसेवाया सम्भोगक्रीडायाः प्रकर्षः उद्रेकः कामसेवाप्रकर्षः। तम्। मुक्तरोधोनितम्बं — dropped down from the buttocks in the form of her banks. रोधः तटं एव नितम्बः कटीचक्रं रोधोनितम्बः। 'कटीचक्रे नितम्बः स्याच्छिखरिस्कन्धरोधसोः' इति विश्वलोचने। मुक्तः परित्यक्तः रोधोनितम्बः येन तत्। प्राप्तवानीरशाखम् — attained to the blades of canes growing in her water. प्राप्ता आश्रिता वानीरशाखा येन तत्। वानीरः — a kind of water-side plant with naked slender tapering pith-filled stems; a kind of rush. सलिलवसनं — a garment in the form of water. सलिलमेव जलमेव वसनं वस्त्रं सलिलवसनम्। पक्षे सलिलमिव वसनम्। बहुरसां — (1) abounding in love. (2) possessing water in abundance. रसः — (1) love; (2) water; (3) beauty; (4) pleasure. बहुः विपुलः रसः अनुरागः जलं सौन्दर्यं सुखं वा यस्या सा। ताम्। कामावस्थां — the state of passion being stirred or the state of being impassioned. दर्शयन्तीं — manifesting. उत्फुल्लप्रततलतिकागूढपर्यन्तदेशाम् — whose adjoining regions are covered over with flowery creepers spreading there. उत्फुल्लाः

सम्फुल्लाः प्रतताः प्रसृताः उत्फुल्लप्रतताः । ताश्च ता लताः वल्लर्यः । ताभिः गूढः प्रच्छन्नः पर्यन्तदेशः यस्याः सा । ताम् । पक्षे—उत्फुल्ले योनिदेशे प्रतता प्रसृता उत्फुल्लप्रतता । सा चासौ लतिका मुक्तामाला चोत्फुल्लप्रततलतिका । तया गूढः प्रच्छन्नः पर्यन्तदेशः योनेः प्रत्यासन्नः देशः यस्याः सा । ताम् । उत्फुल्लः – the female organ of generation. 'उत्फुल्लः करणे स्त्रीणामुत्ताने विकचेऽन्यवत्' इति विश्वलोचने । लतिका – (1) a small creeper; (2) a string of pearls. तां निषद्य – (1) recling or laying (your) body in a position horizontal to her (i. e. the Gambhirá); (2) having recourse to. लम्बमानस्य – (1) of him who has stretched his body on account of imbibing water; (2) of him who has streched his body for sexual enjoyment. ज्ञातास्वादः – become acquainted with sexual enjoyment. विवृतजघनाम् – a woman having her hips laid bare. विवृतं अनावृतं जघनं कटिपश्चाद्भागः श्रोणीपुरोभागः वा यस्याः सा । ताम् । 'जघनं वनिताश्रोणीपुरोभागे कटावपि' इति विश्वलोचने.

**Stanza 29** — अमूं – that river Gambhirā. उद्यच्छमानं – making strenuous efforts; exerting strenuously. This present participle is derived from the root उद्यम्. त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः – charming or agreeable on account of its contact with the odour emitted by the earth sending out vapour on account of your discharge of rain. तव निष्यन्दः वृष्टिः त्वन्निष्यन्दः । तेन उच्छ्वसिता उच्छूना । विजृम्भितेत्यर्थः । सा चासौ वसुधा वसुन्धरा च । तस्याः गन्धः आमोदः । तस्य सम्पर्केण सम्बन्धेन । संसर्गेण इत्यर्थः । रम्यः मनोहरः । नासिकायाः सुखकरः इत्यर्थः । 'गन्धो गन्धकसम्बन्धलेशेष्वामोदगर्वयोः' इति विश्वलोचने । स्रोतोरन्ध्रध्वनितमधुरम् – in a manner charming owing to the low gruff sound produced in the apertures of their trunks. स्रोतसः नासिकायाः रन्ध्रं विवरं स्रोतोरन्ध्रम् । स्रोतोरन्ध्रे नासिकाकुहरे यद्ध्वनितं शब्दः तेन मधुरं यथा स्यात्तथा । 'स्रोतोऽम्बुवेगेन्द्रिययोः' इत्यमरः । According to Amarasimha, the word स्रोतस् means 'an organ of sense' (इन्द्रिय). In the present context, the word must be taken to mean 'nose.' The compound may be taken to mean – 'in a manner charming owing to the grunting sound entering into the

ears [ of the listeners ]. The word स्रोतस् means also 'an ear.' 'स्रोतोऽम्बुवेगे कर्णे च स्रोतो देहसिरास्वपि' इति विश्वलोचने. पीयमानः – which is being imbibed or inhaled. सुगन्धः – fragrant, possessing particles of fragrant substances. शोभनाः गन्धद्रव्याणवोऽस्य सुगन्धः । The word गन्ध, being preceded by सु and being a quality, ought to have the termination इ affixed to it under the rule 'सुपूत्युत्सुरभेर्गुणे गन्धस्येः', but as in the present case the word गन्ध does not imply a quality but a fragrant substance, the rule referred to above does not hold good and so the समासान्त termination इ need not be affixed to it. The following extract from the महावृत्ति supports this explanation. 'अस्ति द्रव्यवचनः । तद्यथा गन्धान् पिनष्टीति । तद्यो मुख्यो गुणवचनस्तस्य ग्रहणम् । तेनेह न भवति । शोभनो गन्धोऽस्य सुगन्ध आपणिकः ।' [ जै. ४।२।१३६ ]. Moreover, the समासान्तविधि does not hold good always ( अनित्य ). गन्धवाहः – wind. अनुवनं – in the forest. This is an Avyayibhava compound.

**Stanza 30** — देवपूर्वं गिरिं – This देवगिरि is identified by scholars with देवगड, which is situated in the southwest of Jhansi. This round about way of description is resorted to by many poets. उपजिगमिषोः – wishing to approach. This is a Desiderative form derived from उप + गम् by affixing उ to it under the rule 'संन्भिक्षाशंसिवन्दिच्छादुः'. श्रमपरिजुषः – fatigued. श्रमं श्रान्तिं परिजुषते सेवते इति श्रमपरिजुट् । क्विप् । तस्य । प्रत्युद्यासुः – exerting ( to welcome ). Though according to Yogiraja, this is a Desiderative form, I am unable to agree with him. In my opinion this word is derived from प्रति + उद् + यस् by affixing an उणादि termination to it. This is an अव्युत्पन्नोणादि form. त्वत्क्लमच्छेददक्षः – prompt to dissipate your fatigue. तव क्लमः श्रमः क्लेशः वा त्वत्क्लमः । तस्य च्छेदे परिहरणे दक्षः चतुरः अनलसः वा त्वत्क्लमच्छेददक्षः । आरूढसौगन्ध्ययोगः – rich in fragrance. [ lit. whose union with fragrance has come into being ]. आरूढः समुत्पन्नः सौगन्ध्येन सौरभ्येण योगः सम्पर्कः सङ्गतिर्वा यस्य सः । काननोदुम्बराणां परिणमयिता – ripening the sylven figs. काननेषु वनेषु उदुम्बराणि उदुम्बरफलानि काननो-

दुम्बराणि । तेषाम् । Seeing the word परिणमयिता, employed in this stanza, I have accepted the word उदुम्बरं, meaning 'a fig' and not उदुम्बरः meaning 'a fig tree,' for ripening of fruits is possible and not of trees. Fruit being a part of a tree, the फल – termination is dropped under the rule 'उप्फले'. परिणमयिता – ripening; ripener. नीचैः – gently. वास्यति – will blow.

**Stanza 31** — पुपुत्रीयिषुभ्याम् – wishing very much to adopt. आत्मनः पुत्रं इच्छति पुत्रीयति । Here, the termination क्यच् (य) is affixed to the word पुत्र as the subject of पुत्रीयति wishes for that which is expressed by the noun (i. e. पुत्र), under the rule 'क्यजिश्मः.' पुत्रीयितुमिच्छति पुपुत्रीयिषति । Here, the termination सन् is affixed to पुत्रीयति and the termination तुम् is dropped under the rule 'तुमीच्छायां घोर्लोप्'. The termination सन् being affixed to पुत्रीयति – the letter पु is reduplicated. ईशोमाभ्याम् – ईश is the presiding diety of the north-east. उमा is his better-half. ईश may be taken to mean 'a god resembling ईश (रुद्र)' under the rule 'देवपथादिभ्यः'. Under the same rule, उमा also may be taken to mean 'a woman resembling उमा, the wife of रुद्र. उमा also means 'a beautiful women'. अपचितपदं – whose feet are worshipped. विरिरचयिषुं – wishing to perform. This is a participle derived from the desiderative of वि + रच् by affixing the termination उ, under the rule 'सन्भिक्षाशंसाविन्दिच्छादुः'. पुष्पमेघीकृतात्मा – who has his body changed into a cloud. पुष्पाणि सन्ति अस्य पुष्पः । 'ओभ्रादिभ्यः' इत्यो मत्वर्थीयः । पुष्पश्चासौ मेघश्च पुष्पमेघः । यद्वा पुष्पाणां मेघः पुष्पमेघः । अपुष्पमेघः पुष्पमेघः सम्पद्यमानः कृतः पुष्पमेघीकृतः । पुष्पमेघीकृतः आत्मा शरीरं यस्य येन वा सः पुष्पमेघीकृतात्मा । 'आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु' इति विश्वलोचने. व्योमगङ्गाजलार्द्रैः – moistened with the waters of the heavenly Ganges. The Ganges, being originated from the top of the Himavat mountain, which, according to the Jain scriptures, is taller than the region of the sky where the clouds float, is called व्योमगङ्गा. The cloud, having its body changed into flowers, cannot

have water to moisten the flowers and so, it has to use the water of the Ganges for moistening the flowers. The demigod, being ignorant of the fact that the sage is not an ordinary sage but a Jain Tirthakara who never worships other Tirthakaras even, asks the great sage to perform worship of an ordinary diety, स्कन्द.

**Stanza 32** — अजं — who has got rid of next birth. न विद्यते जा उत्पत्तिर्यस्य सोऽजः । जा — birth; rebirth. 'जः स्याज्जविनि जोद्भूतौ' इति विश्वलोचने. अग्र्यम् — excellent. हुतवहमुखे — found inherent in the whole body of fire. हुतं वहतीति हुतवहः ।. The word हुत, being the object of the verb वहति, ought to have the termination अण् affixed to it under the rule 'कर्मण्यण्', but as the root वह् belongs to the पचादिगण which is an आकृतिगण, the termination अच् is affixed to it. The following extract from सिद्धान्तकौमुदी supports the above-given explanation. 'जारभरा । श्वपचा । अनयोः 'कर्मण्यण्' प्राप्तः । The words जारभरा and श्वपचा are explained as — जारं बिभर्ति, श्वानं पचतीति विग्रहः । Mallinatha explains this as — 'वहतीति वहः । पचाद्यच् । हुतस्य वहः हुतवहः वह्निः । तस्य मुखे । '. The word मुख must be taken to imply all other limbs and the body even of the fire, for fire does not possess lustre in one part only but in the whole of its body. वासवीनां चमूनाम् — of the earthly living beings. वसूनि धनानि सन्त्यस्यामिति वासवी । This word resembles the word वसुन्धरा. The termination अण् is affixed to the word वसु under the rule 'ज्योत्स्नादिभ्योऽण्' and the termination ङी is affixed to the word वासव under the rule 'इगुपटिड्ढाणञ्—'. We must remember that the words of the ज्योत्स्नादि group are प्रयोगगम्य. चमति अन्नोदकं सेवते इति चमूः । चमूः — a living being. Here the औणादिक termination ऊ is affixed to the root चम् (— to eat) under the rule 'कृषिचमितनिधनिसजिखर्जिभ्य ऊः'. नवशशिभृता दिवा — by the sky carrying the glorious moon. नवः प्रशस्तश्चासौ शशी च नवशशी । तं बिभर्तीति नवशशिभृत् । क्विप् । तया । This adjective implies that though the sky carries the moon, it maintains also the lustre which surpasses that of heavenly gods. The

lustre referred to here is that lustre which emanates from the Sun, for it is this lustre by which we can see insects and protect those. अत्यादित्यं = surpassing that of gods ( heavenly beings ). आदित्यान् अमरान् अतिक्रान्तं अत्यादित्यम् । This is a प्रादितत्पुरुष compound formed under the rule 'प्रात्यव –'. भवतात् – be transformed into, have that. This is a second person singular form of the Imperative derived under the rule 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्'. The Nirnayasāgara edition reads भविता instead of भवतात्. If भविता is taken as a verbal form, it cannot agree with त्वम्, for it is derived by affixing the termination of the third person singular of the First Future. If it is taken as a present participle, derived from the root भू, it does not agree with the meaning of the tanza. This present participle may possibly be taken to imply 'near future' under the rules 'वर्तमानसामीप्ये वर्तमानवद्वा' and 'कृदन्तं धातुत्वं न जहाति'.

**Stanza 33** — गलितं – dropped down. ज्योतिर्लेखावलयि – possessing circles formed by streaks of lustrous colours. ज्योतिषां तेजसां लेखाः रेखाः राजयो वा ज्योतिर्लेखाः । 'लेखा रेखाराजीलिपिष्वपि' इति विश्वलोचने । तासां वलयानि मण्डलाकाराः अस्य सन्तीति ज्योतिर्लेखावलयि । Here, the possessive termination इन् is affixed to the word ज्योतिर्लेखावलय under the rule 'अतोऽनेकाचः'. भवानी – the wife of भव ( ईश ), the presiding diety of the north-east. भवस्य ईशाख्यस्य उत्तरपूर्वदिक्पतेः पत्नी भवानी. कुवलयदलप्रापि – (1) coming into contact with a blue lotus· (2) where a petal of a lotus is placed. (3) coming into contact with her eye resembling a petal of a lotus. (1) कुवलयस्य कमलस्य दलं कुवलयदलम् । तत् प्राप्नोतीति कुवलयदलप्रापि । (2) कुवलयदलं प्राप्नोति यत्र सः कुवलयदलप्राप् । क्विप् । तत्र कुवलयदलप्रापि कर्णे । (3) कुवलयदलमिव कुवलयदलम् । कुवलयदलाकारनेत्रमित्यर्थः । 'देवपथादिभ्यः' इतीवार्थस्य कस्योप् । 'युक्तवदुपि लिङ्गसङ्ख्ये' इति युक्तवाल्लिङ्गसङ्ख्ये । कुवलयदलं कमलदलायतं नेत्रं प्राप्नोति इति कुवलयदलप्रापि । When the third explanation is accepted, the adjectival compound is to be construed with बर्हम्. श्रुतिपथसुखं –

pleasing to the ears. श्रुत्योः श्रोत्रयोः पन्थाः श्रुतिपथः । The termination अत् is affixed to the word पथिन्, standing at the end of a compound, under the rule 'ऋक्पूरब्धूःपथामानक्षे' / 'ऋक्पूरप्पथोऽत्'. श्रुतिपथस्य श्रोत्रविवरस्य सुखं सुखकरं श्रुतिपथसुखम् । प्रतिविकुरुते – gives out crackling sounds in response (to your thundering sounds). Here, the peacock is described as the conveyance of the god Skanda.

**Stanza 34**— सकलजगतां पावकात् सद्धर्मात् लब्धजन्मा – come into being from (owing to) excellent righteousness purifying all the worldly living beings. पुनातीति पावकः । Here, the termination ण्वु (अक) is affixed to the root पू under the rule 'ण्वुतृचौ'. सँश्चासौ धर्मश्च सद्धर्मः । तस्मात् । लब्धं प्राप्तं जन्म येन सः लब्धजन्मा । प्रीत्या – delightfully. उचितां – proper, deserving. सत्सपर्यां – a good worship. सती समीचीना सपर्या पूजा सत्सपर्या । ताम् । 'सपर्याश्चार्हणा समाः' इत्यमरः । हरशशिरुचा – by the lustre of the captivating moon. शशिनः चन्द्रमसः रुक् उद्योतः शशिरुक् । हरा मनोहरा चासौ शशिरुक् च हरशशिरुक् । तया । हरत्यघं दुःखमिति हरा । पचाद्यच् स्त्रियां टाप् च । 'पुंवद्यजातीयदेशीये' इति पुंवद्भावः । तया हरशशिरुचा । यद्वा हरस्य पूर्वोत्तरस्याः दिशः स्वामिनः यः शशी तस्य रुचा कान्त्या । ज्योत्स्नयेत्यर्थः । धौतापाङ्गं – having the angles of (his) eyes rendered bright. धौतौ धवलीकृतौ अपाङ्गौ नेत्रान्तौ यस्य सः । तम् । 'अपाङ्गौ नेत्रयेरन्तौ' इत्यमरः । पावकेः – of the offspring of the purifier. पावकस्य शोधकस्य धर्मस्य पुत्रापत्यं पावकिः । 'इञतः' इत्यपत्यार्थे इञ् । तस्य ।

As righteousness purifies souls that are कर्मबद्ध, it is called पावक. As Skanda's being born as a god was due to his being righteous in his former birth, he is described as the son of पावक, the purifying righteousness. Here, the word पावक, having अ at its end, has the अपत्य termination इञ् (इ) affixed to it under the rule 'इञतः'. अद्रिग्रहणगुरुभिः – deepened on account of being reverberated by the mountain (Devagiri). अद्रेः देवगिरेः ग्रहणेन गह्वरे सङ्क्रमणेन गुरुभिः गौरवं प्राप्तैः । The thundering sound of the cloud, being taken over by the caves of the mountain, would be deepened. नर्तयेथाः – you should cause to

dance. The verb नृत्, which is an intransitive verb, has to be conjugated in the Parasmaipada when the termination of the causal is affixed to it, under the rule 'नाणौ घेः प्राणिकर्तृकाण्णेः' owing to its subject being a living being. Similarly, under the rule 'चल्यद्यथात्', the root नृत्, having the termination of the causal affixed to it, as it implies चलनक्रिया, has not to be conjugated in the Parasmaipada. But as this root is specially mentioned by the rule 'पादम्याङ् –' this root is to be conjugated in the Parasmaipada, when the termination of the causal is affixed to it.

**Stanza 35**— हृद्ये – beautiful. हृदयस्य हितं सुखकरं हृद्यम्। हृदय, being a part of the body of a living being, the termination य, implying the sense 'wholesome', is affixed to it under the rule 'प्राण्यङ्गरथखलयवमाषवृषपत्रहातिलाद्यः' and is, owing to its having the termination य affixed, changed to हृत् under the rule 'हृदयस्य हृल्लेखाण्यलासे'. विपुले – (1) expansive, (2) deep. लब्धाभिख्यं – which has won the name. लब्धा प्राप्ता अभिख्या सञ्ज्ञा विख्यातिर्वा येन सः। तम्। भुवनजनतामाननीयम् – worthy of being worshipped or honoured by the crowds of people of the world. जनानां समूहः जनता। The termination तल् ( ता ) is affixed to the word जन in the sense of 'crowd' under the rule 'गजग्रामजनबन्धुसहायात्तल्'. भुवनानां जगतां जनता भुवनजनता। तया तस्याः वा माननीयं पूज्यम्। शरवणभवम् – springing up from a lake where water is drunk or where शर, a kind of grass (growing in water), has grown. शरः तृणजातिविशेषः अस्ति अस्मिस्तत्। 'ओऽभ्रादिभ्यः' इत्यों मत्वर्थीयः। शरं सशरं वनमुदकं यस्य तत् शरवणं। तत्र शरवणे सरसि भवः जन्म यस्य सः। तम्। पक्षे – शृणाति आत्मगुणान् हन्ति इति शरः। आत्मगुणघातकं कर्मेत्यर्थः। शराः अष्टविधकर्माणि। वनुते जयति इति वनः। पचाद्यच्। शराणां वनः विजेता शरवणः। तस्मात् भवः जन्म यस्य सः। शरवणभवः – born owing to righteousness which destroys Karmans. This compound may also be explained as – शरं जलं वन्यते सेव्यतेऽत्र शरवणं। 'शरं वनं कुशं नीरं तोयं जीवनमव्विषम्' इति धनञ्जयः। यद्वा शराणां उदकानां वनं शरः शरवणम्।

The न of the word वन, which is preceded by the word शर, is changed to ण under the rule 'प्राग्रेऽन्तर्निःशरेक्षुप्लक्षपीयूक्षाकार्श्याम्रखादिरात्'। तत्र भवतीति; तत्र भवः जन्म यस्येति वा शरवणभवः। तम्। Mallinatha dissolves this compound as – शरा बाणतृणानि। 'शरो बाणे बाणतृणे' इति शब्दार्णवे। तेषां वनं शरवणम्। 'प्रनिरन्तःशर –' इत्यादिना णत्वम्। तत्र भवो जन्म यस्य तं शरवणभवम्। 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः। अवर्ज्योऽगतिकत्वादाश्रयणीयः इत्यर्थः। उल्लङ्घिताध्वा – one who made journey of some length. उल्लङ्घितः अतिक्रान्तः अध्वा मार्गः येन सः। उल्लङ्घयितुमारब्धः उल्लङ्घितः। आद्यकर्मणि क्तः। जलकणभयात् – through fear of the drops of water. जलस्य कणाः बिन्दवः जलकणाः। तेभ्यः भयम्। तस्मात्। वीणिभिः – possessing lutes. वीणाऽस्याऽस्तीति वीणी। 'व्रीह्यादिभ्यः' इति इन्। Here, the termination इन् is affixed to the word वीणा under the rule 'व्रीह्यादिभ्यः'. सिद्धद्वन्द्वैः – by the couples of the Siddha gods. सिद्धानां देवविशेषाणां द्वन्द्वानि युगलानि सिद्धद्वन्द्वानि। तैः। मुक्तमार्गः – having path left unclosed. मुक्तः परिहृतप्रतिबंधः कृतः मार्गः अध्वा यस्य सः।

**Stanza 36** — अविरलगलन्निर्झरान्तर्मलाम् – possessing dirt in her stream owing to the rivulets (or streams) incessantly pouring into her. अविरलं सततं गलद्भिः प्रपतद्भिः निर्झरैः प्रपातैः प्रस्रवणैर्वा अन्तः मध्ये-प्रवाहं मलः जम्बालादिरूपः यस्याः सा। ताम्। सुरभितनयालम्भजां – come into being owing to the slaughter of the daughters of Surabhi. सुरभेः कामधेनोः तनयाः सुताः सुरभितनयाः। गावः इत्यर्थः। तासां आलम्भात् विशसनात् जायते इति सुरभितनयालम्भजा। ताम्। जनवदनजां – spreading through the mouths of people. जनानां वदनानि मुखानि जनवदनानि। तेभ्यो जायते इति जनवदनजा। ताम्। स्रोतोमूर्त्या परिणतां – bringing itself into the shape of a river. स्रोतसः प्रवाहस्य मूर्तिः शरीरं स्रोतोमूर्तिः। तया। स्रोतःशरीराकारेणेत्यर्थः। रन्तिदेवस्य – रन्तिदेव is the name of a king of the lunar race. He was the sixth king in descent from Bharat according to Hindu mythology. Hindu mythology describes him as a very pious and benevolent king. He had spent his enormous wealth in performing

sacrifices. The number of animals slaughtered by him in sacrifices was so great that a river of blood originated from their hides. The river was called चर्मण्वती. He slaughtered animals also for use in his kitchen. 'अथ प्रीतो राजा पशुनिवहमालभ्य विधिना, बहूनीजे यज्ञान्बहुमतिपदं भू-दिविषदाम्। विशस्तानां तस्यां मखभुवि पशूनामयुतशः, स्रवन्ती सस्यन्दे क्षतजविसरैश्चर्मगलितैः। चर्मण्वतीति तव कीर्तिरनन्तकीर्तेः शश्वत्पुनातु धरणीं सरिदात्मनेति।' इति रन्तिदेवचरिते।. Sambara means to say that the Charmanvati, being infamy incarnate of king रन्तिदेव, should be washed by the cloud and purified so that she should be treated by people as fame incarnate of the king.

**Stanza-37**— शार्ङ्गिणः – of Krsna. शृङ्गस्य विकारः शार्ङ्गम्। शार्ङ्गम् – a product of horn. Here, the termination अण्, implying the sense of 'product, modification,' is affixed to the word शृङ्ग under the rule 'तस्य विकारः'. शार्ङ्गमस्यास्तीति शार्ङ्गी। Here, the possessive termination इन् is affixed to the word शार्ङ्ग under the rule 'अतोऽनेकाचः'. शार्ङ्गी – one who wields a product of horn (i. e. a bow). Krsna wielded this bow and so he is called शार्ङ्गी. वर्णचौरः – the robber of the complexion. वर्णस्य चौरः वर्णचौरः।. मध्येजलं – in the water. जलस्य मध्ये मध्येजलम्। This is an Avyayibhava compound formed under the rule 'पारेमध्येऽन्तःस्तया'. उपचिताम्भोनिकाये – in the pool formed by accumulated water. उपचितानां अम्भसां निकायः संहतिः उपचिताम्भोनिकायः। तस्मिन्। निचीयते इति निकायः। Here, the termination घञ्, implying राशीकरण (उपसमाधि), is affixed to the root चि and the letter च is changed to क under the rule 'चित्यावासांगोपसमाधौ च कः'. कृष्णाजिनमदहराम् – depriving the hide of a black antelope of its pride. कृष्णं कालवर्णं च तदजिनं चर्म च कृष्णाजिनम्। तस्य मदं गर्वं हरतीति कृष्णाजिनमदहरा। ताम्। छायाम् – reflection. 'छाया स्यादातपाभावे सत्कान्त्युत्कोचकान्तिषु। प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने।

चर्मण्वती इति सुतरां युक्तम् – the name Charmanvati given to that river is absolutely deserving. चर्मन् – (1) a shield, (2) a water bag. In marāthi, the word चर्मन् meaus ' पखाल, मोट '. The stanza implies that the river, as she possesses the reflection of the cloud, resembling a shield or a water-bag used for drawing water form a well, deserves to be called चर्मण्वती.

**Stanza 38** — राहोः सवर्णे – possessing colour or complexion similar to that of Rahu. समानः वर्णः कान्तिः यस्य स सवर्णः । The word समान, when followed by words of धर्मादि class, is changed to स under the rule ' समानस्य धर्मादिषु '. ज्योत्स्नाविसरविमलं – as transparent as (or transparent on account of ) the diffusion of the moonlight. ज्योत्स्नायाः विसरवद् विसरेण वा विमलं विगतमलम् । निर्मलमित्यर्थः । Here, the word ज्योत्स्नाविसर, the standard of comparison, is compounded with the word विमल, implying the common property, under the rule ' सामान्येनोपमानम् '. नभोगाः – sky-wanderess. नभसा विहायसा गच्छन्तीति नभोगाः । दुकूलोत्तरीयम् – a silken white garment, upper garment. दुकूलं – a silken garment. दुकूलः – a thin garment. उत्तरीयम् – an uppe garment. ' दुकूलमद्वयोः क्षौमे दुकूलः सूक्ष्मवाससि ' इति विश्वलोचने. The current of the river is compared with a white garment having its interior part possessing dark colour owing to its interior surface having the dark-coloured body of the cloud reflected in it.

**Stanza 39** — विद्युद्वर्ध्रीविततवपुषम् – with the body encircled with a leathern thong in the form of lightning. विद्युत् सौदामन्येव वर्ध्री नद्ध्री विद्युद्वर्ध्री । ' वर्धते दीर्घीभवति चर्मरज्जुत्वाद्वर्ध्री ' इति क्षीरस्वामी । तया विशेषेण ततं व्याप्तं वपुः शरीरं यस्य सः । तम् । विद्युद्वरत्रासंव्याप्तदेहमित्यर्थः । ' नद्ध्री वर्ध्री वरत्रा स्यात् ' इत्यमरः । कालिकाकर्बुराङ्गम् – with body darkened like smoke. कालिकया काष्ण्र्येण कर्बुरं चित्रमङ्गं शरीरं यस्य सः । तम् । ' चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ' इत्यमरः । यद्वा कालिकेव रोमावलीव, वायसीव, मेघजालमिव, धूम इव, नवनीरद इव वा कर्बुरं शबलं अङ्गं यस्य सः ।

तम् । कृष्णवर्णकायमित्यर्थः । कालिका – ( 1 ) a row of hair, ( 2 ) a female crow; ( 3 ) an assemblage of clouds; ( 4 ) smoke; ( 5 ) a new cloud› आमन्द्रध्वनितसुभगम् – charming owing to rumbling sounds of thundering• आ ईषत् मन्द्रं गम्भीरं आमन्द्रम् । 'मन्द्रस्तु गम्भीरे' इत्यमरः । आमन्द्रध्वनितेन सुभगः आमन्द्रध्वनितसुभगः । तम् । विमुक्ताम् – sustained. शितिं – black. 'शिती धवलमेचकौ' इत्यरः । 'शिञ् निशाने, मेचकः कृष्णः' इति क्षीरस्वामी । दृतिं – a leathern bag meant for drawing water. गगनगतयः – the sky-wanderers. गगने विहायसि गतिः गमनं येषां ते गगनगतयः । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । दृष्टीः आवर्ज्य – changing the direction of their eye-sight. The sky-wanderers as. Śambara says, will look upon the cloud, floating in the sky, as a leathern bag meant for drawing water from a well.

**Stanza 40** — शशधरकरस्पर्धिनम् – rivalling with the rays of the moon. शशधरस्य क्षपाकरस्य करैः किरणैः स्पर्धते साम्यमातनुते इति शशधरकरस्पर्धी । तम् । क्षपाकरकराकारसदृशमित्यर्थः । कुवलयश्यामभासि – possessing colour or complexion as dark as that of a blue lotus. कुवलयं नीलकमलम् । तदिव श्यामा नीला कुवलयश्यामा । Here, the word कुवलय, the standard of comparison, is compounded with the word श्याम, implying the common property, under the rule 'सामान्येनोपमानम्'. कुवलयश्यामा भाः रुक् यस्य सः कुवलयश्यामभाः । तस्मिन् । 'भाः प्रभावे रुचि स्त्रियाम्' इति विश्वलोचने । अध्यासीने – hanging over. अध्यासीन, being a कृदन्त form and a कृदन्त form being treated as a root under the rule 'कृदन्तं धातुत्वं न जहाति', governs the Accusative case (तत्प्रवाहं) under the rule 'कर्मवाधेः शीङ्स्थाऽऽसः'. स्थूलमध्येन्द्रनीलम् – having a big sapphire at the centre. स्थूलः महाकायः मध्यः मुक्तागुणमध्यदेशस्थितः इन्द्रनीलः मणिविशेषः यस्य सः । तम् । 'मध्यं न्याय्येऽवकाशे च मध्यं मध्यस्थिते त्रिषु' इति विश्वलोचने । अनिमिषाः – gods. 'सुरे मत्स्येऽप्यनिमिषः' इति विश्वलोचने । अग्रात् – from the uppermost part of the sky. ध्रुवं – certainly. The stream of the river, having the body of the cloud possessing colour

dark like that of a lotus, reflected in itself, would be looked upon as a necklace. having a big sapphire at its centre, worn by the earth.

**Stanza 41** — सलिलविहृतिं – a sport in water. सलिले जले विहृतिः विहारः क्रीडा सलिलविहृतिः। ताम्। व्योममार्गानुसारी – moving on the heavenly way. व्योम्नि व्योम्नः व्योमैव वा मार्गः व्योममार्गः। तमनुसरतीति व्योममार्गानुसारी। प्रजविपवनोद्धूतवीचीचयानां – possessing multiudes of waves roused up by forcible wind. प्रकृष्टः जवः वेगः प्रजवः। प्रजवः प्रकृष्टो वेगः अस्य अस्तीति प्रजवी। Here the word प्रजव, haviug अ at its end and possessing many vowels, has the termination इन् affixed to it under the rule 'अतोऽनेकाचः'. प्रजवी वेगवांश्चासौ पवनश्च प्रजविपवनः। तेन प्रजविना वायुना उद्धूताः उत्कम्पिताः निर्मापिता वा वीचीनां उल्लोलकल्लोलानां चयाः समूहाः यत्र। तेषां वाराम्। 'प्रजवी जवनो जवः' इत्यमरः। परिचितभ्रूलताविभ्रमाणाम् – well-aquainted (i. e. intimately acquainted) with the movements like those of the creeper-like eye-brows. भ्रुवः लता इव। As the word लता does not imply a common property and as it is a standard of comparison, the word भ्रू, the subject of comparison, is compounded with the word लता under the rule 'व्याघ्रादिभिरुपमेयोऽतद्योगे'. भ्रूलतानां विभ्रमाः विलासाः भ्रूलताविभ्रमाः। परिचिताः विज्ञाताः अभ्यस्ताः वा भ्रूलताविभ्रमाः याभिः ताः। तासाम्। यद्वा परिचिताः सर्वजनविज्ञाताः भ्रूलतानां विभ्रमाः इव विभ्रमाः यासां ताः। तासाम्। वाराम् – of the waters. The word वार् possesses neuter as well as feminine gender. पुण्याम् – charming. 'पुण्यं तु सुकृते धर्मे त्रिषु मध्यमनोज्ञयोः' इति विश्वलोचने.

**Stanza 42** — उदक् – in the northern direction. The word उदक्, on account of its having अञ्च् at its end, cannot have the termination अस्तात् affixed to it under the rule 'अञ्चेर्लुप्,' though it is to be affixed under the rule 'दिग्भ्यो वाक्केभ्योऽस्तात् दिग्देशकाले'. Even the termination एन which is affixed under the rule 'वैनोऽदूरेऽकायाः', is not to

be affixed to this word. 'अञ्च्यन्ताद्दिक्शब्दादनभिधानान्न भवति।' (महावृत्ति on IV–1–99). अनुवनं – in the forest. तीरभाजाम् – grown on the bank. तीरं भजत इति तीरभाक्। तेषां तीरभाजाम्। उत्फुल्लानाम् – bearing full-blown flowers. ततमधुलिहाम् – having bees diffused in them. तताः प्रसृताः मधुलिहः भ्रमराः यासु ताः। तासाम्। 'विसृतं विस्तृतं ततं' इत्यमरः। मुक्तधारम् – pouring rain incessantly. मुक्ताः अप्रतिबद्धाः धाराः जलसम्पाताः यस्मिन्कर्मणि। This is an Adverbial compound. सीतापूरम् – so as to fill the furrows cut in the soil by ploughs to their utmost capacity. सीताः हलकृष्टाः भूमयः यावता जलेन पूर्णाः भविष्यन्ति तावत्। 'सीता तु जानकीव्योमगङ्गालाङ्गलवर्त्मसु' इति विश्वलोचने। The root पूर् (10 u.), being preceded by its object सीता, has the termination णमुल् affixed to it under the rule 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्'. The verb पूरयति, having णमुल् affixed to it under this rule, connotes the quantity of rain found by measuring by means of the measure implied by its object. पक्ष्मोत्क्षेपात् – owing to lifting up of the eye-lashes. पक्ष्मणां नेत्रलोम्नां उत्क्षेपः उन्नमनं पक्ष्मोत्क्षेपः। तस्मात्। उपरिविलसत्कृष्णशारप्रभाणाम् – of the women (of Dasapur) having their dark and variegated lustre shooting up from the eyes. उपरि लोचनलोम्नां उत्क्षेपात् ऊर्ध्वभागे विलसन्त्यः कृष्णशाराः प्रभाः यासां ताः। तासाम्। दशपुरवास्तव्यानां स्त्रीणामित्यर्थः। कृष्णाश्च ताः शाराः कृष्णरक्तसिताश्च कृष्णशाराः। 'कृष्णरक्तसिताः शाराः' इति यादवः। 'शारस्तु शबले वाते' इति विश्वलोचने। मानात् – on being honoured. मानं सम्मानं पूजां वा प्राप्य। The object of the ल्यबन्त form प्राप्य possesses the Ablative case when the ल्यबन्त is dropped, under the rule 'ल्यब्लोपे कर्मण्यधिकरणे च'. 'मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे। मानः स्यादपि पूजायां' इति विश्वलोचने। जातहार्दैः – become delightful, happy. जातं हार्दं प्रेम आनन्दो वा यस्य सः। The word हृदय, not compounded with any other word, has the termination अण् affixed to it under the rule 'हृदयपुरुषादसे' and is changed to हृद् when it has the termination अण् affixed to it under the rule 'हृदयस्य हृल्लेखयदण्लासेषु'.

**Stanza 43** — कृष्णशारोदराणां — black and variegated in the interior. कृष्णं च तत् शारं च कृष्णशारम्। कृष्णशारं उदरं मध्यभागः येषां ते। तेषाम्। This way of dissolving the compound is possible only when this compound is accepted as an Adjective qualifying पथिकवनितालोचनोल्लासकानाम्. When this is accepted as qualifying सुदृशाम्, meaning 'of beautiful eyes,' this compound is to be dissolved as– कृष्णशारं उदरं मध्यभागः यासां ताः। तासाम्।. Though the word उदर, standing at the end of this compound, forms part of the body, the स्त्री termination ङी which is optionally affixed under the rule 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (स्वाङ्गान्नीचोऽस्फोङः), is not affixed to it. कुन्दक्षेपानुगमधुकरश्रीमुषाम् — depriving (lit. robbing) the bees following the tossings of the Kunda-flowers or lotuses of their beauty. कुन्दानि कुन्दकुसुमानि कमलानि वा। तेषां क्षेपः इतस्ततश्चलनम्। तमनुगच्छन्तीति, तस्याऽनुगाः अनुसारिणः वा कुन्दक्षेपानुगाः। ते च ते मधुकराः मधुलिह्श्च। तेषां श्रीः सौन्दर्यं। तां मुष्णन्तीति। क्विप्। तेषाम्। This compound, being adjectival, qualifies पथिक. This may be taken as qualifyng सुदृशाम् also. कुन्दं — a Kund-flower. कुन्दः — a lotus. In my opinion the word कुन्द should be taken to mean 'a lotus' and not 'a Kunda–flower, for bees are described as not hovering over Kunda-flowers, for gathering honey. पथिकवनितालोचनोल्लासकानाम् — of the glances or sportive movements of the eyes of the wives of the travellers. पथिकाः पन्थानं प्रयान्तः। पथिकानां प्रोषितत्वात्पथि चरतां वनिताः स्त्रियः पथिकवनिताः। तासां लोचनानि नयनानि। तेषां उल्लासकाः विलासाः प्रक्षेपाः प्रभाः वा। तेषाम्। उल्लास एव उल्लासकः। तेषाम्। In my opinion the following interpretation is preferable to the one given above. It runs thus– 'of the sportive movements of the eyes of the travelling women.' पन्थानं गच्छन्ती स्त्री पथिकी — a travelling woman. पथिक्यश्च ताः वनिताश्च पथिकवनिताः। पथिक्यः स्त्रियः इत्यर्थः। This being a कर्मधारय compound, the termination ङी is not to be affixed to the word पथिक under the rule 'पुंवत्कर्मधारयजातीयदेशीयेषु'. पथिकवनितानां लोचनानां उल्लासकाः विलासाः

पथिकवनितालोचनोल्लासकाः । तेषाम् । When this compound is taken as an Adjective qualifying सुहृशाम् – this is dissolved as– °लोचनानां उल्लासका विलासाः यासु । तासाम् । This compound may also mean – 'brightening or cheering up the eyes of the travelling women.' उल्लासयतीति उल्लासकः । आत्मबिम्बम् – your round form. लक्षीकुर्वन् – making the object of; making the target of. प्राणनाथोपयानप्रत्याश्वासात् – by inspiring confidence in them regarding the arrival of their lovers or beloved husbands. प्राणनाथस्य प्रियकरस्य उपयानं प्रत्यागमनं समीपागमनं वा । तस्मिन् प्रत्याश्वासः विश्वासः । तस्मात् । तमुत्पाद्येत्यर्थः ।

**Stanza 44** – हृदिशयस्य – of the god of love. हृदि हृदये मनसि वा शेते हृदिशयः । The termination अ is affixed to शी on account of its being preceded by a noun हृत् possessing Locative case, under the rule 'आधारे'. 'हृच्चित्तवुक्कयोः क्लीबं' इति विश्वलोचने । जैत्रपूणाम् – the arrows by means of which success is achieved. दशपुरवधूनेत्रकौतूहलानाम् – of the glances cast by the ladies of the city of Daśapur. दशपुरं रन्तिदेवस्य राजधानी । तत्र विद्यमानानां वधूनां स्त्रीणां नेत्रकौतूहलानां नेत्राभिलाषाणाम् । साभिलाषदृष्टीनामित्यर्थः । यद्वा दशपुरनिवासिस्त्रीजननेत्राभिव्यञ्जितविस्मयानामित्यर्थः । दशपुरवधूनेत्रकौतूहलानां आत्मबिम्बं पात्रीकुर्वन् – making your body an object quite proper for exciting wonder that is expressed by the eyes of the ladies residing in the city of Daśapur, the capital of king Rantideva. दशपुर is an ancient city. By research scholars it is identified with modern Mandasor which is situated in the western region of Mālwā. अध्वनीनः – moving fast. अध्वानं अलंगामी अध्वनीनः । The termination ख ( ईन ) is affixed to the word अध्वन् in the sense 'going after, following in proper manner' under the rule 'खश्चाध्वानं च'. अनतिचिरयन् – not making any delay.

**Stanza 45** – ब्रह्मावर्त – is that region which is to the north-west of Hastināpur and is between the Sarasvati and the Dṛśadvati. It is near the Kurukshetra where the great Mahābhārata war was

fought. सरस्वतीदृशद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ [ मनु ].

**Stanza 46** — क्षतजकलुषाः — rendered turbid by the blood. क्षताद्व्रणाज्जायते इति क्षतजम् । लोहितमित्यर्थः । तेन कलुषाः आविलाः, क्षतजकलुषाः । 'कलुषं किल्बिषे क्लीबमाविलं कलुषे त्रिषु' इति विश्वलोचने । अमोघशस्त्राः — carrying unfailing weapons. अमोघानि सफलानि शस्त्राणि आयुधानि येषां ते अमोघशस्त्राः । 'मोघस्तु निष्फले दीने' इति विश्वलोचने । प्रतिहननतः पापभीताः — afraid of the sin incurred by slaughtering. प्रतिहननतः on account of slaughtering. प्रतियुयुधिरे — made a counter-attack. क्षत्रप्रधनपिशुनम् — indicative of the battles fought by the Kṣatriyas. क्षत्राणां क्षत्रियाणां प्रधनं युद्धं क्षत्रप्रधनम् । 'प्रधनं दारुणे सङ्ख्ये' इति विश्वलोचने । तस्य पिशुनं सूचकं क्षत्रप्रधनपिशुनम् । 'पिशुनो नारदे पुंसि खलसूचकयोस्त्रिषु' इति विश्वलोचने ।

**Stanza 47** — धारापातैः — by means of discharges of showers. धाराणां जलधाराणां पाताः उत्सर्गाः धारापाताः । तैः । गाण्डीवधन्वा — Arjuna. गाण्डी पर्वाऽस्यास्तीति गाण्डीवम् । The possessive termination व is affixed to the word गाण्डी under the rule 'गाण्ड्यादिभ्यः'. गाण्डीवं धनुरस्य गाण्डीवधन्वा । In the Bahuvrihi compound the word धनुस् is placed at the end of the compound only when the compound implies 'a designation' under the rule 'धनुः खौ'. This implies that when the compound implies 'a designation,' the termination अनङ् ( अन् ) also is affixed to the word धनुस्. शितशरशतैः — by means of hundreds of sharpened arrows. शिताः तीक्ष्णाः च ते शराः बाणाः च शितशराः । तेषां शतानि । तैः । राजन्यानां — of the warriors. राज्ञः अपत्यं राजन्यः । The termination य, implying 'race' is affixed to the word राजन् under the rule 'जातौ राज्ञः'. When the termination य is affixed to the word राजन्, अन् of the word is not dropped under the rule 'येऽचि'. 'मूर्धाभिषिक्तो राजन्यः बाहुजः क्षत्रियो विराट्' इत्यमरः । प्रतिभयभटस्तम्भनैः — by the acts of

checking or arresting the advance (or progress) of formidable warriors. प्रतिभयाः भयङ्कराश्च ते भटाः। तेषां स्तम्भनैः अभिमुखमभियानस्य प्रतिबन्धैः। 'भयङ्करं प्रतिभयं रौद्रं तूग्रममी त्रिषु' इत्यमरः। भुवनविदिताम् – wellknown in the whole world. भुवनेन तात्स्थ्यात्तन्निवासिभिर्जनैः विदितां ज्ञाताम्। 'विदितं ज्ञाते' इति विश्वलोचने। वीरक्षोणीं – the land of warriors. व्यतीयाः – you should pass over.

**Stanza 48** — मह्यांनिःस्पृहः – void of aspiration for kingdom (lit. the earth). मह्यां भूमौ निःस्पृहः स्पृहाविकलः। आशावशातीतः इत्यर्थः। विनष्टभूम्यभिलाषः इति भावः। प्रात्तराजर्षिवृत्तः – resorting to the mode of life of a great sage. राजर्षिः – a man of the Ksatriya caste who, by his pious life and austere devotion, comes to be regarded as a sage. राजा ऋषिरिव राजर्षिः। प्रात्त – a past participal derived from प्र + आ + दा by affixing the termination क्त (त) to it. प्रात्तं परिगृहीतं राजर्षेः वृत्तं आचारः येन सः। 'त्रिषु वृत्तं तु चरिते' इति विश्वलोचने। अभिमतरसाम् – giving pleasure that is desired for. अभिमतः अभीष्टः रसः शृङ्गारादिः आनन्दः वा यस्याः सा। ताम्। अभिमतं शृङ्गारादिरसमानन्दं वाऽऽविर्भावयन्तीमित्यर्थः। रेवतीलोचनाङ्काम् – in the form of the eyes of Revati. रेवत्याः लोचने नयने रेवतीलोचने। ते एव अङ्कः लक्षणं यस्याः सा। ताम्। मन्मथीयां – of the god of love. हालाम् – liquor, wine. Here, the eyes of Revati, the wife of Balarāma, are compared with liquor, for like liquor, Revati's eyes intoxicated Balarāma by inspiring passion in his heart. हित्वा – renouncing, having given up. It is implied that Revati was so beautiful that whenever she fell into the range of Balarāma's eyesight, passion was excited in his heart. Balarāma, though extremely attached to Revati, his beloved wife, owing to his being attracted by her beauty, had to give her up, when he had made his mind to get himself initiated into monkhood for getting rid of sin (i. e. Karman.). The words रेवतीलोचनाङ्कां मन्मथीयां हालां हित्वा imply the abandonment

of Revati by Balarāma, who got initiated into monkhood and practised austere penance. भजनीयम् – should be resorted to.

**Stanza 49** — प्रजासु बन्धुस्नेहात् – out of his showing as much affection towards his subjects as shown towards his relatives or brother. बन्धौ बान्धवे इव स्नेहः प्रेम बन्धुस्नेहः । तस्मात् । प्रजानां बान्धवतुल्यत्वात्तासु यत्प्रेम तस्मात् । 'बन्धुर्बंधूभ्रातरि बान्धवे' इति विश्वलोचने । समरविमुखः – averse to take part in the battle. समरे युद्धे विमुखः पराङ्मुखः समरविमुखः । आत्तदीक्षः – got initiated into monkhood. आत्ता गृहीता दीक्षा मुनिधर्मः येन सः ।

**Stanza 50** — सद्भिः तीर्णाः – plunged into by virtuous men or pervaded by the reflexions of stars etc, सन् – (1) a virtuous man; (2) a star etc. पुष्कलाः – excellent. सुप्रसन्नाः – transparent. हृद्याः – pleasing to the heart. कलिमलमुषः – destroying sin committed in this age called Kali. कलिमलं मुष्णन्तीति कलिमलमुषः ।

**Stanza 51** — कुलगिरिभवाः – originating from the principal mountains. कुलगिरौ हिमवति भवः उत्पत्तिः यासां ताः । स्वर्धुनीरूढिभाजः – known by the name 'heavenly rivers.' स्वर्धुनी देवनदी व्योमसरिद्वा इति रूढिं प्रसिद्धिं भजन्ते वहन्तीति स्वर्धुनीरूढिभाजः । The rivers that originate from the mountains, known as कुलगिरिs, topmost in the known world, are known as 'heavenly rivers.' प्रतिनिधितया – owing to their being representatives. The present rivers named the Ganges and the Sinbu, though originating from the Himālayas, represent those rivers originating from the Himavat, because they are smaller in length and breadth than those. कुनद्यः – small rivers. Here, कु implies smallness. अनुकनखलम् – near Kanakhala. Here, अनु, implying 'vicinity,' is compounded with the word कनखल under the rule 'समीपे'. This is an Adverbial compound. शैलराजावतीर्णाम् – falling down from the Himālayas. शैलः राजेव शैलराजः । यद्वा शैलानां राजा शैलराजः । ततः अवतीर्णाऽवःपतन्ती । ताम् । Himalaya, being loftiest of all the mountains

other than the Kulachalas, is called शैलराज. Kanakhala, is a hill near Haradwar.

**Stanza 52**— उपनदिका – a small river resembling the great one. नदीमुपगता उपनदी। अल्पा उपनदी उपनदिका. प्रविश्य – In my opinion the reading अप्रविश्य is preferable to the reading प्रविश्य, for the act of plunging into her water cannot be the cause of her being disregarded by the cloud. This interpretation is supported by the second line of this stanza. This line, therefore, should be translated as – 'you, moving on hurriedly, should not disregard her by avoiding plunging into her water.' आशुगत्वा – moving on hurriedly. आशु शीघ्रं गच्छतीति आशुगत्वा। Here, the termination क्वनिप् is affixed to the root गम् under the rule 'मन्वन्क्वनिब्विचः क्वचित्'. मा उपेक्षिष्ठाः – do not disregard. तीर्थप्रतिनिधिं – the representative of a holy land क्षालनम् – the purifier. Here, the termination अनट् is affixed to the root क्षल् under the rule 'ल्यानड्बहुलम्' to denote the subject of the verb to which it is affixed. कश्मलानाम् – कश्मल – sin, impurity. लोकरूढेः प्रतीताम् – known owing to the belief handed down from the ancestors to posterity. The Ganges, say the mythologists, is the daughter of king Jahnu, who drank her up through anger roused in him by the river by plunging the sacrificial ground into water and reproduced her through his ear. Being reproduced by the king, the river is traditionally called जह्नोः कन्या. सगरतनयस्वर्गसोपानपङ्क्तिम् – the flight of steps to heaven for the sons of Sagar. सगरस्य तनयानां स्वर्गस्य सोपानपङ्क्तिम्। स्वर्गावाप्तिसाधनभूतसोपानपरम्परामित्यर्थः। Sagara's sons, who were reduced to ashes through anger by the sage, Kapila by name, were admitted to heaven after their ashes were purified by the holy waters of the Ganges. Read the following stanza from Bhavabhuti's Uttara-Ramacharitam – तुरगविचयव्यग्रानुर्वीभिदस्सगराध्वरे कपिलमहसामर्षात् प्लुष्टान्पितुश्च पितामहान्। अगणिततनूतापं तप्त्वा तपांसि भगीरथो भगवति तव स्पृष्टानद्भिश्चिरादुदतीतरत्॥ [Act I].

**Stanza 53**—इन्दुलग्नोर्मिहस्ता – having her hands in the form of waves clinging on to the moon. इन्दौ चन्द्रमसि लग्नाः सञ्जातसम्बन्धाः ऊर्मयः कल्लोला एव हस्ताः कराः यस्याः सा । This compound implies that the waves of the Ganges were so lofty that those appeared to be as if touching the moon in the sky. गौरी – possessing or wearing white complexion, white-coloured. Her water being white or pure she is described as गौरी. गौरः श्वेतवर्णः अस्याः अस्तीति गौरी ।. This feminine form is derived by affixing the termination ङी ( ई ) to the word गौर under the rule 'गौरादिभ्यः'. 'गौरः पुंसि निशाकरे । गौरः पीतारुणश्वेत-विशुद्धेष्वभिधेयवत्' इति विश्वलोचने. फेनैः – by the masses of her foam. वक्रभ्रुकुटिरचनां – the crooked formation of eye-brows. भ्रुकुट्योः रचना भ्रुकुटिरचना । वक्रा कुटिला चासौ भ्रुकुटिरचना च वक्रभ्रुकुटिरचना । ताम् । The reading गौरीवक्त्रभ्रुकुटिरचनाम् also is acceptable. गौर्याः गौरवर्णायाः स्त्रियाः वक्त्रे मुखे या भ्रुकुटिरचना स्वपतिपरस्त्रीगामित्वविज्ञानात्सञ्जातामर्षायाः गौरवर्णस्त्रियाः यद्भ्रूभङ्गकरणं तत् । ताम् । The river is compared, on account of her water being white, to a white-complexioned woman and her waves, being crooked, with the crooked eye-brows of the woman. गङ्गादेव्याः – Ganga, according to the Jain seriptures, is the presiding diety of the river. She, it is said, lives where the Ganges falls from the mountain, Himvat. There where the Ganges falls, is an idol of Jina. Upon that idol, the Ganges falls. प्रतिनिधिगतः – assuming a form resembling that of Jina. प्रतिनिधिं प्रतिबिम्बं गतः प्राप्तः प्रतिनिधिगतः । तस्य । शम्भोः – of Jina. 'अर्हत्पिनाकिनौ शम्भू' इति धनञ्जयः । This कृदन्त form is generally explained as शं सुखं भवति अस्मात् इति शम्भुः । It seems that Bhattoji does not agree with this explanation. The extract from कौमुदी 'शम्भुः । अन्तर्भावितण्यर्थोऽत्र भूः' supports what is said above. Read the following extract from तत्त्वबोधिनी – "शं सुखं भावयतीति शम्भुरित्यर्थाभ्युपगमेनाह – अन्तर्भावितेति । शं भवति सुखस्वरूपो भवतीति शम्भुरित्यन्ये । शं भवत्यस्मादिति व्युत्पत्तिस्तु अपादाने डुप्रत्ययाभावा-

चिन्त्येति माघवः । Kshiraswami explains this as – शं भवत्यस्मादिति शम्भुः । मितद्र्वादित्वाड्डुः । In may opinion the explanation शं शुद्धात्मसुखरूपो भवतीति शम्भुः is preferable to शं सुखं भवत्यस्मादिति शम्भुः । केशग्रहणं अकरोत् – took hold of the hair. Here, the word केशग्रहण, implies that the stream of the Ganges fell directly upon the head of the image of lord Jina. Śambarāsura means to say that the Ganges referred to here should be taken as the Ganges described in the Jain scriptures and should be accepted as holy as the one originating from the Himavat mountain. Laugh is poetically treated as white and so the white foam floating on the stream of the river is described as the laugh.

**Stanza 54**— अध्वश्रान्तिं श्लथयितुं – to mitigate exhaustion caused by journey. अध्वन् -- distance traversed or to be traversed. हिमशिलासम्भवम् -- oozing out of the snowy rocks. हिमस्य प्रालेयस्य शिला हिमशिला । तस्याः सम्भवः जन्म यस्य तत् । व्यधिकरणो बसः । तटवनपतत्पुष्पकिञ्जल्कवासैः -- by the smell of the pollens of flowers falling down in the forests grown on her banks. तटे तीरे विद्यमानं वनमरण्यं तटवनम् । तत्र पतन्ति च तानि पुष्पाणि कुसुमानि च तटवनपतत्पुष्पाणि । यद्वा तटवने तटसमीपस्थप्रदेशप्राप्तजले पतन्ति च तानि पुष्पाणि च तटवनपतत्पुष्पाणि । 'शरं वनं कुशं नीरं तोयं जीवनमव्विषम्' इति धनञ्जयः । तेषां किञ्जल्काः केसराः । तेषां वासैः गन्धैः । 'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः । प्राप्तामोदं -- which has attained fragrance i. e. made fagrant. प्राप्तः लब्धः आमोदः सौगन्ध्यं येन तत् । 'सुगन्धिमुदि वाऽऽमोदः' इति विश्वलोचने । अधः प्राप्तमात्रः – the very moment you would be reaching below. प्राप्तमात्रः – when just reached. पश्चार्धलम्बी -- hanging on by (your) hinder part in the sky. लम्बमानपश्चार्धभागः । पश्चादर्धं पश्चार्धम् । पृषोदरादित्वात्साधुः । पश्चार्धेन लम्बते इति पश्चार्धलम्बी । अध्यवस्येः – make up you mind. [Potential second person singular of अधि + अव + सो ]. अध्यवसो -- to determine.

**Stanza 55** — त्वकं – you. Here, the अम् of त्वम् is dropped and अक is affixed to त्व under the rule 'युस्मदस्मदोः सुपोऽभोसि'. तीव्रोदन्याश्रमपरिगतः — distressed by the strong desire to drink water or distressed by excessive thirst and exertion. तीक्ष्णा तीव्रा चासौ उदन्या पिपासा च तीव्रोदन्या। तस्याः श्रमः तृडुत्पन्नदुःखसंवेदनं तीव्रोदन्याश्रमः। यद्वा तीव्रोदन्या च श्रमश्च। तेन ताभ्यां वा परिगतः आक्रान्तः तीव्रोदन्याश्रमपरिगतः। उदकं सद्यः एव पातुमिच्छा उदन्या। 'उदन्या तु पिपासा तृट् तृषा' इत्यमरः। गताध्वश्रमः — having the fatigue of your journey removed or dissipated. गतः विनष्टः अध्वनः श्रमः यस्य सः। विनष्टमार्गक्रमणजातश्रम इत्यर्थः। जातवर्षः — pouring showers of rain. जातः वर्षः वृष्टिः यस्मात् सः। यद्वा जातः इत्यस्यान्तर्भावितण्यर्थत्वेन ग्रहणे जनितः इत्यर्थः। जातः जनितः वर्षः वृष्टिर्येन सः। अच्छस्फटिकविशदम् — pure like the transparent crystal. अच्छः निर्मलश्चासौ स्फटिकश्च अच्छस्फटिकः। तद्वत् विशदं विशुद्धम्। तिर्यक् – in a slanting manner. मध्येगङ्गं — occupying the central part of the Ganges. गङ्गायाः मध्ये मध्येगङ्गम्। This is an Adverbial compound formed under the rule 'पारेमध्येऽन्तस्तया'. ह्रदे — the large and deep pool of water. 'तत्रागाधजलो ह्रदः' इत्यमरः।

**Stanza 56** — अस्थानोपगतयमुनासङ्गमा – having a union with the यमुना brought about at a wrong or a different place. अस्थानं गङ्गायमुनासङ्गमस्थानात् प्रयागाख्याद्भिन्नं स्थानं अस्थानम्। अस्थाने उपगतः प्राप्तः यमुनया सङ्गमः यया सा। Sambara means to say that the Ganges, possessing the image of the cloud moving hurriedly, would look like united with the Yamunā at a place other than the city of Prayāga.

**Stanza 57** — पुण्याम्बूनाम् – with charming waters. पुण्यानि मनोज्ञानि च तानि अम्बूनि जलानि च पुण्याम्बूनि। तेषाम्। पुण्याम्बुभिरित्यर्थः। The reading प्रपूर्णः; being a present participle derived from the root प्र + पूर् by affixing the termination क्त under the rule 'मतिबुद्धि पूजा-

र्थाच' ( जै. २।२।१६६ ) governs the Genitive case under the rule 'क्तस्याधारसतोः'. Read the following – क्तयोगे कर्तरि ता प्राप्ता 'न शित –' इत्यादिना प्रतिषिद्धा भवतीत्यनेन पुनर्विधीयते। चकारोऽनुक्तसमुच्चयार्थः। भृतितरम् – to the utmost capacity. भृतिः भरणम्। 'स्त्रियां क्तिः' इति भावेऽकर्तरि स्त्रियां क्तिः। प्रकृष्टा भृतिः भरणं यथा स्यात्तथा। चर्मपूरं प्रपूर्णः – filled up like a leathern bag meant for holding water, Here, the termination णम् is affixed to the root पूर् on account of its being preceded by its object and follwed by the same root under the rule 'कर्मणि चेवे'. चर्मेव प्रपूर्णः सम्भृतः चर्मपूरं प्रपूर्णः। The rule 'चर्मोदरे पूरेः' is not applicable here, though the root is preceded by its object, as it is followed by the same root पूर्. अनुपादम् – on a hill at the foot of the mountain (i. e. Himavat). This is an Adverbial compound formed under the rule 'ङिः सुप् –'. अनुपादं प्रत्यन्तपर्वते। 'पादोऽस्त्री चरणे मूले तुरीयांशेऽपि दीधितौ। शैलप्रत्यन्तशैले ना' इति विश्वलोचने. नाभिगन्धैः – by the fragrance of the musk of the musk-deer. नाभेः कस्तूरिकायाः गन्धाः नाभिगन्धाः। तैः। 'नाभिः प्रधाने कस्तूर्यां मदे च क्वचिदीरिता' इति विश्वः। सुरभितशिलम् – the rocks of which are perfumed. सुरभिताः सुरभीकृताः सञ्जातसुरभयो वा-शिलाः प्रस्तराः यस्य तत्। Here, the termination णिच् is affixed to the word सुरभि under the rule 'मृदो ध्वर्थे णिज्बहुलम्। This word may be explained as सञ्जातः सुरभिः यासां ताः सुरभिताः। Here, the termination इतः is affixed to the word सुरभि under the rule 'तदस्य सञ्जातं तारकादिभ्यः इतः'.

**Stanza 58** — घनपथोल्लङ्घिकूटम् – having peaks rising above in the sky. घनानां पन्थाः घनपथः। तमुल्लङ्घयतीति घनपथोल्लङ्घि। तत् कूटं शिखरं यस्य सः। तम्। 'द्यौराकाशमन्तरिक्षं मेघवायुपथोऽपि वा' इति धनञ्जयः। उपान्तयन्तम् – calling near. उपान्ते समीपे आह्वयतीति उपान्तयति। उपान्तयतीति उपान्तयन्। तम्। The termination णिच् is affixed to the word उपान्त under the rule 'मृदो ध्वर्थे णिज् बहुलम्' and then the termination शतृ. विधुरुचः – moon-white, moonshiny. विधोश्चन्द्रमसः रुगिव रुग्यस्याः

सा। तस्याः। हिमाङ्कम् — Himalaya by name. हिमं अङ्कः अभिधानं चिह्नं वा यस्य सः। तम्।

**Stanza 59** — आविर्मदकलमयूरारवैः — by the indistinct and charming cracklings of peacocks, given out through joy manifested. आविः प्रादुर्भूतः मदः आनन्दः आविर्मदः। 'प्राकाश्ये प्रादुराविः स्यात्' इत्यमरः। 'मदो मृगमदे मद्ये दानमुद्वर्वरेतसि' इति विश्वलोचने। तेन कलाः मधुराव्यक्ताः आविर्मदकलाः। 'कलस्तु मधुराव्यक्तशब्देऽजीर्णे कलं सिते' इति विश्वलोचने। मयूराणामारवाः मयूरारवाः। आविर्मदकलाः मयूरारवाः आविर्मदकलमयूरारवाः। तैः। कुञ्जे कुञ्जे — in every bower of creepers. घनं — solid. हिमानीं — the masses of snow. उरु हिमं हिमानी। 'हिमानी हिमसंहतिः' इत्यमरः। Here the termination ङी, implying 'massiveness', is affixed to the word हिम to which आन् is added before the termination ङी, under the rule 'हिमारण्यादुरौ'. अध्वश्रमविनयने — (1) for the sake of removing exhaustion of the journey; (2) removing exhaustion of the journey. अध्वनः देशाटनस्य श्रमः खेदः अध्वश्रमः। देशपरिभ्रमणजनितः श्रमः इत्यर्थः। तस्य विनयनं परिहारः अध्वश्रमविनयनम्। Here, the termination अनट् is affixed to विनी to imply 'action' under the rule 'करणाधारे चाऽनट्'. This compound can be dissolved as अध्वश्रमस्य विनयनं परिहर्तृ अध्वश्रमविनयनम्। Here, the termination अनट् is affixed to विनी to imply its subject under the rule 'ल्युनङ्बहुलम्'. This compound, having the word विनयन, meaning 'remover', at its end should be taken to qualify the noun शृङ्गे. शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् — comparable to that of the mud dug up by the white bull of the three-eyed one (i. e. Rudra). त्रिनयनस्य त्र्यम्बकस्य रुद्रस्येशानदिगिन्द्रस्य वृषः वृषभः त्रिनयनवृषः। शुभ्रः धवलवर्णश्चासौ त्रिनयनवृषश्च शुभ्रत्रिनयनवृषः। तेन उत्खातः शृङ्गाग्रविदारितश्चासौ पङ्कश्च। तेन सहोपमेयां उपमातुं योग्याम्। The first न of नयन is not changed to ण undar the rule 'क्षुभ्नादिषु' as the word त्रिनयन is to be included in the 'क्षुभ्नादिगण' which is an आकृतिगण, though the word त्रिनयन is a संज्ञा

and though the word नयन is preceded by the word त्रि, having र् causing न to be changed to ण under the rule 'प्राक्पदस्थात्खौ'. 'अविहितलक्षणः णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः'। [जै. म. ५।४।११७].

**Stanza-60** — सरलस्कन्धसङ्घट्टजन्मा — produced by the friction of the branches of the Sarala (pine) trees. सरलाः पीतदारवः। देवदारुद्रुमाः इत्यर्थः। 'पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः' इत्यमरः। सरलानां स्कन्धाः प्रकाण्डाः महत्यः शाखाः सरलस्कन्धाः। 'स्कन्धः कायप्रकाण्डयोः' इति विश्वलोचने। तेषां सङ्घट्टेनान्योन्यसङ्घर्षणेन जन्म उत्पत्तिः यस्य सः। This compound, owing to its having the word जन्मन् at its end, though a व्यधिकरणबहुव्रीहि, is not to be abandoned, according to वामन who says 'अवर्ज्यो व्यधिकरणो बहुव्रीहिर्जन्माद्युत्तरपदः'। वनविटपिजैः — generated by the trees grown in the forest. वनविटपिभ्यः वन्यवृक्षेभ्यः जाताः सम्भूताः वनविटपिजाः। तैः। सान्द्रैः — clustered. अध्वक्षामम् — emaciated owing to the fatigue of journey. अध्वना मार्गाक्रमणश्रमेण क्षामः क्षीणतनुः अध्वक्षामः। तम्। क्षाम — emaciated. This is a past participle derived from the root क्षै by affixing the termination क्त, the त of which is changed to म under the rule 'क्षो मः'. शैलमार्गाधिरोहात् — by upward movement on the way running through the ranges of the mountion. शैलस्य भूधरस्य मार्गः पन्थाः शैलमार्गः। तत्र तस्य वा आरोहः आरोहणं शैलमार्गाधिरोहः। तस्मात् हेतुभूतात्। शैलमार्गाधिरोहणेनेत्यर्थः। शिथिलिततनुम् — with body enfeebled or unnerved. शिथिलिता शिथिलीकृता तनुः शरीरं यस्य सः। तम्। शिथिलयति शिथिलीकरोति स्म शिथिलिता। औल्लङ्घ्ये — (the way) on which one has to proceed at all events. The termination ञ्य (य), forming a potential participle, is affixed to उल्लङ्घ् to imply the sense 'at all events', under the rule 'ञ्याः'. उल्लङ्घ्यः एवाल्लङ्घ्यः। Though the termination अण् is affixed to the word उल्लङ्घ्य, the meaning of the word remains unchanged. घटयितुं — to propel.

**Stanza-61** — हिमान्या — with the masses of snow. आशृङ्गाग्रम् — from its foot to the uppermost part of its peaks. शृङ्गस्य शिखरस्य

अग्रं अग्रभागः शृङ्गाग्रम्। शृङ्गाग्रं शिखराग्रमभिव्याप्य आशृङ्गाग्रम्। Here, the particle आङ् ( आ ) implies 'complete pervasion or inclusion' under the rule 'आङ्मर्यादाभिविध्योः'. Here, the particle आङ् (आ) is compounded with शृङ्गाग्र, a noun, and an Adverbial compound is formed under the rule 'पर्यपाङ्बहिरञ्चः'. कवचितम् – covered over with an armour. कवचेनाच्छन्नं सञ्जातकवचं वा कवचितम्। The first explanation is possible when the Instrumental case of the word हिमान्या is taken to imply that the word हिमान्या acts as a subject and the second one, when the same case is taken to imply 'a means' (साधन). (1) कवचयति कवचमिव आच्छादयति स्म कवचितम्। 'मृदो ण्वर्थे णिज्बहुलम्' इति णिचि क्तः। (2) सञ्जातं कवचमस्य कवचितम्। 'तदस्य सञ्जातं तारकादिभ्य इतः' इतीतच्। आरूढमूर्तिं – having its body thoroughly pervaded or covered. आ समन्तात् रूढा अध्यासिता मूर्तिर्देहो यस्य सः। तम्। 'मूर्तिः कायेऽपि काठिन्ये मृत्युयाचितयोर्मतम्' इति विश्वलोचने। उपहितरसैः – juicy, possessing juice. उपहितः स्वस्मिन् आहितः रसः जलं यैः। तैः। अत्यक्तार्द्रीभावैरित्यर्थः। ओषधीनाम् – of the plants which perish after yielding crop or fruits. आकीर्णान्तम् – with borders scattered over with. आकीर्णः व्याप्तः अन्तः पर्यन्तदेशः यस्य सः। तम्। 'अन्तो नाशे मनोहरे। स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु' इति विश्वलोचने. सरसगहनम् – possissing beautiful forests. सरसं मनोज्ञं अपरित्यक्तार्द्रीभावं वा गहनं काननं यस्य सः। तम्। उल्काक्षपितचमरीबालभारः – destroying by its flames the large bushy tails of the Chamaris. उल्काः ज्वालाः। 'उल्का ज्वाला' इति क्षीरस्वामी। ताभिः क्षपिताः क्षयं प्रापिताः चमरीणां मृगविशेषाणां बालभाराः कचसमूहाः येन सः। दवाग्निः – sylvan fire. दवः – (1) a forest. (2) a sylvan fire. 'दवो दावश्च पुंस्येव वनेऽपि वनपावके' इति विश्वलोचने। दवाग्निः वनाग्निरित्यर्थः। यद्वा दवः वनपावक एव अग्निः दवाग्निः।

**Stanza 62** — जातवेदाः – fire. सतुहिनवनम् – with forests having (masses of) snow. तुहिनेन तुषारेण सह सतुहिनम्। सतुहिनानि वनानि यस्य सः सतुहिवनः। तम्। प्रालेयाद्रिं – the Himalayas. प्रालेयम् –

snow. प्रालेयमस्यास्तीति प्रालेयः । 'ओऽभ्रादिभ्यः' इत्यो मत्वर्थीयः । प्रालेयश्चासौ अद्रिः पर्वतश्च प्रालेयाद्रिः । तम् । निर्दिधक्षेत् – would cherish a desire to burn out. Potential third person singular of the Desiderative of निर्दह्. आपन्नार्तिप्रशमनफलाः – having their purpose effected by the alleviation of the sufferings of suffering mortals. आपन्नानां आपदुपहतानां याः अर्तयः दुःखसंवेदनानि तासां प्रशमनं परिहरणमेव फलं प्रयोजनं यासां ताः ।

**Stanza 63** — संरम्भोत्पतनरभसाः – possessing rapidity in their act of jumping high up in anger. संरम्भेण प्रयत्नविशेषेन कोपेन वा उत्पतनं उच्चलनं संरम्भोत्पतनम् । 'संरम्भः सम्भ्रमे कोपे' इति शब्दार्णवे । संरम्भोत्पतने रभसो वेगो येषां ते संरम्भोत्पतनरभसाः । 'हर्षे वेगे च रभसः' इति विश्वलोचने । मुक्ताध्वानम् – keeping out of way. मुक्तः परित्यक्तः अध्वा शरभोच्चलनमार्गः येन सः । तम् । स्वाङ्गभङ्गाय – to tear down their own bodies. स्वस्य आत्मनः अङ्गं शरीरं स्वाङ्गम् । तस्य भङ्गः विघातः स्वाङ्गभङ्गः । तस्मै । स्वाङ्गानि भङ्क्तुमित्यर्थः । शौर्यदर्पोद्धुराणाम् – become ill-mannered owing to their being proud of their valour. शौर्यस्य वीर्यस्य दर्पः अभिमानः शौर्यदर्पः । तेन उद्धुराणामुद्धतानाम् । त्वत् – from you. स्तनितनिनदान् – thundering sounds. मा तथाः – you should not give out. According to some scholars, the word शरभ means 'a gross-hopper' in the present context; but it is very difficult to agree with this view. The gross-hoppers, being winged, cannot fall down and break their limbs. Moreover, the word शौर्यदर्पोद्धुराणाम् shows that Jinasena also took the word to mean 'अष्टापद'.

**Stanza 64** — अपधियः – void of intellectual qualities. अपगता धीः बुद्धिः येषां ते अपधियः । स्वाङ्गभङ्गैकनिष्ठाः – exerting only for tearing down (or breaking) their own bodies (or limbs). स्वं स्वकीयं अङ्गं शरीरं गात्रं वा स्वाङ्गम् । तस्य भङ्गः भञ्जनमेव एका अद्वितीया निष्ठा व्यापारः येषां ते । 'निष्ठा निर्वहनिष्पत्तिनाशान्तोत्कर्षयाचने । क्लेशे' इति विश्व-

लोचने। निष्ठाशब्दोऽत्र क्लेशार्थकः। क्लेशशब्दश्च व्यवसायार्थोऽपि दृश्यते। 'क्लेशो दुःखेऽपि रोगादौ व्यवसायेऽपि दृश्यते' इति विश्वलोचने। तैर्यग्योनाः – beasts. स्तनितरभसात् – on account of their passion being excited by thunderings. स्तनितं – thundering. रभसः – anger. तुमुलकरकावृष्टिपातावकीर्णान् – put to rout by heavy showers of hail-stones. करकाः वर्षोपलाः। 'करका तु घनोपले' इति विश्वलोचने। करकाणां घनोपलानां वृष्टिः वर्षं करकावृष्टिः। तस्याः पातः पतनं करकावृष्टिपातः। तुमुलः दारुणश्चासौ करकावृष्टिपातश्च तुमुलकरकावृष्टिपातः। तेन अवकीर्णाः प्रद्राविताः। तान्। निष्फलारम्भयत्नाः – attempts at doing rendered futile. आरभ्यन्ते इति आरम्भाः। कर्माणि इत्यर्थः। तेषु यत्नाः उद्योगाः आरम्भयत्नाः। निष्फलाः विफलाः। असिद्धप्रयोजनाः इत्यर्थः। निष्फलाश्च ते आरम्भयत्नाश्च निष्फलारम्भयत्नाः। Some of the manuscripts of the Meghadūta read के वा न स्युः परिभवपदं, some के वा न स्युः परिभवफलाः and some केषां न स्युः परिभवपदं. When निष्फलारम्भयत्नाः is taken as a बहुव्रीहि compound, it should be construed with के वा, but when it is construed with केषां, the compound should be taken as a कर्मधारय and not as a बहुव्रीहि.

**Stanza 65** — दृषदि व्यक्तम् – distinctly manifested on a stone. अर्धेन्दुमौलेः अर्च्यम् – worthy of being worshipped by a god wearing a crown bearing a mark of the crescent-moon. अर्धः खण्डभूतः इन्दुरिव इन्दुः चिह्नभूतः यत्र यस्य वा स अर्धेन्दुः। अर्धशब्दस्यात्र खण्डवाचित्वात्समांशवाचित्वाभावात्पुंस्त्वेन निर्देशः, समांशवाचिन एव 'अर्धं नप्' इति 'समेऽर्धे' इति वा नप्त्वेन निर्देशात्। 'अर्धं समांशके क्लीबं अर्धः खण्डे पुमानपि' इति विश्वलोचने। इन्दुरिवेन्दुरित्यत्र 'उस् न्नर्चार्थध्वजचित्रे' इति ध्वजार्थे चिह्नार्थे विधीयमानस्य कस्योस् 'देवपथादिभ्यः' इति वा। तेनार्धेन्दुरित्यस्यार्धेन्दुचिह्नः इत्यर्थः। उक्तं च – 'अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवे प्रतिकृतौ नाशः कृतो देवपथादिषु' इति, 'मत्स्याश्वपुष्पाणि च तारकाश्च चन्द्रार्धचन्द्राश्च पतत्रिणश्च। तस्मिन्निवार्थे उसमाचरेज्ज्ञः प्रासादगुल्मार्कमया मृगाश्च' इति च। अर्धेन्दुः मौलिः

किरीटं यस्य सः। तस्यार्धेन्दुमौलेरर्धेन्दुचिह्नाङ्कितकिरीटधारिणः देवविशेषस्य वा। 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः। 'मौलिर्धम्मिल्लचूडयोः। किरीटेऽपि' इति विश्वलोचने। अर्धः – a part. अर्धम् – one half exactly equal to the second half. The word इन्दुः means here 'a mark resembling the moon.' Here, the termination क, connoting ध्वज (चिह्न), affixed to the word इन्दु under the rule 'इवे खु प्रतिकृत्योः कः' is dropped under the rule 'उस् न्यर्चार्थध्वजचित्रे' or under the rule 'देवपथादिभ्यः'. मौलिः – a crown. The person referred to here as one wearing a crown being a mark of a part of the moon, is a god. The word अर्धेन्दुमौलि, being a subject of अर्च्यं, which is a potential participa l, has the Genitive singular termination affixed to it under the rule 'व्यस्य वा कर्तरि'. सत्सपर्यैः सिद्धैः शश्वत् उपहृतबलिम् – always worshipped by the demi-gods that are highly respected. सत्सपर्यैः – (1) highly honoured, (2) the worship performed by whom is good. सती समीचीना सपर्या पूजा परिचर्या शुश्रूषा वा येषां ते। तैः। सिद्धैः – by the demigods. शश्वत् – always. उपहृतबलिम् – whose worship is performed. उपहृतः कृतः बलिः पूजाविधिः यस्य सः। यद्वा उपहृतः अर्पितः बलिः पूजोपहारः यस्मै सः। तम्। उपहारः पूजोपकरणम्। 'बलिः पूजोपहारयोः' इति यादवः। बलिः – worship. त्रिभुवनगुरोः – of the lord of the three worlds. त्रयाणां भुवनानां समाहारः त्रिभुवनम्, the word त्रिभुवन, being a समाहारद्विगु compound ought to have the termination ङी affixed to is under the rule 'रात्'; but the word being included in the पात्रादिगण, the termination ङी is not to be affixed to it under the rule 'स्यपात्राद्यत्'. Under the rule 'रः समाहारे', it is to be treated as an अजन्तनपुंसकलिङ्ग noun. परीयाः – go round, circumambulate.

**Stanza 66**—उद्धूतपापाः – those who have shaken off their sint (i. e. Karmans). उद्धूतं विगलितं पापं कर्ममलकलङ्कः येषां ते उद्धूतपापाः। भक्तिभाजः – devotees. करणविगमादूर्ध्वम् – after the separation of the body from the soul. करणस्य गात्रस्य शरीरस्य विगमः विलयः आत्मनः पृथ

ग्भावः करणविगमः। तस्मात्। 'करणं साधकतमे कार्यकायस्थकर्मसु। क्रियायामिन्द्रिये क्षेत्रे करणं वालवादिषु॥ गीताङ्गहारसंवेशक्रियाभेदेऽपि चेष्यते।' इति, 'क्षेत्रं शरीरे दारेषु केदारे सिद्धसंश्रये' इति च विश्वलोचने। सिद्धक्षेत्रम् – a holy place of those who attain salvation. पूतः भवतात् – may you become purified. भवतात् – sec. per. sin. of the Imp. of the root. भू. दूरतः श्रद्धानाः – having full faith in. श्रद्धानाः – Mallinath has explained this word as – श्रद्धानाः विश्वसन्तः पुरुषाः। श्रद्धा विश्वासः। आस्तिक्यबुद्धिरिति यावत्। 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या' (पा० सू० ३–३–१९६ वा.) इति श्रत्पूर्वाद्धातेः शानच्। स्थिरगणपदप्राप्तये – to attain the everlasting position attained by hosts of sages. गणानां आचीर्णतीव्रतपस्यानां मुनिसङ्घानां पदं स्थानं मोक्षः शुद्धपर्यायो वा गणपदम्। स्थिरमविनश्वरं च तद् गणपदं च स्थिरगणपदम्। शुद्धपर्यायस्याविनश्वरत्वात्स्थिरेतिविशेषणम्। तस्य प्राप्तये तत् प्राप्तुम्।

**Stanza 67** – आतोद्यगोष्ठीम् – a discourse upon the musical instruments. आतोद्यं चतुर्विधं वाद्यम्। 'चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः। तस्य गोष्ठी नानोक्तिसम्पन्ना सभा। 'समज्यापरिषद्गोष्ठीसभासमितिसंसदः। आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः' इत्यमरः। 'गावो नानोक्तयस्तिष्ठन्त्यस्यामिति गोष्ठी' इति क्षीरस्वामी। ताम्। रिरचयिषवः – wishing to arrange. रचयितुमिच्छवः रिरचयिषवः। This participle is derived from the Desiderative of the root रच्. शब्दायन्ते – produce sounds. शब्दं कुर्वन्ति शब्दायन्ते। वितितनुषुभिः – desirous of performing (worship). वितनितुं इच्छवः वितितनुषवः। This participle also is derived from the Desiderative of the root वि + तन्. संरक्ताभिः – devoted very much. किन्नरीभिः – These heavenly female beings are described as very fond of singing. त्रिपुरविजयः – victory over the three bodies. त्रयाणां पुराणां शरीराणां औदारिकतैजसकार्मणाख्यानां समाहारः त्रिपुरम्। तस्य विजयः पराजयः अभिभवः दमनं वा त्रिपुरविजयः। 'पुरं देहे गुग्गुलौ तु पुरः पुरि पुरं न ना' इति विश्वलोचने। At the time of attaining salvation, the soul gets rid of the three bodies which automatically get destroyed.

**Stanza 68** — वेणुषु — the bamboos. मन्द्रतारम् — very deeply and loudly. मन्द्रः गम्भीरः तारः अत्युच्चः यथा स्यात्तथा। 'कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु। नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः॥' इत्यमरः। तज्जयं — the victory over the three bodies. अतिकलकलम् — in a manner producing a confused sound. कन्दरीषु — in the valleys. Manuscripts of the Meghadūta read कन्दरासु, and कन्दरेषु. 'वा स्त्री तु कन्दरो दर्यामङ्कुशे पुंसि कन्दरः' इति विश्वलोचने।. निर्ह्रादी — reverberating. पशुपतेः — of the protector of living beings. पशूनामज्ञानानां प्राणिनां पतिः पाता पशुपतिः। 'पशुर्मृगादौ प्रथमे पशुर्मांसारिकात्मनि। अज्ञाने छागमात्रेऽपि' इति विश्वलोचने। पाति पतिः। 'पातेर्डतिः' (पा० उ० ४९७). सङ्गीतार्थः — a concert. भावी — will become. भविष्यतीत्यर्थः।

**Stanza 69** — प्रालेयाद्रेः उपतटं — in the regions adjoining to the Himalaya mountain. विशेषान् — the beautiful scenes. 'विशेषोऽवयवे द्रव्ये द्रष्टव्योत्तमवस्तुनि' इति शब्दार्णवे। कुकविकविताकल्पितम् — conjectured in the works of the learned, ignorant of the facts. कवयः विद्वांसः, न काव्यकराः एव। 'कविः शुक्रेऽपि वाल्मीके सूरौ काव्यकरे पुमान्' इति विश्वलोचने। कुत्सितः कविः कुकविः। अल्पज्ञाननिबन्धना वा कुत्सेत्यवसेयं सुधीभिः। नैव सा परमतनिन्दानिबन्धना। अज्ञानदोपाश्रयः कविः कुकविरित्यर्थोऽत्राभिमतः। कवेः विदुषः कर्म कविता। विद्वद्भिरचितो ग्रन्थः इत्यर्थः। कुकवेः कविता कुकविकविता। तस्यां ताभिर्वा कल्पितं कल्पनामात्रेण जल्पितं, न परमार्थसदिति भावः। जिनागमानभिज्ञविद्वज्जनकल्पनाशिल्पिजल्पितमित्यर्थः। हंसद्वारम् — the gate for the swans. हंसानां मानससरः प्रस्थायिनां मरालानां द्वारं गमनमार्गः। This word can be explained otherwise also. हंसस्य निर्लोभनृपतेः भरतेश्वरस्य विजयार्धोत्तरदिग्वर्तिखण्डत्रयविजिगीषोः द्वारं गमनमार्गः। King Bharat, the son of वृषभेश्वर, though desirous of conquering all the six parts of भारतवर्ष, was void of avarice. The kings, though dethroned after their being conquered by भरत, were enthroned again by him. Though a king, he was not attached to the worldly life at all. 'हंसः सूर्यमरालयोः। कृष्णेङ्गवाते निर्लोभनृपतौ परमात्मनि। योगिमन्त्रादिभेदे च मत्सरे तुरगान्तरे' इति

विश्वलोचने। In keeping with this interpretation, this word should be construed with वैजयार्धे गुहाद्वारकम्। भृगुपतियशोवर्त्म – the path of the glory of Parasurama. भृगूणां भृगुकुलोत्पन्नानां पतिः श्रेष्ठः इति, भृगुः शिवः पतिः ईश्वरः यस्य सः इति वा भृगुपतिः। जामदग्न्यः इत्यर्थः। 'भृगुः शुक्रे प्रपाते च जमदग्नौ प्रपातिनि' इति विश्वलोचने। 'इभ्यः आढ्यः धनी स्वामी त्वीश्वरः पतिरीशिता' इत्यमरः। भृगुपतेः जामदग्न्यस्य यशः कीर्तिः भृगुपतियशः। तस्य वर्त्म प्रसरणमार्गः। This compound can be explained otherwise also. बिभर्ति असिमषिकृषिसेवाशिल्पवाणिज्यरूपेण षड्विधेन कर्मणा प्रजाः पालयतीति भृगुः। वृषभजिनः इत्यर्थः। भृगुः पतिः स्वामी (ईश्वरः) यस्य सः भृगुपतिः। भरतेश्वर इत्यर्थः। तस्य यशसः वर्त्म भृगुपतियशोवर्त्म। In keeping with this interpretation, this word should be construed with वैजयार्ध गुहाद्वारकम्। आविष्कृतम् – prepared by cutting or broke opened or penetrated by breaking. वैजयार्धम् – of the Vijayārdha mountain. गुहाद्वारकम् – the unknown door carved into the rock of the cave. This door was unknown to all other than king Bharat. The termination क is affixed to imply the sense 'unknown' to the word गुहाद्वार under the rule 'कुत्सिताज्ञाताल्पे'.

**Stanza 70** — बह्वाश्चर्ये – abounding in wonders, an abode of many wonders. बहूनि आश्चर्याणि विस्मयावहानि यस्मिन्। हिमवति कृतावलोकनत्वात् – on account of your having determined to go to the Himālayas. कृतमवलोकनं विमर्शः अवधारणं निश्चयो वा येन सः। तस्य भावः कृतावलोकनत्वं। तस्मात्। यद्वा कृतं कर्तुमारब्धं अवलोकनं येन सः कृतावलोकनः। तस्य भावः कृतावलोकनत्वम्। तस्मात्। असङ्गः – (1) who has renounced all the worldly attachments. (2) alone. न विद्यते सङ्गः परिग्रहः अन्यघनसाहचर्यं वा यस्य सः। The first interpretation agrees with the monkhood of Parsva, while the second, with the cloud, the transformed state of the body of the sage. तिर्यगायामशोभी – looking beautiful owing to the horizontal length. तिर्यक् तिरश्चीनश्चासौ आयामः दैर्घ्यं च तिर्यगायामः। तेन

शोभते इति तिर्यगायामशोभी । 'शीलेऽजातौ णिन्' इति शीलार्थे णिन् । बलिनियमने – (1) for the pounding down of Bali; (2) at the time of pounding down Bali. बलेः नियमनं बलिनियमनम् । तस्मिन् । बलिमर्दनकाले बलिमर्दनार्थं वेत्यर्थः । विष्णोः – of the sage Viṣṇukumār. This alludes to the transformation of the body of the sage Viṣṇukumār into a dwarf. Bali, the minister, was, being defeated in a hot discussion that had taken place between him and a Jain monk, was hurt at heart. Some days after, when he met with a host of sages, he, on remembering the former incident, got very angry and made his mind to offer all the monks in a sacrifice. The head of the host of the sages came to know that the sage Viṣṇukumār possessed some supernatural power. He sent for Viṣṇukumār. Viṣṇukumār got himself transformed into a dwarf, approached Bali and begged of him for land that could be covered by his three steps. After securing from Bali that much land, the dwarf began to grow bigger and bigger and covered the whole of the earth by one step, sky by the second and by the third, put on his head, sunk him into the nether world.

**Stanza 71-72** — धूमप्रचयः इव – like a mass or a column or a cloud of smoke. धूमस्य प्रकृष्टः चयः समूहः धूमप्रचयः । अच्छच्छविभिः – possessing or wearing white lustre or colour. अच्छा निर्मला । शुभ्रेत्यर्थः । अच्छा निर्मला छविः कान्तिः वर्णः वा येषां ते । तैः । This compound is to be construed with प्रोच्चलन्निर्झरौघैः, for it describes the streams. प्रोच्चलन्निर्झरौघः – on account of the foamy flows. निर्झरः – foam. ओघः – a flow, a stream, a rivulet. निर्झराः सफेनाश्च ते ओघाः पाथसां प्रवाहाश्च निर्झरौघाः । 'सूर्याश्वे फेनकर्पासतुषवह्निषु निर्झरः' इति 'ओघः परम्परायां स्याद्द्रुतनृत्योपदेशयोः । ओघः पाथःप्रवाहे च समूहे च पुमानयम्' इति च विश्वलोचने । निर्झराः फेनाः सन्त्यस्येति निर्झरः । 'ओऽभ्रादिभ्यः' इति मत्वर्थेऽत्यः । प्रोच्चलन्तः प्रवहन्तश्च त निर्झरौघाश्च प्रोच्चलन्निर्झरौघाः । तैः । I would like to

change this reading to प्रोच्छलन्निर्झरौघैः। As streams or rivulets naturally flow, there is no need of the adjective प्रोच्चलत्, qulifying the noun ओघ. On the other hand, foam gathers on the surface of water when it runs very speedily. Foam cannot gather on the surface of a stream flowing very slowly and calmly. To connote speed of the stream, I would like to change the reading to प्रोच्छलन्निर्झरौघैः. This compound may he dissolved as – प्रोच्छलन्तः निर्झराः फेनाः येषु ते प्रोच्छलन्निर्झराः। ते च ते ओघाश्च प्रोच्छलन्निर्झरौघाः। यद्वा प्रकर्षेण उच्चलन्तः धावन्तः निर्झराः फेनाः येषु ते। ते च ते ओघाश्च प्रोच्चलन्निर्झरौघाः। तैः। कुमुदविशदैः – white like lotuses, lotus-white. कुमुदानि सितकमलानीव विशदैः शुभ्रच्छायैः। 'सिते कुमुदकैरवे' इत्यमरः। The word विशद, implying common property, is compounded with the word कुमुद, the standard of comparison under the rule 'सामान्येनोपमानम्'. The peaks of the mountain are, owing to their being covered over with snow, are described as wearing white colour like that of white lotuses. शृङ्गोच्छ्रायैः – owing to the lofty peaks; owing to the height of peaks. शृङ्गाणां सानूनां उच्छ्राया उत्सेधाः। तैः। 'नगाद्यारोह उच्छ्राया उत्सेधश्चोच्छ्रयश्च सः' इत्यमरः। अट्टहासः – loud laughter. 'अट्टावतिशयक्षौमौ' इति यादवः। 'अट्टाहासो महत्तरे' इति विदग्धचूडामणौ। दशमुखभुजोच्छ्वासितप्रस्थसन्धेः – which has its parts in the form of its peaks raised high up like the arms of the ten-mouthed one (i. e. Ravana). दश दशसङ्ख्याकानि मुखानि आननानि यस्य सः दशमुखः। रावणः इत्यर्थः। तस्य भुजाः बाहवः। ते इव उच्छ्वासिताः ऊर्ध्वं प्रापिताः प्रस्थसन्धयः शिखरभागाः यस्य सः। तस्य। 'कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः। 'सन्धिः पुंसि सुरङ्गायां रन्ध्रसङ्घट्टने भगे। सन्धिर्भगेऽवकाशेऽपि वाटसञ्ज्ञेऽपि पुंस्ययम्' इति विश्वलोचने। Mallinatha dissolves this compound as – दशमुखस्य रावणस्य भुजैर्बाहुभिः उच्छ्वासिताः विश्लेषिताः प्रस्थानां सानूनां सन्धयः यस्य तस्य। This explanation is in keeping with Hindu mythology. There are different versions of this incident. (1) Ravana

was a great devotee Śankara. He did not take food before worshipping Śiva. Once he thought that it was better to carry the Kailāsa to Lankā than to go to the Kailāsa every day for worshipping god Śiva. He, therfore, made his mind to carry the Kailāsa to Lankā. He went to the Kailāsa and began to eradicate the mountain with his twenty hands. Pārvati was stricken with fear. Śankara pressed the montain down under which Rāvaṇa was pinned down. (2) Once, while flying in an aerial car on the Kailāsa, Rāvaṇa was peremptorily asked by Nandi to stop. Rāvaṇa, become angry, tried to eradicate and lift up the Kailāsa with his hands. By pressing the mountain with his toe, Śiva pinned Rāvaṇa down. Being prayed by Rāvaṇa, Śive relieved him from his uncomfortable position. Jain scriptures do not make mention of this incident. शुभ्रादभ्रस्फाटिकघटनाशोभिगण्डोपलस्य — possessing big rocks appearing to the advantage owing to their being beset with big and white jewels. शुभ्राः शुक्लवर्णाश्च ते अदभ्राः स्थूलाश्च शुभ्रादभ्राः। 'अदभ्रं भूरि भूयिष्ठम्' इति धनञ्जयः। 'भूयिष्ठं पुरुहं भूयो भूर्यदभ्रं पुरु स्फिरम्' इति हेमचन्द्रः। शुभ्रादभ्राश्च ते स्फटिकाश्च शुभ्रादभ्रस्फटिकाः। तेषां घटना अनुवेधः। तया शोभन्ते इति शोभिनः। शोभमानाः इत्यर्थः। 'शीलेऽजातौ णिन्' इति शीलार्थे णिन्। शुभ्रादभ्रस्फटिकघटनाशोभिनः गण्डोपलाः स्थूलोपलाः यस्य सः। गण्डाः वराः। स्थूला इत्यर्थः। यद्वा गण्डः-हस्तिमस्तकं। गण्डः इव गण्डः। हस्तिमस्तकसदृशः इत्यर्थः। गण्डः हस्तिमस्तकाकृतिश्चासौ उपलः प्रस्तरश्च गण्डोपलः। पर्वताच्च्युतः स्थूलकायः प्रस्तरः इत्यर्थः। 'गण्डस्तु पिटके योगभेदे खड्गिकपोलयोः। वरे प्रवीरे चिह्ने च वाजिभूषणबुद्बुदे' इति विश्वलोचने। 'ग्रावा शिलोपलो गण्डशैलाः स्थूलोपलाश्च्युताः' इति हेमचन्द्रः। गण्डोपलाः गण्डशैलाः। पर्वताच्च्युताः स्थूलोपलाः इत्यर्थः। त्रिदशवनितादर्पणस्य — serving as a mirror for the heavenly damsels. त्रिदशाः देवाः। 'अमरा निर्जरा देवास्त्रिदशाः विबुधाः सुराः' इत्यमरः। तेषां

वानिताः स्त्रियः तासाम्। दर्पणस्य दर्पणतुल्यस्य। दर्पणः इव दर्पणः। 'देवपथादिभ्यः' इतीवार्थस्य कस्योप्। देवस्त्रीदर्पणायमानस्येत्यर्थः। तिस्रः उत्पादव्ययध्रौव्याख्याः दशाः अवस्थाः येषां ते त्रिदशाः। दुःखादीनामन्यासां दशानां देवेषु सद्भावासम्भवात्तेषां त्रिदशत्वमित्यर्थः। The explanation of the word त्रिदश, given by Mallinātha is as follows— त्रिर्दश परिमाणमेषामस्तीति त्रिदशाः। 'सङ्ख्ययाव्यया—' (पा० २।२।२५) इत्यादिना बहुव्रीहिः। 'बहुव्रीहौ सङ्ख्येये डज—' (पा० ५।४।७३) इत्यादिना समासान्तो डजिति क्षीरस्वामी। As the gods are numerically thirty-three, as the word त्रिदश implies only thirty gods and as the word त्रायस्त्रिंश, denoting the number thirty-three, is grammatically correct, it is very difficult to agree with the explanation given by Mallinātha and Kshirasvāmi. The word त्रायस्त्रिंश can be derived as follows— त्रयस्त्रिंशति जाताः त्रायस्त्रिंशाः। This word is derived under the rule 'दृष्टे सामनि जाते च योऽन्योऽण् वा डिद्विधीयते। तीयादीकण् च विद्यायां वृद्धादक्कवदिष्यते'। (जै. म. वृ. ३।२।७२ वा०) or under the rule 'जाते त्वान्योऽण् डिद्वा.' So, in my opinion, the explanation 'जन्मसत्ताविनाशाख्यास्तिस्रो दशा येषां ते त्रिदशाः' is reasonable and so correct. According to the convention of poets हास is white and so the Kailāsa, being snow-white, is aptly compared with or represented as the loud laughter of Śiva.

**Stanza 73—** स्निग्धभिन्नाञ्जनाभे—possessing colour like that of collyrium mixed with oil and well-crushed. स्निग्धं मसृणं। चिक्कणमित्यर्थः। 'स्निग्धं वात्सल्यसम्पन्ने चिक्कणेऽप्यभिधेयवत्' इति विश्वलोचने। भिन्नं मर्दितम्। 'भिन्नं वाच्यवदन्यार्थे दारिते सङ्गते स्फुटम्' इति विश्वलोचने। तटगते—resorted to it slopes. तटं गतः प्राप्तः तटगतः। तस्मिन्। वटतरुमतः—possessing banian trees; having big banian trees grown on it. मण्डलभ्राजितस्य—(1) looking beautiful on account of the surrounding regions; (2) looking beautiful on account of its being round; (3) pleasing to the eyes owing to her halo. The first two meanings are possible when this word qualifies अद्रेः, and the last one when it qualifies प्रालेयांशोः.

सद्यःकृत्तद्विरदरदनच्छेदगौरस्य — white like a piece of a tusk of an elephant cut off very recently. द्वौ रदौ बहिर्निर्गतौ दन्तौ यस्य सः द्विरदः। गजः इत्यर्थः। द्विरदस्य रदनः दन्तः द्विरदरदनः। सद्यःकृत्तः प्रत्यग्रखण्डितश्चासौ द्विरदरदनश्च सद्यःकृत्तद्विरदरदनः। तस्य च्छेदः खण्डः इव गौरः शुभ्रवर्णः। तस्य। 'सामान्येनोपमानं' इति सः। प्रत्यग्रखण्डितदन्तिदन्तभङ्गवच्छुभ्रवर्णस्येत्यर्थः। ग्रसितुमनसा — desirous of eclipsing. ग्रसितुं कवलीकर्तुं मनः यस्य सः। तेन। Here, the letter म् of तुम् is dropped under the rule 'समुतुमोर्मनःकामे'. Both the moon and the mountain are मण्डलभ्राजित and सद्यःकृत्तद्विरदरदन-च्छेदगौर.

**Stanza 74** — अभितः — on both sides; on all sides. This word is used here as an Adverb with the Accusative case under the rule 'पर्यभिसर्वोभयैस्तस्त्यैः'. अधित्यकां — the plateau. 'उपत्यकाद्रेरासन्ना भूमि-रूर्ध्वमधित्यका' इत्यमरः। दशास्यावतारप्रपञ्चम् — a display of the incarnation of the tenmouthed one [ i. e., Rāvana ]. दश दशसङ्ख्याकानि आस्यानि आननानि यस्य सः दशास्यः। दशाननः रावणः इत्यर्थः। तस्य अवतारः देहाकृतिः। तस्य प्रपञ्चः आविर्भावः। तम्। मेचके — dark-coloured. 'मेचकः श्यामले बर्हिचन्द्रे ध्वान्तेऽथ मेचकं। वाच्यवत्कृष्णवर्णे स्यात्' इति विश्वलोचने। स्तिमितनयनप्रेक्ष-णीयाम् — worthy of being looked at with steady eyes. स्तिमिताभ्यां स्तब्धतां प्राप्ताभ्यां नयनाभ्यां नेत्राभ्यां प्रेक्षणीया अवलोकनार्हा। ताम्। It is meant that the mountain would look like Rāvana when surrounded by the cloud at its top and like Balarāma, with his dark garment placed on his shoulder when the uppermost part of its side would be ascended by the cloud.

**Stanza 75** — भुजगवलयम् — serpent serving as a bracelet (or twisted into circular form); serpent-bracelet. भुजगः एव वलयं कटकं भुजगवलयम्। यद्वा भुजगः वलयमिव भुजगवलयम्। वलयाकारपरिणामितस्व-कायमित्यर्थः। शम्भुना — by the lord of the north-east direction resem-

bling Rudra (i. e. Śambhu). शम्भुरिव शम्भुः । दत्तहस्ता – supported with hand. दत्तः वितीर्णः हस्तः करः यस्यै यस्याः वा सा दत्तहस्ता । गौरी – The white-complexioned wife of the lord of north-east direction; the wife of the lord of the north-east direction resembling गौरी (i. e. पार्वती). आनीलरत्नैः – with emeralds possessing dark-blue colour. सितिफणिभयात् – through fear of a black-serpent. सितिः कालवर्णः । 'सिती धवलमेचकौ' इत्यमरः । सितिश्चासौ फणी च सितिफणी । तस्मात्तस्य वा भयं । तस्माद्धेतोः । This word may be construed as– त्वयि सितिफणिभयात् यदि च पादचारेण सञ्चरेत् । Being afraid of the Kailāsa where the lord of the north-east direction threw his serpent-bracelet, the goddess would not move on the Kailāsa mountain, but on the cloud, resembling a pleasure-mountain, owing to its wearing dark complexion. How could the wife of the lord of the north-east direction take a walk on the Kailāsa, where her lord threw the serpent-bracelet to dispel her fear? Her walk along with her husband is possible only on the pleasure-mountain in the form of the cloud. Though going on a walk of a couple has become a usual practice in Europe, it seems to have its origin in India.

**Stanza 76** — देवभक्त्या – with devotion to god. इज्यां – worship. The word इज्या is derived from the root यज् by affixing the termination क्यप् under the rule 'व्रज्यजः क्यप्' and by changing the letter य् with its vowel अ to इ, owing to the termination क्यप् being कित्, under the rule 'स्वव्वच्छ्व्यादेः किति'. इन्द्राणी – the wife of Indra. इन्द्रस्य पत्नी इन्द्राणी. This word is derived by affixing the termination ङी to the word इन्द्र and by adding आन् before ङी under the rule 'वरुणभवशर्वरुद्रेन्द्रमृडात्'. जैनगेहानुपातम् – visiting temple after temple dedicated to Jina. जनगेहं जनगेहं अनुपत्य अनुपत्य जैनगेहानुपातम् । वीप्सायामाभीक्ष्ण्ये च द्विः । Here, the termination णम् is affixed to the

root पत् preceded by the preposition अनु in the sense of 'pervasion and repetition' under the rule 'विशपतपदस्कन्दां व्याप्यासेव्ये'. स्तम्भितान्तर्जलौघः — with the mass of your water caused to be constrained inside. स्तम्भितः घनीकृतः अन्तर्जलस्य ओघः समूहः येन सः । यद्वा स्तम्भितः घनीभावं प्रापितः अन्तर्जलस्य ओघः समूहः यस्य सः । 'ओघः परम्परायां स्याद् द्रुतनृत्योपदेशयोः । ओघः पाथःप्रवाहे च समूहे च पुमानयम्' इति विश्वलोचने । भङ्गीभक्त्या — by forming divisions like steps, by dividing into step. भङ्गी सोपानमिव भङ्गी । भङ्गीव सोपानकारा भक्तिः विभजनं भङ्गीभक्तिः । तया । विरचितवपुः — with your body shaped or transformed into. विरचितं वपुः येन यस्य वा सः विरचितवपुः । अग्रचारी — moving in front of. पुनः पुनः अग्रे चरतीति अग्रचारी । The termination णिन् is affixed to imply the sense of 'repetition' to the root चर् under the rule 'व्रताभीक्ष्ण्ये'. मणितटारोहणाय — to ascend the jewelled slopes. मणीनां तटं मणितटम् । तस्य तत्र वा आरोहणम् । तस्मै । मणितटारोहणार्थमित्यर्थः । सोपानत्वं कुरु — serve as a staircase. सोपानस्य भावः कर्म वा सोपानत्वम् । आरोहावरोहावसरे चरणस्यावकाशप्रदानं सोपानस्य भावः कर्म वेत्यर्थः ।

**Stanza - 77** — अन्तस्तोयोच्चलनसुभगाम् — beautiful on account of the discharge of the internal water. अन्तः मेघवपुरन्तर्भागे यत्तोयं सलिलं तस्योच्चलनेन बहिर्निर्गमनेन । गलनेनेत्यर्थः । सुभगां मनोहराम् । भाविनीम् — future भविष्यकालसम्भवाम् । सुनिभृततरम् — very silently; सुनिश्चलतरम्. वलयकुलिशोद्घट्टनोद्गीर्णतोयम् — discharging water owing to the strokes of the bracelets beset with diamonds; वलयानां कङ्कणानां कुलिशानि वज्राणि वलयकुलिशानि । कङ्कणखचिताः वज्रमणयः इत्यर्थः । 'ह्लादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः' इत्यमरः । 'पुनाति पविः, हीरकस्य पविसञ्ज्ञया प्रसिद्धत्वात्' इति क्षीरस्वामी । अत एव कुलिशशब्दस्य हीरकार्थवाचकत्वम् । यद्वा वलयान्येव कुलिशानि वलयकुलिशानि । तैः तेषां वा उद्घट्टनानि प्रहाराः तैरुद्गीर्णं उद्वान्तम् । उत्सृष्टमित्यर्थः । तोयं सलिलं येन सः । तम् । Mallinatha's explanation of this word runs as follows :— 'वलयकुलिशानि कङ्कणकोटयः । शतकोटिवाचिना कुलिशशब्देन कोटिमात्रं लक्ष्यते । तैरुद्घट्टनानि प्रहारास्तैरुद्गीर्णमुत्सृष्टं तोयं येन तम् ।'

**Stanza - 78** — सरस्तोयपूर्णाम् — filled up with water of a lake. सरसः कासारस्य तोयं पानीयं सरस्तोयम् । तेन पूर्णा सम्भृता । ताम् । दृतिम् — a leathern bag meant for holding water. इतश्चामुतश्च — here and there. घर्मलब्धस्य — secured by them at the time when there would be excessive heat; secured in the hot season. घर्मादौष्ण्याल्लब्धं लाभः यस्य सः । तस्य । यद्वा घर्मे प्रावृट्कालेऽपि निर्वातावस्थायां यः घर्मः ऊष्मकालः तस्मिन् लब्धः प्राप्तः तस्य तव । यद्वा घर्मे निदाघे [ ग्रीष्मर्तौ ] लब्धः घर्मलब्धः । क्रीडालोलाः — engaged in sport; longing for sport. क्रीडायां लोलाः आसक्ताः क्रीडालोलाः । श्रवणपरुषैः — harsh to the ear.

**Stanza - 79** — विविधकरणैः — having carried out various performances. विविधानि नानाप्रकाराणि करणानि अङ्गहाराः संवेशक्रियाः वा विविधकरणानि । तैः । 'करणं साधकतमे कार्यकायस्थकर्मसु । क्रियायामिन्द्रिये क्षेत्रे करणं वालवादिषु । गीताङ्गहारसंवेशक्रियाभेदेऽपि चेष्यते' इति विश्वलोचने । करणं = अङ्गहारः — gesticulation, movements of the limbs, a dance. आत्तव्रणाङ्गं गमितः — reduced to the state of your body having wounds inflicted. आत्तः व्रणः येन तत् आत्तव्रणम् । आत्तव्रणं च तदङ्गं शरीरं च आत्तव्रणाङ्गं । 'अङ्गमन्तिके । गात्रोपायाप्रधानेषु प्रतीकेऽप्यङ्गवत्यपि' इति विश्वलोचने । हेमाम्भोजप्रसवि — generating (producing) golden lotuses. हेमाम्भोजानि सुवर्णकमलानि प्रसूते इति हेमाम्भोजप्रसवि । The termination इन् is affixed to the root सू, on account of its being preceded by the preposition प्र, under the rule 'प्रे सूजोरिन्'. क्षणमुखपटप्रीतिम् — the pleasure of possessing a face-cloth for a moment. क्षणं क्षणमात्रकालं यावत् मुखपटेन मुखावरणवस्त्रेण प्रीतिरिव प्रीतिः । ताम् । मुखपटनिबन्धनां मुखपटजनिता वा या प्रीतिः तत्सदृशीं प्रीतिमित्यर्थः । गजेन्द्रमुखाग्रभागे क्षणस्थित्या मुखपटजनितानन्दतुल्यं सुखं जनय, तादृशमुखाग्रभागे स्थिते सति ऐरावणस्य मुखपटभ्रान्तिजनितानन्दसम्भवादिति भावः । The cloud, reduced by the wind to the state of his body having wounds inflicted, may indulge in innocent amusements, like enjoying various dances performed by the ladies or taking a walk along with the ladies across the mountain or drinking water in the Manasa lake or making fun of Airavana.

**Stanza - 80 —** क्रीडाद्रीणां – of the pleasure-hills. कनकशिखराण्यावसन् – dwelling on the golden peaks. निधुवनलतागेहसम्भोगदेशान् – the seats of cohabitation existing in tne bowers of creepers meant for the heavenly damsels for coition. निधुवनार्थानि लतागेहानि वल्लरीनिर्मितभवनानि निधुवनलतागेहानि । तेषु ये सम्भोगदेशाः सम्भोगार्थं विरचितानि स्थानानि । तान् । नानाचेष्टैः – possessing various movements. नाना बहुविधाः चेष्टाः दिग्विदिक्षु वहनादिरूपाः क्रीडाः येषां तैः । This compound, dissolved as above, being an adjective, qualifies स्ववातैः । When dissolved as – नाना बहुविधाः चेष्टाः अङ्गहारा येषु तानि । तैः ।, the compound should be taken as an adjective qualifying ललितैः । नानाचेष्टैः – possessing various gesticulations ( of dancing ladies ). ललितैः – (1) pleasing; (2) a pleasure house, a house wherein women sport, dance etc. ललितानि नृत्यादिक्रीडितानि सन्त्यस्मिन्निति ललितम् । 'अोऽभ्रादिभ्यः' इति मत्वर्थेऽत्यः । The words नानाचेष्टैः ललितैः, of which the word ललितैः is explained as above, should be construed with नगेन्द्रम्. The Instrumental case implies the state of the lord of mountains. These two words may also be construed with तं नगेन्द्रं निर्विशेः. नानाचेष्टैः ललितैः तं नगेन्द्रं निर्विशेः – you should enjoy the mountain by means of sports displaying various movements. स्ववातैः – by your breezes. स्वाः स्वीयाः वाताः समीरणाः स्ववाताः । अत्र वातस्य स्वीयत्वं स्वागमनकालजनितत्वात्स्वमित्रत्वाद्वेत्यवसेयम् । अंशुकानि – resembling thin silken garments. अंशुकानि सूक्ष्मवस्त्राणि इव अंशुकानि । निर्विशेः – enjoy.

**Stanza - 81 —** विद्युद्दाम्ना – with the rop-like lightning. विद्युदेव दाम विद्युद्दाम । तेन । वलयिततनुः – whose body is encircled. वलयिता विरचितवलया तनुः शरीरं यस्य सः । वध्र्या – by means of a leathern strap or rope. मन्दमन्दं – slowly. मन्दप्रकारः यथा स्यात्तथा । मन्दतयेत्यर्थः । उत्सङ्गे – (1) on the upper part; (2) on the lap. स्रस्तगङ्गादुकूलाम् – (1) with its white garment in the form of the Ganges fallen off; (2) with its garment white like the Ganges ( owing to the colour of the garment being white like the Ganges ) fallen off. Here, the city of Alaka is

compared to a passionate lady, the mountain to a lover, the slops of the mountain to the lap of a lover and the Ganges to a white garment worne by a passionate lady. The falling off of the river on the slopo of the mountain is described as similar to the slipping of a garment of a passionate woman off her body and falling on the lap of her loving husband. स्रस्तं विगलितं शरीरान्निःसृत्य पृथग्भूतं गङ्गा एव दुकूलं शुभ्रवस्त्रं यस्याः सा। ताम्। पक्षे स्रस्तं, गङ्गेव गङ्गातुल्यं दुकूलं यस्याः सा। ताम्। 'दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके' इति शब्दार्णवे। घनीशां – of the यक्ष. स्वेष्टकामः – desirous of securing what is expected by you. स्वेष्टं कामयते इति स्वेष्टकामः।

**Stanza – 82 —** योगाभ्यासात् – through repeated practice of concentration. योगस्य ध्यानकर्मणः अभ्यासः पुनः पुनः करणं योगाभ्यासः। तस्मात्। दृष्टाध्यात्मस्थितिः – experiencing the pure nature of the pure soul. दृष्टा अनुभूता अध्यात्मं स्थितिः येन सः। आत्मनि अधि अध्यात्मम्। आत्मनीत्यर्थः। अधिगताशेषवेद्यः – who has known all the knowables; omniscient; possessing infinite knowledge. अधिगतानि ज्ञातानि अशेषाणि वेद्यानि ज्ञेयार्थाः येन सः। विश्वदृश्वेत्यर्थः। सविद्यः – possessing pure knowledge. विद्यया केवलज्ञानेन सहितः सविद्यः। दूरदर्शी – possessing foresight (or knowing all the periodically and spatially remote objects). दूरान् कालस्थलापेक्षया दविष्ठानर्थान् पश्यति जानातीति दूरदर्शी। सूक्ष्माणामन्तरितानां चार्थानामिन्द्रियाग्राह्यत्वाद्दूरत्वमवसेयम्। सूतिम् – the source. न दृष्ट्वा – अपश्यन्। पश्यतीति दृष्ट्वा। 'मन्वनक्वनिब्विचः क्वचित्' इति क्वनिप्। अलकां साक्षात् दृष्ट्वा न ज्ञास्यसे (इति) न – It is not that you will not know the city of Alaka on seeing it actually (or with your naked eye.).

**Stanza–83 —** उच्चैर्विमाना – possessing seven-storied lofty mansions. उच्चैः उन्नताः विमानाः सप्तभूमिकाः प्रासादाः यस्यां सा। निर्वाणार्थं तितपसिषवः – desirous of practising penance for the attainment of salvation. निर्वाणं – salvation. 'निर्वाणं निर्वृतौ मोक्षे स्तम्भने गजमज्जने' इति विश्वलोचने। तितपसिषवः is a desiderative form derived from the

denominative तपस्यति, which is derived from the word तपस् by affixing the termination क्यच् to it under the rule 'तपसः क्यच्'. तितपसिषवः तपस्तप्तुमिच्छवः । तपस्यतेः 'तुमीच्छायां धोर्वोप्' इति सनि तदन्तात् 'सन्भिक्षाशंसादुः' इत्युः । व्यर्थोद्योगाः – whose efforts are neutralized. व्यर्थाः विफलाः उद्यमाः प्रयत्नाः येषां ते । वितृषः – having no interest. मयि वितृषः – taking no interest in me. विगता तृट् इच्छा येषां ते वितृषः । 'इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः' इत्यमरः। इन्दुशुभ्रम् – white like the moon. विहसितम् – an ironical smile. सलिलोद्गारम् – the discharge of water. The city of Alakā means to say that as the abode of the liberated soul is not known to any worldly being, who can assure that the efforts of the sages will be turned futile? Under these circumstances, the sages ought to have taken interst for the city.

**Stanza 84** — मुक्ताजालग्रथितम् – encircled with nets of pearls. मुक्तानां मौक्तिकमणीनां जालेन ग्रथितं सन्दब्धम् । जालं आनायमिव जालम् । आनायसदृशं स्त्रीकेशभूषणमित्यर्थः। जालम् – a kind of ornament worn in the hair. अलकम् – curly hair. 'कुबेरस्यालका पुर्यामलकश्चूर्णकुन्तले' इति विश्वलोचने । अभ्रंलिहैः – scraping the clouds. अभ्रं लेढीति अभ्रंलिट् । तैः । सौधेयाग्रैः – with the uppermost parts of her palaces or mansions. सौधानामिमानि सौधेयानि । सौधेयानि च तान्यग्राणि सौधेयाग्राणि । 'अग्रं त्रिषु प्रधाने स्यादग्रं मूर्धाधिकादिषु । पुरस्तात्पलमाने च आतेऽप्यालम्बनान्तयोः' इति विश्वलोचने । गगनपरिपत्केतुमालाबलाकम् – having cranes in the form of the rows of flags moving in all directions in the sky. गगने आकाशदेशे परितः सर्वतः सीदन्ति चलन्तीति गगनपरिषन्तः । गगनप्रदेशे विचलन्तः इत्यर्थः । गगनपरिपन्नश्च ते केतवः ध्वजाश्च । तेषां माला पङ्क्तिः एव बलाकाः पक्षिविशेषाः यस्य तत् । 'षद्लृ विशरणगत्यवसादनेषु' इति षद्लृधोर्गत्यर्थत्वात्सीदतेश्चलनार्थत्वम् । रत्नोदग्रद्युतिविरचितेन्द्रायुधम् – possessing a rain-bow formed by the ends of the rays of jewels shooting upwards. उद्गतानि अग्राणि कोटयः यासां ताः उदग्राः । उदग्राश्च ताः द्युतयश्च उदग्रद्युतयः । रत्नानां उदग्रद्युतयः रत्नोदग्रद्युतयः । ताभिर्विरचितं इन्द्रायुधं इन्द्रधनुर्यस्मिंस्तत् । प्रावृषेण्यम् – produced in the rainy-season. प्रावृषि भवं प्रावृषेण्यम् । सजलकणिकासारम् –

discharging showers of drops of water. जलकणिकाः जलबिन्दवः । तेषां आसारः वर्षः जलकणिकासारः । तेन सहितम् ।. The clouds, floating in the sky over the city of Alakā, being of the monsoon, cannot have rainbows formed in them by the rays of the sun, owing to the sun being covered over with clouds. But those clouds, Śambara says, do possess rainbows formed by the rays emanating from the jewels, inlaid in the uppermost parts of the palatial buildings erected in the city of Alakā. The fluttering banners, hoisted on the tops of the buildings, played the role of the cranes in the clouds. The assemblage of clouds, intermingled with the rainbows formed by the rays of jewels, resembles a net of pearls worn in the hair by a noble woman.

**Stanza 85** — आनीलं – dark on all sides. आसमन्तात् नीलं आनीलं कृष्णवर्णम् ।. This word may be explained as — आ समन्तात् नीलः नीलवर्णः यत्र सः । सन्ध्याप्रकाशतुल्यत्वान्मेघावृताम्बरस्य प्रावृट्कालस्यानीलत्वमवसेयम् । यद्वेषन्नीलः आनीलः । तम् – The rainy season, when the sky is overspread with clouds, has the sunshine changed into twilight which is rather darkish. हरिमणिमयाः – (palaces or palatial buildings) abounding in emeralds ( inlaid in the walls ). The bluish rays, emanating from the emeralds, being similar to the twilight-like light, display always the advent of the rainy-season in the city of Alakā. नभोगं – ( the rainy season ) pervading the sky. नभसि आकाशे गच्छतीति नभोगः । तम् । क्षुद्रशैलाः – possessing pleasure-hills in their vicinity. क्षुद्राः स्वल्पाः शैलाः पर्वताः येषु ते क्षुद्रशैलाः । अत्र 'गङ्गायां घोषः' इत्यादाविव प्रासादोपरिभागस्थितिरूपं मुख्यार्थं बाधित्वा तत्समीपभूप्रदेशस्थितिरूपोऽन्योर्थो लक्षणया लभ्यः ग्राह्यः । The pleasure hills, adjoining the palatial buildings and forming parts of those, pervade the sky with their peaks, like the clouds assembling in the sky in the rainy-season. So, the pleasur-hills display always the advent of the rainy-season in the city of Alakā. विद्युद्वन्तं – possessing flashes of lightning. ललितवनिताः – having beautiful women. ललिताः मनोहराः वनिताः ललनाः येषु ते । Owing to the extraordinary beauty of the ladies residing in the palatial buildings, the palatial buildings are described as displaying the rainy-season like the

-lightnings shining in the clouds assembling in the sky in the rainy season. सेन्द्रचापम् - having rainbows; इन्द्रचापेन इन्द्रधनुषा सहितः सेन्द्रचापः। तम्। सचित्राः – possessing multicoloured pictures. सह चित्रैः सचित्राः। The palatial buildings, possessing multicoloured pictures, always diplay monsoon in the city like the multicoloured rain-bow. The multicoloured pictures painted on the walls of the palatial buildings are compared with the multicoloured rainbows. प्रोद्यद्देवद्रुमपरिसरद्धूपधूमानुबन्धाः – having rising columns of smoke of incense coming out of the groves of Pine trees and spreading on all sides. देवद्रुमाः देवदारुद्रुमाः। तेभ्यः परितः सर्वतः सरन् निर्गच्छन् देवद्रुमपरिसरन्। स चासौ धूपधूमश्च। तस्य अनुबन्धाः आनुपूर्व्यः राजयः वा। प्रोद्यन्तः उद्गच्छन्तः देवद्रुमपरिसरद्धूपधूमानुबन्धाः येभ्यः ते। प्रासादपरिसरोद्भूतदेवद्रुमाणामत्र ग्रहणं लक्षणया कर्तव्यं, प्रासादाग्रे द्रुमोत्पत्त्यसम्भवात्।

**Stanza 86** — केकारवमुखरितान् – noisy with their craklings. केकाः एव आरवाः ध्वनयः केकारवाः। तैः मुखरितान् मुखरीकृतान्। वाचालितानित्यर्थः। उद्यत्करुणविरुतान् – giving out notes exciting pity. करुणानि करुणाजनकानि च तानि विरुतानि कूजितानि च करुणविरुतानि। उद्यन्ति करुणविरुतानि येभ्यः ते उद्यत्करुणविरुताः। तान्। ग्लानयन्तः – distressing; rendering afflicted by strokes of grief. ग्लानान् दुःखितान् कुर्वाणाः। स्निग्धपर्जन्यघोषम् – a noise or sound resembling the deep thundering of clouds. स्निग्धः गम्भीरः पर्जन्यः मेघध्वनिः स्निग्धपर्जन्यः। 'पर्जन्यो वासवे मेघध्वनौ च ध्वनदम्बुदे' इति विश्वलोचने। स्निग्धपर्जन्यः इव स्निग्धपर्जन्यः। स्निग्धपर्जन्यश्चासौ घोषः ध्वनिश्च स्निग्धपर्जन्यघोषः। तम्। अकाले – in all the seasons other than the monsoon. विदधातितराम् – make exceedingly.

**Stanza 87** — आकीर्णम् – scattered in all directions. आ समन्तात् कीर्णः प्रसृतः आकीर्णः। तम्। घनानामोघम्। विततशिखराः – having (their) uppermost parts expansive. विततानि विस्तृतानि शिखराणि अग्रभागाः येषां ते सौधाभोगाः। 'विततं तु मतं व्याप्ते विस्तृतेऽप्यभिधेयवत्' इति विश्वलोचने। शिखरम् – top. मन्द्रघोषम् – giving out deep thunders. मन्द्रः गम्भीरः घोषः गर्जितध्वनिः यस्य सः मेघौघः। तम्। 'घोषः कांस्येऽम्बुदध्वनौ।

घोषः स्याद्घोषकाभीरनिस्वनाभीरपल्लिषु ' इति विश्वलोचने । ' मन्द्रस्तु गम्भीरे ' इत्यमरः । सानकाः — having beatings of drums. ' मन्द्रघोषं ' इति घनौघविशेषणदर्शनात्सानकशब्दस्य ' समृदङ्गध्वनयः ' इति लाक्षणिकोऽर्थोऽत्र ग्राह्यः । रत्नदीपानुयाताः — possessing lamps in the form of jewels (or possessing jewels serving as lamps or possesssng jewel-lamps.) रत्नान्येव दीपाः रत्नदीपाः । तैः अनुयाताः अनुगताः रत्नदीपानुयाताः । सौधाभोगा इत्यस्य विशेषणम् । ओघं — an assemblage. तुलयितुं — to stand comparison with. सौधाभोगाः — the expansive mansions.

**Stanza 88** — तुहिनविशदैः — white like snow, snow-white. तुहिनं प्रालेयमिव विशदाः धवलाः । तैः । ' अवश्यायस्तु नीहारतुषारस्तुहिनं हिमं । प्रालेयं मिहिका च ' इत्यमरः । ' विशदः पाण्डरे व्यक्ते ' इति विश्वलोचने । कूटोच्छ्रायैः — with the lofty parts of their uppermost divisions. कूटानां उच्छ्रायाः उत्सेधाः कूटोच्छ्रायाः । तैः । शारदान् — automnal. शरदि भवाः शारदाः । तान् । मन्द्रातोद्यध्वनिभिः — with the deep sounds of the musical instruments. मन्द्राः गम्भीराश्च ते आतोद्यानां तूर्यादिवाद्यानां ध्वनयः आरवाः । तैः । उच्चलद्वारिवेलान् — with the waters dashing against the shores. उच्चलत् ऊर्ध्वं गत्वा प्रतिघातं कुर्वत् वारि यत्र ताः उच्चलद्वारयः । उच्चलद्वारयः वेलास्तटाः येषां ते । तान् । ' जलधिजलविकारे वेला, तटेऽप्युपचारात्, वेल चलने ' इति क्षीरस्वामी । यद्वा उच्चलद्विलोलकल्लोलीभवद्वारि यासां ताः । उच्चलद्वारयः वेलाः जलविकाराः येषां ते । तान् । जलप्रक्षोभजनितोल्लोलकल्लोलानित्यर्थः । रत्नोदंशुप्रसररुचिरैः — shining with the spread of the rays emitting from the gems. रत्नेभ्यः उद्गताः अंशवः किरणाः रत्नोदंशवः । तेषां प्रसरेण विस्तारेण रुचिराः कान्तिमन्तः तेजस्विनः । तैः ।

**Stanza 89** — प्रियतमभुजोच्छ्वासितालिङ्गितानां — closely embraced in the arms of their husbands. प्रियतमानां भुजाः बाहवः प्रियतमभुजाः । तैः उच्छ्वासितानि आप्यायितानि दृढीकृतानि प्रगाढानि वा आलिङ्गितानि आलिङ्गनानि यासां ताः । तासाम् । श्रमजलकणैः — by the drops of sweat exuding on account of the efforts. पङ्कीभूताः — turned into mud. पङ्क-

भावं गताः। अपङ्काः पङ्काः सम्पन्नाः पङ्कीभूताः। आर्द्रितप्रस्तरान्ताः — moistening the interior parts of their beds. आर्द्रिताः आर्द्राः कृताः प्रस्तरान्ताः शय्यामध्यदेशाः यैः ते। प्रस्तराणां शय्यानां अन्ताः मध्यदेशाः प्रस्तरान्ताः। प्रस्तृणातीति प्रस्तरः। शय्येत्यर्थः। बद्धोत्कण्ठस्तनतटपरामृष्टवर्णाविकीर्णाः — scattered (here and there in their beds) owing to the pearls rubbing against their breasts having their circumjacent parts raised up owing to their being pressed (by their husbands embracing them). बद्धौ सम्पीडितौ च तौ उत्कण्ठौ उद्गतसमीपस्थपरिधिप्रदेशौ च बद्धोत्कण्ठौ। 'कण्ठस्तु गले पार्श्वे शस्यद्रु-शब्दयोः' इति विश्वलोचने। तौ च तौ स्तनतटौ च। ताभ्यां परामृष्टाः घृष्टाः वर्णाः स्तनतटद्वयान्तरालस्थितमालामौक्तिकाः। 'अथ पुंस्येव वर्णास्यात्स्तुतौ रूपयशोगुणे। रागे द्विजादौ मुक्तादौ शोभायां चित्रकम्बले' इति विश्वलोचने। तैः आ समन्तात् विकीर्णाः प्रसृताः। यद्वा तादृशस्तनतटसङ्घर्षजनिताङ्गरागसंश्लेषा वर्णाः मौक्तिकाः यैः ते। विकीर्णाः सर्वतः प्रसृताः। विशीर्णाः इति पाठोऽपि समीचीनः, स्तनतटादिशरीरभागात्पृथग्भूत्वा प्रस्तरे पतिताः इत्येतादृगर्थत्वात्। The breasts of the ladies, very closely embraced by their husbands, being pressed very much, caused the pearls of the necklaces dangling on their breasts to rub against their breasts. Being thus rubbed, the cosmetics become separated from their breasts and fell down in the beds and lay scattered here and there. The reading विशीर्णाः is also good. अङ्गरागाः — the scented cosmetics. 'समालम्भोऽङ्गरागश्च प्रसाधनविलेपनम्' इति धनञ्जयः। सम्भोगान्ते — at the end of sexual enjoyment. उपचितं — increased.

**Stanza 90** — गौरीभर्तुः — (1) of the lord of night; (2) of the lord of the north-eastern direction resembling a king; (3) of the lord of गौरी, the wife, resembling the wife of Shankara, of the lord of the north-eastern direction; (4) of the lord of Parvati. गौर्याः निशायाः भर्ता नाथः गौरीभर्ता। यद्वा गौर्याः मेदिन्याः भर्ता गौरीभर्ता। सः इव गौरीभर्ता। यद्वा गौर्याः पार्वत्याः भर्ता गौरीभर्ता। तस्य। 'गौरी तु पार्वतीनग्नकन्ययोर्वरुणस्त्रियां। नदीभिद्यामिनीपिङ्गारोचनीक्ष्माप्रियङ्गुषु' इति विश्वलोचने. If the first interpretation is accepted, the word गौरीभर्तुः should be taken as an

adjective qualifying इन्दोः. If the next three interprations are accepted, the word गौरीभर्तुः should be construed with इन्दोः, and the Genitive case should be taken to imply स्वस्वामिभावसम्बन्ध. गौरीभर्तुः इन्दोः – (1) of the moon of the lord of the north-eastern direction; (2) of the moon of Lord Shankara. The moon is described in the Hindu mythology as occupying a place over the head of Lord Shankara. विरचितजटामौलिभाजः – (1) wearing a crown having branches of trees depicted on it. (2) occupying the head ( of Shambhu ) having matted hair tied together ( on it ). (3) occupying the crown worn on the head having matted hair. If the first interpretation is accepted, the word विरचितजटामौलिभाजः should be taken as an adjective qualifying इन्दोः। According to the Jain scriptures, the moon we see is an aerial car by means of which the god moon moves in the sky. This god wears a crown on his head. If the second interpretation is accepted, the word विरचितजटामौलिभाजः should be taken as an adjective qualifying गौरीभर्तुः, meaning 'of the lord of Gauri (i. e. Pārvati).' If the third interpretation is accepted the word should be taken as an adjective, qualifying गौरीभर्तुः, meaning 'of the lord of Gouri, the wife of the god ईशान.' Here the word गौरी means 'the wife of the god ईशान who resembles Pārvati in beauty. ( १ ) विरचिताः चित्रिताः जटाः शाखाकृतयः यत्र सा विरचितजटा। सा चासौ मौलिः शिरोभूषणं किरीटाख्यं विरचितजटामौलिः। तां भजते सेवते इति विरचितजटामौलिभाक्। तस्य। ( २ ) विरचिता एकत्र बद्धा जटा एव मौलिः किरीटं विरचितजटामौलिः। तां भजते धारयतीति विरचितजटामौलिभाक्। शम्भुरित्यर्थः। तस्य। ( ३ ) विरचितजटां मौलिं किरीटं भजते इति विरचितजटामौलिभाक्। तस्य। अनतिचरतः – (1) not going out of her right way; (2) not giving up her place (i. e. the head of Shambhu or the crown of the lord of the north-eastern direction). (3) not moving very speedily. नातिसान्द्रं पतन्तः – diffusing not very densly. अमलाः – white. 'अमलं विशदेऽभ्रके' इति विश्वलोचने. तन्तुजालावलम्बाः – penetrating through nets of interloping threads (or hanging like a mass of threads). तन्तूनां जालं आनायः तन्तुजालम्। तेन अवलम्बः प्रवेशः येषां ते। यद्वा तन्तूनां जालं समूहः तन्तुजालम्। तदिव अवलम्बः आलम्बनं तन्तुजालावलम्बः।

सोऽस्त्येषामिति तन्तुजालावलम्बाः । 'ओऽभ्रादिभ्यः' इति मत्वर्थीयोऽत्यः । सुरतजनिताम् — caused by sexual enjoyment.

**Stanza 91** — निशीथे — at midnight. त्वत्संरोधापगमविशदैः — bright owing to the removal of the obstruction caused by you. त्वत्संरोधः त्वया कृतः प्रतिबंधः । तस्य अपगमः दूरोत्सरणं । तेन विशदाः दीप्तिमन्तः निर्मलाः शुभ्राः वा । तैः । एकाकिन्यः — having no company; मदनविवशाः — pining with love. नीलवासोऽवगुण्ठाः — wearing blue or black garments. नीलं च तद्वासश्च नीलवासः । तदेव अवगुण्ठः शरीरावगुण्ठनसाधनं यासां ताः नीलवासोऽवगुण्ठाः । The ladies of the city of Alakā, wishing to go stealthily to the abodes of their lovers, wear blue or black garments to conceal their movements in the dark nights. प्राप्ताकल्पाः — wearing ornaments. प्राप्ताः लब्धाः परिहिताः आकल्पाः आभरणानि याभिः । ताः । 'आकल्पवेशौ नेपथ्यम्' इत्यमरः. ' उत्पथेभ्यः — (giving up) bad paths (like lanes). विपणीः — bazar roads. 'विपणिस्तु स्त्रियां पण्यवीथ्यामापणपण्ययोः' इति विश्वलोचने. The love-lorn ladies of the city of Alakā, stealing out of their rooms to go to the abodes of their lovers, give up going stealthily by lanes and begin to move on the bazar road to dispel doubts of other citizens about their misconduct.

**Stanza-92** — उपह्वरे — in secret. 'उपह्वरं समीपे स्याद्रहोमात्रेऽप्युपह्वरम्' इति विश्वलोचने । पाद्यम् — water for washing feet. 'पाद्यं पादाय वारिणि' इत्यमरः । 'पाद्यं पयसि निन्द्ये च' इति विश्वलोचने । इन्दुपादाभिवर्षात् — owing to the downpour of rays of the moon. इन्दोश्चन्द्रमसः पादाः रश्मयः इन्दुपादाः । तेषामभिवर्षः वर्षणम् । तस्मात् । 'पादोऽस्त्री चरणे मूले तुरीयांशेऽपि दीधितौ' इति 'वर्षमस्त्री वर्षणेऽब्दे जम्बूद्वीपे घने पुमान्' इति च विश्वलोचने । स्फुटजललवस्यन्दिनः — exuding pure drops of water. स्फुटाः निर्मलाश्च ते जललवाः उदबिन्दवश्च स्फुटजललवाः । तान् स्यन्दन्ते स्रावयन्ति इति स्फुटजललवस्यन्दिनः । स्यन्द् — to pour forth. निष्कुटानां — of the pleasure-gardens near the mansions. 'निष्कुटस्तु गृहोद्याने स्यात्केदारकपाटयोः' इति विश्वलोचने । धौतोपान्ताः — washing off the regions in the immediate proximity. धौताः प्रक्षालिताः उपान्ताः समीपप्रदेशाः यैः ते ।

प्रस्तुताः — excellent. अपथके — on the untrodden path. राजमार्गादन्यस्मिञ्जनताज्ञाते पथि । कामुकीनाम् — of the passionate ladies. कामुकी रिंसुः । 'वृषस्यन्ती तु कामुकी' इत्यमरः । The city of Alakā is described here as abounding in magnificient buildings, having moonstones beset in the uppermost parts. As the moon pours her rays upon the moonstones, those begin to ooze. The water oozing out of the moon-stones, falls down so as to wash off the regions of the pleasure-gardens, adjoining the palatial buildings. The passionate ladies of the city, moving on bad paths, take advantage of this water to wash their feet secretly and dispel their fatigue.

**Stanza 93** — रात्रिसम्भोगहेतोः — for the sake of nocturnal sexual enjoyment. स्खलितविषमं गच्छन्तीनाम् — going unfairly owing to their frequent stumbles. स्खलितेन विक्लवगत्या विषमं अश्लक्ष्णं यथा स्यात्तथा । गत्युत्कम्पात् — owing to the agitation caused by the gait. सौभाग्याङ्कैः इव — resembling the signs of the blessed state of wifehood. सौभाग्यस्य सुभगत्वस्य अङ्कभूतानि चिह्नभूतानि सौभाग्याङ्कानि । तैः । 'अङ्को रेखायां चिह्नलक्ष्मणोः' इति, 'सौभाग्यं सुभगत्वे स्याद्योगभेदे पुमानयम्' इति च विश्वलोचने. विलसितैः — beautiful. आतताः — covered over with.

**Stanza 94** — कुसुमितलतामण्डपेषु — in bowers of flowery creepers. कुसुमिताः सञ्जातकुसुमाः । 'तदस्य सञ्जातं तारकादिभ्यः इतः' इतीतः । कुसुमिताः सञ्जातपुष्पाश्च ताः लताः वल्लयश्च कुसुमितलताः । तासां मण्डपाः गृहाणि । तेषु । विततमधुपैः — having bees spread all over. वितताः विशेषेण तताः विसृत्वराः मधुपाः भ्रमराः यत्र शय्योपान्ते । तैः । आत्तसम्भोगगन्धैः — scented by the perfumes used at the time of sexual enjoyment. सम्भोगस्य गन्धाः गन्धद्रव्याणि सम्भोगगन्धाः । सम्भोगकालप्रयुक्तगन्धद्रव्याणीत्यर्थः । आत्ताः गृहीताः सम्भोगगन्धाः यैः शय्योपान्तैः ते । तैः । नीलोत्तंसैः — possessing blue ornaments worn on the crowns of the heads (of the ladies engaged in sexual enjoyment.) नीलाः नीलोत्पलकल्पितत्वान्नीलवर्णाः उत्तंसाः शिरोभूषणानि यत्र शय्योपान्ते । तैः । शय्योपान्तैः — by the skirts of beds. शय्यायाः शयनीयस्य उपान्ताः शयनीयसमीपप्रदेशाः शय्योपान्ताः । तैः । कर्णविभ्रंशिभिः — slipping off the ears. कर्णाभ्यां विभ्रंस्यन्तीति कर्णविभ्रंशिनः । तैः । कनककमलैः

— by lotuses possessing gold-like colour. कनकानीव कनकानि। कनकानि सुवर्णवर्णत्वात्तत्तुल्यानि च तानि कमलानि च कनककमलानि। यद्वा कनकविनिर्मितकमलानीव कमलानि कनककमलानि। वल्गुप्तच्छेदै — reduced to pieces. वल्गुप्ताः कृताः च्छेदाः खण्डाः येषां ते। तैः। निधुवनपदं — the abode of sexual enjoyment.

**Stanza 95** — कुङ्कुमारक्तशोभैः — assuming lustre (colour) red like that of saffron. कुङ्कुमं काश्मीरजन्म। 'अथ कुङ्कुमं। काश्मीरजन्माऽग्निशिखं' इत्यमरः। कुङ्कुमस्य आरक्ता रक्तवर्णा शोभेव शोभा कान्तिः येषां तैः। यद्वा कुङ्कुममिव आरक्ता कुङ्कुमारक्ता। कुङ्कुमारक्ता शोभा कान्तिः येषां तैः। वहुतरफलैः — by a large number of fruits. वहुतराणि विपुलतराणि च तानि फलानि च वहुतरफलानि। तैः। मुक्ताजालैः — by nets of pearls. जालाकारमुक्तामणिविरचनैः। मुक्तानां जालं आनायाकारः स्त्रीभिः केशेषु धार्यमाणः रचनाविशेषः मुक्ताजालम्। तैः। स्तनपरिसरच्छिन्नसूत्रैः — the strings of which are broken or cut off owing to the expanse of the circumjacent regions of the breasts. स्तनयोः उरोजयोः परिसरः विस्तारः स्तनपरिसरः तेन। च्छिन्नानि सूत्राणि तन्तवः येषां ते। तैः। Mallinatha dissolves this compound as — स्तनयोः परिसरः प्रदेशः। तत्र च्छिन्नानि सूत्राणि येषां ते। परिसरः — width. परितः सरः सरणं प्रसरणं परिसरः। The pearl necklace, being caught between two breasts, expanding in all directions owing to their being pressed very much by the lovers while closely embracing, has its string cut into pieces. मन्दाकिन्याः — of the river Ganges flowing high up in the sky. 'मन्दाकिनी वियद्गङ्गा' इत्यमरः। तटवनमनु — near the forests grown on the banks. पुष्पास्तीर्णाः — scattered over with flowers. पुष्पैः कुसुमैः आस्तीर्णाः प्रच्छन्नाः ततः वा पुष्पास्तीर्णाः। पुलिनरचिताः — prepared in the sandy beeches. पुलिनेषु तोयोत्थितसिकतिलप्रदेशेषु रचिताः निर्मिताः। 'तोयोत्थितं तत् पुलिनम्' इत्यमरः। सम्भोगदेशाः — the abodes of sexual enjoyments.

**Stanza 96** — गत्यायासात् — owing to the exertion or trouble caused by their gait; (by their laborious gait.) गतेः आयासः गत्यायासः। तस्मात्। गलितकबरीबन्धमुक्तैः — dropped down from the slackened braids

of hair. कबर्याः केशवेशस्य बन्धः विरचना कबरीबन्धः । 'कबरं लवणेऽम्ले च शाककेशभिदोः स्त्रियाम्' इति विश्वलोचने । गलितः श्लथीभूतश्चासौ कबरीबन्धश्च गलितकबरीबन्धः । तस्मात् मुक्तैः गलितैः । कुसुमधनुषः – of the flower-arrowed god; of the god of love. बाणपातायमानैः – imitating the discharged arrows. बाणपातः इव आचरतीति बाणपातायते । शानच् । अधिक्षोणि – on the ground. क्षोण्यामधि अधिक्षोणि. This is an Adverbial compound. चरण-निहितैः – deposited by the feet. चरणैः पादैः निहिताः भूमौ स्थापिताः । तैः । नैशः – to be traversed by night; nocturnal.

**Stanza 97** — सर्वौपम्यप्रणिहितधिया – whose mind is centred on all the standards of comparison. सर्वाणि च तानि औपम्यानि उपमानानि च सर्वौपम्यानि । तेषु प्रणिहिता दत्तावधाना धीः शेमुषी यस्य येन वा सः । तेन । कमलनिलया – the lotus-aboded one (i. e. Laxmi). कमलं निलयं निवासभूमिः यस्याः सा ।

**Stanza - 98** — चित्तभर्तुः – of the attractive one (man or woman). चित्तं बिभर्ति हरतीति चित्तभर्ता । तस्य तस्याः वा । परपरता – exceeding subservience to others. परता – subservience. परस्मिन् परता परपरता । यद्वा परा महती परता अधीनता परपरता । मानभङ्गः – humiliation. मानस्य अभिमानस्य भङ्गः मानभङ्गः । प्रियजनतया – with the assemblage of the beloved ones or of those who are dear. जनानां समूहः जनता । The termination तल् (ता) is affixed to the word जन to imply an 'assemblage,' under the rule 'गजग्रामजनबन्धुसहायात्तल्'. प्रिया चासौ जनता जनसमूहश्च प्रियजनता । प्रियजनानां समूहः इत्यर्थः । तया । सङ्गमाशानु-बन्धात् अन्यः – other than the one of hope for [their] union. सङ्गमस्य मीलनस्य आशा आकाङ्क्षा सङ्गमाशा । तस्य अनुबन्धः । तस्मात् । इष्टसंयोगसाध्यात् – brought about by the union yet to be effected with their beloved ones. कुसुमशरजादन्यः – other than the one arising from (owing to) the flower-arrowed one (i. e. the god of love). कुसुमशरात् मदनाख्यशृङ्गा-रावस्थायाः जायते इति कुसुमशरजः । तस्मात् ।

**Stanza 99** — आकल्पान् – desires. प्रणयकलहः – love-quarrel. विप्रयोगोपपत्तिः – possibility of separation. विप्रयोगस्य वियोगस्य उपपत्तिः सम्भवः शक्यता वा विप्रयोगोपपत्तिः ।

**Stanza 100 —** इष्टसर्वर्धिभाजे — possessing all prosperities desired for. सर्वाश्च ताः ऋद्धयः वैभवानि च सर्वर्द्धयः। इष्टाश्च ताः सर्वर्द्धयश्च इष्टसर्वर्द्धयः। ताः भजते इति इष्टसर्वर्द्धिभाक्। तस्यै। स्पृहयतितराम् — cherishes ardent désire for. आसीनाः — residents. शतमखपुरीम् — the city of Indra. शतमुखस्य इन्द्रस्य पुरी शतमखपुरी। ताम्। अमरावतीमित्यर्थः। विहरणभयात् — through fear of departure (from her). चिन्त्यम् — provoking anxiety. मृत्युञ्जयानाम् — of those who are the conquerors of death. मृत्युं जयति निरुणद्धीति मृत्युञ्जयः। तेषां मृत्युञ्जयानाम्। वित्तेशानां — of the lords of wealth (i. e. Yakshas). 'वित्ताधिपः कुबेरः स्यात्प्रभौ धनिकयक्षयोः' इति विश्वलोचने.

**Stanza 101 —** अक्षीणर्द्धिं — prosperity having no decay or free from deterioration. अक्षीणा क्षयविकला चासौ ऋद्धिः ऐश्वर्यं च अक्षीणर्द्धिः। ताम्। पल्लवोल्लासिताः — shining or looking beautiful owing to the sprouts. पल्लवैः किसलयैः उल्लासिताः तेजस्वितां नीताः पल्लवोल्लासिताः। उन्मत्तभ्रमरमुखराः — noisy owing to the intoxicated or extremely delighted bees. उन्मत्ताः मधुरसपानेन मत्ताः सञ्जातानन्दाः वा उन्मत्ताः भ्रमराः। तैः मुखराः वाचालिताः। नित्यपुष्पाः — everflowering. एकशः — simultaneously. कल्पद्रुमसहचराः — coexisting with wish-fulfilling trees. सह चरन्तीति सहचराः। कल्पद्रुमाणां सहचराः कल्पद्रुमसहचराः। तत्सधर्माणः — possessing properties similar to those of the wish-fulfilling trees.

**Stanza 102 —** भृङ्गोपगीताः — eulogised by bees. भृङ्गैः भ्रमरैः उपगीताः उपश्लोकिताः भृङ्गोपगीताः। हंसश्रेणीरचितरशनाः — having girdle-like circular figures formed by the rows of swans i. e. having a girdle formed by rows of swans i. e. encircled with rows of swans. हंसानां मरालानां श्रेण्यः पङ्क्तयः हंसश्रेण्यः। ताभिः रचिताः कृताः रशनाः काञ्च्यः यासु ताः। रशनाः इव रशनाः। मण्डलाकाररचनाविशेषः इत्यर्थः। नित्यपद्माः — (1) always bearing lotuses; (2) always looking beautiful. नित्यं सततं पद्मानि कमलानि यासां ताः। यद्वा नित्या क्षयविकला पद्मा लक्ष्मीः शोभा

यासां ताः । The Nirnayasagara edition of पार्श्वाभ्युदय reads हंसश्रेणी-रचितरचनाः । I interpret this reading as—'having various figures formed by the rows of swans. हंसश्रेणीभिः रचिताः विहिताः रचनाः नानाविधाः आकृतयः यत्र ताः ।

**Stanza-103** — नित्यप्रहतमुरवाम्भोदनादैः — with the sounds, resembling the thunderings of clouds, of the drums always beaten. नित्य प्रहताः अभिहताः नित्यप्रहताः । नित्यप्रहताश्च ते मुरवाः मुरजाश्च नित्यप्रहतमुरवाः । तेषां अम्भोदानां मेघानां नादाः गर्जितध्वनयः इव नादाः ध्वनयः । तैः । प्रतीताः — highly pleased. 'प्रतीतः सादरे ख्याते हृष्टे दृष्टे विरक्षणे । प्रतीत एते ज्ञाते च' इति विश्वलोचने. चित्रपिच्छाः — possessing multicoloured plumages or feathers. चित्राणि मेचकानि अद्भुतानि वा पिच्छानि कलापाः येषां ते । 'चित्रं तु कर्बुराद्भुतयोस्त्रिषु' इति विश्वलोचने । नित्यभास्वत्कलापाः — possessing evershining plumages. नित्यं सततं भास्वन्तः प्रकाशयुक्ताः कलापाः बर्हाणि येषां ते । केकोत्कण्ठाः । having their necks raised up for the sake of giving out crackling notes. केकाभिः उद्गताः उन्नतिं प्राप्ताः कण्ठाः येषां ते । विरचितलयं — in accordance with the time of music. विरचितः लयः नृत्यादिसाम्यं यस्मिन् कर्मणि यथा स्यात् तथा । 'लयो नृत्यादिसाम्ये स्याद्विनाशाश्लेषयोर्लयः ।' इति विश्वलोचने.

**Stanza-104** — सुधापङ्कधौतेषु — white owing to their being covered with sticking plaster. सुधेव सुधा धवलवर्णत्वात् । सुधायाश्चूर्णलेपस्य पङ्केन जम्बालेन कर्दमेन धौताः धवलीकृताः । तेषु । ज्योत्स्नंमन्येषु — considering themselves to be the moonlight (incarnate). ज्योत्स्नामात्मानं मन्यन्ते इति ज्योत्स्नंमन्याः । तेषु । शीतकिरणकिरणकलापायमानेष्वित्यर्थः । उद्यद्दलभिषु — possessing topmost parts raised high up. वितन्वन्नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः — charming owing to the obstruction of the course of darkness being removed by the constantly spreading moonlight. नित्या सार्वकालिकी चासौ ज्योत्स्ना कौमुदी च नित्यज्योत्स्ना । वितन्वती प्रसारणशीला चासौ नित्यज्योत्स्ना च वितन्वन्नित्यज्योत्स्ना । तया प्रतिहता प्रतिबद्धा तमोवृत्तिः अन्धकारप्रवृत्तिः तया रम्याः मनोहराः । प्रदोषाः —

evenings. 'प्रदोषो रजनीमुखं' इत्यमरः। स्त्रीसहायैः – having women for their companions. स्त्रियः नार्यः सहायाः सहचर्यः येषां ते। निधिभुगधिपैः – (1) by the lords of Yaksas; (2) by those having Kubera for their lord. निधीन् नवसङ्ख्याकान् भुञ्जन्तीति निधिभुजः। क्विप्। निधिभुजां अधिपाः क्षितिपतयः निधिभुगधिपाः। तैः। यद्वा निधिभुक् कुबेरः अधिपः येषां ते निधिभुगधिपाः। तैः। यक्षैरित्यर्थः।

**Stanza 105** — प्रथमगणनां ईयुषीम् – regarded as most excellent. प्रथमा उत्कृष्टा इति गणना प्रथमगणना। ताम्। ईयुषीम् is a perfect participle derived from the root ई by affixing the termination क्वसु (वस्) under the rule 'वस्सदिणश्रोः क्वसुः'. प्रकृतिचतुराम् – naturally beautiful. प्रकृत्या स्वभावेन चतुरा मनोहारिणी प्रकृतिचतुरा। ताम्। अकृत्रिमसौन्दर्ययुक्तामित्यर्थः। लीलाकमलम् – (1) the lotus-flower held in the hand as a play-thing. (2) a beautiful lotus. लीला क्रीडा शोभा वा। लीलार्थं क्रीडार्थं स्वसौन्दर्याभिवृद्ध्यर्थं वा कमलं पद्मं लीलाकमलम्। यद्वा लीलया शोभया उपलक्षितं कमलं लीलाकमलम्। वालकुन्दानुविद्धम् – the particular construction or interweaving of semi-blossomed Kunda-flowers. वालान्यर्धोन्मीलितानि च तानि कुन्दानि कुन्दकुसुमानि च वालकुन्दानि। तेषामनुविद्धमनुवेधः विरचनाविशेषः। तत्। यद्वा वालकुन्दयोरनुविद्धम्। 'वालः पुंसि शिशौ केशे वाजिवारणवालधौ। मूर्खेऽपि वालो वालं तु ह्रीबेरे पुंनपुंसकम्।' इति विश्वलोचने। वालं ह्रीबेरं च कुन्दं कुन्दकुसुमं च वालकुन्दे। प्रत्येकशोऽत्र जातावेकवचनम्। तयोरनुविद्धं रचनाविशेषः। तत्। अर्धोन्मीलितमाघ्यकुसुमविरचितरचनाविशेषं, कुन्दकुसुमह्रीवेरारचितरचनाविशेषं वा।

**Stanza - 106** — स्मितरुचिलसज्ज्योत्स्नया – by glittering moon-light in the form of the white lustre of smiles. स्मितं मृदुहास्यं। तस्य रुचिः कान्तिः स्मितरुचिः। सैव लसन्ती शोभमाना प्रकाशमाना वा ज्योत्स्ना चन्द्रप्रकाशः। तया। आबद्धशोभा – made elegant. आबद्धा विरचिता शोभा सौन्दर्यं यस्याः यस्यां सा। अस्तदोषा – (1) free from all drawbacks; with all drawbacks removed. (2) having no relation with night. अस्ताः परिहृताः दोषाः यया सा। पक्षे अस्ता परिहृता दोषा रात्रिः यया सा अस्तदोषा।

अकलङ्का – spotless. न विद्यते कलङ्कः यस्या सा। हिममहिमजां – the beauty manifested by the glory of winter-season. हिमस्य शीततो: महिम्ना प्रकर्षेण महिम्नः प्रकर्षात् वा जाता हिममहिमजा। ताम्। मानयन्तीभिः – by those highly appreciating. लोध्रप्रसवरजसा – with the pollens of Lodhra-flowers. लोध्राल्लोध्रकुसुमात् प्रसवः उत्पत्तिर्यस्य तल्लोध्रप्रसवम्। तच्च तद्रजश्च। तेन। यद्वा लोध्राणां प्रसवाः कुसुमानि लोध्रप्रसवाः। तेषां रजः परागः। तेन। लोध्रकुसुमप्रभवपरागसाधनेनेत्यर्थः। 'प्रसवो गर्भमोक्षे स्याद्वृक्षाणां फलपुष्पयोः। परम्पराप्रसङ्गे च लोकोत्पादे च पुत्रयोः' इति, 'रजःपरागे रेणौ तु रजवद्दृश्यते रजः' इति च विश्वलोचने। प्रालेयांशोः – of the moon. उपहसति – laughs at. The beauty of the faces of the ladies of the city of Ālakā always laughs at and would laugh at the beauty of the moon, when you would be reaching the city.

**Stanza – 107** — स्वरुचिरचिते – prepared to their liking. स्वस्य आत्मनः रुचिः इच्छा स्वरुचिः। 'रुचिरिच्छा रुचा रुक्ता शोभाभिष्वङ्गयोरपि' इति विश्वलोचने। तया तदानुकूल्येन वा रचिते विहिते। कल्पवृक्षप्रसूते – brought forth by the wish-fulfilling trees. कल्पवृक्षात् कल्पपादपात् प्रसूतः जातः कल्पवृक्षप्रसूतः। तस्मिन्। 'कल्पवृक्षः सङ्कल्पपूरणात्' इति क्षीरस्वामी। आकल्पः – an ornament. 'आकल्पवेषौ नेपथ्यं' इत्यमरः। 'वेषो हि वस्त्रालङ्कारमाल्यप्रसाधनैरङ्गशोभा' इति क्षीरस्वामी। चूडापाशे – in the luxuriant hair on the head. केशकलापः चूडापाशः। 'चूडा वलयभेदे स्याच्छिखायां वलभावपि' इति 'पाशः पक्षादिबन्धे स्याच्चयार्थस्तु कचात्परः। छात्राद्यन्ते च निन्दार्थः कर्णान्ते शोभनार्थकः' इति च विश्वलोचने। आत्तानुरागम् – possessing red colour. आत्तः गृहीतः अनुरागः लौहित्यं येन तत्। नवकुरवकम् – fresh Kadamba flower. नवं प्रत्यग्रं च तत् कुरबकं कुरवककुसुमं च नवकुरवकम्। 'तत्र शोणे कुरवकम्' इत्यमरः। कुरवकं वसन्तर्तुसम्भवः पुष्पविशेषः। शिरीषम् – the Śirīṣa flower. शिरीषं ग्रीष्मर्तुसम्भवः पुष्पविशेषः। अभिनवप्रीतिं आदृत्य – owing to their being attached to the love for novelties. अभिनवे नूतने प्रीतिः रुचिः अभिनवप्रीतिः। ताम्। आदृत्य अपेक्ष्य। किञ्चित् – any insignificant thing.

**Stanza 108** — पद्मम् — a lotus which grows in the autumnal season ( शरद् ). कुरवकं — a flower, growing in the vernal season ( वसन्त, the spring ). कुन्दं — a flower growing in the vernal season ( शिशिर, comprising the two months Māgha and Phalguna ). लौध्रो रेणुः — the pollens of Lodhra flowers. The Lodhra flower suggests the हेमन्त season, comprising the two months मार्गशीर्ष and पौष. 'नवप्रवालो-द्गमसस्यरम्यः प्रफुल्ललोध्रः परिपक्वशालिः । विलीनपद्मः प्रपततुषारः हेमन्तकालः समुपागतः प्रिये' ॥ शिरीषं — a शिरीष flower, suggests the hot season ( ग्रीष्मर्तु ) comprising the two montes ज्येष्ठ and आषाढ. नीपं — a नीप flower suggests the rainy season comprising the two months आषाढ and श्रावण. षण्णां ऋतूनां — of the six seasons, The six seasons are enumerated as— 'शिशिरश्च वसन्तश्च ग्रीष्मो वर्षा शरद्धिमः'. In the city of Alakā, there are all the six seasons throughout the whole year. one season does not follow the other one, as all of them set in simultaneously in every month of the year there. व्यतिकरमहः — the beauty or pleasure generated by the combination ( of the six seasons ). व्यतिकरमहः — व्यतिकरः व्यतिषङ्गः अन्योन्यानुप्रवेशः । तस्य तेन जनितः वा महः उत्सवः व्यतिकरमहः । 'भवेद्व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः' इति, 'महस्तूत्सवतेजसोः' इति च विश्वलोचने । व्यक्तिव्यक्तम् — clearly manifested. व्यक्त्या पृथगात्मतया स्पष्टतया वा व्यक्तं प्रकटीभूतम् ।

**Stanza - 109** — शक्रम्मन्याः — considering themselves to be Indras. शक्रमात्मानं मन्यन्ते इति शक्रम्मन्याः । परिणतशरच्चन्द्रिकानिर्मलानि — resplendent like fully developed autumnal moon-light. परिणता पूर्णतां प्राप्ता शरच्चन्द्रिका शरत्कालोदितसम्पूर्णचन्द्रचन्द्रिका परिणतशरच्चन्द्रिका । सेव निर्मलानि विशदानि । अदभ्रशुभ्रवर्णानीत्यर्थः । सकलकलशारदकलानिधिकौमुदी-विमलानि हर्म्यस्थलानीति भावः । प्रणयविवशाः — who have lost control over themselves owing to their being love-lorn. प्रणयेन विवशाः, प्रणयस्य विविशाः वा प्रणयविवशाः । मदयित्नुमदनमथितमनस्कारत्वाद्विनष्टसञ्ज्ञाः । विषया-शावशाधीनाः इत्यर्थः । स्वापतेयोष्मवन्ति — possessing warmth of wealth. स्वापतेयं धनम् । स्वपतौ साधु स्वापतेयम् । The termination ढञ् ( एय )

is affixed to the word स्वपति under the rule 'पथ्यतिथिवसतिस्वपतेर्ढञ्'. स्वापतेयस्योष्मा स्वापतेयोष्मा । सः प्रशस्तः नित्यं वा एषामस्तीति स्वापतेयोष्मवन्ति । प्रशंसायां नित्ययोगे वा मतुः । दारिद्र्यशीतकर्दशजनितार्तिविकलानि धनजनितसुखसाधनसम्पन्नानीत्यर्थः । सर्वकामाभितृप्ताः — who have all their longings fulfilled. सर्वे च ते कामाः अभिलाषाश्च सर्वकामाः। अभितृप्ताः सर्वकामाः येषां ते । वाहिताग्न्यादित्वात्समासः । सितमणिमयानि — built up with crystal or moon-stones. सितमणिः — ( 1 ) a crystal; ( 2 ) a moon-stone.

**Stanza 110** — ज्योत्स्नाविमलिततलानि — with their surfaces whitened by moon-light. ज्योत्स्नया कौमुद्या विमलितानि शुक्लीकृतानि ज्योत्स्नाविमलितानि । ज्योत्स्नाविमलितानि तलानि पृष्ठप्रदेशाः येषां तानि। हरिमणिमयानि — covered with pavements of sapphires. हरिमणिः — नीलमणिः — a sapphire. आसवामोदवन्ति — giving enlivening pleasure ( or emitting fragrance of liquor ). आसुवति उत्तेजयति इति आसवः । उत्तेजनाश्च ते आमोदाः सुगन्धिद्रव्याणि च आसवामोदाः। यद्वा आसवामोदः मद्यसौगन्ध्यम् । सोऽस्त्येषामित्यासवामोदवन्ति । 'सुगन्धिमुदि वामोदः' इति विश्वलोचने । ज्योतिश्छायाकुसुमरचनानि — decorated with flowers in the form of reflected luminaries. ज्योतिषां ग्रहनक्षत्रप्रकीर्णकतारकाणां छायाः प्रतिबिम्बानि ज्योतिश्छायाः। 'ज्योतिस्ताराग्निभाज्वालाद्दक्पुत्रार्थाध्वरात्मसु' इति वैजयन्ती । छाया स्यादातपाभावे सत्कान्त्युत्कोचकान्तिषु । प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने । ज्योतिश्छाया एव कुसुमरचनानि यत्र। कुसुमानां रचनानि रचनाः वा कुसुमरचनानि कुसुमरचनाः वा कुट्टिमानि — pavements. पूर्णकामाः — ( 1 ) with passions intensified, having passions strongly excited ( 2 ) having their passion fully satisfied. पूर्णः बलवान् कामः सुरतक्रीडाभिलाषः येषां ते । यद्वा सुरतक्रीडाभिलाषेण पूर्णाः इत्यर्थः । वाहिताग्न्यादित्वात्समासः । उत्तमस्त्रीसहायाः — associated with most beautiful ladies. उत्तमाश्च ताः स्त्रियश्च उत्तमस्त्रियः । ताः सहायाः येषां ते उत्तमस्त्रीसहायाः। रंरम्यन्ते — ( 1 ) have sexual enjoyment very much; ( 2 ) sport very much. This is a frequentative form derived from the root. रम.

**Stanza 111** — लोलापाङ्गाः — ( 1 ) with the corners of their eyes manifesting passion; ( 2 ) with the corners of their eyes vacillating. लोलाः सतृष्णाः चलाः वा अपाङ्गाः नेत्रान्ताः यासां ताः । 'लोला

जिह्वाश्रियोर्लोलः सतृष्णचलयोस्त्रिषु' इति 'अपाङ्गस्त्वङ्गविकले नेत्रान्ते तिलके पुमान्' इति च विश्वलोचने । सुरसरसिकाः – taking delight in sexual intercourse. सुरसः शृङ्गाररसः । तस्य रसः स्वादः अनुभवः सुरसरसः । सोऽस्त्यस्याः सा सुरसरसिका । The possessive termination ठन् is affixed to the word सुरसरस under the rule 'अतोऽनेकाचः' । 'रसः स्वादेऽपि तिक्तादौ शृङ्गारादौ द्रवे विषे' इति विश्वलोचने । प्रोन्नतभ्रूविकाराः – manifesting knittings of eyebrows in excess. प्रोन्नताः प्रकर्षेण उन्नतिं प्राप्ताः प्रोन्नताः । वृद्धिंगताः इत्यर्थः । भ्रुवोः भ्रुकुट्योः विकाराः भ्रूविकाराः । प्रोन्नता भ्रूविकाराः यासां ताः । रहसि - (1) in privacy. (2) for having sexual enjoyment. 'तत्त्वे गुह्ये रते रहः' इति विश्वलोचने । प्राणेशानाम् – the lovers. प्राणानामीशते इति प्राणेशाः । तेषाम् । मदनाचार्यकम् – the part of a preceptor teaching the secrets of sexual enjoyment. मदयति मदं कामोद्रेकं जनयति इति मदनः । 'मृदो ण्यर्थे णिज्वहुलम्' इति णिच् । 'ण्यानड् वहुलम्' इति कर्तर्यनट् । मदनः एव आचार्यः मदनाचार्यः । तस्य भावः कर्म वा मदनाचार्यकम् । यद्वा मदने रतिक्रीडाकरणाभिलाषजननकार्ये आचार्यः मदनाचार्यः । मदनाचार्यस्य भावः कर्म वा मदनाचार्यकम् । The word मदनाचार्य, having penultimate य् which has a long vowel आ preceding it, has the termination वुञ् ( अक ), implying भाव or कर्म, affixed to it under the rule 'योडो रूपोत्तमाद्वुञ्'. वामनेत्राः – The beautiful-eyed ladies. स्वाधीने – स्वस्मिन् अधीनः स्वाधीनः । तस्मिन् । As the word अधीन is included in the शौण्डादि group, it is compounded with a word possessing Locative case under the rule 'ईप् शौण्डादिभिः । This compound is to be dissolved as अधि स्वस्मिन् स्वाधीनम् under the rule 'सप्तमी शौण्डैः'. If this compound is dissolved as above; under the rule 'सप्तमी शौण्डैः' the termination ख ( ईन ) is affixed to the word अधि under the rule 'अषडक्षाशितङ्ग्वलंकर्मालपुरुषाध्युत्तरपदात्खः' [ पा. २०७१ (५।४।७) ]. कल्पवृक्षप्रसूतम् – come forth from the wish-fulfilling trees. कल्पवृक्षात् प्रसूतं कल्पवृक्षप्रसूतम् । When the ladies themselves are able to attract their lovers towards themselves for sexual enjoyment, there is no need of taking wine to make themselves able to attract them. The ladies of the city are so beautiful that they can themselves attract their lovers towards them and there is, therefore, no need of employing othe means for the purpose.

**Stanza 112** — गेहे गेहे – in every house. धर्मानुरागात् – through love for religion. धर्मे अनुरागः भक्तिः धर्मानुरागः । तस्माद्धेतोः । पुण्यकामैः – desirous of attaining religious merit or cherishing desires for happiness. पुण्यं सुकृतं मनोज्ञं सुकृतफलं वा कामयन्ते पुण्यकामाः । तैः । The termination ण ( अ ) is affixed to the root काम् which is preceded by its object, under the rule 'शीलीक्षीक्षम्काम्याचरभक्षेर्णः' । धनदसचिवैः – by the servants of Kubera or along with Kubera. धनदस्य सचिवाः सहायाः भृत्याः मन्त्रिणः वा धनदसचिवाः । तैः । यद्वा धनदः सचिवः सहायः येषां ते । तैः । 'मन्त्री सहायः सचिवौ' इत्यमरः । 'सचिवो भृत्यमन्त्रिणोः' इति विश्वलोचने । धनदसचिवैः पुण्यकामैः – by subjects, along with Kubera, desirous of attaining religious merit. त्वद्गम्भीरध्वनिषु – producing deep sound or noise like that of you. गम्भीरः मन्द्रश्चासौ ध्वनिः ध्वानश्च गम्भीरध्वनिः तव गम्भीरध्वनिरिव गम्भीरध्वनिः यस्य सः । तेषु । 'ईवुपमानपूर्वस्य वुखं गतार्थत्वात्' इति वसः । पुष्करेषु-पुष्करम् – a kettle-drum. 'पुष्करं व्योम्नि पानीये हस्तिहस्ताग्रपद्मयोः । रोगोरगौषधिद्वीपतीर्थभेदेऽपि सारसे । काण्डे खड्गफले वाद्यभाण्डवक्त्रे च पुष्करम्' इति विश्वलोचने । जिनमहः – a festival in honour of Jina. महः – (1) a festival; (2) worship.

**Stanza 113** — बिम्बाधराणाम्–बिम्बाधरा – a lady with her lower lips red like the Bimba fruit; having Bimba-like lower lips. कामिनी – a beautiful woman. नीवीबन्धोच्छ्वसितशिथिलम् – loosened owing to the untying of the knots tying together the ends of the garments worn by them round their buttocks and loins. नीवी – an underwear. जघनवसनम् - 'नीवीपरिपणे ग्रन्थौ स्त्रीणां जघनवाससि' इति विश्वः । It seems that in those days women used to wear underwears upon which they wore Sāris. नीव्याः बन्धः ग्रन्थिः नीवीबन्धः । तस्य उच्छ्वसितमुच्छ्वासः विश्लेषः तेन शिथिलं श्लथीभूतं । 'नब्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च । Owing to the knots of the underwears being untyied, the upper garment worn by the ladies became loosened. हारि – attractive. कामप्रसवभवनम् – the abode of the origination of ( or the abode provoking passion. ). कामस्य निधुवनेच्छवनाभिलाषस्य प्रसवः उत्पत्तिः काम प्रसवः । तस्य स्थानम् । आदेष्टु-

कामम् – desirous of showing. आदेष्टुं प्रदर्शयितुं कामः अभिलाषः यस्य तत्। जिगलिषु – wishing to slip down. गलितुमिच्छु जिगलिषु। This is a Desiderative form derived from the root गल् by affixing the termination सन् under the rule 'तुमीच्छायां धोर्वाप्' and then affixing the termination उ to the सन्नत form under the rule 'सन्भिक्षाशंसादुः'. क्षौमं – a garment. काञ्चीदाम्ना – by a string-like girdle. कथमपि – anyhow.

**Stanza 114** — कामद्विपमुखपटच्छायम् – possessing beauty similar to that of the beautiful face-cloth of the elephant of the god of love. कामस्य मदनस्य द्विपः गजः कामद्विपः। तस्य मुखपटः मुखालङ्कारभूतः पटः। तस्य च्छायेव च्छाया कान्तिः शोभा यस्य तत्। यद्वा द्विपस्य मुखपटः द्विपमुखपटः। कामः काम्यः। मनोहरः इत्यर्थः। 'कामः स्मरेच्छयोः काम्ये कामं रेतोनिकामयोः' इति विश्वलोचने। कामश्चासौ द्विपमुखपटश्च कामद्विपमुखपटः। तस्य च्छायेव च्छाया शोभा यस्य तत्। आस्रस्तनीवि – with their knots tying the ends of the garments loosed (relaxed) a little. आस्रस्ता ईषत् श्लथीभूता नीवी स्त्रीकटीवस्त्रग्रन्थिः यस्य तत्। 'नीवी तु स्त्रीकटीवस्त्रग्रन्थौ मूलधने स्त्रियाम्' इति विश्वलोचने। श्रीमत् – very beautiful. श्रीः प्रचुराऽस्यास्तीति श्रीमत्। अत्र प्राचुर्ये मतुः। श्रोणीपुलिनवरणम् – (1) covering hips resembling the sandy beaches. श्रोणी जघनं पुलिनं सैकतमिव श्रोणीपुलिनम्। तस्य वरणं आवरणं श्रोणीपुलिनवरणम्। (2) covering sandy beaches resembling the proturberent hips. श्रोणीव पुलिनं श्रोणीपुलिनम्। श्रोणीपुलिनयोरौन्नत्यसाधर्म्याच्छ्रोण्या उपमानत्वमवसेयम्। श्रोणीव श्रोणी। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। 'युक्तवद्वासि लिङ्गसङ्ख्ये' इति युक्तवल्लिङ्गम्। तस्य वरणं आवकरम्। वृणोतीति वरणम्। 'ल्यानड्वहुलम्' इति कर्तर्यनट्। कटितटाकारपुलिनावरकमित्यर्थः। काञ्चीविभङ्गम् – (1) encircled by zones. काञ्च्याः रशनायाः विभङ्गः विरचना यत्र तत्। (2) possessing waves (ripples) circular like girdles. विविधाः भङ्गाः तरङ्गाः विभङ्गाः। 'भङ्गस्तरङ्गसम्भेदे दम्भे जयविपर्यये' इति विश्वलोचने। 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु' इत्यमरः। काञ्च्यः इव काञ्च्यः। 'देवपथादिभ्यः' इतीवार्थस्य कस्योस्। कोसि च युक्तवल्लिङ्गम्। काञ्च्याकारसदृग्वर्तुलाकारविविधरङ्गत्तरङ्गमित्यर्थः। वारि – (1) resembling water. वारीव वारि। सलिलतुल्यमित्यर्थः। (2) covering (the body). वार्यते संवार्यतेऽनेनेति वारि। अनिभृतकरेषु –

with tremulous hands. अनिभृताः मदनमदजनितवेपथुक्रान्ताः कराः हस्ताः येषां ते । तेषु । न निभृताः स्तब्धाः अनिभृताः । रागात् – passionately. घर्मतोयम् – the drops of perspiration.

**Stanza 115** — प्रमोहात् – Through excessive passion. The lovers had lost their common sense owing to their being overpowered by excessive passion. अन्तर्लीलातरलितदृशः – with their eyes turning inside sportively. The newly married ladies of the city flush with shame and turn their eyes inside when their husbands, overpowered by excessive passion, snatch away the garments worn by them and make them naked. लीलया तरलिताः सञ्जातचाञ्चल्याः लीलातरलिताः । अन्तः लीलातरलिताः दृशः यासां ताः । अंशुकेषु आक्षिप्तेषु – when the garments are snatched away. नवोढाः – the recently married ladies. शय्योत्थायं धावमानाः – running away speedily after having got up from their beds. शय्यायाः उत्थाय शय्योत्थायम् । When 'speed' is implied, the termination णमु is affixed to a root, preceded by a noun possessing the termination of the Ablative case, under the rule 'त्वरयपादाने'. अर्चिस्तुङ्गान् – possessing height owing to the rays ( emanating from the lamps. ). अर्चिभिः मयूखैः तुङ्गाः अर्चिस्तुङ्गाः । तान् । The newly married ladies of the city, deprived of their garments by their husbands, flush with shame so much that they, instead of taking up garments to wrap their bodies in, get suddenly out of their beds and run speedily towards the jewel-lamps to extinguish them. But unfortunately they cannot put them out.

**Stanza 116** — वस्त्रापाये – when the garments are removed. वस्त्राणां वसनानां अपायः अपगमः वस्त्रापायः । तस्मिन् । ह्रीमूढानां – of those who are bewildered on account of their being flushed with shame. ह्रिया लज्जया मूढाः ह्रीमूढाः । तासाम् । लज्जाविकलीकृत हेयोपादेयत्यागोपादानवतीनामित्यर्थः । मुग्धाङ्गनानाम् – of the beautiful women. मुग्धाः सुन्दर्यश्च ताः अङ्गनाः स्त्रियश्च मुग्धाङ्गनाः । तासाम् । 'सुन्दरे वाच्यवन्मुग्धो मुग्धो मूढेऽपि वाच्यवत्' इति विश्वलोचने । जघनं अभितः – on both or all sides of buttocks. वल्गताः– scattared. प्रक्षिप्ता । सुरभिरचिता – consisting of the ingredients of perfumes. सुरभिणा सुगन्धिद्रव्येण रचिता विनिर्मिता सुरभिरचिता ।

चूर्णमुष्टिः – handfuls of power. कम्पायत्तात् – कम्पायत्त – tremulous. कम्पे आयत्तः कम्पायत्तः । तस्मात् । करकिसलयात् – from their sprout-like (i. e. tender, delicate) hands. करः किसलयः इव करकिसलयः । तस्मात् । अन्तराले – in the intermediate region. विफलप्रेरणा – have their hurls rendered futile. विफला दृष्टिनिरोधफलविकला प्रेरणा पक्षेपक्रिया यस्याः सा ।

**Stanza – 117** — नेत्रा सततगतिना – by the propelling wind. नेत्रा प्रेरकेण । नयति प्रेरयतीति नेता । तेन । सततगतिना सदागतिना । वायुनेत्यर्थः। 'पवनः पवमानश्च वायुर्वातोऽनिलो मरुत् । समीरणो गन्धवाहः श्वसनश्च सदागतिः। नभस्वान्मातरिश्वा च चरण्युर्जवनस्तथा । प्रभञ्जनः' इति धनञ्जयः। यद्विमानाग्रभूमीः – to the uppermost parts of the seven-storied mansions of which. यस्याः अलकायाः विमानाः सप्तभूमिकानि गृहाणि यद्विमानाः । तेषां अग्रभूमयः उपरिष्ठाः भूमयः । ताः । शिखरखचितैः – on account of their being Lest within the floors of the uppermost parts of the mansions. शिखरेषु गृहाग्रभागेषु खचितानि निबद्धानि शिखरखचितानि । तैः । शक्रचापानुकारैः – imitating the bow of god Indra. शक्रस्य इन्द्रस्य चापः धनुःकाण्डं शक्रचापः । तमनुकरोतीति शक्रचापानुकारः । तैः । The root कृ preceded by the preposition अनु, being preceded by its object शक्रचाप, has the termination अण् affixed to it under the rule 'कर्मण्यण्'. विचित्रैः – multi-coloured. 'चित्रं तु कर्बुराद्भुतयोस्त्रिषु' इति विश्वलोचने । उन्मयूखैः – by the rays emanated or originated from. उद्गताः रत्नेभ्यः उत्क्रान्ताः मयूखाः किरणाः उन्मयूखाः । तैः । वितताः – spread over with. चित्राः – (1) variegated. (2) wonderful. सद्वितानस्य लीलाम् – the Leauty of a beautiful canopy. वितानं – a canopy. 'वितानं रिक्तमन्दयोः । त्रिषु न स्त्री. वितानं स्याद्विस्तारोल्लोचयोर्मखे' इति विश्वलोचने.

**Stanza 118** — अध्यासीनाः – resorted to. This is a present participle derived from the root आस्. The root आस्, preceded by the preposition अधि, governs the Accusative case under the rule 'कर्मैवाधेः शीङ्स्थासः'. आमुक्तप्रतनुविसरच्छीकरासारधारा – discharging thin lines of spreading sprays in large quantities. प्रतनवः स्वल्पपरिमाणाश्च ते विसरन्तश्च

प्रतनुविसरन्तः । ते च ते शीकराः वातेरिताः अम्बुकणाश्च । तेषामासारः सन्ततं पतनं । तस्य धाराः । आमुक्ताः प्रतनुविसरच्छीकरासारधाराः यया सा । 'शीकरोऽम्बुकणाः स्मृताः' इत्यमरः । 'वातास्तं वारि शीकरः' इति कात्यः । 'धारासम्पात आसारः' इत्यमरः । 'आसारस्तु प्रसरणे धारावृष्टौ सुहृद्बले' इति विश्वलोचने । शारदी – autumnal. शरदि भवा शारदी । 'तत्र भवः' इत्यण् 'इ्टिड्ढाणञ्' इति ङी च । मेघमाला – The assemblage of clouds. साक्षात् पश्यताम् – disregarding the presence of those looking at the clouds. Here, the Genative case of the word पश्यताम्, implies 'disregard' under the rule 'ता चानादरे'. आलेख्यानां स्वजलकणिकादोषं उत्पाद्य – causing damage to the paintings with the drops of their water. स्वस्य आत्मनः जलं स्वजलम् । तस्य कणिकाः विन्दवः । तासां दोषः । कणिकाकृतः दोषः इत्यर्थः । तम् ।

---

## CANTO III

**Stanza 1** — वेगात् – speedily. भवनवलभेः अन्तः – into the interior of the uppermost roofed terraces (or towers). वलभि – भी – the tower. In this sense this word is used in Mālatimadhava of Bhavabhuti. 'दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था' । (Mal. I. 15). The other reading अन्तर्भवनवलभि, giving the meaning of the Locative case on account of its being an Avyayibhāva compound, is also appropriate to the context. I would like to prefer this reading to the one printed in the text. योगिराज – accepts this reading instead of अन्तर्भवनवलभि. कथञ्चित् – anyhow. सूक्ष्मीभूताः – turned into smaller shapes. असूक्ष्माः बृहत्कायाः सूक्ष्माः स्वल्पाकाराः सम्पन्नाः सूक्ष्मीभूताः । The clouds, possessing expansive bodies, shrink into smaller dimensions while entering into the interior parts of the towers through windows. धूमोद्गारानुकृतिनिपुणाः – skilled in imitating the eruption of the volumes (or columns) of smoke; expert in imitating the smoke-escape. धूमस्य उद्गारः जालमुखेन बहिर्निःसरणं धूमोद्गारः । तस्य अनुकृतिः अनुकरणम् । तत्र निपुणाः कुशलाः धूमोद्गारानुकृतिनिपुणाः । तत्र – in the top-terraces. सुरतरसिकौ – engrossed in taking great pleasure in enjoyment. रसः आनन्दः अस्य अस्तीति रसिकः । सुरते निधुवनक्रीडायां रसिकौ सुरतरसिकौ । यद्वा सुरतस्य रसः सुरतरसः । सोऽस्यास्तीति सुरतरसिकः । तौ । शङ्कास्पृष्टाः इव – as though having their fears roused. शङ्कया भीत्या स्पृष्टाः जनितस्पर्शाः । 'शङ्का त्रासे वितर्के च' इति 'मणिदोषे भये त्रासः' इति च विश्वलोचने । जालैः – through windows. गवाक्षेभ्यः गवाक्षमुखैर्वा इत्यर्थः । 'जालस्तु क्षारकानायगवाक्षे दम्भवृक्षयोः' इति विश्वलोचने । जर्जराः – shattered into pieces.

**Stanza 2** — सलिलशिशिरैः – cool by the waters. सलिलेन शिशिराः सलिलशिशिराः । तैः । तटवनरुहाम् – grown in the forests grown along the banks. तटे तीरे वनानि तटवनानि । तत्र रोहन्तीति तटवनरुहः । तेषाम् । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु' इत्यमरः । मन्दाराणां – of the Mandara

trees. 'मन्दारः पारिजातकः' इति 'पञ्चैते देवतरवः मन्दारः पारिजातकः' इति चामरः। 'मन्दारः सिन्धुरे धूर्ते मधुद्रौ धूर्तकामिनोः' इति विश्वलोचने। छायया वारितोष्णाः— having their heat warded off by the shadows. छायया अनातपेन। 'छाया स्यादपाभावे सत्कान्त्युत्कोचकान्तिषु। प्रतिबिम्बेऽर्ककान्तायां तथा पङ्क्तौ च पालने' इति विश्वलोचने। निधिभुगधिपाः — Yakṣas. निधीन्नवसङ्ख्याकान् भुनक्तीति निधिभुक्। निधिभुक् अधिपः येषां ते निधिभुगधिपाः। राजराजानुचराः इत्यर्थः। कनककदलीषण्डभाजाम् — possessing groves of plantain-trees, coloured like gold. कनककदलीनां सुवर्णाभमोचानां षण्डः वृन्दः चयः वा कनककदलीषण्डः। तान् भजते इति तेषाम्। 'पद्मादिवृन्दे षण्डोऽस्त्री षण्डः स्याद्गोपतौ चये' इति विश्वलोचने। कदली-मोचा — a plantain-tree. 'कदली वारणवुसा रम्भा मोचांऽशुमत्फला' इत्यमरः। क्रीडाद्रीणाम् — of the pleasure-hills. अभीक्ष्णं — always.

**Stanza 3** — प्रथमकलिकाम् — the excellent bud of beauty. प्रथमा अनुत्तमा कलिका कोरकः प्रथमकलिका। ताम्। अनुपमेयकोरकरूपामित्यर्थः। स्त्रीमयीम् — womenly (i. e. abounding in women). स्त्रियः प्रकृताः अस्यामिति स्त्रीमयी। ताम्। This may be explained also as — स्त्रियः स्त्रीसमूहः अस्यामिति स्त्रीमयी। ताम्। The termination मयट् is affixed to the word स्त्री in the sense of plurality under the rule 'समूहवच्च बहुषु तयोः'। जिगीषोः— of him who is desirous of conquering. This is a Desiderative form derived from the root जि, meaning 'to conquer, to win.' मीनकेतोः — of the fish-bannered god i. e. the god of love. जयकदलिकाः— the triumphal banners; banners used to celebrate triumph. कदलिकाः— banners. 'कदलीभपताकायां पताकायां मृगान्तरे। रम्भायां चाऽथ कदली पृश्न्यां डिम्ब्यां च शाल्मलौ' इति विश्वलोचने. अमरप्रार्थिताः —longed for or courted by the gods. अमरैः निर्जरैः प्रार्थिताः अभिलषिताः अभ्यर्थिताः वा अमरप्रार्थिताः। अनेन तासां सौन्दर्यातिशयो ध्वन्यते, देवाङ्गनाभ्योऽपि तासां सुन्दरतरत्वमन्तरेण देवैः प्रार्थितत्वासम्भवात्। कनकसिकतामुष्टिनिक्षेपगूढैः — concealed by throwing handfuls of golden sands; hidden by depositing in golden sands. कनकं अस्त्यस्यामिति कनका। कनकाश्च ताः सिकताः वालुकाश्च कनकसिकताः कनक-

वतीनां वालुकानां याः मुष्टयः तासां निक्षेपैः गूढाः संवृताः । तैः । सौवर्णसिकता-मुष्टिप्रक्षेपनिगूहितैरित्यर्थः । अन्वेष्टव्यैः — worthy of being searched for; which are to be searched for.

**Stanza 4** — अक्षय्यान्तर्भवननिधयः — possessing inexhaustible treasures in their mansions. क्षेतुं शक्याः क्षय्याः । क्षय्याः — which can be exhausted. The word क्षेय means deserving exhaustion or destruction. न क्षय्याः अक्षय्याः । भवनस्यान्तः अन्तर्भवनम् । अन्तर्भवनं — in the mansions. This is an Avyayibhava compound formed under the rule 'पारेमध्येऽन्तस्तया'. अक्षय्याः अन्तर्भवनं निधयः येषां ते अक्षय्यान्तर्भवननिधयः । राजराजस्य — of Kubera. राज्ञां यक्षाणां राजा राजराजः । 'कुबेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वरः । मनुष्यधर्मा धनदो राजराजो धनाधिपः' इत्यमरः । रक्तकण्ठैः — possessing sweet voice. रक्तः मधुरः कण्ठः कण्ठध्वनिः येषां ते । तैः । धनपतियशः — The glory of Kubera. कामान् — objects longed-for. पुण्यपाकं — maturity of the auspicious Karmans. प्राक्तनम् — bound with soul in former births.

**Stanza 5** — मन्द्रानकपटुरवैः बोधिताः — awakened by the shrill and deep sounds of tabor. मन्द्राः गम्भीराः । मन्द्राः — deep. 'मन्द्रस्तु गम्भीरे' इत्यमरः । पटवः तीक्ष्णाश्च ते रवाः ध्वनयश्च पटुरवाः । 'पटुर्वाग्मिनि नीरोगे तीक्ष्णे दक्षे स्फुटे त्रिषु । पटुः पुंसि पटोले स्त्री छत्राखां लवणे पटु' इति विश्वलोचने । आनकस्य पटहस्य पटुरवाः । आनकपटुरवाः । मन्द्राश्च ते आनकपटुरवाश्च मन्द्रानकपटुरवाः तैः । 'आनकः पटहे भेर्यां मृदङ्गे ध्वनदम्बुदे' इति विश्वलोचने । उपहितप्रीतयः — possessing love for bees (fond of bees). उपहिता जनिता प्रीतिः यैः ते । विबुधवनितावारमुख्यासहायाः — accompanied by celestial women playing the harlot; with celestial women, lovely harlots as their companions. विबुधाः देवाः । 'अमरा निर्जरा देवास्त्रिदशा विबुधा सुराः' इत्यमरः । तेषां वनिताः स्त्रियः । 'स्त्री नारी वनिता मुग्धा' इति धनञ्जयः । अप्सरसः इत्यर्थः । ताः एव वारमुख्याः वारस्त्रियः । 'वारस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनैः । सत्कृता वारमुख्या स्यात् कुट्टनी शम्भली समे' इत्यमरः । ताः सहायाः सहगामिन्यः येषां ते । यद्वा ताभिः सह अयः गमनं येषां ते ।

बद्धालापाः – engaged in conversation. बद्धाः विरचिताः आलापाः संलापाः यैः ते । वित्तभर्तुः – of Kubera. कामदायि – exciting passion or fulfilling desires.

**Stanza 6** — कल्पद्रुमपरिकराः – The groves of wish-fulfilling trees. कल्पद्रुमाणां कल्पवृक्षाणां परिकरः समूहः । 'समूहारम्भयोः प्रगाढगात्रिकाबन्धे च परिकरः' इत्यमरटीकायां क्षीरस्वामी । तथा चोक्तं – 'वृन्दप्राभवयोश्चैव पर्यङ्कपरिवारयोः । आरम्भे च परिस्तरे भवे परिकरस्तथा ।' चित्रम् – (1) beautiful; (2) multicoloured. नयनयोः विभ्रमादेशदक्षम् – capable of giving instructions to the eyes in connection with charming movements. विभ्रमाणां कटाक्षाणां नेत्रपरिवर्तनविधीनां वा आदेशः उपदेशः अनुशासनं वा । तत्र दक्षं निपुणं विभ्रमादेशदक्षम् । मधु – liquor. पुष्पोद्भेदं – the blossoming of flowers. भूषणानां विकल्पं – a variety of ornaments. इष्टान् – longed-for. सर्वकालोपभोग्यान् – worthy of being enjoyed for all times or in all the seasons. सर्वेषु कालेषु ऋतुषु उपभोग्यान् । उपभोक्तुं योग्याः सर्वकालोपभोग्याः । तान् । शम्फलान् – bringing happiness; yielding fruits in the form or happiness. शं सुखं फलन्तीति शम्फलाः । तान् । यद्वा शं सुखं फलं परिणामः येषां ते शम्फलाः । तान् । भोगान् – objects of enjoyment. सुकृतिनि जने – for the righteous. सुकृतं पुण्यं अस्य अस्तीति सुकृति । तस्मिन् सुकृतिनि । पम्फुलीति – procreates in abundance. This is a Frequentative form derived from the root फल्. The form पम्फलीति is grammatically incorrect, for the अ of फल् is changed to उ under the rule 'चर्फलासुच्चातः' while deriving the Frequentative form from the root फल्.

**Stanza 7** — रुच्याहारं – delicious food. रुच्यः आस्वाद्यश्चासौ आहारः भोजनं च रुच्याहारः । तम् । अभिमतं रसं – juice agreeable to taste. स्रग्विकल्पं – a variety of garlands. विकल्पः – sort, varity. विकल्पः – प्रकारः, विशेषः, भेदः । विपञ्चीम् – a lute. 'वीणा तु वल्लकी । विपञ्ची, सा तु तन्त्रीभिः सप्तभिः परिवादिनी । ततं वीणादिकं वाद्यं' इत्यमरः । स्वरुचिरचितानि – so prepared as to agree with one's natural taste. स्वा स्वीया रुचिः इच्छा स्वरुचिः । 'रुचिरिच्छा रुचा रुक्ता शोभाभिष्वङ्गयोरपि' इति विश्वलोचने – स्वरुच्या स्वेच्छानुकूल्येन रचितानि निर्मितानि स्वरुचिरचितानि । आहार्याणि

beautiful. अङ्गरागम् – scented cosmetic. चरणकमलन्यासयोग्यम् – worthy of being applied to the lotus-like feet. चरणे कमले इव चरणकमले। तत्र न्यासः निक्षेपः । तस्य योग्यः । तम् । सकलं च अबलामण्डनम् – the complete decoration of women.

**Stanza 8** — द्रुतमुखखुराः – with their foreparts moving and the hoofs attaining a high speed ( at full speed ). द्रुतमुखाश्च ते द्रुतखुराश्च द्रुतमुखखुराः । मुखानि खुराश्च मुखखुराः । द्रुताः गतिमन्तः मुखखुराः येषां ते द्रुतमुखखुराः । भूमिं स्प्रष्टुं गर्हमानाः इव – having as if dislike for touching the earth. गर्ह – to censure. पत्रश्यामाः – dark-green like leaves. पत्राणिवश्यामाः पत्रश्यामाः । वाहाः – horses. ' वाहोऽश्वस्तुरगो वाजी ' इति धनञ्जयः । दिनकरहयस्पर्धिनः – rivalling with the horses of the Sun ; as good as the horses of the Sun. प्रभेदात् – (1) on account of being dashed against the others; (2) owing to their rut flowing down on account of their being in rut. प्रभेदात् – अन्योन्यप्रतिघातात्, पक्षे मदोद्भेदजनितस्रावात् । वृष्टिमन्तः – pouring showers. शैलोदग्राः – lofty like mountains. शैलः इव उदग्राः उन्नताः शैलोदग्राः । मन्दाक्रान्ताः – slow of pace. मन्दं आक्रान्तं आक्रमणं गमनं येषां ते मन्दाक्रान्ताः । दिगिभविभुभिः– with the lords of elephants presiding over the quarters. दिगिभाः दिग्गजाः एव विभवः प्रभवः दिगिभविभवः । तैः । यद्वा इभविभवः गजपतयः । दिशां इभविभवः दिगिभविभवः । तैः स्पर्धमानाः – rivalling ; standing comparison with.

**Stanza 9** — धीधनाः – possessing wealth in the form of knowledge. धीः ज्ञानमेव धनं येषां ते धीधनाः । कामिनीदृष्टिबाणैः – by the arrows in the form of the glances cast by the love-lorn ladies. कामिनीनां कामाकुलानां स्त्रीणां दृष्टयः कटाक्षाः कामिनीदृष्टयः । ताः एव बाणाः इषवः । तैः । स्मरपरवशाः – under a spell of love. स्मरस्य कामस्य परवशाः वशंगताः । चन्द्रहासव्रणाङ्कैः – owing to the scars of wounds inflicted (upon them) by swords ( or by the Chandrahāsa ). चन्द्रहासस्य रावणस्वामिकखड्गस्य खड्गसामान्यस वा व्रणाः क्षतानि चन्द्रहासव्रणाः । तेषां ते एव वा अङ्का चिह्नानि येषां ते । तैः । ' चन्द्रहासो दशग्रीवखड्गे खड्गे च दृश्यते ' इति विश्वलोचने ।

प्रत्यादिष्टाभरणरुचयः – repudiating desire for ornaments. प्रत्यादिष्टाः प्रत्याख्याताः आभरणेषु रुचयः इच्छाः याभिस्ताः । संयुगे – in the battle. प्रतिदशमुखं तस्थिवांसः – come into antagonism with the ten-mouthed one; stood against the ten-mouthed one (i. e. Rāvana). दश मुखानि यस्य सः दशमुखः । रावणः इत्यर्थः । दशमुखं प्रति अभिमुखं प्रतिदशमुखम् । तस्थिवांसः – a perfect participle derived from the root स्था by affixing the termination क्वसु (वस्) *to* it. योधाग्रण्यः – the foremost of warriors. के – of what account?

**Stanza 10** — धनपतिसखं – the friend of the lord of wealth. धनपतेः कुबेरस्य सखा मित्रं धनपतिसखः । तम् । The word सखिन्, being at the end of the compound, has इन् replaced by अ under the rule 'राजाहःसखिभ्यष्टच्'. षट्पदज्यम् – having bees for its string. षट्पदाः भ्रमराः एव ज्या मौर्वी यस्य सः । तम् । लोकमूढम् – silliness of the people. लोकानां मूढं मोहः भ्रमः प्रमादः वा लोकमूढम् । कामस्य प्रजननभुवम्– a place where feelings of love are excited. This stanza may be construed and interpreted as:— यत्र धनपतिसखं देवं साक्षात् वसन्तं मत्वा भयात् मन्मथः षट्पदज्यं चापं प्रायः न वहति तां पुरीं जडधीः लोकः एवं (पूर्वश्लोकोक्तप्रकारेण) कामस्य प्रजननभुवं मिथ्या वदति । ननु इदं लोकमूढम् । "The dull-witted people wrongly say as described above that city, wherein the god of love does not wield a bow, having bees for its string, through fear provoked on knowing the god, the friend of the lord of wealth, to be dwelling there actually, is a place where feelings of love are excited (or a place of origination of feelings of love). This is, indeed, silliness of the people." People say that the city of Alakā is a place where feelings of love are excited. But this statement made by the people does not deserve to be believed in, for owing to the god Śankara actually staying there, the god of love is afraid of taking his bow in his hand.

**Stanza 11** — सभ्रूभङ्गप्रहितनयनैः – with the eyes or glances turned or cast straight (to the lovers) with knittings of their eyebrows. भ्रुवः भ्रुकुट्याः भङ्गः विरचना भ्रूभङ्गः । तेन सहितं यथा स्यात् तथा सभ्रूभङ्गम् । सभ्रूभङ्गं प्रहितानि प्रयुक्तानि नयनानि नेत्राणि दृष्टयो येषु तैः । कामिलक्ष्येषु – marks in the form of the lustful persons. कामिनः

कामाकुलाः पुमांसः एव लक्ष्याणि कामिलक्ष्याणि । तेषु । अमोघैः – not missing or not wide of. चतुरवनिताविभ्रमैः – by the glances of the clever or beautiful women. चतुराः कुशलाः मनोहराः वा । चतुराः च ताः वनिताश्च चतुरवनिताः । तासां विभ्रमाः दृगन्तजातकटाक्षादिरूपा विलासाः । तैः । 'विभ्रमस्तु विलासे स्याद्विभ्रमो भ्रान्तिहावयोः' इति विश्वलोचने । 'हावः श्रृङ्गारभावातौ रम्योक्तिस्मितवीक्षितं' इति नाटयशास्त्रे । 'कटाक्षं केकरापाङ्गं विभ्रमस्तस्य वैकृतं' इति धनञ्जयः । 'हावो मुखविकारः स्यात् भावश्चित्तसमुद्भवः । विलासो नेत्रजो ज्ञेयो विभ्रमोऽत्र दृगन्तयोः' इति धनञ्जयनाममालाभाष्ये । एवं सति अपि – though it is so i. e. though the work of the god of love is done by the glances cast by the beautiful ladies of the city. कुकविरचितं सकलं उदितम् – the whole of the description given by the poets (or learned people) not informed (or not knowing the facts). अल्पज्ञाः कवयः कुकवयः, कोरीषदर्थत्वात् । कविसमयविरवेऽपि याथार्थ्याविदित्वात्कवीनामत्र कुकवित्वमध्यवसेयम् । अतोऽत्र कवेः कुत्सितत्वं न ग्राह्यं, अपि अल्पज्ञत्वमेव । The word कुकवि should be taken to mean 'a poet not well informed' and not 'a bad or ignorant poet.' Even Kālidāsa, while describing the city of Alakā, is found to have described the youths and the young ladies of the city as having been the targets of the flowery arrows discharged by the god of love. Jinasena means to say that the discription may be correct on account of its being in conformity with the pattern proposed by poetics, but the work of the god of love being done by the glances cast by the beautiful ladies of the city, the god of love cannot be said to have been wielding his flowery bow to discharge flowery arrows even in the presence of god Rudra eternally staying there, in the vicinity of the city. सकलं उदितं – the whole of the description. तस्यां पुर्यां कामिजनमनोवेधनादिकार्यं कामः करोतीत्यर्थकं यदुक्तं तत्सकलमुदितम् । The description that the god of love pierces minds of the youths and the young ladies of the city with his flowery arrows is referred to here. काव्यधर्मानुरोधात् – owing to its being in conformity with the pattern proposed by poetics. काव्यस्य धर्मः काव्यधर्मः । तस्य अनुरोधः आनुकूल्यं । तस्मात् । काव्यधर्माः – the special characteristics of poetry. जाघटीति एव – becomes possible very much. The word जाघटीति is a Frequentative form derived from

the word घट् । सत्यं स्यात् – may possibly be correct or true. The Nirnayasāgar edition and the commentary of Yogirāja read असत्यं instead of सत्यं; but as the reading does not agree with the context I do not think it possible to accept the reading. The sentence जडधीः लोकः मिथ्या वदति found in the previous stanza and the word वा found in this stanza clearly show that the statement made in this stanza is alternative and in apposition to the one made in the previous stanza. The sentence referred to above and the word वा found in this stanza help us in determining the reading correctly. Though the statement that the god of love does not wield his flowery bow, made by the people, is false, owing to the amorous gestures of the youths and the young ladies of the city being actually seen, it may also be true for the work of the god of love is seen being done by the glances of the beautiful ladies of the city and not by the god of love himself. This being the import of the previous stanza and of the present one, the reading सत्यं, in my opinion, is preferable to the reading found in the Nirnayasāgara edition and in the commentary of Yogirāja.

**Stanza 12** — बहुनिगदितं – the description given at length, the lengthy description. आशंका – doubt. प्रत्ययं ते करोमि – I shall settle your belief or conviction; I shall convince you. सुरपतिधनुश्चारुणा – beautiful owing to the Indra's bow or looking as beautiful as the Indra's bow (i. e. rain-bow). सुराणां देवानां पतिः सुरपतिः इन्द्रः । तस्य धनुः कोदण्डं इव चारु मनोहरं । तेन । यद्वा सुरपतिधनुषा हेतुभूतेन चारु । तेन । तोरणद्वारखचितमणिकिरणोत्करोत्सर्गजनितेन कोदण्डाकारेण मनोहरेण । उत्तरेण – (1) very lofty; (2) excellent. तोरणेन – on account of the archway. धनपतिगृहात् – from the palace of Kubera. According to Mallinatha, the word उत्तरेण is एनप्प्रत्ययान्त and so it governs the Accurative case under the rule 'एनपा द्वितीया' (पा ). From this point of view he reads धनपतिगृहान् in place of धनपतिगृहात्. I cannot agree with this view. Mallinatha seems to have forgotten the word अदूरे, used by Pānini in his aphorism 'एनबन्यतरस्यामदूरेऽपञ्चम्याः'. The commentary of Bhattoji

upon this aphorism runs as follows :— उत्तरादिभ्यः एनब् वा स्याद् अवध्यवधिमतोः सामीप्ये । पञ्चम्यन्तं विना । From this extract it becomes very clear that the termination एनप् is affixed to a word like उत्तर, दक्षिण etc. only when two objects are near each other. The word दूरात् used by Kalidasa in this stanza shows that the mansion of the Yaksa is away from the palace of Kubera and so the word does not help us in accepting the word उत्तरेण as one having the termination एनप् affixed to the word उत्तर under the rule given above. Mallinātha himself does not seem to have felt sure about his explanation. The following extract from his commentary is worthy of being read carefully. "अथवा 'उत्तरेण' इति नैनप्प्रत्ययान्तं किन्तु 'तोरणेन' इत्यस्य विशेषणं तृतीयान्तम् । धनपतिगृहादुत्तरस्यां दिशि यत्तोरणं बहिर्द्वारं तेन लक्षितमित्यर्थः ।" The word उत्तर does not mean 'northern direction'. The word उत्तरा means 'northern direction'. The word उत्तरेण cannot be said to be a तृतीयान्त form of the word उत्तरा and so the mansion of the गुह्य ( यक्ष ) cannot be said to have been in the north of the palace of Kubera. Read the following extract from तत्त्वबोधिनी — "कथं तर्हि 'तत्रागारं धनपतिगृहादुत्तरेणाऽस्मदीयम्' इति ? उत्तरेणेत्येतत् 'दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन' इति तोरणसमानाधिकरणं तृतीयान्तं, न त्वेनबन्तमित्याहुः ।" It is clear, therefore, that the word उत्तरेण is not एनप्प्रत्ययान्त. The two words धनपतिगृहात् and दूरात् exclude us from considering the word as one having the termination एनप् affixed to it.

**Stanza 13** — पुष्पोद्गन्धिः — giving out fragrance of flowers. उद्गतः गन्धः यस्य सः उद्गन्धिः । The समासान्त termination इ is affixed to the word गन्ध, owing to its being preceded by the word उत्, under the rule 'सुपुत्यूत्सुरभिः गन्धस्येः' । पुष्पैः उद्गन्धिः पुष्पोद्गन्धिः । सञ्जातपुष्पत्वात्प्रादुर्भूतसौरभः इत्यर्थः । मृदुकिसलयः — having delicate foliage. मृदूनि सुकुमाराणि किसलयानि पल्लवानि यस्य सः । 'पल्लवोऽस्त्री किसलयः' इत्यमरः । भृङ्गसङ्गीतहारी — possessing charm owing to the songs sung by bees. भृङ्गाः भ्रमराः । तेषां सङ्गीतं गुञ्जारवः सङ्गीतोपमः । भृङ्गगुञ्जारवस्य मनोहारित्वात्सङ्गीतोपमत्वमत्रावसेयम् । सङ्गीतमिव सङ्गीतम् । 'देवपथादिभ्यः' इति-

वार्थस्य कस्योस्, 'युक्तवदुषि लिङ्गसङ्ख्ये' इति नपुंसकत्वम् । तेन हारी मनोहरः भृङ्गसङ्गीतहारी । सान्द्रच्छायः — having intense or pleasing shade. सान्द्र — (1) intense; (2) pleasing. सान्द्रा निबिडा सुखदा वा च्छाया अनातपः यस्य सः । सलिलधरणोपान्तपुस्तैणशावः — possessing in the vicinity of its basin a mould of a fawn made by plasterning. सलिलं धरति ध्रियते वानेन सलिलधरणम् । 'ल्युट् च बहुलम्' इति कर्तरि 'करणे चाऽनट्' इति करणे वाऽनट् । आलवालमित्यर्थः । पुस्यते अभिमृद्यते मृदत्र पुस्तम् । लेप्यकर्मेत्यर्थः । 'पुस्तं तु पुस्तके क्लीबं विज्ञाने लेप्यकर्मणि' इति विश्वलोचने । पुस्तं लेप्यकर्म अस्य अस्तीति पुस्तः । 'ओऽर्शआदिभ्यः' इत्यः । लेप्यकर्मविनिर्मितः इत्यर्थः । एणशावः मृगशिशुः । 'कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः । गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः' इत्यमरः । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः । सलिलधरणस्योपान्तः सलिलधरणोपान्तः । तत्र पुस्तः लेप्यकर्मविनिर्मितः एणशावः यस्य सः सलिलधरणोपान्तपुस्तैणशावः । एणस्य शावः पृथुकः एणशावः । पुस्तश्चासौ एणशावश्च पुस्तैणशावः । आलवालोपान्त प्रदेशस्थितलेप्यकर्मविनिर्मितमृगशिशुरित्यर्थः । कृतकतनयः — an adopted son. कृतकः अनौरसः अपि पुत्रत्वेनोररीकृतः तनयः कृतकतनयः । पुत्रीयितः इत्यर्थः । हस्तप्राप्यस्तवकनमितः — bent down owing to the clusters (of flowers) worthy of being plucked by hand. हस्तेन प्राप्याः अपचेयाः हस्तप्राप्याः । ते च ते स्तवकाः गुच्छाश्च । तैः नमितः नम्रीकृतः ।

**Stanza 14** — मरकतशिलाबद्धसोपानमार्गा — having a flight of steps built of emerald slabs. मरकतं गारुत्मतम् । तस्य शिलाभिः पाषाणखण्डैः आबद्धानि विरचितानि सोपानानि एव मार्गः यस्याः सा । 'गारुडत्मतं मरकतं' इत्यमरः । दीर्घवैदूर्यनालैः — having long stalks resembling those made of Vaidūrya. वैदूर्याणि च तानि नालानि च वैदूर्यनालानि । दीर्घाणी वैदूर्यनालानि येषां तानि दीर्घवैदूर्यनालानि । तैः । विदूरात् पर्वतात् प्रभवतीति वैदूर्यो मणिः । हैमैः — resembling those made of gold. हेम्नः विकारः अवयवो वा हैमम् । हैममिव हैमम् ।

**Stanza 15** — कृतवसतयः — residing. कृता विहिता वसतिः अधिवासः यैः ते । व्यपगतशुचः — who have their distress dispelled. व्यपगताः वागलिताः शुचः शोकाः व्यपतशुचः । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । न

अध्यास्यन्ति — do not anxiously call to their mind. ध्वस्ततापां — neutralizing heat. ध्वस्तः नष्टः तापः ग्रीष्मातपः यस्याः सा । ताम् । यद्वा ध्वस्तः इत्यस्यान्तर्भावितण्यर्थत्वमुररीकृत्य ध्वस्तः विनाशितः तापः ग्रीष्मातपजनितपरिणामः यया सेति विग्रहः कार्यः । ततापां — having water spreading wide; possessing abundant water. तताः विस्तारं प्राप्ताः आपः यस्याः सा । ताम् । The Nirnayasāgar edition reads ध्वस्ततापान्ततापाम्. This compound is to be dissolved as — तापः आतपः अन्तः धर्मः यस्य सः तापान्तः । ग्रीष्मर्तुरित्यर्थः । तापान्तस्य ग्रीष्मर्तोः तापः तापान्ततापः । ध्वस्तः नष्टः तापान्ततापः यस्याः सा । ताम् । यद्वा ध्वस्तः विनाशितः तापान्ततापः सूरखरकरनिकराहततत्रत्यजनसन्तापः यया सा । ताम् । विस्तृतोर्मिम् — possessing ample or expansive waves- विस्तृताः ऊर्मयः यस्याः सा । ताम् । The Nirnayasāgar edition of पार्श्वाभ्युदय and some editions of Meghadūta read प्राप्य in place of प्रेक्ष्य.

**Stanza 16** — उपवनघने — intensified with groves of trees. उपवनं — an artificial forest. 'आरामः स्यादुपवनं कृत्रिमं वनमेव तत्' इत्यमरः । उपवनैः कृत्रिमैः वनैः वृक्षसमूहैर्वा घनः सान्द्रः (निरन्तरः) उपवनघनः । तस्मिन् । मद्गृहोपान्तदेशे — in the adjoining region of my mansion. मम गृहं मद्गृहम् । तस्य उपान्तदेशः समीपस्थः प्रदेशः मद्गृहोपान्तदेशः । तस्मिन् । आख्येयं — worthy of being described. आख्यातुमर्हमाख्येयम् । मयकि — in me not known to you. अज्ञाते मयि मयकि । Śambara means to say that though both of them had a brotherly relation in their former births, Pārshwa, could not recognize him for He had forgotten His brotherly relation with him owing to passage of a very long interval of time between their past and present births. प्रत्ययः — confidence. तस्याः तीरे — on the bank of that tank. पेशलैः — possessing beauty; attractive. इन्द्रनीलैः — sapphires. पेशलैः इन्द्रनीलैः विहितशिखरः — having its peak built with beautiful sapphires. क्रीडाशैलः — a pleasure-hill. क्रीडार्थः शैलः क्रीडाशैलः । कनककदलीवेष्टनप्रेक्षणीयः — worthy of being looked at owing to the golden plantain trees forming its hedge. कनककदलीनां सुवर्णवर्णसवर्णवारणबुसानां वेष्टनं कनककदलीवेष्टनम् । तेन प्रेक्षणीयः प्रेक्षणार्हः । The beauty of the pleasure

hill is enhanced owing to its being surrounded by a hedge (or a compound) of golden plantain-trees. Śambara, as described in this stanza, is, through the description of his native place, trying his best to convince the sage of the information that His beloved is residing there and thus to distract His mind from meditation with a view to goad Him into giving a flight wherein he would be able to kill Him and take a bloody vengeance upon Him on account of whose wife he was inflicted a punishment of banishment by the then King Aravinda, under whom he and his brother, Marubhūti, had served in their former births. He is exerting to distort His mind which is deeply absorbed in meditation by hook or by crook.

**Stanza 17** — उपान्तस्फुरिततडितम् – having lightning emitting sudden transitory blaze in (your) sides; having flashes of lightnings in your sides. उपान्ते प्रान्तप्रदेशे स्फुरिता स्फुरणं प्राप्ता तडित् सौदामनी यस्य सः । तम् । रत्यधारः – the abode of sexual enjoyment. रतेः निधुवनसेवनस्य आधारः अधिकरणं अधिष्ठानं रत्याधारः । रतिः – cohabitation, sexual enjoyment. रतिकरः – a mountain of this name. This mountain is found described in the Jain Scriptures. उत्तुङ्गमूर्तिः – possessing a lofty form; having its body very lofty. उत्तुङ्गा उन्नततरा मूर्तिः शरीरं यस्य सः उत्तुङ्गमूर्तिः। मुले कनकपरिधिः – having a golden enclosure at its foot; having at its foot an enclosure consisting of Palāsa-trees. मे मनः अनुशासत् — dominating over my mind to-day. Śambara means to say that on looking at Him, the Sage, who would be having His bodily form transformed into a cloud after His death brought about by a blow of his missile, reminds him of the lofty pleasure-hill, having an enclosure formed by Palāsa trees on all sides of it, very dear to his beloved, on account of the flashes of lightning bursting suddenly into view in the fringes of the cloud. His heart, he means to say, is trembling, for the image of his beloved is standing before his mind's eye owing to the remembrance of the pleasure-hill. This is also another way of convincing the the sage of his being a **bona fide** resident of the place where Vasundharā, joined with Him in wedlock in His former birth, resides.

**Stanza 18** — अपगतभयः – who has his fear dispelled. अपगतं अपक्रान्तं भयं भीतिः यस्य यस्माद्वा सः । आत्मनीनं व्यवस्य – having decided what is beneficial to yourself. Here, the termination ख ( ईन ) is affixed to the word आत्मन् in the sense ' beneficial [ to oneself ] ' under the rule ' भोगद्रव्यात्मभ्यां खः ' । तीर्थे स्थितं ध्वाक्षं अपनुदन् – scaring away the crow settling upon a holy bathing place ( i. e. dispelling doubt from your holy and pure mind. ). तीर्थं पुण्यक्षेत्रं इव तीर्थम् । The word तीर्थ implies mind which is naturally as pure and holy as a holy place. ध्वांक्षं – a crow. ध्वांक्षः इव ध्वाङ्क्षः । तम् । A crow is a doubt incarnate. The word ध्वाङ्क्ष, therefore, implies doubt. The termination denoting similarity is dropped under the rule ' देवपथादिभ्यः ' । स्थिरात्मा स्याः – have your mind firmly fixed. स्थिरः आत्मा मनः यस्य सः स्थिरात्मा । ' आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु ' इति विश्वलोचने. तन्वी – (i) slenderly built; (ii) delicate. श्यामा – a young girl who has not delivered a child. ' अप्रसूताङ्गनायां च श्यामा सोमलतौषधे ' इति विश्वलोचने । शिखरिदशना – having pointed teeth. शिखराणि कोटयः एषां सन्तीति शिखरिणः । शिखरिणः कोटिमन्तः दशनाः दन्ताः यस्याः सा शिखरिदशना । ' शिखरं शैलवृक्षाग्रे कक्षापुलककोटिषु । पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च ' इति विश्वलोचने । Possession of pointed teeth indicates fortunateness of a woman and the long life of her husband. ' पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः ' इति हलायुधः । ' स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लिष्टाः । दन्ता भवन्ति यासां, तासां पादे जगत्सर्वम् ॥ ताम्बूलरसरक्तेऽपि स्फुटभासः समोदयाः । दन्ताः शिखरिणो यस्याः दीर्घं जीवति तत्प्रियः ॥ ' इति सामुद्रिकशास्त्रे । पक्वबिम्बाधरौष्ठी – possessing lower lips red like ripe Bimba fruit. पक्वं परिणतं च तत् बिम्बं बिम्बिकाफलं च पक्वबिम्बम् । पक्वं बिम्बं रक्तवर्णं बिम्बिकाफलमिव अधरः अधस्तनः ओष्ठः यस्याः सा पक्वबिम्बाधरौष्ठी । The reading पक्वबिम्बाधरोष्ठी is also grammatically correct under the rule ' ओत्वोष्ठयोः से वा पररूपम् ' । The feminine termination ङी ( ई ) is affixed to the word ओष्ठ, the last member of the compound, under the rule ' नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ' । ' ओष्ठौ निर्व्रणौ स्निग्धौ नातिस्थूलौ न रोमशौ । रक्तौ

विम्बफलाकारौ धनपुत्रसुखप्रदौ' इति सामुद्रिकशास्त्रे । Śambara says — The great sage should believe in him. The young girl, residing in The city of Alakā, married to Him in her and His former birth is very fortunate, for she possesses pointed teeth and Bimba-fruit-like lips. He, therefore, getting himself transformed into a cloud after His death brought about by him in a fight, should visit the city of Alakā, and meet her there.

**Stanza 19** — किन्नराणां सती उत्पन्ना – born as one belonging to the race of Kinnaras. मध्ये क्षामा – one having a thin waist; thin in the middle. The reading मध्येक्षामा is also correct, for it is an Aluk compound formed under the rule 'घे कृति बहुलम्' । चकितहरिणी – प्रेक्षणा – having eyes resembling those of a frightened doe. चकिता भयप्रकम्पिता चासौ हरिणी मृगी च चकितहरिणी । तस्याः प्रेक्षणे नयने इव नयने यस्याः सा चकितहरिणीप्रेक्षणा । निम्ननाभिः – possessing a deep novel. निम्ना गम्भीरा नाभिः उदरावर्तः यस्याः सा । The adjectives तन्वी etc. indicate that she belongs to the first class of the four classes into which women are divided. The पद्मिनी is defined in the work called रतिमञ्जरी as — 'भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा, अविरलकुचयुग्मा चारुकेशी कृशाङ्गी । मृदुवचनसुशीला गीतवाद्यानुरक्ता, सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥' स्मरार्ता – pining with love. स्मरेण कामवासनया आर्ता पीडिता स्मरार्ता । सौम्यं – a noble or a beautiful one. सजलनयना – with her eyes become full with tears. सजले अश्रुजलसहिते नयने नेत्रे यस्याः सा । Śambara, reminding Him of वसुन्धरा, who had joined herself with Him in wedlock in her former birth, describes her present state to see whether He, through compassion for her, gives up meditation in which his mind is absorbed.

**Stanza 20** — श्रोणीभारात् अलसगमना – slow in gait owing to the weight of her buttocks. श्रोण्याः नितम्बविम्बस्य भारः गौरवं श्रोणीभारः । तस्मात् । अलसं मन्दमन्दं गमनं गतिः यस्याः सा । Her buttocks are so big that she cannot walk speedily. स्तनाभ्यां स्तोकनम्रा – bent down a little owing to her breasts. स्तोकं ईषत् नम्रा अवनता स्तोकनम्रा । Her breasts are so fleshy that owing to their weight she has to bend down a little.

स्मरपरवशा — brought into subjection by the god of love or subdued by passion. समरस्य कामस्य परवशा अधीना स्मरपरवशा । सहसहचरं त्वां सन्दिदृक्षुः — desirous of seeing you in company with your friends. सहचरैः मित्रैः सहितः सहसहचरः । तम् । As the change of सह to स is optional under the rule 'वा नीचः', the word सह is not changed to स here. सन्दिदृक्षुः is a Desiderative form derived from the root सम्+दृश् by affixing the termination उ under the rule 'सन्भिक्षाशंस्विन्दिच्छादुः'। चन्द्रकान्तोपलान्ते — upon a moon-stone-slab. Her gait slowed down owing to the weight of her big buttocks, her bending down a little owing to her fleshy thick breasts, her being brought into subjection by the god of love, her desire to see the great sage along with His friends, her act of representing the sage in drawing upon a moon-ston-slab with a desire to look at Him, and her departure owing to her eyes being obstructed by tears gathered in her eyes are described here by Śambara with a desire to rouse passion in the heart of the sage and to disturb His mind engrossed in deep meditation

**Stanza 21** — नानावेषे — wearing diverse costumes. नाना बहुविधाः वेषाः वस्त्रालङ्करादयः यस्य । तस्मिन् । बहुविलसिते — manifesting various feminine gestures indicative of amorous sentiments. बहुनि बहुविधानि विलसितानि हावाः लीलाश्च यस्य । तस्मिन् । हाव means a charming speech, a charming smile and charming glances meant for the attainment of love sentiment. 'हावः शृङ्गारभावाप्तौ रम्योक्तिस्मितवीक्षितं' इति नाट्यशास्त्रे । लीला is the charming imitation of the lover's speech, dress and movements. 'प्रियस्यानुकृतिर्लीला श्लिष्टा वाग्वेषचेष्टितैः' इति नाट्यशास्त्रे, किन्नरस्त्रीसमाजे — in the whole class of Kinnara-women. बहुतिथीं कामावस्थां धारयन्ती — reduced to the state bringing her into subjection to the strong emotion of love. बहुतिथीं — strong. In the sense of completion the termination डट् (अ) is affixed to the word बहु under the rule 'तस्य पूरणे डट्' and the augument तिथुक् is affixed to the word बहु before the termination डट् under the rule 'बहुपूगगणसङ्घस्य तिथुक्'। The feminine termination ङी is affixed to the word बहुतिथ under the

rule ' इग्नुटिड्ढाणञ् – '. बहूनां पूरणी बहुतिथिः । ताम् । This description of the most beautiful young lady is also meant for distracting the mind of the great sage.

**Stanzas 22 & 23** — साध्वीं – a faithful or chaste woman. ' सती पतिव्रता साध्वी पतिवत्न्येकपत्न्यपि ' इति धनञ्जयः । चित्ते विधिनियमिताम् – having her mind restrained by vows. विधिभिः शास्त्रोक्तव्रतादिविधानैः नियमिता नियन्त्रिता । ताम् । अन्यपौंस्ने निराशाम् – having no enthusiasm for a person other than the Sage. अन्यः पौंस्नः अन्यपौंस्नः । तस्मिन् । पुंसः भावः पौंस्नम् । . This is an abstract noun derived from the word पुंस् by affixing the termination नञ् ( न ) to it under the rule ' त्वे वा '. पौंस्नं पुरुषत्वं अस्य अस्तीति पौंस्नः । The word पौंस्न is derived from the word पौंस्नं by affixing the possessive termination अ under the rule ' अोऽ-आदिभ्यः ' I. The word पौंस्न implies also ' a group of men (male human beings) '. The word पौंस्न means ' male human being '. These two word are derived under the rule ' स्त्रीपुंसान्नञ्स्नञ् वतः ' । पुंसः अपत्यं पुमान् पौंस्नः । अन्यस्मिन् पौंस्ने पुरुषे पुरुषसमूहे वा अन्यपौंस्ने । निर्गतः विनष्टा आशा अभिलाषः यस्या सा । ताम् । सखीनां कन्यावस्थां – attained to the age of maidenhood amongst her female friends. त्वदुपगमने बद्ध-कामाम् – cherishing a strong desire for your arrival. त्वदुपगमने त्वदुगमन-विषये इत्यर्थः । बद्धः विरचितः कामः अभिलाषः यया सा । प्रणयविवशाम् – reduced to the state of helplessness through passion or owing to passion. प्रणयात् प्रणयेन कामवासनोद्रेकेण विवशा अगतिका प्रणयविवशा । ताम् । परिमितकथाम् – having a curb put upon her speech. परिमिता अत्यर्थं मर्यादीकृता कथा भाषणं यया सा । ताम् । सरसकदलीगर्भपत्रोपवीज्यैः – by means of fans in the form of tender internal leaves of the fresh plantain-trees or in the form of fresh internal leaves of the plantain-trees. सरसा प्रत्यग्रा चासौ कदली रम्भा च सरसकदली । तस्याः गर्भपत्राणि एव उपवीज्यानि व्यजनानि । तैः । यद्वा सरसानि कदल्याः गर्भपत्राणि एव उपवीज्यानि । तैः । उपवीज्यते अनेन इति उपवीज्यम् । उपवीज्यं – a fan. This word is derived from the root उपवीज् by affixing the termination ण्य in the sense of an

instrument under the rule ' व्यानङ् बहुलम् ' । The reading उपवीजैः is also correct. उपवीज्यते अनेन इति उपवीजः । This word is derived from the root उपवीज् by affixing the termination घ under the rule ' पुंसि संज्ञायां घः प्रायः ' । लब्धाश्वासाम् – come or brought to her senses. लब्धः पुनः प्राप्तः आश्वासः चैतन्यं प्रबोधो वा यया सा । ताम् । किमपि किमपि म्लिष्टवर्णं लपन्ती – speaking at random indistinctly. किमपि किमपि – incoherent; absurd. म्लिष्टवर्णम् – indistinctly. म्लिष्टाः वर्णाः यथा स्युस्तथा । म्लिष्टाः अव्यक्ताः इत्यर्थः । ' म्लिष्टं स्याद्वाच्यवन्माने म्लिष्टमव्यक्तभाषणे ' इति विश्वलोचने । The निर्णयसागर edition reads श्लिष्टवर्णम् । As the reading श्लिष्टवर्णम्, meaning ' conjunct consonants, ' does not agree with the context, I have changed the reading to म्लिष्टवर्णम्. शीर्णप्रायां – standing on the verge of death. बाहुल्येन शीर्णा शीर्णप्राया । ताम् । The word शीर्णप्रायां literally means ' too much emaciated. ' The word प्राय implies बाहुल्य. ' प्रायो भूम्न्यन्तगमने ' इत्यमरः । ' प्रायः पुमाननशने मृत्युबाहुल्ययोस्तथा ' इति विश्वलोचने । आवयोः बद्धसाम्यात् – owing to our mutual resemblance. बद्धं च तत्साम्यं च बद्धसाम्यं । तस्मात् । This discription of the young lady is also meant for distracting the mind of the Sage. The young lady is described to have been grieved very much at the departure of Kamatha, whom she, owing to his resemblance to her husband of the former birth, took for her husband.

**Stanza 24** — गाढोत्कण्ठागुरुषु दिवसेषु गच्छसु – when these days, become long owing to her being love-sick, are passing away. गाढा प्रबला चासौ उत्कण्ठा स्वपतिगमनौत्सुक्यं च गाढोत्कण्ठा । तया गुरुषु दीर्घीभूतेषु । करकिसलयन्यस्तवक्त्रेन्दुमुग्धा – looking beautiful owing to her moon-like face reposed in her sprout-like hand. करः किसलयः इव करकिसलयः । तत्र न्यस्तः वक्त्रेन्दुः करकिसलयन्यस्तवक्त्रेन्दुः । वक्त्रमेवेन्दुः । तेन मुग्धा मनोहरा करकिसलयन्यस्तवक्त्रेन्दुमुग्धा । ' सुन्दरे वाच्यवन्मुग्धो मुग्धो मूढेऽपि वाच्यवत् ' इति विश्वलोचने । अभिमताः – very anxious. मर्तव्यशेषाम् – in which death alone is left out. मर्तव्यं मरणं शेषं अवशिष्टं यस्याः सा । ताम् ।

**Stanza 25** — पीनस्तनतटभरात् — owing to the burden of her corpulent breasts. पीनौ मांसलौ च तौ स्तनतटौ च पीनस्तनतटौ। तयोः भरः भारः पीनस्तनतटभरः। तस्मात्। 'भरस्त्वतिशये भारे' इति विश्वलोचने। सामिनम्राग्रभागा — with its upper part bent down a little. सामि ईषत् नम्रः नतः अग्रभागः ऊर्ध्वभागः यस्याः सा। 'सामि निन्दार्धयोः' इति विश्वलोचने। सामिनम्र — bent half. अग्रभागः — the upper part. निश्वासोष्णप्रदवित-मुखाम्भोजकान्तिः — having the beauty of her lotus-like face spoiled by the heat of the puffs of (her) breath. निश्वासस्य उष्णः ऊष्मा निश्वासोष्णः। 'उष्णः स्यादातपे ग्रीष्मे वाच्यवत्तद्दक्षयोः' इति विश्वलोचने। तेन प्रदविता, म्लानीकृता प्रकर्षेण दूरीकृता वा मुखाम्भोजकान्तिः यस्याः सा। मुखमेवाम्भोजं कमलं मुखाम्भोजम्। प्रदवः ग्लानिः दाहः वा सञ्जातः अस्याः सा। प्रदूयतेऽनेनेति प्रदवः। The word प्रदव is derived from the root दू by affixing the termination घ under the rule 'पुंसि घः प्रायः'. The compound मुखाम्भोज may also be dissolved as मुखमम्भोजं कमलमिव मुखाम्भोजं under the rule 'व्याघ्रादिभिरुपमेयोऽतद्योगे'. चिन्तावेशात् — on account of the mental disturbance caused by anxiety. चिन्तायां आवेशः निमज्जनं चिन्तायाः आवेशः आक्रमणं वा चिन्तावेशः। तस्मात्। आवेशः — (1) complete absorption; (2) taking possession; (3) coming into being, arising. अपचिता — emaciated. This is a p. p. derived from the root अपचि (अप+चि). अप+चि — to deteriorate. सालसापाङ्गवीक्षा — casting dull side-glances. अपाङ्गेन नेत्रान्तेन वीक्षा अवलोकनं अपाङ्गवीक्षा। वीक्षणं वीक्षा कटाक्षः इत्यर्थः। 'अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने' इत्यमरः। अलसेन सहिता सालसा। सालसा अपाङ्गवीक्षा यस्याः सा सालसापाङ्गवीक्षा। विरूक्षा — deprived of pleasure. विशेषेण रूक्षा गलितसौन्दर्या विगलितानन्दा वा विरूक्षा। 'रूक्षो वृक्षान्तरे प्रेमशून्यकर्कशयोस्त्रिषु' इति विश्वलोचने। 'रूक्षस्त्वप्रेम्ण्यचिक्कणे' इत्यमरः। शिशिरमथिता — afflicted (blighted) by frost. शिशिरेण शिशिरर्तुना तुषारेण वा मथिता पीडिता शिशिरमथिता। 'शिशिरस्तु ऋतौ पुंसि तुषारे शीतलेऽन्यवत्' इति विश्वलोचने। अन्यरूपा — changed in form. अन्यत् पूर्वस्मात् शरीरात् भिन्नं रूपं शरीराकारः यस्याः सा। 'रूपमाकारसौन्दर्यस्वभावश्लोकनाणके। नाटकादौ मृगे ग्रन्थावृत्तौ च पशुशब्दयोः' इति विश्वलोचने। Śambara

means to say that the young lady, described hitherto, would not be recognised by the Sage, for she must have been changed altogether owing to her separation from Him for a long time. The word सालसा-पाङ्गवीक्षा can be split up as सा अलसापाङ्गवीक्षा and the pronoun सा can be constructed with सामिनम्राग्रभागा etc. The compound अलसापाङ्ग-वीक्षा should be dissolved as अलसा अचञ्चला अपाङ्गवीक्षा यस्याः सा। अलसापाङ्गवीक्षा — casting languishing side glances.

**Stanza 26** — तावकम् — your. तव अयं तावकः । तम्। सम्प्रयोगं — union. दिध्यासोः — wishing to think; thinking constantly. ध्यातुमिच्छुः दिध्यासुः । तस्य । This is a Desiderative form derived from the root ध्यै. निद्रापायात् — owing to her sleep being disturbed or broken. निद्रायाः अपायः अपगमः विनाशः वा निद्रापायः । तस्मात् । The sleep of the young lady, desirous of having sexual intercourse, might have been broken, on account of her wish to have sexual intercourse with the great Sage, to whom she was married in her former birth. इन्दुबिम्बानुकारी — imitating the disc of the moon. इन्दोः चन्द्रमसः बिम्बं मण्डलं इन्दुबिम्बम्। तत् अनुकरोतीति इन्दुबिम्बानुकारी । प्रबलरुदितोच्छूननेत्रम् — with eyes swollen owing to her crying bitterly. प्रबलं बहुलं च तत् रुदितं रोदनं च प्रबलरुदितम्। तेन उच्छूने जनितशोथे नेत्रे नयने यस्य तत् । बहूनां निश्वासानां अशिशिरतया — owing to the hotness of the multiplicity of sighs. अशिशिरता — hotness. भिन्नवर्णाधरोष्ठम् — with lower and upper lips having their colour changed. भिन्नः वर्णान्तरत्वं प्राप्तः विकृतिं प्राप्तः वा वर्णः छाया ययोः तौ भिन्नवर्णौ । भिन्न-वर्णौ अधरोष्ठौ यस्य तत् भिन्नवर्णाधरोष्ठम् ।

**Stanza 27** — विरहशयनाभोगमुक्ताखिलाङ्ग्याः — having all her limbs let loose on the expansive bed on account of her separation from you or having all her limbs let loose on the expansion of a bed meant for the separated. शयनस्य शय्याया आभोगः प्रसरः शयनाभोगः । तत्र मुक्तानि न्यासीकृतानि शयनाभोममुक्तानि । अखिलानि च तानि अङ्गानि अवयवाः च अखिलाङ्गानि । विरहेण शयनाभोगे मुक्तानि अखिलाङ्गानि यया सा । तस्याः ।

खड्गिकपालयोः । वरे प्रवीरे चिह्ने च वाजिभूषणबुद्बुदे ' इति विश्वलोचने । The paleness of her cheeks and their becoming moistened with tears are due to her separation. दुःखदुःखेन – with difficulty. दुःखप्रकारेणेत्यर्थः । शय्योत्सङ्गे – on the region of the bed. शय्यायाः शयनीयस्य उत्सङ्गः पृष्ठभागः शय्योत्सङ्गः । तत्र । निहितं – placed. गात्रम् – body. ' गात्रं गजाग्रजङ्घादिविभागेऽप्यङ्गदेहयोः ' इति विश्वलोचने । धारयन्ती – bearing. अन्तर्विचलितधृतिम् – with your mind's stable equilibrium disturbed. अन्तः मनसि विचलिता प्रकम्पिता धृतिः धैर्यं यस्य सः । तम् । ' धृतिर्धारणसन्तुष्टिधैर्ये योगान्तरेऽध्वरे ' इति विश्वलोचने । Śambara means to say that the great Sage also would abandon food, become emaciated and pale on his seeing her *undergoing that state of mind and body. It is implied by him that* the Sage also would be reminded of the separation from her and would be attracted by her youth and beauty which would disturb his mind's equilibrium.

**Stanza 53** — भृशं – extremely. अपसुखा – whose joy has disappeared. अपगतं विनष्टं सुखं यस्याः सा अपसुखा । ' अप स्यादपकृष्टार्थे वर्जनार्थे विपर्यये । वियोगे विकृतौ चौर्ये हर्षनिर्देशयोरपि ' इति विश्वलोचने । This is a प्रादिबहुव्रीहि compound. शय्योपान्ते – near her bed. शय्यायाः शयनीयस्य उपान्तः समीप्रदेशः शय्योपान्तः । तत्र । मत्स्यलोलं लुलन्ती – wallowing like a fish. The word मत्स्य, preceding the root लुल्, being the subject of the verb लुल् and the same root लुल् being used again, the termination णम् is affixed to the root लुल् under the rule ' कर्मणि चेवे.' √ लुल् – to roll about. The Kinnara girl, harassed by separation from her lover, cannot sleep on the bed. She throws her body below her bed and rolls about like a fish. बद्धोत्कम्पश्वसितविवशा – reduced to a state of helplessness owing to her tremulous sighs or tremulous and reduced to helplessness owing to her breathing passionately. बद्धः जनितः [ रचितः ] उत्कम्पः प्रकम्पः यस्यां सा । श्वसितेन श्वासेन विवशा अवश्यमानसा विह्वला वा श्वसितविवशा । ' विवशो विह्वलेऽपि स्यात् अवश्यात्मनि च त्रिषु ' इति विश्वलोचने । बद्धोत्कम्पा चासौ श्वसितविवशा च बद्धोत्कम्पश्वसितविवशा । This is a Karmadhāraya compound

formed under the rule ' विशेषणं विशेष्येणेति ' and the feminine form बद्धोत्कम्पा is changed to a masculine form under the rule ' पुंवत्कर्मधारय-देशीये ' owing to the compound being Karmadhāraya. This compound may also be dissolved as - बद्धः रचितः उत्कम्पः यस्य यस्मिन् वा तत् बद्धोत्कम्पं । बद्धोत्कम्पं च तच्छ्वसितं च बद्धोत्कम्पश्वसितम् । तेन विवशा बद्धोत्कम्पश्वसितविवशा । कामपात्रायिता - behaving like a person worthy of passion i. e. behaving like a passionate person. कामस्य रिरंसायाः पात्रं भाजनं योग्या वा कामपात्रम् । ' योग्यभाजनयोः पात्रं ' इत्यमरः । कामपात्रमिवाचरति स्म कामपात्रायिता । सञ्जातरिरंसेत्यर्थः । नवजलमयम् - in the form of fresh water or consisting in abundant fresh water. नवं नव्यं च तज्जलं च नवजलम् । नवजलं प्राचुर्येण प्राधान्येन वा कृतमस्मिन् तत् नवजलमयम् । ' अस्मिन् ' [ पा० ४।२।२६ ] इति प्रकृतार्थे मयट् । अस्रम् - tears. ' अस्रमास्रश्च पुल्लिङ्गः क्लेशे च रुधिरेऽश्रुणि ' इति वैजयन्ती । मोचयिष्यति - would make shed tears. The root मुच् is द्विकर्मक. त्वामपि अश्रु मोचयिष्यति - Notwithstanding his monkhood, the Sage would be caused to shed tears by the miserable state to which the young girl is reduced by her separation from her lover. करुणावृत्तिः - compassionate by nature. करुणायाः वृत्तिः व्यापारः यत्र सः करुणावृत्तिः । यद्वा करुणा करुणावती वृत्तिः अन्तःकरणव्यापारः यस्य सः करुणावृत्तिः । आर्द्रान्तरात्मा - stirred to tears. [ lit. one whose inner heart is moistened. ] आर्द्रः अन्तर्बाष्पः अन्तरात्मा अन्तर्मनः यस्य सः । If it is construed as सर्वः आर्द्रान्तरात्मा प्रायः करुणावृत्तिः भवति this compound can be dissolved as आर्द्रः कोमलः अन्तरात्मा अन्तर्मनः यस्य सः । आर्द्रः - (1) possessing internal tears [ अन्तर्बाष्पः ]; (2) tender. आत्मा - mind. Śambara means to say that even the Sage, notwithstanding his monkhood, would be moved to tears by the plight of the young Kinnara girl to which she is reduced by her separation from her lover and passion for reuniting herself with him.

**Stanza 54** — कान्ताद्वितीये मयि - for me along with my wife [ lit. for me with my wife as the second ]. कान्ता द्वितीया यस्य सः कान्ताद्वितीयः । गुरुजने बन्धुप्रीतिं इव - like the fraternal affection for the

elderly persons. सम्भृतस्नेहं – saturated with affection. सम्भृतः सञ्चितः स्नेहः अनुरागः यस्मिंस्तत्। ' प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदः ' इत्यमरः। संवासात् – owing to habitation in company with. सं समं [सह] वासः संवासः । तस्मात्। ' सं सङ्गार्थे शोभनार्थे प्रहृष्टार्थसमार्थयोः ' इति विश्वलोचने । व्यतिकरम् – a calamity. ' भवेद्व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः ' इति विश्वलोचने । तत्त्वतः वेद्मि – I know accurately. प्रथमविरहे – in the period of incomparable separation. प्रथम – matchless; incomparable. दीर्घकालमनुभूतिविषयत्वादविषह्यदुःखोत्पत्तिनिमित्तत्वाच्च विरहस्य प्राथम्यमत्रावसेयम्। Śambara means to say that the girl shows affection towards him and his beloved as it is generally shown towards elderly persons and that he knows how an incomparable calamity has befallen her owing to his residing in company with her. He implies that the Sage, giving up meditation,should take this state to which she is reduced into consideration and be ready to leave for Alakā, where the girl resides.

**Stanza 55** — भ्रातः – O brother This Vocative form is used by the demi-good keeping in view his brotherly relatien established between himself and the Sage in their former births when they had been recognised by the names Kamatha and Marubhuti respectively. साध्यानुविद्धम् – urged by the matter at issue [ lit. impelled by the object of attaining what is to be attained i. e. intertwined with what is attainable.]. साध्येन सिषाधयिषितेन अनुविद्धं ग्रथितं प्रणुन्नं वा साध्यानुविद्धम् । अनुविद्धं is a past p. derived from the root अनुव्यध्. ते प्रत्यक्षं – in your presence. स्वार्थसिद्ध्यै – to gain my ends. स्वः स्वकीयः अर्थः प्रयोजनं स्वार्थः । तस्य सिद्धिः स्वार्थसिद्धिः । तस्यै । स्वाभिप्रेतप्रयोजनं साधयितुमित्यर्थः । उदितं – statement. स्निग्धां वृत्तिं मनसि घटयन् – having affection in mind; having affectionate attitude of mind. स्निग्धां – affectionate. वृत्तिं – attitude. निश्चिनु – ascertain. सुभगम्मन्यभावः – a thought of self-importance; a thought of myself being amiable. सुभगं सुजनं आत्मानं मन्यते इति सुभगम्मन्यः । तस्य भावः । मां वाचालं न करोति – does not make me loquatious. Śambara means to say that what he has stated should be believed in as true by the Sage. He says that he is unable to say anything more owing to his amiableness. Taking into consideration what

he has stated and believing in it, he means to say that the Sage should give up meditation and be ready to assume the form of a cloud to go speedily to Alakā to meet the young Kinnara girl waiting for an opportunity to reunite herself with her lover, the Sage.

**Stanza 56** — त्वयि दृष्टमात्रे — the very moment she would see you. अलकैः रुद्धापाङ्गप्रसरम् — with their side glances prevented by the tresses. रुद्धः प्रतिबद्धः अपाङ्गयोः नेत्रान्तयोः प्रसरः विसर्पणं यस्य तत्। 'अपाङ्गस्त्वङ्गविकले नेत्रान्ते तिलके पुमान्' इति विश्वलोचने। 'प्रसरस्तु विसर्पणम्' इत्यमरः। अञ्जनस्नेहशून्यम् — devoid of application of collyrium. अञ्जनस्य अक्षिकज्जलस्य सौवीरस्य वा स्नेहः देहः अञ्जनस्नेहः। तेन शून्यं विकलम्। स्नेहः — application, anointing. 'अञ्जनं तु रसाञ्जने। अक्षिकज्जलसौवीरे गिरिभेदेऽप्यथाञ्जने' इति विश्वलोचने। मधुनः — of intoxicating juice. 'मधु पुष्परसे क्षौद्रे मद्यक्षीराप्सु न द्वयोः। मधुर्मधूके सुरभौ चैत्रे दैत्यान्तरे पुमान्। जीवाशाके स्त्रियामेवं मधुशब्दः प्रयुज्यते' इति विश्वलोचने। प्रत्यादेशात् — owing to renouncement. 'प्रत्यादेशो निराकृतिः' इत्यमरः। विस्मृतभ्रूविलासम् — having the graceful movement [ or the amorous play ] of the eyebrows forgotten. भ्रुवोर्विलासः भ्रूविलासः। भ्रूभङ्गः इत्यर्थः। विस्मृतः भ्रूविलासः येन तत्। स्निग्धं — lovely. प्रेमव्यक्तियुक्तमित्यर्थः। 'स्निग्धो वात्सल्यसम्पन्ने चिक्कणेऽप्यभिधेयवत्' इति विश्वलोचने. All the four adjectives qualify चक्षुः and describe how the chaste woman [i. e. the young Kinnara girl] behaves. निदधती — fixing. सुदती — with beautiful teeth [ i. e. in the prime of her life ]. सुजाताः दन्ताः अस्याः सा सुदती। The word दन्त, when preceded by words like सु and by numerals, is changed to दतृ (दत्) when 'age' is suggested, under the rule 'वयसि दन्तस्य दतृ'. मदाज्ञाकृतः — obeying my orders. मम आज्ञा मदाज्ञा। तां करोतीति मदाज्ञाकृत्। तस्य। The Kinnara girl is described here as a chaste woman. Fixing of lovely eyes upon the lover, prevention of side-glances, being devoid of application of collyrium to the eyes, renouncement of intoxicating drugs, and forgetting the movements of eyebrows are the special characteristics of a chaste woman.

**Stanza 57** — असुनिरसने निश्चितात्मा – who has made up his mind to dispell his soul or life [ from his body.]. असूनां प्राणानां निरसनं निरासः व्यपरोपणं असुनिरसनम् । तत्र । 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः । 'स्यान्निरासे निरसनं वधे निष्ठीवने तथा' इति विश्वलोचने । आत्मवधे इत्यर्थः । निश्चितात्मा कृतनिश्चयः । निश्चितः निर्णीतः आत्मा मनः यस्य सः । सनिश्चयमनाः इत्यर्थः । 'आत्मा ब्रह्ममनोदेहस्वभावधृतिबुद्धिषु' इति विश्वलोचने । मत्प्रामाण्यात् – relying on my truthfulness. मम प्रामाण्यं सत्यवादित्वं मत्प्रामाण्यम् । तस्मात् । मत्प्रामाण्यमुररीकृत्येत्यर्थः । 'प्रमाणमेकतेयत्ताहेतियन्तृप्रमातृषु । सत्यवादिनि नित्ये च मर्यादाहन्तृशास्त्रयोः' इति विश्वलोचने । तत्प्रमाणाय – for convincing. तस्य मदुक्तवचनस्य प्रमाणं तत्प्रमाणम् । तस्मै । मदुक्तं प्रमाणयितुमित्यर्थः । सज्जे – ready. मृगाक्ष्याः – of the fawn-eyed one. मृगस्येव अक्षिणी नयने यस्याः सा । तस्याः । उपरिस्पन्दि – moving side-ways in the upper parts. मीनक्षोभात्– owing to the disturbance of the fish. मीनानां क्षोभः उद्वर्तनम् । तस्मात् । मीनकर्तृकात्क्षोभादित्यर्थः । चलकुवलयश्रीतुलाम् – resemblance to the beauty of blue lotuses set in motion. चलानि च तानि कुवलयानि च चलकुवलयानि । तेषां श्रीः शोभा । तत्तुला तत्सादृश्यम् । ताम् । The movements of the eye-balls of the Kinnara girl in the upper parts of her eye-sockets are compared to the beauty of lotuses set in motion by the disturbance of water caused by the pretty kettle of the fish.

---

## CANTO IV

**Stanza 1** — मे द्वितीयैः प्राणैः कान्तया – by my beloved, my second soul. It is quite obvious that the words द्वितीयैः प्राणैः and कान्तया differ in number and gender. Under the rule 'यल्लिङ्गं यद्वचनं या च विभक्तिर्विशेष्यस्य। तल्लिङ्गं तद्वचनं सा च विभक्तिर्विशेषणास्याऽपि ॥' the adjective and the substantive must not differ in gender, number and case, for the gender and number are, as a rule, dependent on the gender and number of the substantive. But as the word प्राण is always declined as a noun possessing masculine gender and as it possesses plural number usually, it cannot have its gender and number changed in accordance with those of the substantive. The following illustrations support the above statement – ( १ ) कोशः कोशवतः प्राणाः प्राणाः प्राणाः न भूपतेः । ( २ ) अर्थपतेर्विमर्दको बहिश्चराः प्राणाः ।. [ त्वं अस्याः ] प्राणाः – you are her soul. It is implied here by means of these words that the young lady is so much attached to the Sage that she could not live any longer without Him and so to save her, the Sage should hurry up to arrive at the city of Alakā. नवनववरः – (1) making a choice of whatever is new; (2) a young bride-groom; (3) best of the youths. नवनवं नवप्रकारं वरं अभीष्टं यस्य सः । यद्वा नवनवः नवप्रकारः तारुण्यतरलात्मा चासौ वरः पाणिग्राहश्च नवनववरः । यद्वा नवनवानां नवप्रकाराणां तरुणानां वरः श्रेष्ठः नवनववरः । यद्वा नवनवं नवप्रकारं वृणोतीति शीलं यस्य सः नवनववरः ।. The termination अट् ( अ ) is affixed to the root वृ, under the rule 'हेतुशीलानुलोम्ये....' in the sense of शील. सन् – noble. प्रणयमधुरम् – in a way charming to her affection for you. प्रणयेन प्रेम्णा मधुरं सुभगं यथा स्यात्तथा । त्वरय – should hurry up. मर्दीयैः – [ wounds inflicted] by me. कररुहपदैः – [ caused ] by the wounds inflicted by my sword. कररुह – ( m. ) a sword. पद – a mark i. e. a wound. मुच्यमानः = who is being separated. वामः – a cloud. 'वामः सव्ये हरे कामे घने वित्ते तु न द्वयोः' इति विश्वलोचने । 'वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु'

इति मेदिन्याम् । लघु – quickly. Śambara means to say that he himself has not fallen in love with the young lady who is inspired with love of the Sage and so, being a chaste woman, she deserves to be loved by Him [ the Sage ]. The affectionate message, conveyed to the Sage by the beloved of Śambara, is due to her intimate friendship with the young lady. According to the demi-god the Sage should not be reluctant to do anything for her.

**Stanza 2**— मयि सहरुषि – when I would have my wrath stirred up. रुषा कोपेन सहितः सहरुट् । तस्मिन् सहरुषि । The change of सह into स under the rule 'वा नीचः' being optional, the word सह is not replaced by the word स. Śambara means to say that the Sage could not escape death when his passion would be roused. This is how the demi-god is described here as threatening the Sage with death. उद्धेतिप्रणिपतनकैः तदग्रं त्वां अवश्यं सारयिष्ये – With strokes of my sword drawn [ against you ], I shall certainly make its end pass through You or cause You to move in front of her. उद्धेतिप्रणिपतनकैः – with strokes of a sword drawn ( against the Sage ). उद्गता चासौ हेतिश्चः उद्धेतिः । उद्धेति – a drawn sword. तस्याः प्रणिपतनकानि प्रपाताः । तैः । 'हेतिर्ज्वालार्कतेजसोः । स्त्रियां शास्त्रेऽपि' इति विश्वलोचने । तदग्रं – ( 1 ) its end or edge; ( 2 ) in front of her. तस्य शस्त्रस्य अग्रं तदग्रम् । तस्याः अलकानिवासिन्याः तरुण्याः अग्रं तदग्रम् । तरुण्यभिमुखमित्यर्थः । सारयिष्ये – I would cause you to move. The second line of the stanza may be interpreted in two ways as above. Śambara means to say that he would pierce the end of his sword through the body of the Sage or that he would make the Sage go towards the young lady residing in the city of Alakā by putting Him to death. सारयिष्ये – Future first person singular of the causal of the root सृ. चिरपरिचितम् – familiar since long. चिरात् – long since; for a long time. परिचितम् – familiar. मुक्ताजालं – a net of pearls i. e. royal insignia. दैवगत्या – ( 1 ) through course or contrivance of fate; ( 2 ) owing to the state occasioned by fate ( i. e. misfortune ). त्याजितः –

made to give up [p. p. p. of the causal of the root हृ.] तावकः – your. घट-यितुम् – to hold vital airs together. Śambara means to say that the Sage's acts of abdicating the throne, getting Himself initiated into monkhood and practising austere penance would not be able to help Him to escape death that would be caused by the death-blows struck by (the demigod) himself with his sword.

**Stanza 3** — वैरिद्विरदनघटाकुम्भसम्भेदनेषु – in the process of rending asunder the frontal globes on the foreheads of the troops of elephants of enemies. वैरिणां द्विरदनाः गजाः वैरिद्विरदनाः । तेषां घटा समूहः। तस्याः कुम्भाः गजमूर्धांशाः । तेषां सम्भेदनानि विदारणक्रियाः । तेषु । द्विरदन – an elephant. द्वौ रदनौ दन्तौ यस्य सः द्विरदनः । घटा – a troop (of elephants). प्राप्तस्थेमा – become steady. प्राप्तः लब्धः स्थेमा स्थैर्यं येन सः प्राप्तस्थेमा ।. The word स्थेमन् – is derived from the word स्थिर by affixing the termination इमन् under the rule 'पृथ्वोदेर्वेमन्'. The letters इर, forming part of the word स्थिर, when followed by the termination इमन्, are changed to अ under the rule 'प्रियस्थिरस्फिरायादेरः'. समर-विजयी – playing the conqueror in battles [i. e. winning battles]. समरं युद्धं विजेतुं शीलमस्येति समरविजयी । वीरलक्ष्म्याः – of the goddes of the brave. वीराणां लक्ष्मीः श्रीः वीरलक्ष्मीः । तस्याः । लक्ष्मी is the superhuman power of warriors. This power is deified here. रक्तपानोत्सवानाम् – of those who are strongly desirous of quaffing blood [ or taking delight in quaffing blood ]. रक्तस्य रुधिरस्य पानं पीतिः रक्तपानं । तत्र उत्सवः इच्छा-प्रसरः येषां ते । तेषाम् । 'उत्सवो मह उत्सेधः इच्छाप्रसरकोपयोः' इति विश्वलोचने । सम्भोगान्ते – after the destruction of the strong bodies. समीचीनानां युयुधानशरीराणां नाशक्रियायाः अवसानकाले । समीचीनः भोगः शरीरं सम्भोगः । सम्भोगानां अन्तः नाशः सम्भोगान्तः । तस्मिन् । तस्मिन् काले इत्यर्थः । 'अन्तो नाशे मनोहरे' इति विश्वलोचने । मम हस्तसंवाहनानां समुचितः – deserving gentle rubbings by my hands or quite used to gentle rubbings by my hands. हस्तेन संवाहनं अङ्गमर्दनं हस्तसंवाहनम् । तेषाम् । Śambara means to say that he, with his sword which has massacred a number of warriors

in various battles fought by him, would slaughter the Sage very easily. The description of the sword of the demi-god is meant for threatening the Sage with death.

**Stanza 4** — अस्युद्गीर्णे मयि – Whenever I unsheathe my sword. उद्गीर्णः असिः खड्गः येन सः अस्युद्गीर्णः । तस्मिन् । As the word असि means a weapon, it is placed before a past participle in a Bahuvrihi compound under the rule 'क्ताच्चास्त्रम्'. असभ्यः कः – what then of him who is not heroic. असभ्यः – who is not brave. सह भान्ति तेजसा प्रकाशन्ते अस्यामिति सभा । तेजस्विनां समाजः इत्यर्थः । सभायां साधुः सभ्यः । न सभ्यः असभ्यः । मदसिविततखण्डनात् – owing to the wounds inflicted by my sword. मम असि खड्गः मदसिः । तेन विततं विधातुमारब्धं आखण्डनं विदारणं तस्मात् हेतुभूतात् । सरसकदलीस्तम्भगौरः – as red as the stem of a plantain-tree reddish owing to its being anointed with its [ own ] juice. रसेन सहितः सरसः । सरसः – anointed with its [ own ] juice. सरसश्चासौ कदलीस्तम्भश्च सरसकदलीस्तम्भः । कदलीस्तम्भः – the stem of a plantain-tree. कदल्याः मोचायाः स्तम्भः काण्डः कदलीस्तम्भः । सरसकदलीस्तम्भः इव गौरः रक्तवर्णः सरसकदलीस्तम्भगौरः । स्तम्भः – a stem. गौरः – reddish, red. 'गौरः पीतारुणश्वेतविशुद्धेष्वभिधेयवत्' इति विश्वलोचने । Here, the thigh of the Sage which would be rendered red owing to the blood given out by the wounds inflicted by the sword of the demi-god, is compared to a stem of a plaintain tree rendered red by the juice oozing out of the steams of leaves cut off. Śambara means to say that the thighs of the Sage would be trembling owing to the Sage being intimidated on account of the sword, unsheathed by himself. He implies that the Sage would be quite unable to face him in hostility, for the very thought of his thigh being wounded and rendered red by blood oozing out of the wounds that would be inflicted by his sword, would enfeeble him and make him tremble. This is how the demi-god is described here as trying his level best to rouse the Sage to action.

**Stanza 5** — वीरगोष्ठीषु – in the assemblies of warriors. वीराणां शूराणां गोष्ठ्यः सभाः वीरगोष्ठ्यः । तासु । गोष्ठी – an assembly, a society.

वीरालापे सति – when there would be a conversation regarding warriors or when the warriors would be taking part in the conversation. मद्वतः – मदवान् = excessively proud. भूम्ना प्राचुर्येण मदः मानः अस्य अस्तीति मदवान् । तस्मात् – Here the termination वत् implies 'abundance' under the rule 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥'. मदवतः विपक्षात् – by the proud-hearted enemies. परिभव-कलङ्काङ्कनम् – stigmatised owing to their self-respect being offended. परिभवः तिरस्क्रियैव कलङ्कः परिभवकलङ्कः। सः अङ्कनं चिह्नं यस्य तत् । 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः । 'कलङ्कोऽङ्के कालायसमले दोषापवादयोः' इति विश्वलोचने । जलद – O [ would-be ] cloud! Though the Sage has not his body transformed into a cloud, he is called by the demigod by the name of a cloud owing to the demigod's being sure of the transformation of the Sage's body into that of a cloud after the destruction of the Sage's body. विद्वन्मन्यः – considering himself a man of sound learning. विद्वांसं आत्मानं मन्यते इति विद्वन्मन्यः। मानोन्नतानाम् – of those who hold up their heads with pride. मानेन अभिमानेन उन्नताः समुन्नतचित्ताः मानोन्नताः । तेषाम् । सा – the sovereign power. 'शक्तौ तु सा स्त्रियाम्' इति मेदिन्याम् । लब्धनिद्रासुखा – enjoying the pleasure of sleep. Śambara asks the Sage whether he, possessing sovereign power, would like to be censured by other warriors for not taking part in a fight, demanded by Śambara himself and thus tries to move Him to strong emotion so that he may be up in arms.

**Stanza 6** — मदुपचरितात् बिभ्यती – afraid of my arrival. मम उप समीपे चरितं चरणं आगमनं मदुपचरितम् । तस्मात् । लुप्तसञ्ज्ञा – deprived of grasping capacity or mental power. सञ्ज्ञा – the mental power of understanding what is good and what is bad or what is beneficial and what is not. लुप्ता विलयं गता सञ्ज्ञा हिताहितप्राप्तिपरिहारयोर्गुणदोषविचारात्मकं ज्ञानं यस्याः सा । मूकावस्थां विदधती – reducing to the state of speechlessness. सत्त्ववृत्तिं रुन्धती – obstructing the working of vital airs. सत्त्वस्य प्राणानां वृत्तिः प्रवृत्तिः व्यापारः सत्त्ववृत्तिः । ताम् । सावष्टम्भं – courageously.

अन्वास्य — having pacified or set aside. स्तनितविमुखः — averse to thundering. स्तनितात् गर्जितात् विमुखः स्तनितविमुखः । अर्धयुद्धे — in the mid-course of fighting. भटतरः — the best warrior. सहस्व — have patience. Śambara asks the Sage to give up fear and become a best warrior and says that if He is not in a position to fight with him, He should wait for a while and see that He is made away with.

**Stanza 7** — सुरभटत्रासिगर्जोर्जिते — the force of whose thunder-like roar troubles the heavenly warriors. सुरभटान् त्रासयितुं भाययितुं शीलं यस्य तत् । Here, the termination णिन् ( इन् ) is affixed to the causal of the root त्रस् under the rule ' शीलेऽजातौ णिन् ' । गर्जस्य स्तनितस्य ऊर्जितं बलं गर्जोर्जितम् । गर्जः तडित्वत्स्तनितमिव गर्जः । सुरभटत्रासि गर्जोर्जितं यस्य सः । तस्मिन् । The roaring sound of the demi-god is resembled to the thunderings of a cloud. मयि योद्धुं असिप्राप्ते — when I would wield a sword to give a fight. असिप्राप्ते — wielding a sword. The word असि, meaning a weapon, is placed before a past participle in this compound which is a बहुव्रीहि one, under the rule ' क्ताच्चास्त्रम् '. अभियाने — at the time of an attack. वीरलक्ष्मीः — The goddess of the brave i. e. the supermost strength or valour. वीरम्मन्यः — considering oneself to be a warrior. वीरं शूरं आत्मानं मन्यते इति वीरम्मन्यः । स्वप्नलब्धे — secured in a dream. प्रेमभङ्गः — loss of love.

**Stanza 8** — निस्सङ्गः — void of wordly attachment. सङ्गात् आसक्तेः निर्गतः निस्सङ्गः । बाह्याभ्यन्तरपरिग्रहरहितः इत्यर्थः । अङ्ग — उपायः कारणमिति वा — a means, a cause. ' अङ्गो देशेऽङ्गमन्तिके । गात्रोपायप्रधानेषु प्रतीकेऽप्यङ्गवत्यपि ' इति विश्वलोचने । Śambara means to say that the Sage, being void of all worldly attachments, should have no reason to be afraid of anything. जीवन्मतक — revered by all living beings. कण्ठच्युतभुजलताग्रन्थि — having ties formed with their creeper-like arms round necks ( of their beloved wives.). कण्ठे ग्रीवायां ग्रीवासमीपस्थाधस्तनशरीरभागे वा च्युता विरचिता भुजलतयोः ग्रन्थिः बन्धनं यस्मिन् । तत् । गाढोप-

गूढं – close embrace. गाढं दृढं च तत् उपगूढं आलिङ्गनं च गाढोपगूढं। Śambara means to say that as the best warriors also, setting aside their fear of death, embrace their beloved wives at the time of going on war, the Sage need not be afraid of death when, in his next birth, he would be surely having pleasure of embracing his beloved and in case he fears, he would be guilty of fearfulness.

**Stanza 9** — स्ववपुषि सतीम् – resorting to your body. क्षीणां – deteriorated, emaciated. लक्ष्मीम् – the sovereign strength or power. उद्यमाख्येन दोषा – through the agency of an arm in the form of exertion. उद्यमः प्रयत्नः इति आख्या अभिधानं यस्य सः । तेन । दोस् – m.—the fore-arm, arm. 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । प्रोत्थाप्य – having roused. This is a ल्यबन्त form derived from the causal of प्र + उत् + स्था. युद्धे – for a fight. अलं – powerful, able, competent. 'अलं भूषणपर्याप्तिशक्तिवारणनिष्फले' इति विश्वलोचने। Śambara means to say that though the bodily strength of the Sage is reduced owing to His practising austere penance, He should rouse to action, by exerting Himself, His ability and become ready for a fight. नवघनाः – new or fresh clouds. घर्मतत-क्षताम् – troubled very much by the heat of the summer season. घर्मस्य ग्रीष्मर्तोः ततं तापः घर्मततम्। 'घर्मः स्यादपे ग्रीष्मे ऊष्मस्वेदजलेऽपि च' इति विश्वलोचने । ततं तापः । 'नञ्भावे क्तोऽभ्यादिभ्यः' इति भावे क्तः नप् च। तेन क्षता सन्त्रस्ता । ताम् । यद्वा घर्मेण ऊष्मणा तता घर्मतता । ताम् । क्ष्मां – the earth. 'गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही' इत्यमरः । स्वजलकणिका-शीतलेन – rendered cool by the sprays of their water. स्वं स्वकीयं जलं वारि स्वजलम्। मेघाधिकरणनिष्ठं जलमित्यर्थः । तस्य कणिकाभिः शीकरैः शीतलः स्वजलकणिकाशीतलः । तेन । कणः एव कणिका । 'कणोऽतिसूक्ष्मे धान्यांशे' इति विश्वलोचने । अनिलेन – by means of wind. प्रोत्थाप्य – having delighted. आश्रितानुग्रहः – giving protection to the refugees or those seeking refuge (for protection). आश्रितानां आश्रयार्थमागतानां अनुग्रहः अभ्युपपत्तिः संरक्षणादिरूपा आश्रितानुग्रहः । 'विमर्दनं परिमलोऽभ्युपपत्तिरनुग्रहः' इत्यमरः । सताम् – of the good. अर्थः = व्रतम् – duty, object. 'अर्थः प्रयोजने चित्ते

हेत्वभिप्रायवस्तुषु । शब्दाभिधेये विषये स्यान्निवृत्तिप्रकारयोः ' इति विश्वलोचने. ननु = एव – verily. शंसन्ति – announce. Śambara implies that in case the Sage becomes ready for a fight He would be easily destroyed by the heavy strokes of his sword.

**Stanza 10** — त्वां कीर्तिं – your fame. वल्लीं वा – resembling or like a beautiful creeper. ' वल्ली तु व्रततिर्लता ' इत्यमरः । वा – resembling or like. ' उपमायां विकल्पे वा ' इत्यमरः । प्रधनविषयैः – The object of which is a fight. प्रधनं युद्धं विषयः गोचरः येषां ते । तैः । युद्धसम्बन्धिभिरित्यर्थः । ' प्रधनं दारुणे सङ्ख्ये ' इति ' विषयो गोचरे देशे इन्द्रियार्थेऽपि नीवृति । प्रबन्धाद्यस्य यो ज्ञातः स तस्य विषयः स्मृतः ' इति च विश्वलोचने । स्वोद्यमाम्बुप्रसेकैः – by means of sprays of water in the form of your exertions. स्वः स्वीयश्चासौ उद्यमः प्रयत्नश्च स्वोद्यमः । स एव अम्बु सलिलम् । तस्य प्रसेकाः सिञ्चनानि । तैः । ' वार्वारि कं पयोऽम्भोऽम्बु पाथोऽर्णः सलिलं जलम् । ' इति धनञ्जयः । कुसुमिताम् – furnished with or bearing flowers. कुसुमानि सञ्जातानि अस्याः कुसुमिता । ताम् । ' तदस्य सञ्जातं तारकादिभ्यः इतः ' इति सञ्जातार्थे इतः । उन्नतानाम् – of the elevated. क्रमः – tradition. ' क्रमः शक्तिपरीपाटी चलने कम्पनेऽपि च ' इति विश्वलोचने । नवजलमुचाम् – (1) of the new clouds; (2) of those sending down fresh water. नवाः नूतनाः विपुलजलभृतश्च ते जलमुचः मेघाश्च नवजलमुचः तेषाम् । यद्वा नवं प्रत्यग्रं जलं मुञ्चन्तीति नवजलमुचः । तेषाम् । अनेहा – कालः – season. क्षतान्ताम् – having its beauty spoiled. क्षतः विध्वस्तः अन्तः मनोहरं स्वरूपं यस्याः सा । ताम् । ' अन्तो नाशे मनोहरे । स्वरूपेऽन्तं मतं क्लीबं न स्त्री प्रान्तेऽन्तिके त्रिषु ' इति विश्वलोचने । The reading क्षतान्ताम् may also be split up as क्षतां ताम्. क्षतां – hurt, injured. This is a p. p. participle of the root क्षण् (– to injure, to hurt). कु –. the earth. ' कुः शब्दे ना भुवि स्त्रियाम् ' इति विश्वलोचने । मालतीनाम् – of the Mālati-creepers. ' मालती जातियुवति – ' इति विश्वलोचने । अभिनवैः – fresh. जालकैः – buds. ' जालकः कोरके दम्भप्रभेदे जालिनीफले ' इति विश्वलोचने । प्रत्याश्वस्ताम् – refreshed. Śambara means to say that the Sage, having His fame as a great warrior on the wane owing to His being devoted to practising austere penance, should try to revive

winning victory in the fight, proposed by him. He says that it is the tradition of the great. He tries to persuade the Sage by illustrating that the earth, having lost its beauty owing to the hot season, is refreshed by the rainy season and so invites Him to take up arms.

**Stanza 11** — अम्भोद – O cloud! Though the Sage has not his body transformed into a cloud He is termed 'a cloud' by Śambara as he is sure that the Sage would have to transform His body into that of a cloud after He would be murdered by him in the battle proposed by him. समरशिरसि – in the van of battle. 'अस्त्रियां समरानीकरणाः कलह-विग्रहौ' इत्यमरः। 'शिरस्तु मस्तके सेनाग्रभागेऽग्रप्रधानयोः' इति विश्वलोचने। मत्प्रातीप्यं प्राप्य – coming into antagonism with me. प्रतीपः प्रतिकूलः। तस्य भावः प्रातीप्यम्। परिपन्थित्वमित्यर्थः। 'प्रतिकूलं तु विलोममपसव्यमपष्ठुरं। वामं प्रसव्यं प्रतीपं प्रतिलोममपष्ठु च' इति हैमेऽभिधानचिन्तामणौ। मम प्रातीप्यं मत्प्रातीप्यम्। दृष्टावदानः – (1) seeing my heroic achievements; (2) undergoing pain of wounds. दृष्ट – which is undergone. दृष्टमनुभूतमित्यर्थः, धातूनामनेकार्थत्वात्। अवदानं – खण्डनं – cutting; inflicting wounds. 'अवदानं मतमिति वृत्तकर्मणि खण्डने' इति विश्वलोचने। दृष्टं अनुभूतं अवदानं मदसिकृतत्वच्छरीरखण्डनं येन सः। Yogirāja, the commentator, reads अवधान in place of अवदान. This reading also conveys the same meaning. The commentary upon the नाममाला of Dhananjaya reads as follows— 'साहसे द्वौ। अवधीयतेऽवधानम्। अवदानं च। 'अवधानं तु साहसम्' इति धनञ्जयः'. क्षीणायुः – with the duration of life come to an end. आयुः – duration of life. 'आयुर्जीवितकालो ना जीवातुर्जीवनौषधम्' इत्यमरः। द्यां आरोहन् – attaining heaven. सहजमणिभाभूषितः – decorated with the lustre of jewels come into being in conjunction with you. सहजाः सह जाताश्च ते मणयश्च सहजमणयः। तेषां भाः। ताभिः भूषितः अलङ्कृतः। According to the Jain scriptures the ornaments of gods come into being at the very time when the gods are born in heaven. विद्युद्गर्भे – shining with lustre. याने – यानं – गवाक्षः – a vehicle; a window. त्वत्सनाथे – occupied by you. त्वया सनाथे सहिते त्वत्सनाथे। 'सनाथं प्रभुमित्याहुः सहिते

चित्ततापिनि ' इति शब्दार्णवे । स्तिमितनयनाम् – with her eyes fixed; whose eyes are fixed. स्तिमिते स्तब्धतां नीते नयने लोचने यस्याः सा । ताम् । 'स्तिमितं वीतचाञ्चल्येऽप्यार्द्रीभूतेऽपि वाच्यवत् ' इति विश्वलोचने । 'स्तिमितो निश्चलार्द्रयोः' इति मेदिन्याम् । काञ्चित् सुरवधूं – a certain celestial woman. आपूर्णकामां कुरु – you should reduce to a state of complete satisfaction. आसमन्तात् [ पूर्णत्वेनेत्यर्थः] पूर्णः पूर्णतां नीतः कामः अभिलाषः यस्याः सा । ताम् । Śambara means to say that the Sage should necessarily be ready for a fight, for, when, after His death brought about in the battle, He would attain to heaven, He would be united with the celestial damsel for whose sake He is practising austere penance.

**Stanza 12** — अतिप्रौढमानोद्धुरस्य – altogether free from fear on account of boldness flown very high. अतिप्रौढः अतिशयेन वृद्धिं प्राप्तश्चासौ मानश्चित्तसमुन्नतिश्च अतिप्रौढमानः । तेन उद्धुरः निर्भयः । तस्य । अतिप्रौढः – flown very high, exalted very much. मानः – boldness. उद्धुर – free from fear, bold. अध्यवसितम् – determination. निकामं योद्धुकामः – cherishing a very strong desire to engage (yourself) in a combat. निकामं – excessively, very much 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ' इत्यमरः । योद्धुकामः – cherishing a desire to fight. The म् of योद्धुम् which is followed by the word काम is dropped under the rule 'सम्तुमोर्मनःकामे '. अस्युत्खातः – having sword unsheathed. असिः उत्खातः निष्काषितः येन सः । The word असि, meaning a missile, is placed before the word उत्खातः, a past participle, under the rule 'क्ताच्चास्त्रम् '. ध्यानाभ्यासं शिथिलय – slacken (your) constant practice of meditation. शिथिलय – [ 2. per. sing. of the Imp. of शिथिल ] – This is a nominal verb derived from the word शिथिल by affixing the termination णिच् under the rule 'मृदो ध्वर्थे णिज्बहुलम् '. वाचंयमत्वम् – taciturnity. वाचं यच्छति निगृह्णातीति वाचंयमः । वाचं निगृह्य यो मौनेनास्ते स वाचंयम इत्यभिधीयते । तस्य भावः वाचंयमत्वम् । मौनित्वमित्यर्थः । प्रोज्झ्य – having repudiated. स्तनितवचनः – uttering words in the form of thundering sounds. स्तनितं गर्जितं वचनं शब्दः यस्य सः । 'स्तनितं गर्जितं मेघनिर्घोषे

रसितादि च ' इत्यमरः। The reading वक्तुं धीरैः स्तनितवचनैः is also good. मानिनीं – a proud lady. मानिनीं प्रणयकोपवतीम्। दीर्घकालिकविप्रलम्भजनितकोपवतीमित्यर्थः। 'प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इत्यमरः। मानः प्रणयकोपः अस्याः अस्तीति मानिनी। पटुतरगिरं – (1) very eloquent speech; (2) very eloquently. प्रकृष्टा पट्वी पटुतरा। सा चासौ गीश्च पटुतरगीः। ताम्। प्रचुरचातुर्यसम्पन्नां वाचमित्यर्थः। यद्वा पटुतरा गीः यस्मिन् कर्मणि यथा स्यात् तथेति क्रियाविशेषणत्वमप्यस्य सम्भवति। Here the termination तम is affixed to the word पटु under the rule 'द्विविभज्ये तरः' to imply 'superiority'. धीरं – boldly, firmly. प्रक्रमेथाः – should begin. Here, the Atmanepada termination is affixed to the root क्रम्, owing to its being preceded by the preposition प्र, under the rule 'प्रोपाभ्यां समर्थाभ्याम्'. Śambara means to say that the Sage, wishing to fullfill the desire of a celestial damsel, should give up practising penance and wield a sword to take part in a fight and then, when He would attain heaven after being killed by him in the fight, He should begin to talk to the proud lady very eloquently and boldly owing to which the celestial damsel would give up her attitude of her impassioned mind towards Him. He implies that the Sage, after being killed in the fight, would attain to heaven, where He would have the opportunity for having sexual enjoyment with the heavenly damsel for the sake of whom He is, in his opinion, practising austere penance. This is how the demigod is trying his utmost to disturb the Sage to goad Him into fighting.

**Stanza 13** — भीते – in the case of the frightened. अस्त्रशून्ये भटमते – in the case of the one who is looked upon as a soldier having no weapon. भटैः आदृतः, 'भटः अयं' इति मतः ज्ञातः वा भटमतः। The termination क्त is affixed to the root मन् to imply the sense of the past tense and not that of the present tense, for, at the time of the demigod's speech, addressed to the Sage, the Sage could not be placed in the class of soldires. It is, therefore, proper to dissolve the compound as भटैः मतः भटमतः and not as भटानां मतः under the rule

'ज्ञीन्मत्यचर्थिशीस्याद्भ्यिः क्तः ।' स्त्रीम्मन्ये – in the case of the one who considers himself to be a woman. स्त्रीं स्त्रियं वाऽऽत्मानं मन्यते इति स्त्रीम्मन्यः । तस्मिन् । चरणपतिते – in the case of the one fallen down at the feet. क्षीणके – in the case of the one whose fire of energy is worn away or extinguished. क्षीणः कः द्योतः तेजः यस्य सः क्षीणकः । तस्मिन् । 'को ब्रह्मानिलसूर्याग्नियमात्मद्योतबर्हिषु' इति विश्वलोचने. पादस्पृष्ट्या शपथयति वा – in the case of the one swearing a solemn oath by touching feet. पादयोः स्पृष्टिः पृक्तिः पादस्पृष्टिः । तया । पादस्पर्शनेनेत्यर्थः । शपथयति वा – swearing a solemn oath. शपथं करोति शपथयति । शतृत्ये शपथयन्निति । तस्मिन् शपथयति । स कश्चित् – the contemptible one. वावहीमि – wield a weapon again and again. This is a form of the Frequentative derived from the root वह् – bear, wield. हिंसां भुजिष्यम् – guilty of assassination or killing. Śambara means to say that the Sage having no weapon in His hand cannot be attacked by him, for attacking persons like the Sage means nothing else but committing sin. This is why the demi-god is trying his level best to rouse the Sage to action.

**Stanza 14** — प्रिययुवतितः प्रीत्यै – (1) for giving pleasure to the young woman; (2) for deriving pleasure from the young woman. The word युवति is derived from the word युवन् by affixing the termination ति under the rule 'यूनस्तिः'. प्रिया चासौ युवतिश्च प्रिययुवतिः । This being a कर्मधारय compound, the feminine form प्रिया is changed to a masculine form प्रिय when it is compounded with the word युवति, under the rule 'पुंवद्यजातीयदेशीये'. The word प्रिययुवतितः implies two meanings as (1) of the beloved young woman, and (2) from the beloved young woman, for the termination तस् implies the senses of all the cases under the rule 'सार्वविभक्तिकस्तसिः'. प्रीत्यै – (1) for giving pleasure; (2) for deriving pleasure. The Act of living i. e. जीवनाक्रिया or अस्तित्वक्रिया being meant for the act of giving or deriving pleasure and the verb, meaning to give or to derive and having the termination तुमुन् affixed to it, being physically absent, the object of the verb which is

absent, governs the Dative case under the rule 'त्वर्थवाचोऽर्थात् कर्मणि'. यदि जीवने ते किञ्चित् उत्सुकत्वं अस्ति – if you are a bit anxious to continue your wordly life. जीवने उत्सुकत्वं – the word जीवन is caused to be used in the Locative case owing to the use of the word उत्सुक under the rule 'प्रसितोत्सुकावबद्धैर्मा च'. तत् – then. Śambara means to say that the Sage, in case He wished to give pleasure to or derive pleasure from a certain young woman dear to Him, should raise His hands up and embrace his feet and thus having His self-conceitedness dissipated need not be afraid of him. He implies that in case the Sage becomes subservient to himself, He need not be afraid of him. This is how Śambara is trying to deceive the Sage on whom he wishes to take a bloody vengeance for the punishment inflicted upon him by king Arvinda who had got angry with him for his misconduct. विहतगरिमा – having self-conceitedness dissipated. विहतः विनाशं नीतः गरिमा महिमा यस्य येन वा सः। The word गुरु, having the termination इमन् affixed to it under the rule 'पृथ्वादेर्वेमन्', is changed to गर् under the rule 'बहुलगुरूरुवृद्धतृप्रदीर्घवृन्दारकाणां बंहिगवर्वर्षित्रप्द्राघवृन्दाः'. त्वं मा भैषीः – you need not be afraid. An Aorist form of a verb is used when the indeclinable मा is used in a sentence, under the rule 'माङि लुङ्'. The विकरण अ of the Aorist is dropped under the rule 'लुङ्लङ्लृङ्क्ष्य-माङाट्,' for it is preceded by the indeclinable मा. मां त्वं अन्यथा मा ग्रहीः – Do not think otherwise of me.

**Stanza 15** — अहो – is an exclamatory particle showing wonder – 'अहो हीति विस्मये' इत्यमरः। योषितां जीवनार्थम्ः – for maintaining lives of women. पथि श्राम्यतां – moving laboriously on their ways [to homes]. प्रोषितानाम् – of those gone abroad. This is a p. p. participle derived from the root प्र + वस्, meaning 'to go abroad'. त्वरयति – making move on expeditiously. Though the root त्वर् is Atm., it is declined as a Par. owing to its having the causal termination णिच् affixed to it, under the rule 'चत्ययथर्थात्'. प्रतिनिधिः –

a representative. 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्' इत्यमरः । आरुद्धद्युः — pervading the sky. आरुद्धा कालमेघैः व्याप्ता द्यौः नभोदेशः यस्मिन् येन वा । सः । 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् । नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः । बलृप्तः — brought into being. सद्यः — suddenly. आत्मशक्त्या — through the agency of his soul-power. सहसा — suddenly. 'तत्कालमात्रे सहसा सहसाऽऽकस्मिकेऽपि च' इति विश्वलोचने । व्यवधि — brought to nothing. This is a passive form of the Aorist of the root वि + वध्. it is described here, in this stanza that the demi-god, Śambara, was struck with wonder when he saw the assemblage of clouds, created by him by employing magic, dispersed by the Sage by means of His soul-power. In reality, the Sage, being deeply absorbed in meditation, did not use His soul-power to disperse the clouds, for a Jain mendicant cannot, as a rule, use his soul-power to escape troubles, created through the agency of His fate. The clouds dispersed on their own account, for the soul-power of the Sage was so strong that the magic, employed by the demi-god, Śambara, could not work.

**Stanza 16** — अध्वगानां — of the travellers. अध्वानं मार्गं गच्छतीति अध्वगः । 'अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि' इत्यमरः । मन्द्रस्निग्धैः ध्वनिभिः — by means of deep and charming thundering sounds. मन्द्राः गम्भीराश्च ते स्निग्धाः श्रुतिमधुराश्च मन्द्रस्निग्धाः । तैः । 'मन्द्रस्तु गम्भीरे' इति 'मसृणं स्निग्धं' इत्युभयत्राऽप्यमरः । अबलावेणिमोक्षोत्सुकानि — anxious for untying the women's hair twisted into single unornamented braids and allowed to fall on the backs of their beloved wives. अबलानां स्वीयस्वीयकमनीयकामिनीनां वेणयः केशबन्धविशेषाः अबलावेणयः । स्वकान्तविरहसंसूचनार्थमबलाभिरेकवेणिविशेषरूपः केशबन्धो विरच्यते इति सबजनप्रसिद्धम् । 'वेणी नदीनां सङ्गे स्यात्केशबन्धान्तरेऽपि च । देवताडेऽपि वेणी स्त्री' इति विश्वलोचने । तासां मोक्षो मोक्षणम् । मोचनमित्यर्थः । तत्र उत्सुकानि सञ्जातोत्कण्ठानि । Women, separated from their husbands, used to twist their hair into single unornamented braids, which were untied by their

husbands on their returning home. नवघनघटा – the assemblage of fresh clouds. नवा प्रत्यग्रा घनघटा वारिवाहानां समूहः । घनानां मेघानां घटा समूहः घनघटा। नवा चासौ घनघटा च नवघनघटा । यद्वा नवाः प्रत्यग्राः प्रावृडारम्भकाले सम्भूतत्वाच्च घनाः मेघाः च नवघनाः । तेषां घटा समूहः नवघनघटा । यत् – as. आत्तनाशा – destroyed, dispersed. आत्तः स्वीकृतः नाशः यया सा आत्तनाशा। प्रकटमहिमा – whose superhuman power is manifested. प्रकटः महिमा यस्य सः । विद्याविद्धः – possessing complete and flawless knowledge. विद्या आत्मस्वभावभूतं शुद्धात्मज्ञानं सिद्धा पूर्णत्वेन प्रकटतां प्राप्तं यस्य सः । यद्वा विद्या सिद्धा यस्य सः। This is a बहुव्रीहि compound formed under the rule 'वाहिताग्न्यादिषु'. ध्रुवमभिमनाः – having mind concentrated upon salvation. The state of the liberated soul is eternal and so the state is termed as ध्रुव. अभिगतं मनः यस्य सः अभिमनाः । दुर्विभेदः – difficult to agitate. दुःखेन विभिद्यते ध्यानात् प्रच्याव्यते दुर्विभेदः । As the clouds created by the demigod by employing magic have dispersed, the Sage, must have been in possession of superhuman power, for the magic employed by the demigod cannot be nullified by a person who does not possess superhuman power. The demi-god, therefore, infers that the Sage must have possessed superhuman power and knowledge.

**Stanza 17** — इति आध्यायन् – thinking thus. इति – thus. आध्यायन् – reflecting, consulting with himself. मन्मथक्लेशमुक्ता – freed from the tortures causing disturbance in mind [ or caused by the god of love ]. मननं मत् । चेतनेत्यर्थः । मथ्नातीति मथः । मतो मनसः मथः मन्मथः । मनोमन्थनकृदित्यर्थः । मन्मथश्चासौ आक्लेशः दुःखं च मन्मथाक्लेशः । तेन तस्माद्वा मुक्ता मन्मथाक्लेशमुक्ता । यद्वा मन्मथस्य कामदेवस्य आक्लेशेन आक्लेशाद्वा मुक्ता। 'मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः' इत्यमरः। 'मन्मथः कामचिन्तायां कामदेवकपित्थयोः' इति विश्वलोचने । The goddess of the brave is described here as free from mental worries owing to the presence of the Sage who would have made her undergo pain by His absence from her. वनतरौ – beneath a Sylvan tree. The word वनतरौ should not be taken to mean 'on the tree', for the goddess of the

brave is compared with Sita, sitting beneath a tree. The original meaning 'on the tree' should be set aside and the secondary meaning 'beneath the tree' should be accepted on the ground of लक्षणा. वीरश्रीः — the superhuman power of the brave resembling लक्ष्मी. श्रीरिव श्रीः । वीराणां श्रीः वीरश्रीः । आख्याते — wellknown. दशमुखपुरोद्यान-वृक्षे — beneath a wellknown tree grown in the garden of the city of the ten-faced one [ i. e. Rāvaṇa ]. दश दशसङ्ख्याकानि मुखानि वदनानि यस्य सः दशमुखः । रावणः इत्यर्थः । तस्य पुरं लङ्कानाम्नी राजधानी । तस्य उद्यानवृक्षे उपवनतरोः अधस्तनप्रदेशे । According to the Jain scriptures Rāvaṇa did not possess ten faces. He had secured knowledge of changing his face into ten in number. Maithili is described as sitting under a tree in the Purāṇas, when Hanūman, the Son of Pavana had gone to Lanka to see her. पवनतनयं — the son of the king called Pavana. According to the Jain scriptures, Hanūman was not born of the wind, but of the King Pavananjaya. उन्मुखी — with her face raised. उद्गतं ऊर्ध्वदिशि वलितं मुखं यस्याः सा उन्मुखी । the feminine termination ङी is affixed to the word उन्मुख to change it into a feminine form under the rule 'स्वाङ्गाच्चोऽस्फोडः'. युद्धशौण्डः — skilled in fighting. युद्धे शौण्डः प्रसक्तः युद्धशौण्डः । This सप्तमीतत्पुरुष compound is formed under the rule 'ईप् शौण्डादिभिः'. अभणीत् — This is an Aorist form derived from the root भण्. Śambara means to say that, as the goddess of the brave is looking expectantly at the Sage like Maithili looking at Hanūmat, the Sage should not disappoint her by refusing to take up arms.

**Stanza 18** — अस्मदीये सङ्ख्ये — in a battle that will be offered by you and me. अस्मदीये — in that of ours. अस्माकमिदमस्मदीयम् । सङ्ख्ये — in a battle. The verb चक्ष्, when preceded by the preposition सम्, means 'to kill'. सञ्चक्षतेऽस्मिन्सङ्ख्यम् । 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणं । मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायिकम्' इत्यमरः । सुभटविषयां सङ्ख्यां पूरयन् — completing the number of best warriors.

सुभटाः विषयः यस्याः सा । ताम् । Sambara means to say that as a war can be fought only when there are at least two warriors, the Sage should play the warrior come into antagonism with himself. वीरशय्या – a battle-field. वीराः शूराः युयुधानाः शेरतेऽस्यामिति वीरशय्या । ताम् । अधिशयितः – lying or sleeping on. The root शी, preceded by the preposition अधि, governs the Accusative case under the rules 'कर्मवाधे शीङ्स्थासः' and 'कर्मणीद्'. सम्भाव्य – after getting. उत्कण्ठोच्छ्वसितहृदया – with heart throbbing owing to [her] yearning [for you]. उत्कण्ठया त्वद्दर्शनजनितौत्सुक्येन उच्छ्वसितं विकसितं हृदयं चित्तं यस्याः सा । उच्छ्वसितं – inspired or animated with hope. अपिहितरसा – displaying her love [for you]. पिहितः – concealed. The अ is dropped under the rule 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः', न पिहितः प्रच्छादितः अपिहितः । अपिहितः प्रकटीकृतः रसः यया यस्याः वा सा अपिहितरसा । 'रसः स्वादेपि तिक्तादौ शृङ्गारादौ द्रवे विषे । पारदे धातुवीर्याम्बुरागे गन्धरसे तनौ' इति विश्वलोचने । प्रत्यासीदति – will resort to you. Śambara means to say that the very moment the Sage resorts to the battle-field, the superhuman power will have recourse to Him.

**Stanza 19** — सौम्य – O you, an impassive one! समरविषयां सङ्कथां – a beautiful speech with reference to a fight. समरः रणः विषयः गोचरः यस्याः सा । ताम् । 'विषयो गोचरे देशे इन्द्रियार्थेऽपि नीवृत्ति । प्रबन्धाद्यस्य यो ज्ञातः स तस्य विषयः स्मृतः' इति विश्वलोचने । 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः । सङ्कथां – a beautiful speech. मदुक्तां – made or told by me. व्यक्ताकूतां – with its implication quite clear. आकूतम् – implication. व्यक्तं विशदं आकूतं अभिप्रायः यस्याः सा । ताम् । परुषपवनैः – by very harsh winds or by winds blowing very harshly. परुषाः निष्ठुराः व्याघातकृतश्च ते पवनाः प्रभञ्जनाश्च परुषपवनाः । तैः । 'परुषं कर्बुरे रूक्षे त्रिषु निष्ठुरवाच्यपि' इति विश्वलोचने । 'नभस्वद्वातपवनपवमानप्रभञ्जनाः । प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः' इत्यमरः । सीमन्तिनीनां – of women. 'योषा सिमन्तिनी वधूः' इति धनञ्जयः । सीमन्तः केशवेशोऽस्त्यस्याः सीमन्तिनी ।

अवहितम् – heard. This is a p. p. participal derived from अव + धा. पारुष्यहरणम् – curing deafness. पारुष्यं नैष्ठुर्यं प्रहरतीति पारुष्यप्रहरणम् । The termination अनट्, implying the sense of a subject, is affixed to the root प्र + हृ under the rule 'ल्युटनड्बहुलम्'. परं भेषजम् – excellent medicine. भेषं रोगभयं जयतीति भेषजम् । श्रोष्यति – will perceive sounds. This is also one of the means employed by Śambara to disturb the Sage's mind. He thinks that the Sage would give up the meditation to listen to the charming songs sung by the women.

**Stanza 20** — तासाम् – of those [ women ] come from your beloved. श्रव्यम् – श्रोतुमर्हम् – worthy of being heard i. e. charming. 'श्राव्यं हृद्यं मनोहारि' इत्यमरः । Though Amara gives the word श्राव्य meaning 'charming' and though it is derived under the rule 'ओरावश्यके,' it cannot be said that the word श्रव्य cannot imply the sense that is implied by the word श्राव्य, for both अवश्यश्राव्यत्व and श्रवणार्हत्व imply attractiveness. The present form is derived by affixing the termination व्य under the rule 'तृज्व्याश्चार्हे'. गेयं – a song. 'गेयस्तु त्रिषु गातव्ये गेयः स्याद्गायने पुमान्' इति विश्वलोचने. नयनसुभगं – eye-gladdening, giving pleasure to or delighting the eyes. नयनयोः नेत्रयोः सुभगं अभिरामं नयनसुभगम् । आलोकनीयम् – worthy of being perceived. रूपम् – beauty. 'रूपमाकारसौन्दर्यस्वभावश्लोकनाणके । नाटकादौ मृगे ग्रन्थावृत्तौ च पशुशब्दयोः' इति विश्वलोचने । पेयः – worthy of being drunk. वदनसुरभिः – of fragrance of their mouths. स्पृश्यं – worthy of being touched i. e. pleasing to the organ of touch. आघ्रायं – worthy of being smelt i. e. giving delight to the nose. अङ्गं – body. 'अङ्गमन्तिके । गात्रोपायाप्रधानेषु प्रतीकेऽप्यङ्गवत्यपि' इति विश्वलोचने. ते समुचितं कामाङ्गम् – the very suitable means of rousing your passion. समुचितं – very suitable. कामाङ्गम् – the cause of passion i. e. a means of rousing passion. कामस्य अङ्गं उपायः कामाङ्गम् । 'अङ्गमन्तिके । गात्रोपायाप्रधानेषु' इति विश्वलोचने । इदं सानुबन्धं सङ्गमम् – this is actually meeting together or this is your meeting with your beloved without any obstruction or

obstacle. सानुबन्धम् — uninterrupted; having no interruption; unobstructed. सङ्गमात् किञ्चित् ऊनः — a little less than an actual meeting or union. Śambara means to say that the charming song sung by the women, their attractive beauty giving delight to the eyes, the fragrance of their mouths and their delicate and worth-smelling bodies resemble those of the Sage's beloved residing in the city of Alakā, for those, like those of her, would excite love-feelings in the heart of the Sage and moreover, they have come from her. He implies that the Sage should give up meditation in which He has His mind absorbed with a desire to get Himself united with her, for these women also are, like his beloved, capable of exciting passion in His heart by means of their songs, their attractive beauty, the fragrance emitting from their mouths and their delicate and worth smelling bodies. He tries to convey to the Sage indirectly that the Sage need not practise austere penance for the person towards whom His mind is directed for the purpose of the Sage could be effected by them like the person placed by Him before His mind's eye.

**Stanza 21** — मम च वचनात् — in my words; believing in what I say. आत्मनः उपकर्तुम् — to benefit yourself. तस्मात् — for that reason i. e. as the arrival of friends, come from one's own beloved, is a little less than actual union i. e. is as good as union or meeting. किसलयमृदु — delicate like foliage. किसलयं पल्लव इव मृदु कोमलं किसलयमृदु । 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । Delicacy being a property commonly found in the garment and the foliage, the standard of comparison, the word मृदु implying delicacy, the common property, is compounded with the word किसलय, forming the standard of comparison, under the rule 'सामान्येनोपमानम्'. वासः — a garment. 'वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम्' इत्यमरः । मुखस्थायि — that which is in the mouth. मुखे अभीक्ष्णं तिष्ठतीति मुखस्थायि । The termination णिन् is affixed to the root स्था to imply 'continued repetition' under the rule 'व्रताभीक्ष्ण्ये'. The word मुखस्थायि, therefore, implies continued repetition of chewing

also. सान्द्रगन्धाम्बुपातैः – by the falls of abundantly fregrant water. सान्द्रः निबिडः मनोहरः गन्धः येषां तानि सान्द्रगन्धानि । सान्द्रगन्धानि च तानि अम्बूनि जलानि च । तेषां पाताः वृष्टयः । तैः । सान्द्र – (1) abundant; (2) pleasing, agreeable. क्षतोष्मा – the heat of which is diminished. क्षतः विनष्टः उष्मा उत्तापः ग्रीष्मर्तुजनितः यस्याः सा । क्ष्मा – the earth. सपदि आश्वसत् – became comforted at once or suddenly. सुरकरतलगूढास्फालितानाम् – beaten secretly with palms of their hands by gods. सुराणां देवानां करतलानि पाणितलानि सुरकरतलानि । तैः गूढं रहसि आस्फालिताः ताडिताः । तेषां तासां वा । 'तलस्ताले तलं खड्गमुष्टौ ज्याघातवारणे । वने चपेटे न स्त्री तु स्वरूपाधारयोस्तलम्' इति विश्वलोचने । दुन्दुभीनां – of kettle drums. 'भेरी स्त्री दुन्दुभिः पुमान्' इति विश्वलोचने । उच्चैः जजृम्भे – became excessively heightened. मधुरं – charmingly.

**Stanza 69** — इति – thus. विदितमहर्द्धिम् – whose supernatural power was known to all. महती चासौ ऋद्धिः योगशक्तिश्च महर्द्धिः । 'ऋद्धिः स्यादोषधीभेदे योगशक्तौ च वन्धने' इति विश्वलोचने. The group अत् of the word महत् is replaced by आ under the rule 'आङ्महतो जातीये च' विदिता ज्ञाता लोकैः महर्द्धिः यस्य सः विदितमहर्द्धिः । तम् । 'विदितं स्वीकृते ज्ञाते' इति विश्वलोचने. धर्मसाम्राज्यम् – who enjoyed universal sovereignty owing to attaining completely the (flawless) nature of his soul. धर्मेण आत्मस्वभावेन समन्तात् राजते इति धर्मसम्राट् । तस्य भावः धर्मसाम्राज्यम् । तदस्यास्तीति धर्मसाम्राज्यः । तम् । Here, the possessive termination अ is affixed to the word धर्मसाम्राज्यम् under the rule 'ओऽभ्रादिभ्यः'. अवनतिभाजः – bowing down [through devotion]. अवनतिं प्रणतिं भजते इति अवनतिभाक् । ते । नाकभाजाम् – of the heavenly gods. न विद्यते अकं दुःखं यत्र स नाकः । 'अकं दुःखाघयोः' इति विश्वलोचने । नाकं भजन्ते इति नाकभाजः । भेजिरे – worshipped. शिथिलितवनवासाः – who abandoned residing in forests. वने वासः वनवासः । शिथिलितः परित्यक्तः वनवासः यैः ते । शिथिलितः शिथिलः कृतः । Here the termination क्त is affixed to the nominal root

शिथिलयति, derived by affixing the termination णिच् under the rule 'मृदो स्त्वर्थे णिज्बहुलम्'.

**Stanza 70** — बहुगुणम् – abounding in merits. बहवः विपुलाः गुणाः रसोत्कर्षकारिणः माधुर्यादयः यस्मिंस्तत् । अपदोषं – void of faults. अपगताः रसापकर्षकारिणः दोषाः यस्मात् । तत् । मलिनितपरकाव्यम् – defiling all other poems. मलिनितं मलिनीकृतम् । मलिनितानि परकाव्याणि येन तत् । The adjectives बहुगुणं, अपदोषं and मलिनितपरकाव्यं qualify कालिदासस्य काव्यं and एतत्काव्यं equally. In Jinasena's view Kalid_sa's Meghaduta was an excellent poem, abounding in merits and void of faults. Similarly he was of the opinion that his work also possessed a number of merits and dispossessed all faults. आशशाङ्कम् – until the existance of the moon. तिष्ठतात् – Here the Imperative termination तातङ् is affixed to the root स्था, instead of तु, under the rule 'तुह्योस्तातङ्'. अमोघवर्ष – The Rastrakuta king, Amoghavarsa by name, was the disciple of Jinasena, the author of this work.

**Stanza 71** — श्रीवीरसेनमुनिपादपयोजभृङ्गः – resembling a bee hovering on the lotuses in the form of the feet of the revered Sage, Vīrasena by name. श्रिया ज्ञानतपोलक्षणयोपलक्षितः वीरसेनः श्रीवीरसेनः । स चासौ मुनिश्च । तस्य पादावेव पयोजे, पादौ पयोजे इव वा श्रीवीरसेनमुनिपादपयोजे । तत्र भृङ्ग इव भृङ्ग । श्रीमान् – having prosperity in the form of penance. गरीयान् –great. तच्चोदितेन – impelled by him. परिवेष्टितमेघदूतम् – covering the whole of Meghaduta. परितः सामस्त्येन वेष्टितं आक्रान्तं मेघदूतं तदाख्यं कालिदासविरचितं काव्यं येन तत् । व्यधायि – was written. Aor. 3rd per. sing. of the passive of the root विधा. Like the author himself, Vinayasena was also a disciple of the great Sage, Vīrasena. This Vinayasena impelled him to write this poem. There is no clue to prove the statement made by Yogirāja at the end of his commentary on this poem. On the other hand Jinasena himself has clearly stated that it was Vinayasena who impelled him to compose this work and none else.

# APPENDIX—I

## TEXT OF THE MEGHADŪTA WITH VARIANT READINGS

कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्[1]प्रमत्तः। शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः॥ यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु। स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु॥ १॥ तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी। नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः॥ आषाढस्य प्रथम[2]दिवसे मेघमाश्लिष्टसानुं। वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श॥ २॥ तस्य स्थित्वा कथमपि पुरः कौतुका[3]धानहेतोः। अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ॥ मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः। कण्ठा[4]श्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे॥३॥ प्रत्यासन्ने नभसि[5] दयिताजीवितालम्बना[6]र्थी। जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम्॥ स प्र[7]त्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै। प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार॥ ४॥ धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः। सन्देशा[8]र्थाः क्व पटुकरणैः प्राणिभिः प्रापणी[9]याः॥ इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे। कामार्ता हि प्र[10]कृतिकृपणाश्चेतनाचेतनेषु॥५॥ जातं वंशे भुवनविदिते पुष्कला[11]वर्तकानां। जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः॥ तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं। याच्ञा मोघा[12] वरमधिगुणे नाऽधमे लब्धकामा॥ ६॥ सन्तप्तानां त्वमसि शरणं तत् पयोदप्रियायाः। सन्देशं मे हर धनप[13]तिक्रोधविश्लेषितस्य॥ गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां। बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या॥ ७॥ त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः। प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादा[14]श्वसन्त्यः॥ कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां। न स्यादन्योऽप्य[15]हमिव जनो यः पराधीनवृत्तिः॥ ८॥ तां चाऽवश्यं दिवसगणनातत्परामेकपत्नी-। मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम्॥ आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां। सद्यःपाति प्रणयिहृदयं विप्रयोगे रुणद्धि॥ ९॥

---

१ स्वाधिकारप्रमत्तः। २ प्रथमदिवसे। ३ केतकाधा०। ४ तस्याश्लेष०। ५ मनसि। ६ ०नार्थाम्; ०नार्थम्। ७ सम्प्रत्यग्रैः। ८ ०शार्थः। ९ ०गीयः। १० प्रणयकृ०। ११ पुष्करावर्त०। १२ वन्ध्या। १३ ०पतेः क्रोध०। १४ ०श्वसत्यः। १५ ०प्यद्य०

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां । वामश्चायं नदति मधुरं चातकस्ते[1] सगन्धः ॥ गर्भा[2]धानक्षणपरिचयान्नूनमाबद्धमालाः । सेवि[3]ष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ १० ॥ कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्राम[4]वन्ध्यां । तच्छ्रुत्वा ते श्रवण॰सुभगं गर्जितं मानसोत्काः ॥ आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः । सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥ आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं । वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ॥ काले काले भवति भ[5]वतो यस्य संयोगमेत्य । स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ १२ ॥ मार्गं म[6]त्तः शृणु कथयतस्त्वत्प्रया[7]णानुरूपं । सन्देशं मे तदनु जलद श्रोष्यसि श्रव्य[8]बन्धम् ॥ खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र । क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभु[9]ज्य ॥ १३ ॥ अद्रेः शृ[10]ङ्गं ह[11]रति पवनः किंस्विदित्युन्मुखीभिः । दृष्टोत्सा[12]हश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ॥ स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं । दिङ्नागानां पथि परिहरन् स्थूलहस्तावले[13]पान् ॥ १४ ॥ रत्नच्छा[14]यव्यतिकर इव प्रेक्ष्यमेतत्पुरस्तात् । वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ॥ येन श्यामं वपुरतितरां कान्तिमा[15]पत्स्यते ते । बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥ १५ ॥ त्वय्यायत्तं कृषिफलमिति भ्रू[16]विलासानभिज्ञैः । प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ॥ सद्यः सीरोत्कषणसुरभिक्षेत्रमारुह्य मालं । किञ्चित्पश्चा[17]द्व्रज लघुर्ग[18]तिर्भूय एवोत्तरेण ॥ १६ ॥ त्वामासारप्रशमितवनोप[19]द्रवं साधु मूर्ध्ना । वक्षत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ॥ न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय । प्राप्ते मित्रे भवति विमुखः किं पुनर्य[20]स्तथोच्चैः ॥ १७ ॥ छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रैः । त्वय्यारूढे शिखरमचलः स्निग्धवेणीस[21]वर्णे ॥ नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां । मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥ १८ ॥ तस्मि[22]न् स्थित्वा वनचरवधूभुक्तकुञ्जे मुहूर्तं ।

---

१ ०स्तोयगृध्नुः ते सगर्वः । २ ०क्षमप०; ०स्थिरपरि० । ३ प्रेक्षिष्यन्ते । ४ ०न्ध्रातपत्राम् । ५ भवता । ६ तावत् । ७ ०णानुकूलं । ८ श्राव्यव०; श्रोत्रपेयम् । ९ ०प्रयुज्य । १० किंस्वित् । ११ वहति पवनः शृङ्गमित्यु० । १२ दृष्टोच्छ्राय० । १३ ०वलेहान् । १४ ०च्छायाव्य० । १५ ०मालप्स्यते ते । १६ भ्रूविकारान० । १७ ०श्चात्प्रवलयगतिं भू० । १८ किञ्चिदेवोत्त० । १९ ०नोपप्लवं, ०वनोपप्लवं । २० तथोच्चः । २१ सर्पवेणी० । २२ स्थित्वा तस्मिन् ।

तोयोत्सर्ग[1]द्रुततरगतिस्तत्परं वर्त्म तीर्णः ॥ रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां । भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥ तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टिः । जम्बूकुञ्ज[2]प्रतिहतरयं तोयमादाय गच्छेः ॥ अन्तःसारं घन तुलयितुं नाऽनिलः शक्ष्यति त्वां । रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ २० ॥ नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढैः । आविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ॥ दग्धा[3]रण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः । सारङ्गास्ते जललव[4]मुचः सूचयिष्यन्ति मार्गम् ॥ २१ ॥ उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः । कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ॥ शुक्लापाङ्गैः सजल[5]नयनैः स्वागतीकृत्य केकाः । प्रत्युद्या[6]तः कथमपि भवान्गन्तुमाशु व्यवस्येत् ॥ २२ ॥ पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नैः । नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ॥ त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः ॥ सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २३ ॥ तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं । गत्वा सद्यः फल[7]मपि म[8]हत्कामुकत्वस्य लब्[9]धा ॥ तीरोपान्तस्तनितसुभगं पास्यसि स्वादु[10] यत्र[11] । सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि[12] ॥ २४ ॥ नीचैराख्यं गिरिमधिवसेस्तत्र विश्रान्ति[13]हेतोः । त्वत्सम्पर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः ॥ यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा- । मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २५ ॥ विश्रान्तः सन्व्रज वन[14]नदीतीरजा[15]नां निषिञ्च- । न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ॥ गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां । छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥ २६ ॥ वक्रः पन्था[16] यदपि भवतः प्रस्थितस्योत्तराशां । सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ॥ विद्युद्दामस्फुरित[17]चकितैर्यत्र[18] पौराङ्गनानां । लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितः स्वैः[19] ॥ २७ ॥ वीचिक्षोभस्तनित[20]विहगश्रेणिकाञ्चीगुणायाः । संसर्पन्त्याः स्खलित-

---

१ तोयोत्सर्गाद्द्रुत०; ० त्सर्गाल्लघुत० । २ जम्बूखण्डप्र० । ३ जग्ध्वार० । ४ नवजलमु० । ५ सनयनजलैः । ६ प्रत्युद्यातः । ७–८ फलमविकलं का०; फलमतिमहत् का० । ९ लब्ध्वा । १०–११ स्वादुयुक्तम् । १२ ०श्चलोर्म्याः । १३ विश्रामहेतोः । १४–१५ नवनदी०, नगनदी०; ०तीरजातानि सिञ्चन् । १६ पन्थास्तव भवतु च प्रस्थित० । १७ स्फुरणच० । १८ तत्र । १९ ०तोऽसि । २० ०भक्वणितवि० ।

सुभगं दर्शितावर्तनाभेः ॥ निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य । स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २८ ॥ वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः । पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ॥ सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती । कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ २९ ॥ प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान् । पूर्वोद्दिष्टामुपसर पुरीं श्रीविशालां विशालाम् ॥ स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां । शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम् ॥ ३० ॥ दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां । प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ॥ यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः । शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ३१ ॥ प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे । हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः ॥ अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पा–। दित्यागन्तून्रमयति । जनो यत्र बन्धूनभिज्ञः ॥ ३२ ॥ हारांस्तारांस्तरलगुटिकान्कोटिशः शङ्खशुक्तीः । शष्पश्यामान्मरकतमणीनुन्मयूखप्ररोहान् ॥ दृष्ट्वा यस्यां विपणिरचितान्विद्रुमाणां च भङ्गान् । संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः ॥३३॥ जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपैः । बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्तोपहारः ॥ हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखिन्नान्तरात्मा । नीत्वा खेदं ललितवनितापादरागाङ्कितेषु ॥ ३४ ॥ भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः । पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य ॥ धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्याः । तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३५ ॥ अप्यन्यस्मिञ्जलधर महाकालमासाद्यकाले । स्थातव्यं ते नयनविषयं यावदत्येति भानुः ॥ कुर्वन्सन्ध्याबलिपटहतां शूलिनः श्लाघनीया–मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३६ ॥ पादन्यासक्कणित-

१ रसाभ्यन्तरं । २ सलिलां । ३ सा त्वतीतस्य । ४ सिन्धु । ५ °च्छायां; °भिः शीर्णप° । ६ °यन्तीं । ७ °वन्तीमुद° । ८ °दज्ञानवृ° । ९ °मनुसर । १० °ण्यैः कृतमिव । ११ °रधूमैः । १२ °नृत्योपहारः; नृत्तोपचारः । १३ °ष्वध्वखेदं नयेथाः । १४ पश्यन् लक्ष्मीं; लक्ष्मीं पश्यन्; नीत्वा रात्रिं; मुक्त्वा खेदं; त्यक्त्वा खेदं; नीत्वा रात्रिं; रात्रिं नीत्वा । १५ दृश्यमानः । १६ चण्डीश्वरस्य । १७ °डाविरतयु°; °डाभिरतयु°; । १८ °भ्येति भा° । १९ °मामन्त्राणां; °मामाद्राणां । २० °न्यासैः क्वणित –;

स्सनात्तत्र लीलावधूतैः । रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ॥ वेश्यास्त्वत्तो नखसुखपदान्प्राप्य वर्षाग्रबिन्दू – । नामोक्ष्यन्ति त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥ ३७ ॥ पश्चादुच्चैर्भुजतरुवनं मण्डलेनाऽभिलीनः । सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ॥ नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां । शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ३८ ॥ गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं । रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ॥ सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीम् । तोयोत्सर्गस्तनितमुखरो मा च भूर्विक्लवास्ताः ॥ ३९ ॥ तां कस्याञ्चिद्भवनवलभौ सुप्तपारावतायां । नीत्वा रात्रीं चिरविलसनात्खिन्नविद्युत्कलत्रः ॥ दृष्टे सूर्ये पुनरपि भवान्वाहयेदध्वशेषं । मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ४० ॥ तस्मिन्काले नयनसलिलं योषितां खण्डितानां । शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ॥ प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः । प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ४१ ॥ गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने । छायात्माऽपि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ॥ तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या – । न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४२ ॥ तस्याः किञ्चित् करधृतमिव प्राप्तवानीरशाखं । हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ॥ प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि । ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥ ४३ ॥ त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः । स्रोतोरन्ध्रध्वनितमधुरं दन्तिभिः पीयमानः ॥ नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते । शीतो वातैः परिणमयिता काननोदुम्बराणाम् ॥ ४४ ॥ तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा । पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः ॥ रक्षाहेतोर्नवशशिभृता वासवीनां चमूनां । अत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः ॥ ४५ ॥ ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी । पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ॥ धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं ।

---

१ ०व्यारचित । २ कान्तहस्ताः । ३ ०मोक्ष्यन्ते । ४ नृत्यारम्भे । ५ रात्रौ । ६ ०च्छायया । ७ ०तविमुखो । ८ मा स्म भूः । ९ रात्रिं । १० ०लनयनात् । ११ स्मास्तस्याः । १२ नीत्वा । १३ पुलिनजघनां । १४ ०वातः; ०कंपुण्यः । १५ वायुः । १६ वसूनाम् । १७ ०त्रप्रीत्या । १८ ०लयपद–; ०दलक्षेपि ।

पश्चाददिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४६ ॥ आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा । सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः । व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन् । स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥ ४७ ॥ त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे । तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ॥ प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टीः । एकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४८ ॥ तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां । पक्ष्मोत्क्षेपादुपरि विलसत्कृष्णशारप्रभाणाम् ॥ कुन्दक्षेपानुगमधुकरश्रीमुपामात्मबिम्बं । पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥ ४९ ॥ ब्रह्मावर्तं जनपदमथ च्छायया गाहमानः । क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ॥ राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा । धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ५० ॥ हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां । बन्धुस्नेहात्समरविमुखो लाङ्गली याः सिषेवे ॥ कृत्वा तासामधिगममपां सौम्य सारस्वतीना- । मन्तः शुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥ ५१ ॥ तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां । जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ॥ गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः । शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५२ ॥ तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी । त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ॥ संसर्पन्त्या सपदि भवतः स्रोतसि च्छायया सौ । स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५३ ॥ आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां । तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ॥ वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः । शोभां शुभ्रां त्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५४ ॥ त्वं चेद्वायौ सरति सरलस्कन्धसङ्घट्टजन्मा । बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ॥ अर्हस्येनं शमयितुमलं वारिधारासहस्रै- । रापन्नार्तिप्रशमनफलाः

---

१ °थ्यैवं । २ °दत्तमार्गः; दत्तवर्त्मा । ३ °दूरमा । ४ °पदमधरच्छायया; °मदुः, ५ °न्यभ्यषिञ्चन्मु । ६ °भूत्वा, कृत्वा, छित्वा । ७ बन्धुप्रीत्या । ८ °मभिगम । ९ °त्वमसि । १० °गौरी व– । ११ °वक्त्रे भ्रुकुटि । १२ °स्यैव फेनैः; °स्योच्चफेनैः । १३ °पूर्वार्धे । १४ सन्तर्पन्त्या । १५ °च्छाययासौ । १६ °नोपनत । १७ °मेनाभिरामा । १८ शुभ्रां शोभां त्रि–; रम्यां शोभां । १९ °तं चेद्वायौ ।

सम्पदो ह्युत्तमानाम् ॥ ५५ ॥ ये[1] संरम्भोत्पतनरभासास्स्वाङ्गभङ्गाय तस्मिन् । मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ॥ तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान् । के[2]वा न स्युः परिभव[3]पदं निष्फलारम्भयत्नाः ॥ ५६ ॥ तत्र व्यक्तं दृशादि चरणन्यासमर्धेन्दुमौलेः । शश्वत्सिद्धैरु[4]पहृतबलिं भक्तिनम्रः परीयाः ॥ यस्मिन्दृष्टे करणविगमाद्[5]र्ध्वमुद्धूतपापाः । [6]कल्पिष्यन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५७ ॥ शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः । सं[7]रक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ॥ निर्ह्रादी[8] ते मु[9]रेव इव चेत्क[10]न्दरीषु ध्वनिः स्यात् । सङ्गीतार्थो ननु पशुपतेस्त[11]त्र भावी समस्तः[12] ॥ ५८ ॥ प्रालेयाद्रेरुपतटमतिक्र[13]म्य तांस्तान्विशेषान् । हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम् ॥ तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी । श्यामः पादो बलिनि[14]यमनेऽभ्युद्यतस्येव विष्णोः ॥ ५९ ॥ गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः । कैलासस्य त्रिदशवनितादर्प[15]णस्यातिथिः स्याः ॥ शृङ्गोच्छ्रा[16]यैः कु[17]मुदविशदैर्यो वितत्य स्थितः खं । राशीभूतः प्रतिदि[18]नमिव त्र्यम्बकस्याट्टहासः ॥ ६० ॥ उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे । सद्यःकृत्तद्विरदरदनच्छेदगौरस्य तस्य ॥ लीला[19]मद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री– । मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ६१ ॥ [20]तस्मिन्हित्वा भुजगवलयं शम्भुना दत्तहस्ता । क्रीडाशैले यदि च [21]विहरेत्पादचारेण गौरी ॥ भङ्गीभक्त्या विरचितवपुः स्तम्भितान्त[22]र्जलौघः । सोपा[23]नत्वं कुरु मणितटरोहणायाग्रचा[24]री ॥ ६२ ॥ तत्रावश्यं

---

१ ०ये त्वां मुक्तध्वनिमसहनाः । २ ०कायभङ्गाय । ३ ०दर्पोत्सेकादुपरि । ४ ०लङ्घयिष्यन्त्यलङ्घ्यम् । ५ ०वृष्टिह्रासाव० । ६ ०के वा न । ७ ०परिभवफला । ८ ०रुपचित०; ०रुपहित० । ९ ०द्दूर० । १० ०कल्पन्तेऽस्य, सङ्कल्पन्ते । ११ ०संसक्ताभिः । १२ ०निर्ह्रादस्ते । १३ ०मुरज इव । १४ ०कन्दरेषु; कन्दरासु । १५ ०नृत्यतस्तत्र । १६ ०पूर्णः; समग्रः । १७ ०मुपक्रम्य । १८ ०बलिविमथनाभ्यु० । १९ ०तादर्शनस्या० । २० ०तुङ्गोच्छ्रायैः । २१ कुसुम० । २२ ०प्रतिदिशमिव, प्रतिनिशमिव । २३ ०शोभामद्रेस्तिमिर० । २४ हित्वा तस्मिन् । २५ ०विचरेत्; हित्वा नीलं । २६ ०न्तर्जलोऽस्याः । २७ ०सोपानं त्वं कुरु । २८ ०णायाग्रयायी; सुखपदारोहणावाग्रयायी; भज सुखपदस्पर्शमारोहणेषु ।

वलयकुलिशोद्घट्टनोद्गीर्णतोयं । नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ॥ ताभ्यो[1] मोक्षो यदि तव[2] सखे धर्मलब्धस्य[3] न स्यात् । क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः[4] ॥ ६३ ॥ हेमाम्भोजप्रसवि सलिलं मानसस्याऽऽददानः । कुर्वन्कामं[5] क्षणमुखपटप्रीतिमैरावणस्य[6] ॥ धुन्वन्कल्पद्रुमकिसलयान्यंशुकानि[7] स्ववातैः । नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं[8] नगेन्द्रम् ॥ ६४ ॥ तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां । न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ॥ या वः काले वहति सलिलोद्गारमुच्चैर्विमाना[9] । मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६५ ॥ विद्युद्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः । सङ्गीताय[10] प्रहतमुरजाः[11] स्निग्धपर्जन्यघोषम्[12] ॥ अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः । प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ ६६ ॥ यत्र स्त्रीणां प्रियतमैर्भुजोच्छ्वासितालिङ्गिताना—[13] । मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ॥ त्वत्संरोधापगमविशदैरिन्दुपादैर्निशीथे[14] । व्यालुम्पन्ति स्फुट[15]जललवस्यन्दिनश्चन्द्रकान्ताः ॥ ६७ ॥ गत्युत्कम्पादलकपतितैर्यत्र[16] मन्दारपुष्पैः । वल्लतच्छेदैः[17] कनककमलैः[18] कर्णविभ्रंशिभिश्च[19] ॥ मुक्ताजालैः[20] स्तनपरिसरैश्छिन्नसूत्रैश्च[21] हारैः । नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ६८ ॥ आनन्दोत्थं नयनसलिलं यत्र नाऽन्यैर्निमित्तैः । नाऽन्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ॥ नाऽप्यन्यैर्यत्र[22] प्रणयकलहाद्विप्रयोगोपपत्तिः । वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥ ६९ ॥ यत्रोन्मत्तभ्रमरमुखराः[23] पादपा नित्यपुष्पाः । हंसश्रेणीरचितरशना नित्यपद्मा नलिन्यः ॥ केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापाः । नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥ ७० ॥ हस्ते लीलाकमलमलके बालकुन्दानुविद्धं[24] । नीता लोध्रप्रसवजरसा

---

१ ०जनितसलिलोद्गारमन्तः प्रवेशात्; ०मन्तः प्रवेशम् । २ ०मोक्षस्तव यदि । ३ ०खे शर्वल० । ४ ०र्भाययेस्ताः । ५ ०कामात् । ६ ०मैरावतस्य । ७ ०धुन्वन्वातैः सजलपृषतैः [ ०नयनैः ] कल्पवृक्षांशुकानि । छायाभिन्नस्फटिकविशदं निर्विशेः पर्वतं तम् ॥ ०यान्यंशुकानीव वातैः । ८ ०शेः पर्वतं तम् । ९ ०मुच्चैर्विमानैः । १० ०सङ्गीतार्थप्र० । ११ ०हतमुरवाः । १२ गम्भीरघो० । १३ ०भुजालिङ्गनोच्छ्वासितानां । १४ ०श्चन्द्रपादै० । १५ नव० । १६ गत्योत्कम्पा० । १७ पत्रच्छेदैः ; १८ कनकनलिनैः । १९ ०विस्रंसिभिश्च । २० मुक्तालग्नैः । २१ स्तनपरिमलैः ; स्तनपरिचितच्छि० । २२ ०ऽप्यन्यस्मात् । २३ ०रनिकराः । २४ ०नुवेधो ।

पाण्डुतामा[1]नेनश्रीः ॥ चूडापाशे नवकुरबकं चारु कर्णे शिरीपं । सीमन्ते [2]चे त्वदुपगमजं यत्र नीपं वधूनाम् ॥ ७१ ॥ यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि । ज्योतिश्छायाकुसुमरच[3]नान्युत्तमस्त्रीसहायाः ॥ आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं । त्वद्गम्भीरध्वनिषु मधुरं पुष्करेष्वाहतेषु ॥ ७२ ॥ नीवीबन्धो[4]च्छ्वसितशिथिलं यत्र बिम्बा[5]धराणां । [6]क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ॥ [7]अर्चिस्तुङ्गानभिमु[8]खमपि प्राप्य रत्नप्रदीपान् । ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ७३ ॥ नेत्रा नीता सततगतिना [9]यद्विमानाग्रभूमीः । आलेख्यानां स्वजल[10]कणिकादोषमुत्पाद्य सद्यः ॥ शङ्कास्पृष्टा इव जलमुचस्त्वादृशा[11] [12]यत्र जालैः । धूमोद्गारानुकृतिनिपुणा[13] जर्जरा निष्पतन्ति ॥ ७४ ॥ मन्दाकिन्याः [14]सलिलशिशिरैः सेव्यमाना मरुद्भिः । मन्दाराणां तटवनरुहां छायया वारितोष्णाः ॥ अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेप[15]गूढैः । सङ्क्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ७५ ॥ अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै- । रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्धम् ॥ वैभ्राजाख्यं विबुधवनितावारमुख्यासहायाः । बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥ ७६ ॥ वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं । पुष्पोद्भेदं सह किसलयैर्भूषणानां वि[16]कल्पम् ॥ लाक्षारागं चरणकमलन्यासयोग्यं च [17]यस्मिन् । एकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ ७७ ॥ पत्रश्यामा दिनकरहयस्पर्धिनो यत्र वाहाः । शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रभेदात् ॥ योधाग्रण्यः प्रतिदशमुखं संयुगे तस्थिवांसः । प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः ॥ ७८ ॥ मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं । प्रायश्चापं न वहति भया[18]न्मन्मथः षट्पदज्यम् ॥ सभ्रूभङ्गप्रहितनयनैः [19]कामिलक्ष्येष्वमोघैः । तस्यारम्भश्च[20]तुरवनिताविभ्रमैरेव सिद्धः ॥ ७९ ॥ [21]तत्रागारं धनपति[22]गृहादुत्तरेणाऽस्मदीयं ।

---

१ ०मानने श्रीः । २ ०न्तेऽपि । ३ ०रचितान्यु० । ४ ०न्धोच्छ्वसन० । ५ यक्षाङ्गनानाम् । ६ ०वासः । ७ विद्युद्दीपानभि० । ८ ०खगतान् । ९ ये विमा० । १० सजलकणिका०; सलिलकणिका०; नवजलकणैः । ११ त्वादृशः । १२ जालमार्गैः; यन्त्रजालैः । १३ ०निपुणं । १४ पयसि शि० । १५ ०पगूढं । १६ विकल्पान् । १७ यस्याम् । १८ भयात् त्वामपि प्रेक्ष्य कामः । १९ कामलक्षेषु । २० चटुल । २१ अत्रा० । २२ ०गृहानु० ।

दूराल्लक्ष्यं सुरपति[1]धनुश्चारुणा तोरणेन ॥ यस्योद्याने[2] कृतकतनयो वर्द्धितः कान्तया मे । हस्तप्राप्यस्तवकनमितो[3] बालमन्दारवृक्षः ॥ ८० ॥ वापी चास्मिन्मरकतशिलाबद्ध-सोपानमार्गा । हैमैः स्फीता[4] विकचैकमलै[5]र्दीर्घवैदूर्यनालैः ॥ तस्यास्तोये[6] कृतवसतयो मानसं सन्निकृष्टं । नाध्यास्यन्ति[7] व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ ८१ ॥ तस्यास्तीरे[8] विहित[9]शिखरः पेशलैरिन्द्रनीलैः । क्रीडाशैलः कनककदलीवेष्टन[10]प्रेक्षणीयः ॥ मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण । प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥ ८२ ॥ तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी । मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ॥ श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां । या तत्र स्या[11]द्युवतिविषये[12] सृष्टिराद्येव[13] धातुः ॥ ८३ ॥ तां जानीथाः[14] परिमितकथां जीवितं मे द्वितीयं । दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ॥ गाढोत्कण्ठा गुरुषु दिवसेष्वेषु गच्छत्सु बालां[15] । जातां[16] मन्ये शिशिरमथितां[17] पद्मिनीं[18] वान्यरूपां[19] ॥ ८४ ॥ नूनं तस्याः प्रबलरुदितोच्छूननेत्रं बहूनां[20] । निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ॥ हस्तन्यस्तं[21] मुखमसकलव्यक्ति लम्बालकत्वात् । इन्दोर्दैन्यं त्वदुपसरण[22]क्लिष्टकान्तेर्बिभर्ति ॥ ८५ ॥ रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः । प्रत्यासन्नौ[23] कुरवकवृतेर्माधवीमण्डपस्य ॥ एकः सख्यास्तव सह मया वामपादाभिलाषी । काङ्क्षत्यन्यो वदनमदिरां दोहद[24]च्छद्मनाऽस्याः ॥ ८६ ॥ तन्मध्ये[25] च स्फटिकफलका काञ्चनी वासयष्टि— । मूले बद्धा[26] मणिभिरनतिप्रौढवंशप्रकाशैः ॥ तालैः शिञ्जा[27]वलयसुभगैः कान्तया नर्तितो[28] मे । यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ ८७ ॥ एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः[29] । द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ॥ क्षामच्छायं[30] भवनमधुना मद्वियोगेन नूनं । सूर्यापाये न खलु कमलं पुष्यति

---

१ सुरपतिध० । २ यस्योपान्ते । ३ ०कविनतः । ४ स्यूता । ५ कमलमुकुलैः स्निग्धवै० । ६ यस्या० । ७ नाधास्यन्ति, नाध्यायन्ति । ८ यस्या० । ९ रचितशि०, निचितशि । १० ०वेष्टनः० । ११ तत्रास्ते । १२ ०तिविषये । १३ ०राद्यैव । १४ जानीया । १५ बालां । १६ जातां । १७ ०मथितां । १८ पद्मिनीं वा० । १९ ०न्यरूपां । २० प्रियाया । २१ हस्ते न्यस्तं । २२ त्वदनुस०; त्वदुपगमन० । २३ प्रत्यासन्नः । २४ दोहद०; दोहल० । २५ तत्तन्मध्ये । २६ नद्धा । २७ शिञ्जद्भिः; खिञ्जद्० । २८ नर्तितः कान्तया मे । २९ लक्षणीयं । ३० मन्दच्छायं ।

स्वामभिख्याम् ॥ ८८ ॥ गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः[1] । क्रीडाशैले प्रथमकथिते रम्यसानौ[2] निषण्णः ॥ अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं । खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ८९ ॥ आलोके ते निपतति पुरा[3] सा बलिव्याकुला वा । मत्सादृश्यं विरहतनु[4] वा भावगम्यं लिखन्ती ॥ पृच्छन्ती वा मधुरवचनं[5] सारिकां पञ्जरस्थां । कच्चिद्भर्तुः स्मरसि रसिके[6] त्वं हि तस्य प्रियेति ॥ ९० ॥ उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां । मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा । तन्त्रीरार्द्रा[7] नयनसलिलैः सारयित्वा कथञ्चित् । भूयोभूयः स्वयमपि[8] कृतां मूर्च्छनां विस्मरन्ती ॥ ९१ ॥ शेषान्मासान्विरहदिवस[9]-स्थापितस्यावधेर्वा[10] । विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः[11] ॥ सम्भोगं[12] वा हृदयरचितारम्भमास्वादयन्ती[13][14] । प्रायेणैते रमणविरहेष्वङ्गनानां[15] विनोदाः ॥ ९२ ॥ सव्यापारामहनि न तथा पीडयेद्[16]विप्रयोगः[17] । शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ॥ मत्सन्देशैः सुखयितुमतः[18] पश्य साध्वीं निशीथे । तामुन्निद्रामवनिशयनां[19] सौधवातायनस्थः[20] ॥ ९३ ॥ आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां[21] । प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ॥ नीता रात्रिः क्षणमिव[22] मया सार्धमिच्छारतैर्या[23] । तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ ९४ ॥ निःश्वासेनाधरकिसलयक्लेशिना[24] विक्षिपन्तीं । शुद्धस्नानात्परुषमलकं नूनमागण्डलम्बम्[25] ॥ मत्संयोगः[26] कथमुपनमेत्[27]स्वप्नजोऽपीति निद्रा- । माकाङ्क्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम् ॥ ९५ ॥ आद्ये बद्धा विरहदिवसे या शिखा[28] दाम हित्वा । शापस्यान्ते विगलितशुचा तां[29] मयोद्वेष्टनीयाम्[30] ॥ स्पर्शक्लिष्टामयमित[31]नखेनाऽसकृत्सारयन्तीं । गण्डाभोगात्कठिनविषमा[32]-मेकवेणीं करेण ॥ ९६ ॥ पादानिन्दोरमृतशिशिराञ्जालमार्गप्रविष्टान् । पूर्वप्रीत्या

---

१ तत्परित्राणहेतोः । २ रत्नसानौ । ३ पुरे । ४ विरहतनुना । ५ मधुरवचनां । ६ निभृते; गिरिके । ७ तन्त्रीमार्द्रां । ८ स्वयमधिकृतां । ९ गमनदि० । १० ०सप्रस्तुतस्याव० । ११ ०लीदत्त० । १२ संयोगं वा; मत्सम्भोगं हृ० । १३ ०यनिहितार० । १४ ०मासाप्स्यन्ती । १५ ०विरहे ह्यङ्ग० । १६ खेदयेद् । १७ मद्वियोगः । १८ ०मलं । १९ ०द्रां विरहशयनां । २० सौधवा० । २१ सन्निकीर्णैकपार्श्वां; विप्रकीर्णैकपार्श्वां । २२ क्षण इव । २३ ०हजनितैरश्रु० । २४ विश्वासेना० । २५ ०लम्बि । २६ मत्सम्भोगः । २७ कथमपि भवेत् । २८ शिरो । २९ या । ३० मयोद्वेष्टनीया; मयोन्मोचनीया । ३१ ०मपमित० । ३२ ०विषमादेक० ।

गतं[1]मभिमुखं सन्निवृत्तं तथैव ॥ खेदा[2]चक्षुः सलिलै[3]गुरुभिः पक्ष्मभिश्छादयन्तीं । साभ्रेऽह्नीव स्थलकमलिनीं नप्रबुद्धां नसुप्ताम् ॥ ९७ ॥ सा सन्न्यस्ताभरणमबला पेलवं[4] धारयन्ती । शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रम् ॥ त्वामप्य[5]स्त्रं [6]नवजलमयं मोचयिष्यत्यवश्यं । प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ९८ ॥ जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मात् । इत्थम्भूतां प्रथमविरहे तामहं तर्कयामि ॥ वाचालं मां न खलु सुभगम्मन्य[7]भावः करोति । प्रत्यक्षं ते निखिल[8]मचिराद्भ्रातरुक्तं मया यत् ॥ ९९ ॥ रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं । प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ॥ त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के[9] मृगाक्ष्या । मीन[10]क्षोभाचलकुवलयश्रीतुलामेष्यतीति ॥ १०० ॥ वामश्चा[11]स्याः कररुहपदैर्मुच्यमानो मदीयैः । मुक्ताजालं चिर[12]परिचितं त्याजितो दैवगत्या ॥ सम्भोगान्ते मम समुचितो हस्तसंवा[13]हनानां । यास्यत्यूरुः स[14]रसकदलीस्तम्भगौरश्चलत्वम् ॥ १०१ ॥ तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्या- । दन्वा[15]स्यैनां स्तनितविमुखो याममात्रं सहस्व[16] ॥ मा भूदस्याः प्रणयिनि जने[17] स्वप्नलब्धे कथञ्चित् । सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ १०२ ॥ प्रोत्था[18]प्यैनां स्वजलकणिकाशीतलेनाऽनिलेन । प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ॥ विद्युद्गर्भैः[19] स्तिमित[20]नयनां त्वत्सनाथे गवाक्षे । वक्तुं धीरं[21] स्तनितै[22]र्वचनो मानिनीं प्रक्रमेथाः ॥ १०३ ॥ भर्तुर्मित्रं प्रिय[23]मविधवे विद्धि मामम्बुवाहं । तत्स[24]न्देशैर्मनसि निहितै[25]रागतं त्वत्समीपम् ॥ यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां । [26]मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ १०४ ॥ इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा । त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य स[27]म्भाव्य चैवं[28] ॥ श्रोष्यत्यस्मात्परमवहितं सौम्य सीमन्तिनीनां । का[29]न्तोपान्तात्सुहृदुप[30]नमः सङ्ग-

---

१ गतमपि ततः स० । २ चक्षुः खेदात् । ३ सजलगु० । ४ पेशलं; कोमलं । ५ ०त्यश्रुं । ६ जललव०; जलकण० । ७ सुभगं मन्युभावं । ८ सकलम० । ९ वामं । १० मन्ये मीनाचल०; मीनक्षोभाकुलकु० । ११ वास्याः । १२ चिरविरचितं; नवपरिचितम् । १३ ०संवाहनस्य । १४ कनककदलीगर्भगौरः । १५ ०दन्वासीनः; तत्रासीनः । १६ सहेथाः । १७ मयि । १८ तामुत्थाप्य । १९ ०द्भ्रमैः; विद्युत्कम्पः; विद्युन्नेत्रः । २० निहितनयनां । २१ धीरः स्त०; धीर । स्त०; धीरध्वनित; धीरस्तनित । २२ ०वचनैः । २३ प्रियमविधवे । २४ तत्सन्देशान्; त्वत्सन्देशान् । २५ निहितात्; हृदयनिहितात् । २६ मन्त्र०, सान्द्र० । २७ सम्भाष्य । २८ चैवम् । २९ कान्तोदन्तात्; कान्तोदन्तः । ३० ०दुपगतः; ०दुपनतः ।

मात्किञ्चिदूनः ॥ १०५ ॥ तामायुष्मन्[1]मम च वचनादात्मनश्चोपकर्तुं । ब्रूया[2]देवं[3] तव सहचरो रामगिर्याश्रमस्थः ॥ अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः[4] । पूर्वाशास्यं[5] सुलभविपदां प्राणिनामेतदेव ॥ १०६ ॥ अङ्गेनाङ्गं तनुं[6] च तनुना गाढतप्तेन तप्तं । साश्रेणाश्रुद्रव[7]मविरतोत्कण्ठमुत्कण्ठितेन ॥ उष्णोच्छ्वासं[8] समधिकतरो[9]च्छ्वासिना दूरवर्ती । सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥ १०७ ॥ शब्दाख्येयं यदपि किल ते यैः[10] सखीनां पुरस्ता- । त्कर्णे लोलः कथयितुमभूद्[11]आननस्पर्शलोभात् ॥ सोऽतिक्रान्तः श्रवणविषयं लोचना[12]भ्यामदृष्टः[13] । त्वामुत्कण्ठाविरचित[14]पदं मन्मुखेनेदमाह ॥ १०८ ॥ श्यामास्वङ्गं, चकितहरिणीप्रेक्षिते[15] दृष्टिपातं,[16] । वक्त्र[17]च्छायां शशिनि, शिखिनां बर्हभारेषु केशान् ॥ उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्[18] । हन्तैकस्थं[19] क्वचिदपि न ते चण्डि[20] सादृश्यमस्ति ॥ १०९ ॥ त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया- । मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ॥ अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते[21] मे । क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ ११० ॥ मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोः । लब्धायास्ते कथमपि मया[22] स्वप्नसन्दर्शनेषु ॥ पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां । मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ १११ ॥ संक्षिप्येत[23] क्षणमिव[24] कथं दीर्घयामा[25] त्रियामा[26] । सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ॥ इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे । गाढोष्णाभिः[27] कृतमशरणं त्वद्वियोग[28]व्यथाभिः ॥ ११२ ॥ भित्त्वा सद्यः किसलयपुटान्देवदारुद्रुमाणां । ये[29] तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ॥ आलिङ्ग्यन्ते गुणवति मया ते

---

१ ॰मायुष्मान् । २ ब्रूयाः । ३ एकम् । ४ विद्युक्ताम्; नियुक्तः । ५ पूर्वाभाष्यं; पूर्वाशास्यं; भूतानां हि क्षयिषु करणेष्वाद्यमाश्वास्यमेतत् । ६ प्रतनु त॰ । ७ ॰गाश्रुद्रुत॰; ॰णाश्रुद्रव॰ । ८ दीर्घोच्छ्वासं॰ । ९ ॰कखरोच्छ्वा॰ । १० तत् । ११ ॰मगादा॰ । १२ लोचनानाम॰ । १३ ॰मदृश्य; ॰मगम्यः । १४ ॰ण्ठाविरहित॰ । १५ ॰प्रेक्षणे । १६ दृष्टिपातात् । १७ वक्रच्छायं; गण्डच्छायं । १८ भ्रूपताकां । १९ ॰न्तैकस्मिन्; ॰न्तैकस्थाम् । २० भीरु । २१ रालिप्यते । २२ सति; निशि । २३ ॰प्यैवं; ॰प्येरन् । २४ क्षण इव । २५ ॰यामाः । २६ त्रियामाः । २७ गाढोष्माभिः । २८ तद्वियोग॰ । २९ एतत्क्षी॰ ।

तुषाराद्रिवाताः । [1]पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ११३ ॥ [2]नन्वात्मानं बहु विगणयन्नात्मनैवाऽवलम्बे । तत्कल्याणि त्वमपि नि[3]तरां मा गमः कातरत्वम् ॥ कस्यैकान्तं सुखमु[4]पनतं दुःखमेकान्ततो वा । नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ११४ ॥ शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ । मासा[5]नन्यान्गमय चतुरो लोचने मीलयित्वा ॥ पश्चादावां विरह[6]गुणितं तं तमे[7]वाभिलाषं । निर्वे[8]क्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ११५ ॥ भूयश्चाह त्वमसि शयने कण्ठलग्ना पुरा मे । निद्रां गत्वा किमपि रुदती स[9]स्वरं विप्रबुद्धा ॥ सान्तर्हासं कथितमसकृत्पृच्छतो[10]ऽसि त्वया मे । दृष्टः स्वप्ने कितव रमयन्कामपि त्वं मयेति ॥ ११६ ॥ एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा । मा कौलीनादसित[11]नयने मय्यवि[12]श्वासिनी भूः ॥ स्नेहानाहुः किमपि विरहे ह्रा[13]सिनस्तेऽ[14]भोगा- । दिष्टे[15] वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ११७ ॥ आश्वास्यै[16]नाम् प्रथमविरहे शोकै[17]दष्टां सखीं ते[18] । [19]तस्मादद्रेस्त्रिनयनवृषोत्खातकूटान्निवृत्तः ॥ सा[20]भिज्ञानं प्रहित[21]वचनैस्त[22]त्र युक्तैर्ममाऽपि । प्रातःकुन्दप्रसवशिथिलं जीवितं धारये[23]देम् ॥ ११८ ॥ कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे । [24]प्रत्यादेशान्न खलु भवतो धीरतां [25]कल्पयामि ॥ निःशब्दोऽपि प्रदिशसि जलं [26]याचितश्चातकेभ्यः । प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ ११९ ॥ एतत्कृत्वा प्रिय[27]मनुचितं प्रार्थनादा[28]त्मनो मे । सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ॥ इष्टान्देशान्विचर जलद प्रावृषा सम्भृतश्रीः । मा भूदेवं [29]क्षणमपि [30]सखे विद्युता विप्रयोगः ॥ १२० ॥

---

१ पूर्वस्पृष्टं । २ न त्वात्मानं; ... ०न्नात्मना नावलम्बे । ३ सुतरां । ४ ०मुपगतं । ५ शेषान्मासान्ग० । ६ विरहगणितं । ७ तमात्माभिलाषं । ८ त्वमपि । ९ सस्वनं; सत्वरं । १० पृच्छतश्च । ११ ०शङ्कितनयने । १२ ०विश्वासिनी । १३ ध्वंसिनस्ते । १४ ह्यभोगा०; त्वभोगा० । १५ दृष्टे । १६ ०स्यैवं । १७ ०रहोदग्रशोकां; ०रहेणार्द्रशोकां । १८ मे; त्वाम् । १९ शैलादाशु त्रि०; शैलादस्मात् त्रि० । २० साभिज्ञानप्र० । २१ ०तकुशलैः । २२ तद्वचोभिः; त्वद्वचोभिः । २३ ०येथाः । २४ प्रत्याख्यातुं न; प्रत्याख्यानात्; प्रत्याख्यानं । २५ तर्कयामि । २६ याचितं । २७ प्रियसमुचित प्रा०; ०मनुचितप्रा० । २८ ०नावत्मनो मे; ०र्थनं चेतसो मे; ०र्थितं चेतसो मे । २९ कच्चिदपि । ३० च ते; न ते ।

# APPENDIX—II

## INDEX

The first number indicates the number of the canto and the second of the stanza.

# APPENDIX III

## Index

[ N. :— The first number indicates the number of the canto and the following numbers indicate the numbers of the stanzas of the Pārśvābhyudayam, incorporating lines from the Megh. ]

# APPENDIX IV

## CORRIGENDA

[ N. — The first numbers, printed in block, indicate the numbers of pages and the following those of the lines. The numbers which are printed singly indicate the numbers of lines. ]

Canto. I. २–१० ' मयङ्वाभक्ष्या; १८ इत्यमरः ।; ३–१ accrimonious; १४ माहात्म्यं ।; २० प्रत्यभिज्ञा; ४–२४ °वेतिशेषः ।; ५–२५ जडधीः मन्द-बुद्धिः; ६–४ °देयविवेकवि–; ६ तरवः छायातरवः; ९ मसृणे; १३ °गिरिस्थान्; २६ स कामी; २७ यस्मिन्; ८–१४ elder ) brother; ९–१९ thoughts like a; ११–२८ असूया पर; १२–४ ' समतुमोर्म; १३–१५ खलौ '; १४–१९ °स्योस्'''स्योस् ।; २५ °पसर्ग णिन्; १६–१७ out the means; १९ immediately created; १७ ७ °जन्तुपु ' इति; १४ मयट् ' इति; ३० wishing, through a cloud, ; १८– His connection; ५ सिद्वैस्त–; १५ नव्यः '; १९ प्रति कोपः; १९–२९ °तिविङ्गनिकषासमयाभिश्चोपाधौ '; २०–१ २ his roarings along with the thunderings of clouds which were; ३ vicinity, by; ९ °ज्योतिःसलिल–; १७ क्क कुत्र; २२ आ समन्तात्; २८ ठञ् निपात्यः ।; २१–७ °द्यन्तौ अस्य'''; १८ the transitory cloud; २२ नु मुनिगुणा; २३–१२ भावे ष्यण् ।; २७–९ °न्स्नेहन्मू–; २९–३ ' सम्तुमोर्मनःकामे '; ३०–२१ मत्प्रियाया वियोगस्य; ३३ २२ ता ' इति; ३४–२ by the matitunal; क्लीवं त्रिषु प्रिय–; २६ dying the death; ३७–१३ योगी योगा–; १८ भयपरवशः; २४ सूत्रे च काव्ये; ३८–१ स्वस्य ' इत्या–; ५ परस्मिन्; २० स्मरपरवशां; ३९–१ ' अधीनो निघ्न; ३ °कमृगमृग्नः'''; ७ कर्मणीवपि; ४०–१६ स्मरणार्थलटः; १९ लट् ' इति; २० °यशःफलः ।; २१ धारयन्तीं; ४१–१६ उपयमनानन्तरं; ४३–२० इत्युक्त्वाऽथो; ४४–१६ killing you; ४५–५ श्लाघृ कत्थने; ७ °निषेधयोः; ४६–२९ in warfare; ४८–१२ नर्तयेत् यत् च; २१ मयूरान्; २६ मल्लिनाथः । मह्यीं भूमिं; ४९–९ up, productive; २० विक्रियदृर्ध्योत्पा–; २१ °ण्याः प्रावृट्काल–; ५०–९ विक्रियदृर्ध्योत्पा–; २२ °साद्विस–; ५१–१८ सहायी–; १९ विधास्यन्तीति; २८

स्खलितगयो; ५२-४ प्राप्ताः च; २१ सञ्जातोत्कण्ठः; २६ °न्मादकत्वाद; ५३-३ आशा तृष्णा; ५ चाऽसौ; २२ °मभिमतां; २६ अभिमतां दिव्यश्रियं; ५४-६ हेतुभूतेन; १६ Oh sage!; ५५-८ सिद्धान्!; १० °वस्योस्'; २२ 'आगः पापा-; ५६-१४ °द्ध्याख्यभेषजे'; २७ प्रौढप्रणयपुलको''स्वदोर्भ्याम्; ५७-२५ from me; ५९-२३ जैनेतरेषां; २८ a would-be cloud; ६१-३ त्रिलिङ्गकः; ४ मतं क्लीबं; ७ अत्यर्थं परि; ६२-२० °ज्ञाप्यमित्यर्थः।; २४ वारि जलं वोढुं; २६ कामं यथेच्छं; ६३-१६ 'उरश्छदः कङ्कटको जागरः कवचोऽस्त्रियाम्'; १९ 'वा क्यपः'; २१ °कारार्थमित्यर्थः।; २२ वारिवाहः। स इव'''। भावे क्तः। मेघा-; ६४-४ गुणोक्तेर्वा'; १८ °दङ्मुखः खम्॥; ६५-४ दिविभवानत; ११ °न्निचुलः स्थल-; १६ यतस्ताः मुग्ध-; २५ the simple; ६६-८ दुरटाटवी-; ६७-९ इव प्रेक्ष्यं; २० °न्नप्त्वाभावः।; ६८-१४ भूमिरन्ध्रं। तस्मात्; १६ 'विसरः प्रसरः; २५ 'वामलूरश्च नाकुश्च;' ६९-२ °त्सन्मतात्र; ७१-१ मायूरेण; ७ 'ईलुपमानपूर्वस्य; २२ त्वय्यायत्तं; २४ आयत्तं'; २९ करणेऽनडत्र।; ७३-१ भास्वरेन्द्रध-; ४ गर्जितं; ९ °स्नेहैः। ७५-१७ पौनःपुन्येन; ७६-१२ प्रत्युद्यातः; ७७-३ °वेश्मोदरेषु; १३ आर्द्रमात्रं; १४ °रार्द्रीकरणा-; ७८-१५ सुखं गता-; १८ संश्रयाय संश्रयार्थं-; २२ निराशं। अपग-; ७९-१९ °शंसोक्तौ; २२ संश्रयणार्थं; ८०-३ °व्यासितोदग्र-; ६ काननाग्रैः; ८१-४ which is worthy of; ८२-१३ भुवमिव; ८४-२ शोभां; ८५-२१ रम्यस्थानं न त्यजति; ८६-२४ तीरे यस्या सा।; ८७-१० by the crowds of birds giving; ८८-१६ formed in; १८ °रिक्षपद्भिः; ९१-५ हृत्वा; २९ 'पृथ्वादेर्वेमन्'; ९२-१३ वर्षाकाले नीप-; २५ Nipa-flowers and trees; ९७-१२ घोर्वाष्'; २७ तन्वाति इव; ९९-२५ प्रत्यासन्नत्वदुपगमनस्य; २७ कथं मन्ये; १००-५ यस्य तत्; १०१-४ यासां ताः पाण्डुच्छायाः।; १०३-२० तैः अन्ताः रम्याः; १०५-२७ आह्वयन्तीं; १०६-१६ the form of; १०७-७ सुरभिः सुगन्धिः कृता।; १०८-३ यशः माहात्म्यं; १२ कमलानां; १०९-२८ जीविकाकृत्य; ११०-३ जीविकाकृत्य; ७ जीविकाकृत्य; ११२-२ lightnings; १२१-१२ पाण्डुच्छाया तट-; १२९-१३ कालसम्भवेन; १८ घनमपहरन्तीति; १३०-२ उन्मदितृन्। 'भूभ्राज्यलङ्कृञ्-; ६ 'समवर्ती परेतराट्'; ११ 'दर्पो भवेद-; १३१-३ शङ्खशुक्तीः; २४ कोटिः कोटिः; १३२-१० and necklaces with faultless; १३४-२० अन्तकरणं

Canto II. १३७–१७ 'सञ्चिचीपुः' इति; १३९–२१ अनिभृतश्चपलः; १४०–१३ तोयं यस्य सः ।; १४१–३ Gandhvatī which are shaken up by the [ forcible ] breezes of wind and; १४३–१२ full–grown; १४४–१४ पूजां सम्मानं; १७ formed ( by ··· ); २० ground; १४६–३० प्रोद्गायन्तीः १४७–४ नवजलकणद्वित्रासिक्ताः; १९ नवजलकणद्वित्रासिक्ताः । १४८–११ sprinkled over; ३० च्छुरितं मिश्रितं; १४९–१५ °करश्रेणि; २१ °मनस्का इत्यर्थः । २२ यासां ताः; २६ सहितान्; १५२–११ सरचितां चित्रां; १७ आविर्भवद्दिव्य–; १८ रसेन अभिलाषेण; १९ चित्रां दिव्यां मनोहारिणीम्; १५३–४ °लार्थामिच्छां; ५ स्वजलार्थामिच्छां; १५४–१० स्यातां तथा ।; २५ रोगे नृत्तस्थले; १५५–२४ ऽप्यर्हदाश्रमे'; १५७–२४ °त्यभिख्या न; २७ स्निग्धं; १५८–४ °दणि परे; १० gold streak; २८ °यामुच्चरितो; १६०–६ °बहिर्गर्व–; १६१–१ नगर्यां; १६२–२ ( the next morning ), those who have promised to effect [ or serve ] the purpose of [ their ] friends, never got slack.; १६३–३ °चिह्नाङ्कितस्व–; ४ अन्यासम्भोग–; २१ कमलवदनात्; १६७–२५ °जघनं पुलिन–; १७०–३ स्रोतोरन्ध्रे; १७१–२७ °पूर्वदिक्प–; २८ °पूर्वदिक्पतिः; १७२–२९ ( विद्यते ); १७३–१७ °स्यज्ञापनार्थः ।; १९ कृचमितनि–; १७६–१३ 'पादुदम्याङ्यमाङ्यस्प–; १७७–१९ 'व्रीह्यादिभ्यः' ··· । ··· । °द्वन्द्वैः; १७८–१७ तया । स्रोत–; १८०–२४ °राभिप्रायः ।; १८२–१४ 'वर्धते; १८६–३ भजेर्णित्रः ।; ८ 'वर्धेयस्त्वेऽ; ९ °स्योत्स्लं; १८७–२२ तेषां । तासां वा । २३ तेषाम् । प्रो–; १८९–१ अलंगामी; २५ देशविशेषं; १९०–२० 'जनपद उस्'; १९१–१७ °म्यवर्षन्मुखानि; २३ गाण्डी पर्वाऽ; १९४–९ च सीरे ताले च; १९५–३ 'द्रान्तस्य ···; ५ प्रकृष्टं प्र–; ६ सारस्वतीना–; १९६–२५ गङ्गासिन्ध्वादीनां; १९७–१२ कुलाचलाच–; २६ rivers'. १९९–९ °म्रोर्मिहस्ता; १० वक्रभ्रुकुटिरचनां; १६ °वर्णत्वम् ।; १९ °वक्त्रभ्रु–; २१ गौरीवक्त्र; २२ गौरवर्णस्त्रियाः; २४ गङ्गाकूट–; २५ °धप्रपतनस्थान; २९ 'मितंद्रवादयः'; २००–९ possessing the; १६ प्राप्तामोदं; २०१–१८ °स्तिर्यगम्भः ॥; १९ °श्रमपारिगतः; २२ सुपोऽम्भोसि'; २०३–४ गङ्गायमुनासङ्गमस्थानात्; २८ °भिरित्यर्थः ।; २०४–२३ of the musk–deer; २०८–२१ आचूड्डाग्रमित्यादि; २९ अनेकदशशतकैः; २०९–६ प्रापिताः । २१०–२२ शौर्यदर्पोद्धुराणां; २१२–४ क्लेशो दुःखेऽपि; २१३–८ 'उस्;

२१४–२५ अर्द्दचरण–; २१५–२२ रचयितुमि–; २१७–५ त्रिपुरविजयं अति-कलकलं अतिशयेनकलकलः कलकलध्वनिः यथा स्यात्तथा; ६ प्रोद्गायन्तीषु प्रक-र्षेण गानं ···। ··· इतीप् । ते तव ध्वनिः निनादः मुरवे इव मुरजे इव ·। २१८–२ कुकविकविताकल्पितं; १२ न काव्यकराः; १७ कुकवेः कविता कुकविकविता ।; २२१–५ प्रोच्चलन्निर्जरौचैः २७ शोभिनः । २९ °भेदे खड्गि–; २२३–१६ सः । तेन ।; २५ that of collyrium; २२४–१९ व्यः । २९ °रत्नैस्त्वयी; २२६–६ °र्जलौघः; १४ °र्जलौघः घनीकृतान्तः समूहः । २२७–२७ घर्मलब्धस्य; २२९–५ विविधकरणैः; २३०–८ ललितैः स्ववातैः ; २३२–१३ स्वेष्टं कामयते; २३४–६ ' सन्भिक्षाशंस्विन्दिच्छादुः '; २३५–७ °स्यालकापुर्या–; २३६–२५ मेघकालं प्रावृट्कालं प्रथयितुं; २३७–१५ प्रोचैः ; २३९–२५ °द्यध्वनिभिः; २७ तान् । ' जल–; २४०–१४ °रार्द्रित–; १५ °विकीर्णाः १९ °र्णाविकीर्णाः –; २८ शय्यादेशाः यैः ते । २४१–२ विकीर्णाः सम्प्री–; १३ turned into mud; २६ । यद्वा मे; २४२–३ ' पुंवद्यजातीयदेशीये ' इति; १७ interloping; २४४–११ कणाः च; २४६–१५ तानि कमलानि च; २४७–१८ that of saffron, ; २४८–२५ दत्तावधाना; २५५–६ नित्य-प्रहृतमुरवाः । २५६–१७ । वितन्वती; २४ तैः ।; २९ darkness being removed by the constantly; २५७–१६ आकृतिं रूपं; २५८–२६ परि-त्यक्तोपरागा–; २६०–५ ' चूडा वलय–; १५ °मभिनवप्रिय–; २६२–१७ हार्यस्थला–; २७ कुर्वन्ति ।; २६४–२१ भ्रुवोर्भ्रुकुट्योः; २४ ' मृदो; २५ २ स्वस्मिन् अधि स्वाधीनः । स्वायत्तः इत्यर्थः ।; ९ °दुद्धृतं; १० ' मधुर्मधूके; २६६–२ ध्वनिर्ध्वानः च; २६९–४ ' सम्तुमोर्मनःकामे '; २१ °द्विपमुखपट–; २७०–६ °मुष्टिः कम्पायत्तात्–

Canto III. — २७५–१७ °क्रीडायां; १८ सुरतरसिकः; २७६–१ erruption; २७८–३ तैः ।; ६ मण्यभिधया; ७ ' रासक्रीडा; २८२–१२ taste, scented cosmetic; १४ गल्हमाना; २३ गल्हमानाः ··· । ' गल्हादीनां; २८३–७ the hoofs; २५ इषवस्तैः ।; २७ °न्यस्य वा व्रणाः ; २८४–१ आम-रणेषु रुचयः; २२ जडधीः लोकः; २८५–२२ एवं सति अपि; २८६–२४ मदनप्रक्षितानां; २८८–२ ' निरङ्कुशाः ; २१ स्त्री किसलयः '; २८९–२ ' पोतः ; ४ । आलवालो–; ९ बालमन्दारवृक्षः ; २८ मरकतं गारुत्मतं ।; २९०–

२७ देशश्च निपात्यते ।; २९१–२ माम–; ६ having a flight; ८ long stalks; १२ यस्यास्तोये; १९ शुचः शोकाः; २९२–२१ सुतरां; २९३–२८ ध्वाङ्क्षं; २९४–२२ °रत्वं च विमा–; २८ °धरोष्ठी; २९५–१८ शात्रवं; २१ ' मध्येक्षामा '; २२ ईपोऽनुप् ।; २९६–२३ °क्षाशंसिविन्दिच्छादुः '; २९७–२७ ' इङ्गिदृढाणञ्– '; २९८–२७ ' त्वे वा '; ३००–१५ ' वत खेदे कृपा–; ३०१–१२ वा । ' व्याघ्रादिभिरुपमेयोऽतद्योगे '; ३०२–११ °क्षाशंखिन्दिच्छादुः '; ३०३–१७ यस्या सा ।; ३०४–२६ °कुट्टनीप्वति–; ३०६–२७ °र्वर्हिणा–; ३०८–११ मनोहराः ।; १२ °स्यासम्भवात्; ३१२–६ क्रीडाहेतौ; १६ १७ assumed a form like that of a cub; ११ त्वामधिकृत्य; ३१५–२ स्वाङ्गुल्यग्रैः; ३१६–११ उद्घाट्य; ३१८–२० पुष्पाणि च; ३२०–२५ °कन्यकां त्रियोगः पीड–; ३२१–७ her, by might, your; ८ in [ her ]; ३२२–४ वो विधाय; २२ विरहमहर्तीं; ३२३–२४ स्ववपुषं ··· । ···सवपुषं ।; ३२६–२२ वियोगमूर्तीनां; २६ गल्हमानां; २९ इव ।; ३२७–१३ केशरचनाविशेषं; १९ खङ्गिकपोलयोः; ३२९–२० her face; २३ scope; ३६ resorted; ३३०–१३ °विंचालित–; ३३१–६ down from; ३३१–२७ अलं ··· । ··· । ··· पुल्लिंगो; ३३२–११ दशा–; १९ जाने; ३३३–११ elderly relatives; ३३४–१३ °पाङ्ग–; ३३६–३ एनां; १३ °कत्वादत्र ङी

Canto IV. ३३८–६ घने चित्ते; ३३९–१९ (safely); ३४०–७ द्विरदोऽ; ३४१–२ conqueror; २२ ' सम्भिक्षाशंसिविन्दिच्छादुः '; ३४२–९ him who; १३ reddish...with its; ३४४–६ सावष्टम्भं; ३४५–२७ ह्यङ्गशब्दः; ३४६–२१ battle; give; २२ creeper – like; ३४८–८ °ध्वात्मीये घने; १४ दारुणे सङ्ख्ये '; ३४९–४ the form of; २६ धनञ्जयः ३५१–२६ यद्वा; ३५२–३ on account of; २२ °विद्धत्वात्, पूर्वं; ३५३–२२ ग्रहीर्मा; २६ ग्रहीः; ३५४–९ वृन्दाः; १४ मा ग्रहीः; १५ त्वं मा भैषीः; २८ प्रोषितानां; ३५६–२५ सिद्धा पूर्ण–; ३५७–५ travellers; ६ braids and ... the back of; २५ दुःखं च; ३५८–२६ wellknow; २७ had sat; ३५९–९ हित्वा; २६ greeting you; ३६०–१० सम्प्रयुज्यते; १२ व्यक्तं विशदं आकूतं; ३६१–१४ सङ्गमं; १६ त्वत्कान्तायाः १७ श्रवणार्हं; ३६२–५ °दुपगमः साक्षात्; ९ audience; २२ ' जैवातृकः; ३६३–२० wellknown; ३६४–

१६ ब्रूयात्; २७ by name will; ३६५–९ इत्येवं; ३६६–१२ [of your beloved or in ... void of bodily strength]; २४ मिति; २६ शीतकात्वमल-सत्वम् |; ३६७–१६ itself; ३६८–२८ दिवसः प्रणय–; २९ समधिकतरं; ३६९–२६ her day of; ३० cohabiting; ३७०–१२ पूर्वस्य पुरादेशः; to tell into; ३७१–१६ °भ्यो रवलौ'; २५ चिह्नयोश्शब्दे; ३७२–२२ प्रयुक्त-त्वात्ता |; २४ °स्त्रिया अङ्गं; ३७३–२० peacocks; ३७४–२० भ्रूविलासान्; २३ °पेक्षयोत्पश्यया; ३७५–५ तपोलक्ष्मि ! ३७६–५ described; ३७७–१८ °स्त्विति वधू–; २३ resembling the mineral; २४ dallying, remembers you. ३७९–१३ कामं परतः; ३८१–२२ °मृदुव्यावहासीं |; ३८२–७ approach; ३८३–४ शीघ्रबोधैः; १२ come; ३८४–२ °वातिः प्रातिः |; ११ खलु वीप्सा–; ३८५–१४ ध्यायन्तीं; ३८६–४ °कुर्वन्त्याः |; २८ the day even; ३० brought to; ३८७–३ कामावेशे; १८ दुष्प्रापयाचनं; ३८८–१० तत्क्षीरस्तुति–; ३८९–२ started moving; ३९०–२४ गच्छतु |; ३० all events'. ३९१–१० स्त्रियाः ··· स्त्रियाः; ३९२–२१ उच्चैः; २६ °कायत्वात् 'अयं; ३९४–४ °दिति भावः | ३९५–१६ चाहं च; २४ loneliness; ३९७–५ had a drum ... of his; ३९८–१४ withdraw]; ३९९–१ विचार्येत्यर्थः |; ४०१–३ of separation; ४०२–१० °नयनतृषो–; २० °चरितुमित्यर्थः |; २५ त्रिनयनम् |; २८ उत्खाय; ४०३–२४ प्रार्थये; २६ अघवद्यात्; ४०५–१ °स्मादुपसर्ग–; १५ kunda-flower; ४०६–७ व्यरचयदहो; ४०८–१४ जिनपक्षे; १९ 'द्वौ; ४१०–२६ प्राणिनः च; ४१२–१९ आह्लादयती; ४१४–१९ इति न टिलम् |; ४१७–१६ पूर्ववर्णाणिः;